THE

# KASHI SANSKRIT SERIES

( *HARIDĀS SANSKRIT GRANTHAMĀLĀ* )

( Vyākaraṇa Section No. 18 )

NO. 137.

THE

# Paribhās'endus'ekhara

OF

## M. M. S'RĪ NĀGES'A BHATTA

WITH

THE S'ĀSTRĀRTHAKALĀ COMMENTARY



BY

PANDITARĀJA

S'UKLA S'RĪ VEṆIMĀDHAVA S'ĀSTRĪ

*Edited with notes, Introduction etc.,*

BY

ĀCHĀRYA S'RĪ RĀJANĀRĀYANA S'ĀSTRĪ

PUBLISHED BY

JAYA KRISHNA DÂS HARIDÂS GUPTA

*The Chowkhamba Sanskrit Series Office.*

Benares City

1943.

॥ श्रीः ॥

हरिदाससंस्कृतग्रन्थमालासमाख्य-

काशी-संस्कृत-सीरिज़-ग्रन्थमालायाः

१३७

व्याकरणविभागे (१८) अष्टादशं पुष्पम् ।




महामहोपाध्याय-श्रीमन्नागेशभट्टविरचितः-

# परिभाषेन्दुशेखरः

त्रिकोणयन्त्रसन्निभ-काशी-अयोध्या-प्रयाग-तीर्थत्रयमध्यजन्मभूमिजौनपुर-
मण्डलान्तर्गतबदलापुरोदयपुरगेल्हवाभिजन-विश्वविख्यातशास्त्रार्थि-
घटिकाशतकशतावधानसंस्कृताशुकविचक्रवर्त्ति-प्रायश्शत-
ग्रन्थप्रणेतृसरयूपारिशुक्लसर्वतन्त्रस्वतन्त्र-

## पण्डितराज-श्रीवेणीमाधवशास्त्रिप्रणीत—

## "बृहच्छास्त्रार्थकला" टीकासहितः

तदात्मजेन नव्यन्यायाद्यनेकशास्त्राचार्य-शास्त्रार्थव्याख्यानवाचस्पति-

## आचार्यश्रीराजनारायणशास्त्रिणा

टिप्पण्यादिभिः परिष्कृत्य परिभाषेन्दुप्रश्नोत्तरात्मक 'प्रश्नपञ्जिका'-
दिबृहत्परिशिष्टैः परिवर्धितः सम्पादितश्च ।

प्रकाशकः—

जयकृष्णदास हरिदास गुप्तः,

चौखम्बा-संस्कृत-सीरिज़ आफिस,

बनारस सिटी ।

वि. सं. १९९९ ] —— [ ई० सं० १९४३

॥ श्रीः ॥

# महानुभावा इमे—

कौमुदीकल्पलतिका–परिष्कारदर्पण–व्युत्पत्तिवादशास्त्रार्थकला–लौकिकन्यायशास्त्रार्थकला–सादृश्यशास्त्रार्थकला–प्रभृतिप्रायश्शतग्रन्थलेखकाः त्रिकोणयन्त्रसन्निभ–काशी–अयोध्या–प्रयाग–तीर्थत्रयमध्यजन्मभूमि–जौनपुरमण्डलान्तर्वर्त्ति–"बदलापुर" उदयपुरगेल्हवाग्रामाभिजनाः काशीनिवासिसंस्कृताशुकवि–चक्रवर्त्तिनो विश्वविश्रुतशास्त्रार्थाः—



**सर्वतन्त्रस्वतन्त्राः शास्त्रार्थमहारथिपण्डितकुलपतयः**

**पण्डितराजाः सरयूपारिशुक्ल–**

**श्रीवेणीमाधवशास्त्रिणः ।**

**"शास्त्रार्थमहाविद्यालय ३।५ मीरघाट, काशी" संस्थापकाः ।**

# आवश्यकम् ।

अयि गीर्वाणवाणीप्रणयनपरायणास्सहृदयहृदयाह्लादनैकान्तनितान्तस्वान्ताः विद्वन्मण्डलमण्डनायमाना विद्वांसः ! भव्यभारतभूभावुकाश्छात्रनिवहाश्च ! श्रीमतान्तत्रभवताम्भवताङ्केषामपि संस्कृतशेमुषीजुषान्नाविदितं सकलशास्त्रमूर्धन्यन्धन्यं व्याकरणन्नाम । के वा विपश्चिदपश्चिमास्सर्वर्वाणीसम्रक्षणैकप्राणन्निखिलशास्त्रमुपकुर्वाणमार्त्तशब्दपरित्राणम्पाणिनीयन्नाम न जानते । अत एव—

> काणादम्पाणिनीयञ्च सर्वशास्त्रोपकारकम् ।
> पाणिनीयम्महाशास्त्रम्पदसाधुत्वलक्षणम् ।
> सर्वोपकारकं ग्राह्यं कृत्स्नं त्याज्यन्न किञ्चन ॥

प्रभृतयस्तत्रतत्राभियुक्तोक्तयस्सङ्गच्छन्ते । एवं के नावगच्छन्ति संस्कृतशिक्षादीक्षादीक्षिताः पाणिनीयव्याकरणे बहुनिबन्द्धारं सर्वतन्त्रस्वतन्त्रसम्भारं महामहोपाध्यायादिपदलाञ्छनंश्रीमन्नागेशभट्टन्तत्कृतग्रन्थरत्नमन्वर्थाभिधानन्नवनीतनवज्ञानम्परिभाषेन्दुशेखरन्नाम । विद्वद्वरेण्येनात्र शेखरकारेण भाष्यादीनाम्प्रामाण्यमनुकूलयता यथोत्तरमुनिप्रामाण्यन्द्रढयता च स्वैरोक्तिनिरसनपुरस्सरं स्वग्रन्थस्य महत्प्रामाण्यमुपास्थापि । अनुकार्ययशसामेषां जीवनचरित्रविषये बहुशो निबन्धाः प्रकाशिता अपूर्णा असमीचीना इवाभान्ति । परमेषां कालःप्रायोऽष्टादशशताब्दयान्निश्चितोऽन्वेषकैः । एते क्षत्रियकुलकलामभूतविसेनवंशजरामनृपतेश्शृङ्गवेरपुराधीशस्य स्वशिष्यस्याश्रयेण जीविकान्निरवाहयन् । स्थानमिदम्प्रयागमहातीर्थसन्निधिमासादयत्तिष्ठति । इदमेव 'शृङ्गवेरपुराधीशाद्रामतो लब्धजीविकः'' इति शब्देन्दुशेखरीयमङ्गलाचरणेऽभिव्यञ्जितम् । महर्षिकल्पैरेतैश्शब्देन्दुशेखरशब्दरत्नभाष्यप्रदीपोद्योतपरिभाषेन्दुशेखरप्रभृतयः प्रायः पञ्चविंशतिर्ग्रन्था निर्मिताः उपलभ्यन्ते च । केचिदेतान् दाक्षिणात्यानभिदधति परे च काशीप्रान्ताभिजातान् काशीप्रयागाभ्यन्तरसरयूपारीणकुलप्रभवान् ब्रुवते । उभयत्रैव परम्पराप्राप्तयोरयप्रमाणाभावात् सन्दिहते मनीषिण इति निर्णयश्शरणम् ।

परिभाषेन्दुशेखरस्यास्य बह्वयष्टीकाः १ गदा २ शाङ्करी ३ जटाजूट ४ भैरवी ५ भूत ६ विजयाप्रभृतयो मान्यैर्विश्वप्रथितवैदुष्यैः प्रचालिताः परन्तु तासु काचिदनुपलब्धा, काचिदपूर्णा, काचित् सङ्क्षिप्तार्थप्रतिपादिका, काचित् परिष्कारपरिपूर्णाऽकृतसमन्वया, काचिन्मूलमात्रप्रतिपादिका, काचिन्नवनवकल्पनाविहीना, काचित् क्रोडपत्रमात्रालम्बना न साधु समेषामुपकारकरीति दर्शन्दर्शं काशिकविद्वद्भिश्छात्रैश्च भूयो भूयःप्रेरिताः प्रायोरचितशतग्रन्थरत्नाः प्रागुपनिबद्धपरिभाषेन्दुलघुशास्त्रार्थकला अपि विश्वविश्रुतवैदुष्यास्सर्वतन्त्रस्वतन्त्राः शास्त्रार्थसाम्राज्यभाजः कुलपति पण्डितराजाद्यनेकपदभूषणाः सरयूपारीणब्राह्मणकुलकमलदिवाकराः स्वनामधन्याः गुरुदेवाः शुक्लश्री ६ वेणीमाधवशास्त्रिणःपरिभाषेन्दुशेखरस्यास्य सर्वविधक्लेशापनुत्तये बृहच्छास्त्रार्थकलाभिधानां सर्वा समाधानां टीकान्निर्माय बहूपकृतवन्तः ।

टीकायामस्याम् मूलग्रन्थयोजनपुरस्सरं स्थलविशेषेषु शास्त्रार्थप्रकाराः, विलक्षणपरिष्काराः, कल्पिताभिनवदूषणासाराः, वादिमतनिराकाराः, परिभाषाणान्नवीनशाब्दबोधप्रचाराः, सरलतया परीक्षालेखप्रकाराः, शेखरखण्डनाधारास्समुपयुक्तैस्सरलातिसरलैश्शब्दैः परिवर्णिता एतस्यास्सर्वतोभद्रतां विशदयन्ति । किमधिकैस्सोरस्ताडमिदमभिवक्तुं शक्यते यत् स्वाध्यायेनास्याः परिभाषेन्दुशेखरीयाऽसम्भवाऽपि व्युत्पत्तिस्सम्भवा स्यात् । शास्त्रार्थे परिष्कारादिनिर्माणेऽभिनवकल्पने वादिमतनिरसने चापूर्वा गतिस्स्यात्। टीकान्तरस्य तु नामग्रहणमपि कर्णासुखावहं स्यात् । श्रीमतां शास्त्रार्थकलाकाराणामोजस्विलेखिन्या संस्कृतसाहित्यरसिकाश्शास्त्रार्थप्रवृत्तयो भवन्तस्सुचिरपरिचिता इति किं वैशिष्टयवर्णनेन ।

सटीकस्यास्य ग्रन्थस्य सम्पादकास्सम्पादितानेकग्रन्थास्सम्पादनकलाकलितमानसाः प्रायः पञ्चविंशतिग्रन्थलेखकाः शास्त्रार्थपरिपाटीसमवाप्तकाशिकप्रतिष्ठा अखिलशास्त्रसन्निष्ठा न्यायव्याकरणाद्यनेकशास्त्राचार्या विद्वद्वरिष्ठाः श्रीगुरुचरणानाम् शास्त्रार्थकला कलयताम् पुत्रेष्वन्यतमश्रेष्ठाः आचार्य **श्रीराजनारायणशास्त्रिणः ।**

एतेषां सटिप्पणं सम्पादनं कीदृग् भवतीति परिष्कारदर्पणव्युत्पत्तिवादादिग्रन्थेषु बहुशो भवद्भिर्दृष्टप्रायन्नाधिकं वक्तव्यमपेक्षते । परमिदन्त्ववश्यमभिधेयं यत् जन्यजनकाभ्यामाभ्याम् संस्कृतसाहित्ये विशेषतो व्याकरणे पाणिनीये शास्त्रार्थयुगे चैका विलक्षणैव परिष्कारशैली लेखनकला च समुद्भावितेति संस्कृतैर्धन्यवादार्हाः ।

शास्त्रार्थकलाकाराणां श्रीगुरुचरणानामन्वयपरिचयोऽप्यावश्यक इति सङ्क्षेपतो निरूपये । सृष्टिसमये ब्रह्माद्युत्पत्त्यनन्तरं गर्गगौतमशाण्डिल्यादयोऽग्निकल्पा महर्षयस्सम्बभूवुः । महीयांसश्च तेऽग्निहोत्रादिवैदिककर्मानुष्ठानाय परमपवित्रं सरयूतटमागत्य यज्ञभूमिम् प्रकल्प्य स्थितास्तत्रैव वर्णाश्रममर्यादाम्पालयामासुः । तत्र श्रीगुरुचरणानाम् पूर्वजा गर्गवंशेऽवातरन् । गोरक्षपुरमण्डलान्तर्वर्त्तिमध्यवल्ली ( मझौली ) इति प्रसिद्धराज्यं शासतो विसेनक्षत्रियराजस्य गुरुत्वेन तत्रैव तस्थुः। कदाचित्तीर्थयात्राप्रसङ्गेन महानुभावाः काशीप्रयागायोध्याभिधतीर्थत्रयमध्यभुवं जौनपुरमण्डलान्तर्गतबदलापुराख्यं स्थानम् मार्गस्थं सशिष्याः प्रापुः। तत्र विशेषतो विपर्ययन्दुष्टजनजन्यमालोक्य सहस्थेन शिष्येण महाबलेन तत्प्रशमं कारयित्वा प्रातःस्मरणीया महर्षिकल्पाः श्री विजयदत्तशुक्लाः पुत्रचतुष्टयसम्पन्नास्तत्रैव तपस्समाचारमारेभिरे । क्षत्रियकुलललामभूता महावीराः शिष्यास्तेजबहादुरसिंहाभिधाश्च तत एवारभ्य तत्रत्यप्रजाः पालयामासुः । चतुर्णान्तेषामेके सर्वतन्त्रस्वतन्त्रा विख्यातभूतलप्रतिष्ठाः षड्दर्शनालङ्कृताः स्वनामधन्याः श्रीटीकारामशास्त्रिणः समजनिषत। मान्यास्ते शास्त्राध्ययनाध्यापनानन्तरं गार्हस्थ्यं सम्पाद्य स्वज्येष्ठसुतायाधीतशब्दवेदान्तज्यौतिषशास्त्राय श्रीदेवदत्तशास्त्रिणे सम्पर्द्य सम्पत्तिजातम्परमस्यागमाजग्मुः । पूज्यपितृचरणानामाज्ञामनुपालयद्भिरेभिर्निर्वाहिकमध्यापनं यावज्जीवमाचक्रे । एतेषाम् पुत्राः परमादरणीयचरणाः शब्दतर्कवेदान्तादिकृतविशिष्टश्रमाः परमरम्यमतयोऽनेकग्रन्थकृतः शास्त्रीयास्सत्यागतपोमूर्त्तयः श्री

कीर्त्तिवणशुक्लाः गायत्र्यादिमहानुष्ठानेन विशिष्टतपसा च साङ्गोपाङ्गं गृहस्था अपि समप्रसाधनमासेदुः। एतेषाम् महर्षीणाम् परमोदारत्यागतपोऽनुरूपायां साक्षात् सरस्वत्यां रामदासीतिनाम्न्यां सत्कीर्त्याम् पत्न्यां सुतात्रयस्समुदपद्यन्त। ज्येष्ठः श्रीरघुवीरशुक्लः तन्त्रशास्त्रावधिज्ञो गेहाध्यक्षः ससुखं जीवनयात्रां निरवाहयत्। द्वितीयः श्रीलक्ष्मीदत्तशुक्लः साधारणपठितो गृहकार्य्यमद्यापि कौशलेन सञ्चालयितुमीष्टे। कनिष्ठाः घटिकाशतकशतावधानसंस्कृताशुकविचक्रवर्त्तिवैयाकरणशिरोमण्याद्यनेकपदवीभूतः पूज्यचरणाः श्रीगुरुदेवाः शास्त्रार्थकलाकाराः पण्डितराजाः शुक्लश्रीवेणीमाधवशास्त्रिणः। समर्च्यचरणा इमे बाल्य एव स्वमण्डलान्तर्वर्त्तिरुद्रावली (रुधौली) द्विजकुलशेखर प० आद्याशङ्करत्रिपाठिपालिते ग्रामे तदीयविद्यालयाध्यापकेभ्यो वैयाकरणकेसरिश्रीदुर्गादत्तशास्त्रिमिश्रमहोदयेभ्योऽधीत्य सिद्धान्तकौमुदीशेखरमनोरमान्यायसिद्धान्तमुक्तावल्यादिग्रन्थान् काशीमागत्य विश्वविख्यातयशोभ्यस्सरयूपारीणकुलकमलदिवाकरेभ्यो भारतमार्त्तण्डाद्यनेकसम्मानमाननीयेभ्यो महामहोपाध्यायश्रीशिवकुमारमिश्रशास्त्रिचरणेभ्यो विशेषतः पण्डितसिंहेभ्यः शास्त्रार्थख्यातिमद्भ्यो महामहोपाध्यायश्रीजयदेवमिश्रशास्त्रिचरणेभ्योऽधीत्य सपरिष्कृति शब्दतर्कवेदान्तादिशास्त्रं द्वादशवर्षाध्यापनानन्तरं ग्रन्थनिर्माणे प्रवृत्ताः १—हिंसाखण्डनकौमुदी २ कौमुदीकल्पलतिका ३ परिष्कारदर्पण ४ वैयाकरणभूषण ( शास्त्रार्थकला ) ५ व्युत्पत्तिवाद ( शास्त्रार्थकला ) ६ प्रयोगशास्त्रार्थकला ७ परिभाषेन्दुशेखरशास्त्रार्थकलाप्रभृतिग्रन्थानष्टोत्तरशतसङ्ख्याकान् निर्माय प्राकाश्यमानाययन्ति।

एतेषाम् प्रथमपत्न्याम् पुत्रद्वयी ज्येष्ठः श्रीकमलापतिरधीत्यैषद् व्याकरणं ज्योतिश्शास्त्रे सुनैपुणीमधिकृत्य कलिकात्तानगरेऽवाप्तकलादीक्षस्तत्रैव गृहन्निर्माप्य सानन्दन्द्रव्यततीरुपार्जयति। द्वितीयाः आचार्यश्रीराजनारायणशास्त्रिणः न्यायव्याकरणाद्यनेकशास्त्राचार्याः अभिनव "शास्त्रार्थमहाविद्यालय मीरघाट काशी" इत्यस्याध्यक्षा अधिकाशि नानाशास्त्राणि पाठयन्ति "शास्त्रार्थप्रचारसमिति काशी" नामकसंस्थाञ्चाभिचालयन्ति। द्वितीयपत्न्यां श्रीसावित्रीदेव्यां स्त्रीसन्ध्याद्यनेकपुस्तिकालेखिकायां संस्कृतहिन्दीसुशिक्षितायां सन्ति सप्त पुत्रास्तेषु पुत्रद्वयी कलासु, पुत्रत्रयी संस्कृताध्ययने पुत्रद्वयी चाङ्गलभाषाध्ययने रतेति सङ्क्षेपतः।

श्रीगुरुचरणा अद्यापि काशीमध्युष्य सर्वान् ग्रन्थान् पाठयन्ति विशेषतः शास्त्रार्थरुचीन् समुत्साहयन्ति। नवनवान् ग्रन्थाँश्च रचयन्ति। आशासे प्रकाशितशास्त्रार्थकलासमन्वितग्रन्थान्तरवदस्यापि परिभाषेन्दुशेखरस्य समुचित एवादरस्सज्जनमनीषिभिस्तत्त्वसञ्चयमानसैर्गुणग्राहिभिः कृतस्स्यादिति विनिवेदयन् विरमति।

शास्त्रार्थकलाकाराणां शिष्येष्वन्यतमः—
धर्मसङ्घविद्यालयः
वसन्तपञ्चमी १९९९ वै. काशी

अध्यापकः
**श्रीरामकरणपाण्डेयशास्त्री**
वेदान्तव्याकरणाचार्य्यः।

# सम्पादकीयम् ।

मान्यास्संस्कृतसाहित्यमात्ररक्षणैकव्याजेन शब्दशास्त्रावधानदत्तचेतस्सचेतसश्शाब्दिकमूर्द्धन्या विद्वांसो लब्धव्याकरणव्युत्पत्तयश्शास्त्रेष्वव्याहतगतयस्सुमतयस्साधुपद्धतयश्छात्राश्च ! विद्वाङ्कुर्वन्त्वत्रभवन्तः श्रीमन्तो यत् पठनपाठनादिषु परिभाषेन्दुशेखरस्य महान्तम्प्रचारन्दुरवगाहाञ्च क्लेशततिमालक्ष्य श्रीमतां सर्वविधसौविध्याय पूज्यचरण-श्री ६ पितृदेवविनिर्मितया बृहच्छास्त्रा कलाभिधानयानया सट्टीकया विभूष्यापेक्षितटिप्पणैः प्रश्नोत्तरादिपरिशिष्टैश्च संयोज्य यथामति सम्पाद्य परिभाषेन्दुशेखरनामग्रन्थम्भवदीयसेवासूपस्थापयन्नितराम्प्रसीदामि । यद्यपि सप्ताधिकनवतितमे वैक्रमे वर्षे एवास्य कार्यस्य प्रारम्भः प्रकाशनतामानीतः परन्तु "श्रेयांसि बहुविघ्नानि" इति रीत्या प्रथमेऽब्दे मदीयास्वास्थ्याद् द्वितीये च विश्वव्यापिसमुपद्रवारम्भेणोपयुक्तकर्गदपत्रालाभात् सततप्रयत्नैरद्य वर्षे प्राकाश्यमेति तदर्थमयं बिलम्बः क्षमापरैः श्रीमद्भिः क्षन्तव्यः ।

प्रारम्भादेवानन्तान्तरायसमापातैः कथङ्कथमपि कृतसम्पादने सञ्जातोचितशोधनेऽपि ग्रन्थेऽत्र मूले टीकायां टिप्पणे वा सम्भवन्तो दोषा मादृशाज्ञानजनाज्ञानजन्या मुद्रणाशुद्धिजन्यास्सम्पातायाता वा गुणैकपक्षपातिभिस्तत्रभवद्भिर्भवद्भिरुदारचरित्रैरवश्यं क्षन्तव्यास्स्युरिति भूयो भूयो निवेदयते ।

वसन्तपञ्चमी १९९९ वै.

भवदीयः—

श्रीराजनारायणशुक्लः

शास्त्रार्थमहाविद्यालयः ड्३ मीरघाट, काशी

---

प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

॥ श्रीः ॥

# एतद्ग्रन्थे व्याख्यातपरिभाषाणां सूची ।

इति तृतीयन्तन्त्रम् ।

---



श्रीगणेशाय नमः

# अथ परिभाषेन्दुशेखरः ।

## ( बृहच्छास्त्रार्थकलायुतः )

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः ।
बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ १ ॥

## अथ बृहच्छास्त्रार्थकला ।

श्रीमते रामानुजाय नमः ।

(१)शेषावतारम्भगवन्तमाद्यं रामानुजं योगिवरञ्च रामम् ।
श्रीवैष्णवौ सत्पितरौ च नत्वा प्रारभ्यते कार्यमिदं हिताय ॥ १ ॥
ग्रन्थेऽत्र नागेशकृते च यद्यप्यनेकटीका विमलाः प्रसिद्धाः ।
शास्त्रार्थयुद्धे विजयप्रदाञ्च टीकान्तु शास्त्रार्थकलान्तनोमि ॥ २ ॥
काशीप्रयागावधमध्यवर्त्ती कृतश्रमश्शास्त्रनिकुञ्जपुञ्जे ।
व्याख्याम्परिष्कारततिप्रभूतान्तथा परीक्षाफलदामजस्रम् ॥ ३ ॥

---

* दीपिका *

( १ ) पातञ्जलमहाभाष्यगूढतत्त्वप्रपूरकः ।
श्रीनागेशेरितो ग्रन्थः परिभाषेन्दुशेखरः ॥ १ ॥
टीकाथ शास्त्रार्थकला कृताऽस्ते पित्रा मदीयेन सुपण्डितेन ।
क्वचित्तदीयार्थविकाशनायाशद्दीपिकां टिप्पणिकां करोमि ॥ २ ॥
यद्यप्यहन्तुच्छमतिस्तदीयटीकाऽस्ति शास्त्रोदधिसन्निभा तु ।
श्रीराजनारायणशर्मशुक्लः पारं गमिष्याम्यथ तत्प्रसादात् ॥ ३ ॥
ध्यात्वा वाणीं स्वान्तनिष्ठकार्यमात्रप्रपूरिकाम् ।
व्याख्यामि शास्त्रार्थकलाम् पितुराज्ञावशंवदः ॥ ४ ॥

प्रारिप्सितपरिसमाप्तिर्निर्विघ्नङ्कामयमानाःश्रुतिस्मृत्यादिबोधितकर्त्तव्यताकमिष्टन-
मस्कारात्मकम्मङ्गलमाचरन्ति शेषावतारमिति ।

गुरूपदिष्टा विमला मदीया सती समीचीनतरा च पद्धतिः ।
तस्याः प्रतापाच्च धिया स्वयाऽत्र करोमि योग्यां खलु नव्यकल्पनाम् ॥ ४ ॥
सरयूपारीणशुक्लो गर्गवंशान्वयस्सुधीः ।
प्रकाशये सतीं वृत्तिं वेणीमाधवनामकः ॥ ५ ॥

अथ नागेशभट्टः प्रारिप्सितप्रकरणादिपरिसमाप्तिप्रतिबन्धकीभूतप्रत्यूह-पुञ्जनिरासाद्यनेकफलप्रतिपादकतयेष्टदेवतानमस्कारात्मकं मङ्गलं शिष्यशिक्षार्थमुपनिबध्नन् प्रेक्षावतां महोपकाराय प्रतिजानीते नत्वेति । समाप्तिकामो मङ्गलमाचरेत्. मङ्गलाचरणं शिष्टाचारात् फलदर्शनात् श्रुतितश्च. मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि च शास्त्राणि प्रथन्ते वीरपुरुषकाणि च भवन्त्यायुष्मत्पुरुषकाणि च भवन्ति अध्येतारश्च मङ्गलयुक्ता यथा स्युरिति "वृद्धिरादैजि"तिसूत्रे पूर्वं वृद्धिपदोपादानम्मङ्गलार्थम अन्यथा यच्छब्दयोगः प्राथम्यं स्याद्दुद्देश्यस्य लक्षणमितिनियमप्रातिकूल्यमापद्येत । मङ्गलाचरणं सफलमविगीतशिष्टाचारविषयत्वात् दर्शयागादिवत् । मङ्गलं समाप्तिफलकं समाप्त्यन्याऽफलकत्वे सति सफलत्वात् यन्नैवन्तन्नैवमितिव्यतिरेकव्याप्तेः । मङ्गलम्विघ्नध्वंसफलकम्विघ्नध्वंसातिरिक्तफलरहितत्वे सति सफलत्वात् यन्नैवन्तन्नैवमिति व्यतिरेकव्याप्तेः । गणेशादीष्टदेवस्तवो यद्यपि विघ्नध्वंसावच्छेदकस्तथाऽपि ग्रन्थे पारम्पर्यक्रमप्रचारार्थश्रुतौ आचरेदित्यस्य स्वबुद्ध्या स्तवस्पष्टद्योतनार्थं गद्यपद्यादिकम्वि(१)रचयेदित्यर्थः ।

---

(१) यद्यपि श्रीगणेशाय नम इति सर्वतो भद्राचरणेन भविष्यति विघ्नोपशमो भविष्यति च तद्द्वारकसमाप्तिः किमर्थमयमपूर्वो मङ्गलाचारः ? अथ "समाप्तिकामो मङ्गलमाचरेदथ विघ्नध्वंसकाम" इत्यादि श्रुतौ आचरेदित्यस्य स्वबुद्ध्या विरचयेदित्यर्थ इतिविशिष्टाभिमतपथेन स्वधिया निर्मायापि मनस्येव संस्थापयेत् किमिति ग्रन्थारम्भे लेखनेनेति बहुविधास्सन्देहास्समुद्भवन्तितरान्तथापि मदभावेऽज्ञातमत्सिद्धान्तभेदयाऽपि शिष्यपरम्परया निस्सन्देहम्मङ्गलं कृतं स्यादिति हृदिकृत्य शेषावतारेत्यादिमङ्गलस्य ग्रन्थघटकत्वम् ।

मङ्गलस्य च विघ्नध्वंसद्वारा समाप्तिजनकत्वमिति प्राञ्चः·विघ्नध्वंस एव फलं समाप्तिस्तु बुद्ध्यादिकारणकलापैरुद्भावनीयेतिनव्याः । नो चेन्माङ्गलिकश्लोकनिर्माणमात्रेण समाप्तिरिष्यते चेत् कस्तावद् ग्रन्थनिर्माणे विलम्बमाधास्यति । उभयत्र कारणान्तरस्यापि जनकतायास्सर्वाभिमतत्वेन सत्यप्येकत्र कारणे कारणान्तरस्यासत्त्वेन कारणाभावे कार्योत्पादरूपव्यतिरेकव्यभिचारस्य कार्यकारणभावविघटकस्य वारणाय "मङ्गलाव्यवहितोत्तरक्षणजायमानसमाप्तित्वावच्छिन्नम्प्रति मङ्गलस्य हेतुत्वम्" विघ्नध्वंसाव्यवहितोत्तरक्षणजायमानसमाप्तित्वावच्छिन्नम्प्रति विघ्नध्वंसस्य, एवम् विघ्नात्यन्ताभावाव्य-

प्रतिपित्सितार्थम्प्रतिपादयन्प्रतिपादयिताऽवधेयवचनो भवति प्रेक्षावतां प्रतिपित्सूनामनायासेन परिभाषार्थतत्त्वज्ञानसौलभ्यायोक्तश्रुतिसांख्यशास्त्रपातञ्जलभाष्यसयुक्तिकानुमानप्रमाणैः प्रेक्षावत्प्रवृत्त्युपयोगितयानुबन्धचातुर्विध्यम्प्रचारयन्नाह नत्वा साम्बमिति ।

सम्बन्धश्चाधिकारी च विषयश्च प्रयोजनम् ।
विनानुबन्धं ग्रन्थादौ मङ्गलन्न प्रशस्यते ॥ १ ॥
वन्दनं गुरुदेवानां ग्रहशान्तिर्द्विजार्चनम् ।
शुभद्रव्यावलोकश्च मङ्गलम्परिचक्षते ॥ २ ॥
नित्यम्पथ्याशिनां पुंसां हितस्थाननिवासिनाम् ।
मङ्गलाऽऽचरताम्विघ्नैर्विनिपातो न विद्यते ॥ ३ ॥
ओङ्कारश्चाथशब्दश्च द्वावेतौ ब्रह्मणः पुरा ।
कण्ठम्भित्त्वा विनिर्यातौ तस्मान्माङ्गलिकाविमौ ॥ ४ ॥

यद्यपि शाब्दिका मीमांसकवदनीश्वरवादिना द्वे ब्रह्मणी इति श्रुत्या केवलशब्दब्रह्मोपासका एवात एव पातञ्जलभाष्यारम्भे "अथ शब्दानुशासनमि"त्युक्त्वाऽथेत्ययंशब्दोऽधिकारार्थः प्रयुज्यते" इत्युक्तं पाणिनीयाष्टाध्याय्यां च नाऽपूर्वम्मङ्गलाचरणमीश्वरीयन्दृष्टिपथमारोहति । तथाऽपि तेषां लक्ष्यैकचक्षुष्कत्वेन निखिलशब्दधर्मिकसाधुत्वप्रकारकज्ञानवत्त्वेन च तथाऽऽचरणेऽपि साम्प्रतिका नागेशाद्य ईश्वरं शब्दब्रह्मातिरिक्तं साकारं श्रुत्यादिसम्मतम्मन्वत एव । किञ्च "अनन्याश्चिन्तयन्तो मां ये जनाः पर्य्युपासत" इति सिद्धान्तोपनिषदा कार्यत्वावच्छिन्नम्विहायानन्यगत्या शब्दशास्त्राभ्यासेनैव सविजयम्पाण्डित्यमुत्कटतरमिति परिशिक्षणम्प्रेक्षावताम् इति गूढभावाऽभिप्रायकं वा साकारोपासनाविशिष्टम्मङ्गलम् ।

विघ्नविनाशनहेतुभूतत्वम्मङ्गलत्वम् । नच स्तोत्रपाठादीनामपि तत्त्वापत्तौ तेनैवाभीष्टसिद्धौ नूतनमङ्गलाचरणन्निरर्थकमिति वाच्यम् ? प्रारिप्सितग्रन्थ-

---

वहितोत्तरक्षणजायमानसमाप्तित्वावच्छिन्नम्प्रति तस्येत्यादिरीत्या वारणञ्चिन्तनीयम् । प्रपञ्चितञ्चैतदन्यत्र ।

मङ्गलाचरणं सफलमिति—अत्रानुमानेऽविगीतशिष्टाचारविषयत्वरूपहेतुदले विषयत्वमात्राभिधाने सुखविषयकं ज्ञानं ज्ञानविषयस्सुखमितिप्रतीत्या सफलत्वाभाववति विषयताश्रये सुखे हेतोःसाध्याभाववद्वृत्तित्वरूपव्यभिचारवारणायाचारेति । तथापि चैत्यवन्दनादिकमादाय व्यभिचारवारणाय शिष्टपदनिवेशः । बलवदनिष्टानुबन्धिश्येनयागादिकमादाय प्रवृत्त्युपयुक्तबलवदनिष्टाननुबन्धित्वविशिष्टेष्टसाधनत्वरूपसफलत्वसाध्याभावाधिकरणे हेतोः वृत्तित्वेन व्यभिचारवारणायाविगीतेति ।

समाप्त्यादिप्रचारप्रतिबन्धकदुरितोपशमकत्वे सति प्रारिप्सितग्रन्थ(१)विशिष्टत्वम् मङ्गलत्वमितिपरिष्कारात्। ग्रन्थवैशिष्टयञ्च मङ्गले स्वाऽव्यवहितपूर्वत्व-स्वघटकत्व स्वाव्यवहितोत्तरत्वमित्यन्यतमसम्बन्धेन। अत एव मङ्गलादीनि मङ्गलमध्यानीति "भूवादि"सूत्रभाष्ये भूवादीनां वकारोऽयम्मंगलार्थ इत्यादि तत्र तत्र भाष्यं संगच्छते। "आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽपि तन्मुखमि" तिशिष्टोक्त्या त्रैविध्यम्। मंगलशब्दश्चिरन्तनसदाचारमर्यादावलोकनेन संज्ञा-वाचको रूढोऽव्युत्पन्नो वेति न विशेषपरिष्कारावश्यकतेति विलक्षणप्रकार इति शुक्लाः।

अज्ञातपरिभाषार्थतत्त्वा भाष्यादिग्रन्थतः परिभाषार्थनिर्णयाऽसमर्था वा ए-वात्र बालास्त एवाधिकारिणः, परिभाषार्थनिर्णयो विषयः' सुखबोध एव प्रयो-जनम्, ज्ञेयज्ञातृभावः प्रतिपाद्यप्रतिपादकभावो वा सम्बन्धः। तद्विषयकप्रवृ-त्तिम्प्रति तद्विषयकेष्टसाधनत्वप्रकारकज्ञानं कारणम्, तद्विषयकप्रवृत्तिम्प्रति तद्वि-षयककृतिसाध्यत्वप्रकारकज्ञानं कारणम्बलवदनिष्टाऽननुबन्धि चेति ज्ञानत्रयम्।

अनुबन्धत्वञ्च प्रवृत्तिजनकज्ञानप्रयोजकज्ञानविषयत्वम्। प्रवृत्तिजनकज्ञा-नञ्चेष्टसाधनत्वादिप्रकारकमेव। तत्प्रयोजकताऽधिकार्य्यादिज्ञाने तद्विषयत्वम-धिकार्य्यादीनामेव। किञ्च प्रवृत्तिप्रयोजकज्ञानविषयत्वं वा तत्। प्रवृत्तिप्रयो-जकज्ञानन्तु इष्टसाधनत्वप्रकारकं कृतिसाध्यत्वप्रकारकञ्चेतिसङ्घटनप्रकारः। प्रवृ-त्तिश्चाध्येतुरध्यापयितुर्वा श्रोतुश्श्रावयितुर्वा।

ननु णम् प्रह्वत्वे शब्दे चेति धातुः। तत्र प्रह्वत्वं नम्रीभावः भयवशादपि कश्चित्कश्चित्प्रति नम्रो भवति, देवदत्तो नमतीत्यत्र नम्रीभूतो भवति इत्येवमेव शाब्दोऽर्थः प्रतिभाति कथं लोकप्रसिद्धनमस्काररूपार्थ इति प्रश्नः। अनेकार्था अपि धातवो भवन्तीति भाष्या"त्स्रेधतेर्गताबि"तिगतिग्रहणज्ञापितात् प्रणमामि सत्यसन्धमितिवाक्यात् शिष्टैस्तथैवोदाहृतत्वाच्च। नम्धातोः करशिरस्संयोगा-नुकूलव्यापारे शक्तिवादस्य सार्वजनीनत्वात्। तथा च करशिरस्संयोगानुकूल-व्यापारत्वन्नमस्कारत्वमिति फलति। अत एव आशीर्नमस्क्रिया वस्तुनिर्देशो वाऽ-पि तन्मुखमित्यत्र नमस्क्रियेतिपदं सुसङ्गतमिति "नमस्कारी गण्डकाली समङ्गा खदिरेत्यपी"तिकोशे नमस्कारीत्यस्य नमस्करणशीलेत्यर्थ इति। नमस्कारश्च कर-शिरस्संयोगरूपमिति टीककाः। किञ्च "जानुभ्यां च तथा पद्भ्यां पाणिभ्यामुरसा धिया। शिरसा वचसा दृष्ट्या प्रणामोऽष्टाङ्ग उच्यत" इतिवैष्णवोपदेशेन नम्धा-त्वर्थस्य नम्रीभावातिरिक्तस्य प्रतीतेः। नच करशिरस्संयोगानुकूलव्यापारस्य

(१) ग्रन्थविशिष्टत्वमिति—ग्रन्थाव्यवहितपूर्वत्वम् मुनित्रयमिति मङ्गलस्य। स्वघटकत्वं श्रौत्राईन्तीचणैरित्यस्य। स्वाव्यवहितोत्तरत्वमित्यस्य इत्थंवैदिकशब्दा-नाम्। मङ्गलादीनि मङ्गलमध्यानीति महाभाष्यमेवात्र मूलम्।

नमूधात्वर्थत्वे कण्डूयने विघर्षणेऽपि कस्य चित् शिरसि क्रोधवशाच्चपेटिकाप्रदानेऽपि करशिरसोस्संयोग इति, क्षौरक्रियायान्नापितस्य करौ अन्यस्य शिरश्चेति तयोस्संयोगेऽपि व्यभिचार इति तैलेन शिरोमर्दनेऽपि । अथ च निरुक्तरीत्या साष्टाङ्गप्रणामे केवलकरशिरसोस्संयोगो नास्तीति कथं समानार्थकता । किंच साष्टाङ्गप्रणामोऽपि व्यभिचारार्हः स्त्रीसम्भोगकालेऽष्टाङ्गानामतिरिक्ताङ्गानां च संयोगसत्त्वात् इति वाच्यम् ? मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इत्याकारकज्ञानविशिष्टकरशिरस्संयोगानुकूलव्यापारस्य नमूधात्वर्थवर्णनात् । तथाच मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इत्याकारकज्ञानविशिष्टकरशिरस्संयोगानुकूलव्यापारत्वन्नमस्कारत्वम् ।

नच "जानुभ्यां च तथा पद्भ्यामिति" वाक्यानुरोधेन साष्टाङ्गप्रणामे करशिरस्संयोगाऽभावात्कथन्तत्त्वन्नोचेदेवमर्थद्वयाऽपत्तिश्चेति वाच्यम् ? एतच्छिष्टवाक्यलक्षणसंरक्षणाय क्वचित् करशिरस्संयोगानुकूलव्यापारो नमर्थः क्वचिच्च करशिरआदीन्द्रियसंयोगानुकूलव्यापारस्य नमर्थत्वस्वीकारात् ।

ननूत्कृष्टत्वाऽपकृष्टत्वयोः परस्परसापेक्षत्वेन निरूप्यनिरूपकभावाऽपन्नत्वात् पुरुषस्य पुरुषन्नमस्करोति इति वाक्ये उत्कृष्टत्वापकृष्टत्वयोरसंघटनेन कर्मत्वविशिष्टप्रयोगो न स्यादितिचेन्न ? तदाश्रयत्वेनेच्छोद्देश्यताया जागरूकत्वादात्मा आत्मानं जानातीतिवत् कर्मत्वोपपत्त्या तादृशबोधसम्भवात् । स्वप्नाद्यनुरोधेन बौद्धपदार्थस्यावश्यकत्वेन "अत्यन्ताऽसत्यपि ह्यर्थे ज्ञानं शब्दः करोतिचे"ति वाक्यपदीयवचनेन च भ्रमात्मकबोधसत्त्वे बाधकाऽभावाच्च । न च कर्त्तुस्तादृशेच्छैव नोदेति भक्त्यादिवशेनोत्कृष्टत्वज्ञानसौलभ्यादिति वाच्यम् ? उत्कृष्टविशेष्यको मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इत्याकारकापकृष्टत्वप्रकारकबोधाश्रयत्वप्रकारको यो बोधस्तादृशबोधानुकूलकरशिर आदीन्द्रियसंयोगानुकूलव्यापारो नमूधात्वर्थ इति कल्पनेन पुरुषस्य पुरुषन्नमस्करोतीत्यादिप्रयोगसौष्ठवात् ।

नच चैत्रस्योत्कृष्टधर्मिकं ज्ञानम्मैत्रस्यापकृष्टत्वप्रकारकं ज्ञानमेवञ्च तावताऽपि अनिष्टश्चैत्रो नमति गुरुमिति प्रयोग आपद्येतेति वाच्यम् ? तत्तत्पुरुषीयोत्कृष्टत्वाऽपकृष्टत्वप्रकारकबोधाश्रयत्वप्रकारकबोधानुकूलेति परिष्कृतिमार्गानुधावनेनाक्षतेः । नच गतदिने उत्कृष्टत्वज्ञानमद्यापकृष्टत्वज्ञानमितिाविनिगमनावैकल्येन कालान्तरीणज्ञानमपि कालान्तरे नमस्कारार्थत्वसम्पादकं स्यादिति वाच्यम् ? तत्तत्कालावच्छेदेनोत्कृष्टत्वापकृष्टत्वनिवेशेनाऽदोषात् । एतेन ब्राह्मणात्यन्तसमीपवर्त्तिनि शूद्रे विद्यमाने ब्राह्मणन्नमति देवदत्त इत्याकारकवाक्यार्थबोधमवगाहमाने तत्कालावच्छेदेनैव शूद्रन्नमतीत्यनिष्टप्रयोग आपद्येत । शूद्राश्रयत्वेनेच्छोद्देश्यत्वाऽभावात्कर्त्तुरित्यस्याऽप्रवृत्त्या कर्मत्वाऽभावस्तु वक्तुमशक्य"स्तथायुक्तञ्चानीप्सितमि"त्यनेन ओदनं भुञ्जानो विषम्भुंक्त इतिवत् कर्मत्वसौष्ठवादित्युक्तमपास्तम् ।

नच तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तत्वादननुगमेऽनेकपरिष्काराऽपत्तिश्चेति वाच्यम् ? तत्तत्कालीनतत्तत्पुरुषीयापकृष्टत्वाश्रयत्वेनेच्छाविषयीभूतत्वे सति मत्तस्त्वमुत्कृष्टस्त्वत्तोऽहमपकृष्ट इत्याकारकज्ञानविशिष्टकरशिर आदीन्द्रियसंयोगानुकूलव्यापारस्यैव नम्धात्वर्थत्वेन जातिपक्षाश्रयणेन यावल्लक्ष्यन्तावल्लक्षणमितिन्यायेनानन्त्यदोषपरिहारात् ।

नचैवमाडम्बराश्रयणे विशेषशब्दानान्निवेशे किम्प्रमाणमिति वाच्यम् ? धातूनामनेकार्थत्वात् नम्धातोर्नत्वाशब्दस्य चोक्तपरिष्कारार्थे रूढिस्वीकारात् ।

नच स्वकार्यसिद्धयेऽपकृष्टम्पुरुषमपि कश्चित्प्रणमति, किञ्च भयवशादपि त्वयाऽहं हेय इति बद्धाञ्जलिः करशिरस्संयोगानुकूलव्यापारपुरस्सरं कश्चिदपकृष्टं प्रार्थयतेऽनन्तरं प्रणमत्यपकृष्टचरणयोश्शिरस्संयोजयति, तत्र नमस्कर्त्तुरेवोत्कृष्टत्वम् । किंच स्वकार्यसिद्धये ब्राह्मणस्साधुर्वा शूद्रन्नमति तत्र शूद्रे नोत्कृष्टत्वमेवं प्राणदण्डयोग्यो न्यायालये निर्णेतारं यवनजातीयन्नमति तत्र कथमप्युत्कृष्टत्वं नास्तीतिकथङ्कारमेवम्विधेषु स्थलेषु नम्धात्वर्थसंघटनमिति वाच्यम् ?

अगत्या आपत्कालावच्छेदेन स्वकार्य्यसिद्धये तत्र तत्रोत्कृष्टत्वधर्मारोपेण शूद्रन्नमतीत्यादिप्रयोगसम्भावनात् । नचाज्ञातोत्कृष्टत्वविशेषणस्य द्वित्रादिवर्षवयस्कस्य बालकस्य नमस्कर्त्तुर्नोत्कृष्टत्वापकृष्टत्वज्ञानम्परन्तु पित्राद्युपदेशेनोत्कृष्टम्प्रणमति कदाचिदपकृष्टं स्वभावतोऽभ्यासात् प्रणमतीति तत्र कथन्नम्धात्वर्थसंघटनमिति । किंच विक्षिप्तस्य वैचित्र्यविशिष्टस्य जन्मान्तरीयसञ्चितपापभोक्तुरुत्कृष्टत्वाऽपकृष्टत्वज्ञानं वस्तुतो नास्तीति स विक्षिप्तस्सर्वन्नमतीतिव्यवहारे पूर्वोक्तनम्धात्वर्थाऽसंघटनात्कथन्तादृशप्रयोग इति वाच्यम्? बालको विक्षिप्तो वा गुरून्नमतीत्यादिप्रयोगाणां सर्वन्नमतीत्यादिप्रयोगाणांचोत्कृष्टत्वापकृष्टत्वज्ञानमन्तरेणाऽपि सर्वसम्प्रदायसिद्धत्त्वात् , तादृशप्रयोक्तुर्बालकविक्षिप्तातिरिक्तस्योत्कृष्टत्वाद्यारोपेण प्रवृत्तिस्वीकाराच्च । नच नतमस्तकः पुरुषो गच्छतीत्यादौ नम्र एव नम्धात्वर्थः प्रतिभातीति करशिरस्संयोगो नेति वाच्यम् ? धातूनामनेकार्थकत्वेन कचिन्नम्ररूपार्थप्रतीतौ क्षतिविरहात् ।

नच शुकमैनादिपक्षिणोऽपि सुशिक्षावशात्प्रणामङ्कुर्वन्ति प्रत्यक्षव्यवहारोऽयन्दृष्टचर इति शुकः प्रणमतीतिसदृशाः प्रयोगाः कथम् तत्रोत्कृष्टत्वाद्यज्ञानात् इति वाच्यम् ? पशूनाम्पक्षिणामुत्कृष्टत्वाद्यज्ञानेऽपि स्वभावत आरोपाद्वा तथा प्रयोगसौष्ठवात् । मनुष्येष्वेव भक्तिवशाद् गुणावलोकनाच्चोत्कृष्टत्वाऽपकृष्टत्वज्ञानव्यवहारस्य सार्वजनीनत्वाच्च । एवमन्येऽपि दोषा विशेषशब्दनिवेशेनानयैव दिशा वारणीया इति सरयूपारीणशुक्ला इत्यलम् ।

सविकल्पकविषयत्वन्नानावृतपदार्थस्य कथमपि सम्भवतीति शिवस्य अविकल्पकविषयत्वनिरासपुरस्सरसविकल्पकविषयत्वसौष्ठवायाह साम्बेति ।

अम्बा जगज्जननी माया "प्रकृष्टवाचकः प्रश्च कृतिश्च सृष्टिवाचकः । सृष्टौ प्रकृष्टा या देवी प्रकृतिस्सा प्रकीर्त्तिता" तया सहितं साम्बं शिवम् । शिवस्य निर्द्धर्मकस्य मायिकप्रपञ्चरहितस्याऽपि मायासाहित्यात्सृष्टिकर्तृत्वम् । शेतेऽस्मिन्नविशेषात्सर्वं जगदितिव्युत्पत्त्या प्रलयकर्तृत्वम् । बह वृहि वृद्धाविति चौरादिकवृंहधातोरन्तर्भावितण्यर्थान् मनिनि सिद्धब्रह्मशब्देन पालनकर्तृत्वम । तथा च "तज्जलानित्युपासीते"तिश्रुत्या सृष्टिस्थितिप्रलयकर्त्तारं शिवमित्यर्थोऽत्र प्रमाणं "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसम्विशन्तीति"तस्माद्वेतस्माद्वाऽत्मन आकाशस्सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेराप: अद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योऽन्नमन्नाद्रेतो रेतसस्सर्वोत्पत्तिरिति "एकोऽहम्बहुस्यामि"ति श्रुतयः । शिवं कोऽर्थस्सच्चिदानन्दात्मकं साक्षाद्भगवन्तमाद्यन्नत्वेत्यभिप्रायः । किञ्च अम्बा पार्वती तया सहितं शिवम्विश्वेश्वरं ब्रह्म ब्रह्मरूपिणमिति ।

किञ्च अम्बा नागेशमाता शिवो नागेशपिता तया सहितं शिवं शिवभट्टनामानं स्वपितरन्नत्वेत्यर्थः । नच शिवपदसान्निध्यादम्बापदेन नागेशपितुश्शिवभट्टस्यैवाम्बा नतु नागेशाम्बा सती देवीत्याख्येति वाच्यम् ? एवमपि मृतमातृकनागेशपालनं शैशवे पितामह्यैव कृतमिति तद्भक्तिवशात्पितामह्या नमनमिति । स्वपितामहीसहितं पितरं शिवन्नत्वेत्यर्थेऽप्यक्षतेः ।

किञ्च शेतेऽस्मिन् जगदितिव्युत्पत्त्या शिवपदेनान्तिमा संहारशक्तिः । अम्बयति जीवयतीरयम्बा सृष्टिकर्त्री प्रकृतिरनादिभूता वृंहयति जगत्पालयतीति व्युत्पत्त्या जगत्कर्मकपालनशक्तिमत् ब्रह्म । तथाच सृष्टिस्थितिपालनरूपशक्तित्रयविशिष्टन्नत्वेत्यर्थः । किञ्च परिभाषेन्दुशेखरपदमत्रत्यमावर्त्तते एकं ग्रन्थबोधकमपरम्परितो भासमान इन्दुश्चन्द्रश्शेखरे मस्तके यस्येति व्युत्पत्त्या शिवबोधकं, परिभाषेन्दुशेखरं शिवम्पार्वतीपतिन्नत्वेत्यर्थः । निर्गुणाया मूर्त्तेर्नत्यसम्भवादाह साम्बेतिनिष्कर्षः ।

नागेश इति । ननु "आत्मनाम गुरोर्नाम नामातिकृपणस्य च । श्रेयस्कामो न गृह्णीयाज्ज्येष्ठापत्यकलत्रयो"रिति स्मृत्या नागेश इत्यात्मनामोच्चारणं कथमिति चेन्न ? स्मृतिवाक्ये धातूनामनेकार्थत्वाद् ग्रहधातुरुच्चारणार्थकः न गृह्णीयादित्यस्य नोच्चारयेदित्यर्थः । चतुर्विधा हि वागस्ति "परावाङ्मूलचक्रस्था पश्यन्ती नाभिसंस्थिता । हृदिस्था मध्यमा ज्ञेया वैखरी कण्ठदेशगा" वैखर्या हि कृतो नादः परश्रवणगोचरः । माध्यमिक्या कृतो नादःस्फोटव्यञ्जक उच्यत' 'इति प्रमाणेन वैखरीवाग्विषयेऽन्यश्रवणोपयोगिनामोच्चारणस्यैव निषेधविषयत्वाङ्गीकारात्, लेखकाले मन्दम्मन्दमुच्चारणे सत्यपि क्षतिविरहाच्च । अत एव प्रत्यभिवादकाले "नाम गोत्रं:वे"ति वार्त्तिकम् "अविद्वांसः प्रत्यभि-

बादे नाम्नो ये न प्लुतिं विदुः । कामन्तेषु तु विप्रोष्य स्त्रीष्विवायमहम्भदेदि"ति श्रुत्या स्वनामगोत्रोच्चारणविधेश्शास्त्रीयत्त्वेनोच्चारणं सङ्गच्छते । आत्मनामेति सामान्योच्चारणनिषेधविधेरभिवादप्रत्यभिवादप्रकरणीयनामगोत्रं वेति विशेषविधिना बाधाच्च । अत एव गोनर्दीयस्त्वाहातिजरैरितिभवितव्यम् , स्वयमुक्तेष्वपि वचनेषु मुनीनामिति शातातपोऽब्रवीदिति "भट्टोजिदीक्षितकृतिस्सैषा सिद्धान्तकौमुदी, नत्वा फणीशन्नागेशस्तनुतेऽर्थप्रकाशकमित्त्यादिप्रमाणेन यौगिकनामग्रहणे दोषाऽभावः । नागः पतञ्जलिरीशः प्रवर्त्तको यस्येति लेखो न युक्तः ? जातिप्रवृत्तिनिमित्तकद्रव्यविशेषवाचकनागशब्दः तदितरप्रवर्त्तकत्वरूपक्रियाविशेषप्रकृतिनिमित्तक ईशशब्द एवञ्च विशेषणं विशेष्येण बहुलमितिभाष्यबलेनेशशब्दस्य पूर्वनिपातापत्तेः । नागः पतञ्जलिरीशः प्रवर्त्तकः आराध्यो वा यस्येति यौगिकाऽभिधानात् नागेशो रचयति प्रवदति वैतनिकः कश्चिदन्यो लिखतीतिलोकव्यवहारेण नागेशकर्तृकोच्चारणाऽभावाच्च । एकादशे द्वादशे वाऽह्नि पिता नाम कुर्य्यादिति श्रुतिसिद्धनामोच्चारणस्यैवात्मनामेतिस्मृत्या निषेधविधानाच्च। नागस्य ईःनागेः भाष्यकारस्य लक्ष्मीर्महाभाष्यम् तां श्यति तनूकरोति ग्रन्थनिर्माणद्वारेति नागेश इति व्युत्पत्तिसम्बलितस्य निषेधविषयत्त्वाऽभावात् अहम्पण्डितः अहम्ब्राह्मणः अहम्प्रवक्तेत्त्यादिव्यवहारस्य स्वस्य स्वेन वोच्चारणस्य लोकप्रसिद्धत्वेन विरोधाऽभावात्।ईशत इतीशः प्रभवः नागानामीशो नागेशस्तन्नत्वेति द्वितीयान्तत्त्ववर्णनेन कुरुते इत्येतत्कर्त्तुरद्ध्याहारेणाऽपि सिद्धेः । किञ्च नागानां सर्पाणामीशो नागेशः पतञ्जलिस्स एव परिभाषेन्दुशेखरं कुरुतेऽहन्तु लेखनीव लेखक इति नागेशपदेन भाष्यकारस्यैव ग्रहणबोधनात् । यज्ञादिसङ्कल्पे पत्रलेखादौ च नामोच्चारणस्य प्रसिद्धत्वाच्च । मूर्खोऽपि साधारणजनो यथादृष्टं लिखत्त्येव नागेशातिरिक्तो लेखक इत्यभिधानाच्च ।

अत्र मन्युदेवाः, ग्रन्थकर्त्तुर्लोकेऽत्यन्तप्रसिद्धिरिति प्रचुरो व्यवहारस्तेन विशेषव्यवहारेण स्वनाम न गृह्णीयादिति सामान्यवाक्यस्य बाधेनाऽदोष इति समाधिमूचुस्स विषयभेदे बाध्यबाधकभावाऽभावेन हेयो विषयैक्ये बाध्यबाधकभावो भवति नतु विषयभेदे "लिङो यासुट् तकारथकारयोस्सुडि"ति विषयभेदात् इति मूलात्। नामग्रहणतः कीर्त्तिवृद्धिर्दुरितञ्च भवत्वनयोर्न कोऽपि विरोधः। अत एव सांख्ये क्रतूपकारकत्वदुःखजनकत्वयोर्विरोधाऽभावात्सङ्कोचाऽभाव उक्तो वाचस्पतिमिश्रैः । अत्र शाब्दिकम्मन्याः, ननु विषयभेदे बाध्यबाधकभावाऽभावेऽचिरादेशेन नुटोऽप्यपवादत्वाद् बाधमाशंक्य "न तिसृ"तिज्ञापकेन समाहितम्भाष्य इति ग्रन्थाऽसङ्गतिः । "एकाचो द्वे प्रथमस्य" अजादेर्द्वितीयस्ये"त्येनयोर्बाध्यबाधकभावो न स्यात् । एवञ्च विषयभेदेऽपि बाध्यबाधकभावो भव-

तीति सिद्धम् ।

ननु विषयभेदेऽपि बाध्यबाधकभावस्वीकारे ब्राह्मणेभ्यो दधि दीयतां कम्बलः कौण्डिन्यायेति कम्बलदानेन दधिदानस्य बाधाऽपत्तिः । अथ ब्राह्मणाय दधि दीयतां श्वः कौण्डिन्याय तक्रमिति वाक्येऽपि बाध्यबाधकभावश्चेति चेन्न ? सजातीययोरेव बाध्यबाधक(१) भाव इति तदभिप्रायात् । साजात्यञ्च केन धर्मेणेति जिज्ञासायाम्भोजने कच्युत्पादकत्वेन दधितक्रयोः साजात्याद्बाध्यबाधकभावः । दधिकम्बलयोस्तु नैव साजात्यम् । एवमेककालिकयोरेव बाध्यबाधकभाव इति द्वितीयाऽपत्तिविरहात् । "यासुडि"ति सूत्रे परस्मैपदेष्विति सप्तम्या विषयसप्तमीत्वेन लिङो यासुट् तकारथकारयोस्सुडिति विषयभेदादित्यस्य कालभेदादित्याशयात् इति कालभेदान्न बाध्यबाधकभावः । एवन्तात्पर्यवर्णनात् "प्यायःपी"त्यनेन "लिड्यङोश्चे"ति विषयसप्तम्या लिटः प्राक् थादेशास्तेन द्वित्वबाधाऽभावः । तथाच विषयभेदेऽपि बाध्यबाधकभाव इति सिद्धः पन्थाः ।

अत्र सरयूपारीणशुक्लाः । किञ्च संस्कारप्रकरणे को नामासि कस्य ब्रह्मचार्य्यसीति पृष्टे अमुकशर्माऽहमिति नामोच्चारणम्प्रसिद्धमेव "एकादशेऽहनि पिता नाम कुर्यादि"तिश्रुतिश्चोल्लापननामकरणार्थं विवाहयात्रादौ चन्द्रबलगणनावि-

---

( १ ) विरोधाभावात् सङ्कोचाभाव उक्तो वाचस्पतिमिश्रैः—ईश्वरकृष्णरचितसाङ्ख्यकारिकाव्याख्यानभूतसाङ्ख्यतत्त्वकौमुद्यामिति शेषः । तत्र हि "मा हिंस्यात् सर्वा भूतानि" इति सामान्यतो हिंसानिषेधकस्य "अग्नीषोमीयम् पशुमालभेत" इति विशेषतो हिंसाविधायकेन बाधमाशङ्क्य विरोधे हि बलीयसा दुर्बलो बाध्यते, नचेहास्ति कश्चिद् विरोधो भिन्नविषयत्वादिति बाधाभाव उपपादितः । तथाहि "न हिंस्यात्" इति निषेधेन "हिंसा पुरुषानर्थकरी" इत्येव बोध्यते नतु "हिंसा क्रतूपकारिका न" इत्यपि । एवम् "अग्नीषोमीयम्" इतिवाक्येनापि 'हिंसा यागोपकारिणी' इत्येव बोध्यते नतु 'हिंसा नानर्थकरी' इति । एवञ्च भिन्नविषयत्वं स्फुटमेवैतयोः । नच न हिंस्यादित्यस्य 'हिंसाऽनर्थहेतुः अक्रत्वर्था च" इति बोधद्वयम् , अग्नीषोमीयमित्यनेनापि "पश्वालम्भनं क्रत्वर्थम् , नानर्थहेतुः" इत्यर्थद्वयस्यापि च कल्पनेन युज्यते बाध्यबाधकभावोऽसङ्गतश्च वाचस्पतिग्रन्थ इति वाच्यम् ? तथा सति वाक्यभेदप्रसङ्गात् तस्य चानिष्टमहादोषत्वात् । एवञ्च विप्रतिषेधो विरोधपुरस्सरं युगपत् सम्भवस्स एवेह नास्तीति न बाध्यबाधकभावः । सुटा यासुट् न बाध्यते इत्यत्रापि समानकालप्राप्तिकत्वाभावादेव विप्रतिषेधाभावो विषयसप्तमीस्वीकृतिद्वारा च तं सम्पाद्य बाध्यबाधकभावाभावसम्पादने तात्पर्यम् । अत एव "ञेर्जुस्" शास्त्रविषये यासुट् सिध्यति । अत्र मानन्तु यासुड्विषये "सीयुटःप्रतिषेधो वक्तव्यः" इत्यपूर्ववार्त्तिकाश्रयणमेव । अन्यथा एतत्कल्पनाभावे वार्त्तिकेनैव समुत्तरन्देयम् । वार्त्तिककृतस्तत्रैवांशेऽभिप्रायः ।

चारार्थं वा कल्पतरौ कोभवानितिपृष्टे सप्पोऽहमिति एकाकिनं लेखन्यादिरहितं कश्चित् कश्चित् पृच्छति कस्त्वमिति स नामोच्चारयत्येव । किञ्च युद्धगृहे नामोच्चारणलेखनमन्तरेण दण्डयानान्निर्णयो न भवतीति नामोच्चारणं ज्याय एव ।

किञ्च "अभिवादात्परम्बिप्रो ज्यायांसमभिवादयन् । असौ नामाहमस्मीति स्वन्नाम परिकीर्त्तयेदि"ति स्मृतिमहावाक्येन स्वेनैव स्वनामोच्चारणस्याऽविगर्हितत्त्वाच्च । किञ्च । "गुरुम्प्रकाशयेद्धीमान्मन्त्रं यत्नेन गोपयेत् इति" धार्मिकसम्प्रदायशिरोमणीभूतवैष्णवसम्प्रदायनिष्ठगुरुपरम्पराप्रचारकमहावाक्येन गुरुनामोच्चारणम्प्रशस्तमिति सामान्यनामोच्चारणनिषेधकस्मृतिवाक्ये आत्मनामगुरोर्नामेत्यत्र सङ्कोच्यसङ्कोचकभावो भवत्येव । तथाच तत्साहचर्य्या "द्वात्मनामे" त्यत्राऽपि तथैव सङ्कोचेन नचास्ति स्मृतिवाक्यविरोधः ।

अत एव तत्सम्प्रदाये गुरुपरम्परास्तोत्रपाठे पूर्वकालीनगुरूणां परमपदप्राप्तानामप्राप्तानां वा समेषाम्महापुरुषाणान्नामोच्चारणेनानन्दप्रवाहः । आदिपुरुषवैष्णवधर्मप्रवर्त्तकानां साक्षाच्छेषावताराणां श्रीरामानुजमुनानान्नामोच्चारणं सार्वजनीनमितिगीतिः ।

एकमेव नाम द्वयोः पुरुषयोर्द्वेवदत्त इति देवदत्त इति युद्धगृहे न्यायाधीशः पृच्छति केन ताडितस्त्वमिति स नामोच्चारणेन ज्ञापयति का तत्र युक्तिस्स्वनामोच्चारणम्व्यवहारसिद्धम् । किञ्च एकाकिनोरपरिचितयोः पुरुषयोः कुत्रचिन्मार्गे सम्बन्धे किन्ते नामेति केन चित्कृते प्रश्ने परिचयार्थम्प्रसिद्धयर्थं वा स्वनामोच्चारणङ्करोत्येवेति । किञ्च आत्मनामगोपने किम्फलम् । किञ्च आत्मनो नाम यत्र सचासौ गुरुरिति अर्थात् आत्मनामघटितगुरुनाम न गृह्णीयादित्यर्थः । किंच आत्मनामेत्यस्य दुरात्मनामेत्यर्थः । दुःपदलोपश्छन्दः पूर्त्यर्थम् । अत एव कृपणेन साहित्यं सुगतम् । किंच आत्मनामेतिश्रुतेः "अ मा नो ना प्रतिषेधे" अकोऽर्थो न आत्मेश्वरो यत्र तन्नाम न गृह्णीयात् आत्मसत्ता च भजनादिनेति तात्पर्य्यम् । ईश्वरभक्तिविमुखस्य पापिनो नाम न गृह्णीयादिति फलितम् । पुनरप्यत्र शङ्काः, ईशत इतीशो नागानामीशो नागेश इति द्वितीयान्तं नत्वेत्यनेनान्वितमिति पण्डितम्मन्यानामुक्तिरुपेक्षणीयैव । नत्वा फणीशन्नागेशस्तनुतेऽर्थप्रकाशकमिति शब्देन्दुशेखरीयमङ्गलाचरणेन विरोधात्तत्र फणीशपदेन पतञ्जलेरेव ग्रहणमिति वदन्ति ।

यत्तु कूपखननन्यायेन समाधानं यथा कूपखानको यद्यपि तदीयमृदा पांशुभिश्चावकीर्णो भवति सोऽप्सु सञ्जातासु तत एव तं गुणमासादयतीतिवत् मङ्गलाचरणजन्यपुण्येन नामोच्चारणजन्यप्रत्यवायशान्तिरिति, तत्तुच्छतरम्कूपखननस्थले प्रत्यक्षप्रमाणमत्रत्वनुमानमेव, मङ्गलं केवलग्रन्थसमाप्तिदुरितोपशमम्प्रत्येव कारणं नामोच्चारणजन्यदुरितोपशमकन्न भवतीति यत्कर्मणो यत्पा-

पनाशकत्वं श्रुतिस्मृतिविहितन्तद्दतिरिक्तदुरितापशमकन्न भवतीति तन्न्यायाऽप्रवृत्तेरिति, तदस्मभ्यन्न रोचते तथाहि कूपखानकन्यायप्रवृत्तिर्भवत्येव दृष्टान्तार्थम् ईश्वरनमस्काररूपम्मङ्गलङ्किङ्किन्दुरितन्नोपशमयेत्।

चरितं रघुनाथस्य शतकोटिप्रविस्तरम्।
एकैकमक्षरं पुंसाम्महापातकनाशनम्॥

"शिवस्त्वयन्त्वमेवासि विष्णुस्त्वञ्च प्रजापति"रितिदर्शनेन शिवनामोच्चारणेन मनुष्यः पुण्यभाग्भवति "एकश्शब्दस्सम्यग् ज्ञातस्सुष्ठु प्रयुक्तस्स्वर्गे लोके च कामधुग्भवति शब्दब्रह्मपरब्रह्मेतिभेदाद् द्वे ब्रह्मणी इति श्रुतिः। "शाब्दे ब्रह्मणि निष्णातः परब्रह्माधिगच्छति" नागेशस्य शब्दमयब्रह्मोपासकत्वेन योगिरूपत्वात् नामोच्चारणजन्यं दुरितङ्किंकरिष्यति ग्रामं गच्छन् तृणं स्पृशतीतिवदन्यदुरितध्वंसकत्वे क्षतिविरहात्। अनेकशक्तिमान् गङ्गाप्रवाहश्शैत्यं पुण्यराशिञ्च स्नानदर्शनेन करोति। स्नानदर्शनाभ्यामेव यवनानपि पुनाति शैत्ययति हिन्दुभक्तान् "घटायोन्मीलितं चक्षुःपटं किन्नहि पश्यती"तिन्यायात् पुण्यपुञ्जस्य फलद्वयार्थकत्वेऽपि क्षतिविरहात्। यद्यपि यज्ञनिष्ठा हिंसा हिंसा न भव-(१)ति धर्मयुद्धे रामेण रावणो हतस्तथापि रामेण प्रायश्चित्तमाचरितम्। अन्यथापि यज्ञे हिंसाजनितप्रत्यवायपरीहारार्थम्प्रायश्चित्ताचरणं सङ्गच्छते। अन्यथा यागजन्यादृष्टविशेषेण दुरितपरिहारे प्रायश्चित्ताचरणन्निरर्थकं स्यात्।

केचित्तु नागेशादिनामनिर्देशस्य कोऽत्यनुवृत्त्यर्थत्वमेव फलम्। किंच लोकविश्वासार्थम्विस्पष्टोच्चारणरूपप्रतिज्ञावाक्ये "रामो द्विर्नाभिभाषत" इति रामायणे श्रीरामोक्त्याऽत्मनामगुरोर्नामेतिनिषेधाऽप्रवृत्तेः। किंच "आत्मनामे"तिस्मृतावात्मपदेन यत्र साक्षात्तादात्म्यम्प्रयोक्तृप्रयुज्यमाननामप्रतिपाद्यार्थयोः प्रतीयते तत्रैव निषेधो यथा देवदत्तोऽहं कथयामि। साक्षात्तादात्म्यप्रतीतिश्च अस्मच्छब्दार्थसामानाधिकरण्य एव "गोनर्दीय आहे"तिभाष्यप्रामाण्यात्। नन्वेवमभिप्राये "कैयटो जैयटात्मज" इति शिष्टकैयटवाक्यस्यापि निषेधविषयत्वं तादात्म्यप्रतीतेस्सौष्ठवादिति चेन्न? लोके कैयट इति यो व्यवह्रियते सोऽहञ्जैयटात्मज इत्यभिप्रायाश्रयणात्परम्परया तादात्म्यप्रतीतिसत्त्वेन साक्षात्तादात्म्याऽप्रतीतेर्निषेधाऽविषयत्वादित्यूचुः।

कुरुते सुधीरिति। सुष्ठु ध्यायतीति सुधीः ध्यायतेस्सम्प्रसारणञ्च अनेन विशेषणेन ग्रन्थकर्त्तृस्वसामर्थ्यन्दीप्यते नत्वात्मप्रशंसनम्।

ननु सुखेन परिभाषार्थबोधस्य बालसमवेतत्वान्नागेशकर्तृगतफलाऽभावा-

(१) यद्यपि यज्ञनिष्ठेति-अहिंसा याज्ञिकी प्रोक्ता इति मानवधर्मशास्त्रसिद्धान्तमालम्ब्य शङ्कन्ते।

दात्मगामित्वाऽभावेनात्मनेपदमनुपपन्नमिति चेन्न ? प्रकथने उपयोगे वा "गन्धनावक्षेपणसेवने" त्यात्मनेपदविधानात् । बालनिष्ठसुखबोधस्य परोपकारत्वेनाऽपूर्वादृष्टजनकत्वेन नागेशकर्त्ताऽपि तादृशादृष्टविशेषसमवेत इति आत्मगामित्वेनात्मनेपदसौलभ्यात् । यशःपुण्यादिरूपस्य क्रियाजन्यफलस्य कर्त्तृगामित्वादात्मनेपदमिति केचित् ।

किञ्च केवलपरोपकृतय एव न नागेशेन ग्रन्थः क्रियतेऽपि तु शास्त्रमन्थनद्वारा स्वात्मविशिष्टबोधायैव क्रियते तस्यात्मगामितया परस्मैपदाऽप्रवृत्तेः । बालानां सुखबोधायेत्युक्तिस्तु परोपकृतये "घटायोन्मीलितं चक्षुः पटं किन्नहि पश्यती"तिन्यायसञ्चारात् ।

बालानां सुखबोधायेति-अत्र बालपदेन द्वित्रादिवर्षवयस्कानाम्बालानान्न ग्रहणम् परिभाषाद्यर्थनिर्णयाऽसमर्थत्वात् । किन्तु महाभाष्याद्याकरग्रन्थेभ्यः परिभाषार्थनिर्णयायासाऽसहिष्णुत्वे सति यथार्थपरिभाषार्थग्रहणयोग्यविशिष्टशक्तिमतां व्युत्पन्नानां बालानामित्यर्थः । प्रतिपिपादयिषितार्थविषयकप्रतिपत्तिशून्यत्वे सति तदपेक्षित्वम्बालत्वमिति वा लक्षणम् । सुखेन बोधस्सुखबोधः "प्रकृत्यादिभ्य उपसंख्यानमि"ति तृतीया सुखबोधायेत्यत्र तादर्थ्ये चतुर्थी ।

परिभाषेन्दुशेखरमिति–परिभाषा एवेन्दुस्स शेखरे कोऽर्थो मुख्यप्रतिपाद्यस्थाने यस्य ग्रन्थस्य तं परिभाषेन्दुशेखरं ग्रन्थमित्यर्थः । परिभाषा इन्दुरिव प्रकाशकत्वेन शेखरे मुख्यप्रतिपाद्यस्थाने यस्य तं ग्रन्थमिति । मुख्यप्रतिपाद्यत्वं परिभाषार्थस्यैवात एव मस्तकधृतत्वमारोप्यते, परिभाषावदिन्दुश्शेखरे यस्य तं परिभाषेन्दुशेखरं शिवमिति, शिवविशेषणम् तन्त्रेणावृत्त्या वा ग्रन्थबोधोऽपि । परितो भाष्यते पुरुषार्थसाधनत्वादिना उद्घोष्यत इति परिभाषश्शिव इन्दुश्शेखरे यस्यासाविन्दुशेखरः परिभाषश्चासाविन्दुशेखर इति परिभाषेन्दुशेखरस्तं शिवन्नत्वेति तन्त्रावृत्तिभ्यां शिवग्रन्थयोर्द्वयोर्बोधः ।

अथवा परिभाषैवेन्दुस्स शेखरो भूषणं यस्येत्यर्थः ।

अथवा परिभाषैवेन्दुस्तस्य शेखरआश्रयः ।

अथवा परिभाषाणाम्प्रकाशकालङ्कारस्तमिति ।

यद्वा परितो भासयति प्रकाशयतीति परिभाषस्सचासाविन्दुरिति परिभाषेन्दुस्साक्षाच्चन्द्रस्स शेखरे मस्तके यस्यासौ परिभाषेन्दुशेखरश्शिवस्तमिति स चन्द्रशेखरो भूषणं यस्येत्यभिप्रायो वा ।

अथवा परिभाष्यते या सा परिभाषा वाणी तामिन्दन्ति वर्द्धयन्त्यनेकार्थत्वादन्तर्भावितणयर्थत्वात् इति परिभाषेन्दवश्शब्दास्त एव शेखरः प्रधानं यस्मिन् ग्रन्थे स परिभाषेन्दुशेखरस्तमिति ।

अथवा परिभाषामिन्दयति तदर्थज्ञानरूपैश्वर्य्येण योजयतीति परिभाषेन्दुस्सचासौ शेखरः प्रधानं परिभाषेन्दुशेखरस्तमिति ।

अथवा इन्दुश्चन्द्रश्शेखरः प्रधानं यस्मिन् लोके स इन्दुशेखरश्चन्द्रलोकः, परिभाषाश्चन्द्रलोक इव इन्दुशेखर इवेति परिभाषेन्दुशेखरस्तं ग्रन्थमिति ।

अथवा इन्दौ चन्द्रे शेखरः प्रधानः प्रकाशक एवान्धकारनिरासकत्वात्, परिभाषाः इन्दुशेखर इवेति परिभाषेन्दुशेखरस्तमिति ।

अथवा परिभाषा एव इन्दवोऽर्थप्रकाशकत्वात्ता एव शेखरे यस्येति तं ग्रन्थमिति मुख्यप्रतिपाद्यस्थानं शेखरः ।

अथवा परिभाषाणामिन्दुः प्रकाशको महाभाष्यं तत् शेखरः प्रधानं यस्मिन् तं ग्रन्थमिति । उन्दी क्लेदने उनत्तीतीन्दुः "उन्नेरिच्चादे"रित्युणादिसूत्रम् ।

अथवा भाषापरिच्छेद इत्युक्त्या परितो भाषा परिभाषा संस्कृतभाषेत्यर्थः । तस्या इन्दुः प्रकाशको महाभाष्यन्तच्छेखरः प्रधानं यस्मिन् ग्रन्थे तमिति । अत एव "परितो व्यापृतां भाषां परिभाषाम्प्रचक्षत" इत्यभियुक्तोक्तिस्सुकरा । भाषायाम्प्रमाणान्तरमपि "प्रथमायाश्च द्विवचने भाषाया" मित्याद्विकम् ।

अथवा इन्दुश्चन्द्रश्शेखरे यस्यासाविन्दुशेखरश्शिवः परिभाषाणामिन्दुशेखरः प्रतिपाद्यप्रतिपादकभावः षष्ठ्यर्थः परिभाषातदर्थप्रतिपादकश्शिवो विद्यते यस्मिन् ग्रन्थे, शिवो भाष्यकारः ।

अथवा इन्दुरिव विधिशास्त्रीयवाक्यार्थं प्रतिपादयन्त्यो याः परिभाषास्ताश्शेखरं व्याख्येयत्वाच्छिरोभूषणं यस्य तमित्यर्थः । विध्यर्थप्रकाशकपरिभाषार्थनिर्णायकग्रन्थविशेषमिति तद्धृदयम् ।

अथ च परिभाषेन्दुशेखर इति ग्रन्थनामग्रामयोर्न व्युत्पत्तिरिति प्रचलितनियमेन संज्ञा(१)शब्देऽवयवार्थो न भासते किन्तु व्युत्पत्तिमात्रमितिसिद्धान्तेन विशेषविग्रहादिचर्चा मुधैवेति दिक् । इत्यलङ्काकदन्तपरीक्षया ।

मङ्गलाचरणशाब्दबोधप्रकारः ।

नत्वा साम्बं शिवं ब्रह्म नागेशः कुरुते सुधीः, बालानां सुखबोधाय परिभाषेन्दुशेखरम् ॥ इति पदच्छेदः । नम् धातुः, क्त्वाप्रत्ययः, साम्बशब्दः, अम्प्रत्ययः, शिवशब्दः तदुत्तरमम्प्रत्ययः, ब्रह्मशब्दः अम्प्रत्ययः, नागेशशब्दः

(१) संज्ञाशब्देऽवयवार्थ इति-पूर्व सिद्धान्तस्वीकारेणैव द्वे दले यस्मिन्निति विगृह्यापि प्रत्येकदलावच्छेदेन द्विदलत्वव्यवहारसिद्धिः । अन्यथा तादृशबहुव्रीहिणा चणकादेरेव बोधः प्रसज्येत ।

तदुत्तरं सुप्रत्ययः, कृधातुः तदुत्तरन्तेप्रत्ययः, सुधीशब्दः तदुत्तरसुप्रत्ययः, बालशब्दस्तदुत्तरमाम्प्रत्ययः, सुखबोधशब्दः तदुत्तरं ङेप्रत्ययः, परिभाषेन्दुशेखरशब्दस्तदुत्तरमम्प्रत्ययः, इत्येवं विंशतिः पदानि सन्ति। पदार्थाश्च स्वनिष्ठापकृष्टत्वप्रकारकबोधानुकूलव्यापारो नम्धात्वर्थ इत्यादि, तदुत्तरं क्त्वाप्रत्ययस्य उत्तरकालिकत्वमर्थः। साम्बशब्दस्याम्बासाहित्यविशिष्टरूपोऽर्थः। अमश्च आश्रयत्वमर्थः अभेदो वा प्रकृते फलाश्रयत्वं कर्मत्वम्। अनन्यलभ्यो हि शब्दार्थ इति न्यायेन फलस्य धातुलभ्यत्वादाश्रय एव द्वितीयार्थः। परन्तु यथा देवदत्तः पचतीत्यादौ नाख्यातस्यैकत्ववाचकत्वमपि तु सुप एवेतिव्युत्पत्तिवादस्तथैव विशेषणविशेष्यभावापन्नेषु द्वितीयान्तानेकपदेषु द्वितीयार्थ आश्रयत्वमेकत्रैव न सर्वत्र, द्वौ ब्राह्मणौ व्यतिलुनीत इत्यादिषु द्वित्वादिवत्। तथाच मुख्यविशेष्यवाचकद्वितीयान्तपदोत्तरद्वितीयाया एवाश्रयत्वमर्थः अभेदोवाऽर्थ इति सिद्धम्। शिवशब्दार्थश्शेतेऽस्मिन्नविशेषात्सर्वं जगदिति व्युत्पत्त्या प्रलयकर्तृत्वरूपः। शिवात्मकत्वोक्तिरुपास्यदेवतास्वरूपानिरूपणाय, ब्रह्मशब्दार्थः। बृद्ध्यर्थकबृहधातुनिष्पन्नब्रह्मशब्देन पालनकर्तृत्वरूपोर्थः अम्प्रत्ययस्य प्रकृतेऽभेदार्थः।

पञ्चकं प्रातिपदिकार्थः जातिव्यक्तिलिङ्गसंख्याकारकभेदात्। पञ्चकन्धात्वर्थः क्रियात्वक्रियाकालकारकसंख्याभेदात्। नागेशपदस्य नागेशत्वेन मांसपिण्डरूपोऽर्थः, तदुत्तरं सुप्रत्ययस्य प्रातिपदिकार्थे विधानात् स एवार्थः, कुरुत इत्यत्र कृधातोः फलम्व्यापारश्चार्थः, फलव्यापारयोर्धातुरित्याश्रयणात्।

अत्र ग्रन्थोत्पत्तिरूपं फलम्, व्यापारश्च निर्माणादिरूपः प्रसिद्ध एव। तदुत्तरमात्मनेपदसंज्ञकतप्रत्ययस्य कर्तृरूपोऽर्थः, लः कर्मणीतिसूत्रविचनेन कर्त्तर्य्येव लकारविधानात् "वर्त्तमाने लडि"त्यनुशासनाद्वर्त्तमानकालोऽपि तप्रत्यायार्थौ लडर्थो वा। सुधीशब्दार्थः सूक्ष्मपदार्थावगाहनकर्तृत्वरूपः, तदुत्तरं सुप्रत्ययस्य स एवार्थः, प्रातिपदिकार्थे तद्विधानात्। बालशब्दस्य साधारणबुद्धिमद्रूपोऽर्थः, तदुत्तरमाम्प्रत्ययस्य समवेतत्वरूपोऽर्थः, सुखबोधायेत्यत्र सुखशब्दार्थः श्रमरहितरूपः, सुखेन बोधः सुखबोधः "प्रकृत्यादिभ्य उपसंख्यानमि"ति-तृतीया, तृतीयार्थोऽभेदः, बोधशब्दार्थश्च प्रकृते परिभाषार्थतत्त्वज्ञानरूपः, सुखबोधशब्दोत्तरचतुर्थ्यास्तादर्थ्ये विधानात् प्रयोजकत्वमर्थः, परिभाषेन्दुशेखरशब्दार्थः करिष्यमाणबौद्धग्रन्थरूपः, तदुत्तरं द्वितीयाया उत्पत्तिरूपोऽर्थः। एवञ्च समस्ताऽसमस्तभेदेन द्वाचत्त्वारिंशत्पदार्थाः पद्यनिष्ठाः। ससम्बन्धान्वयप्रकारश्चेत्थम्, वैयाकरणमते "क्रिया प्रधानमाख्यातं सत्त्वप्रधानानि नामानीति" यास्काचार्य्यसिद्धान्तात्क्रियामुख्यविशेष्यको बोधः। प्रधानक्रिया च कुरुत इति तत्रैव सर्वेषाम्पदार्थानाम् पद्यस्थानां साक्षात्परम्परया वाऽन्वयः,

नम्धात्वर्थव्यापारस्य पूर्वोक्तस्य स्वकर्तृकर्तृकत्वस्वोत्तरकालिकत्वोभयसम्बन्धेन विशेष्यभूतकृधात्वर्थव्यापारेऽन्वयः, स्वस्य कर्त्ता स्वकर्त्ता स्वकर्त्तैव कर्त्ता यस्यासौ स्वकर्तृकर्तृकस्तस्य भावस्स्वकर्तृकर्तृकत्वमिति सम्बन्धे समासः। स्वपदेन नम्धात्वर्थस्तस्य यः कर्त्ता नागेशस्स एव कर्त्ता यस्य कृधात्वर्थव्यापारस्येति फलितार्थः। साम्बपदार्थस्य अभेदसम्बन्धेन ब्रह्मपदार्थेऽन्वयः, ब्रह्मपदार्थस्याऽपि अभेदेनैव सम्बन्धेन शिवपदार्थेऽन्वयः, साम्बब्रह्मपदार्थविशिष्टशिवपदार्थस्य समवेतत्वसम्बन्धेन प्रधानकृधात्वर्थबोधरूपे फलेऽन्वयः, बालपदार्थस्य समवेतत्वसम्बन्धेन अनायासपूर्वकपरिभाषार्थतत्त्वज्ञानरूपसुखबोधपदार्थेऽन्वयः, सुखबोधपदार्थस्य च चतुर्थ्यर्थप्रयोजकत्वसम्बन्धेन विशेष्यभूतकृधात्वर्थव्यापारेऽन्वयः, सुधीशब्दार्थस्य अभेदसम्बन्धेन विशेष्यभूतकृधात्वर्थव्यापारेऽन्वयः, सुधीशब्दार्थस्य अभेदसम्बन्धेन नागेशपदार्थेऽन्वयः, नागेशपदार्थस्य च अभेदसम्बन्धेनाख्यातकर्तृपदार्थेऽन्वयः, आख्यातार्थसंख्यायास्सुबर्थसंख्याया वा समवायसम्बन्धेनाख्यातार्थकर्त्तर्य्येवान्वयः, अथवा स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन कर्त्तर्य्यन्वयः, कर्तृपदार्थस्य च वृत्तित्वसम्बन्धेन स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन वा कृधात्वर्थव्यापारेऽन्वयः, वर्त्तमानकालस्यापि स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन परिच्छिन्नत्वसम्बन्धेन पर्य्याप्तिसम्बन्धेन वा कृधात्वर्थव्यापार एवान्वयः, परिभाषेन्दुशेखरपदार्थस्य च वृत्तित्वसम्बन्धेन कृधात्वर्थोत्पत्तिरूपे फलेऽन्वयः, उत्पत्तेश्चानुकूलत्वसम्बन्धेन कृधात्वर्थव्यापारेऽन्वयः, अथवा आश्रयत्वं द्वितीयार्थस्तत्र परिभाषेन्दुशेखरपदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेनान्वयः, आश्रयस्य च स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन धात्वर्थफलेऽन्वयः, फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन कृधात्वर्थव्यापारेऽन्वयः इति।

शाब्दबोधप्रकारश्चेत्थम्, अभेदसम्बन्धावच्छिन्ना साम्बत्वावच्छिन्ना साम्बत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना साम्बनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या ब्रह्मत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना ब्रह्मनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृविशेष्यत्वाभिन्ना तादृशविशेष्यत्वावच्छिन्ना वा याऽभेसम्बन्धावच्छिन्ना ब्रह्मत्वावच्छिन्ना ब्रह्मनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नपुँस्त्वस्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना पुँस्त्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या

समवायसम्बन्धावच्छिन्नशिवत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्य-तावती स्वरूपसम्बन्धावच्छिन्ना शिवनिष्ठा विशेष्यता तादृशविशेष्यता-समानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या समवेतत्वसम्बन्धावच्छिन्ना शिवनिष्ठा प्रकारता तादृशप्रकारतानिरू-पिता योत्कृष्टत्वविशिष्टबोधत्वावच्छिन्ना बोधनिष्ठा विशेष्यता तादृशविशेष्य-तासमानाधिकरणा तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यत्वावच्छिन्ना वा या अनुकूलत्वसम्बन्धावच्छिन्ना उत्कृष्टत्वविशिष्टबोधत्वावच्छिन्ना बोधनि-ष्ठा प्रकारता तादृशप्रकारतानिरूपिता या नमुधात्वर्थव्यापारत्वावच्छिन्ना व्या-पारनिष्ठा विशेष्यता तादृशविशेष्यताश्रय एवं समवेतत्वसम्बन्धावच्छिन्ना बालत्वावच्छिन्ना बालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या सुखत्वावच्छिन्ना सुखनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा ता-दृशविशेष्यत्वाभिन्ना तादृशविशेष्यत्वावच्छिन्ना वा याऽभेदसम्बन्धावच्छि-न्ना सुखत्वावच्छिन्ना सुखनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या बोध-त्वावच्छिन्ना बोधनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृश-विशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या प्रयोजकत्वसम्बन्धाव-च्छिन्ना बोधत्वावच्छिन्ना बोधनिष्ठा प्रकारता तादृशप्रकारतानिरूपितोऽभेद-सम्बन्धावच्छिन्ना सुधीत्वावच्छिन्ना सुधीनिष्ठा या प्रकारता तादृशप्रकारता-निरूपिता या नागेशत्वावच्छिन्ना नागेशत्वनिष्ठनिरवच्छिन्नावच्छेदकतानि-रूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना नागेशनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्य-त्वाभिन्ना वा याभेदसम्बन्धावच्छिन्ना नागेशत्वावच्छिन्ना नागेशनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैक-त्वनिष्ठप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृश-विशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृश-प्रकारतानिरूपितः, परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपितः, वृत्तित्वसम्बन्धाव-च्छिन्ना परिभाषेन्दुशेखरत्वावच्छिन्ना परिभाषेन्दुशेखरनिष्ठा या प्रकारता ता-दृशप्रकारतानिरूपिता या कृधात्वर्थबोधरूपोत्पत्तित्वावच्छिन्नोत्पत्तिनिष्ठा वि-शेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशवि-शेष्यत्वाभिन्ना वा या अनुकूलत्वसम्बन्धावच्छिन्ना बोधरूपोत्पत्तित्वावच्छि-न्नोत्पत्तिनिष्ठा प्रकारता तादृशप्रकारतानिरूपितकृधात्वर्थव्यापारत्वावच्छिन्ना व्यापारनिष्ठा विशेष्यता तादृशविशेष्यताकशालिशाब्दबोधः ।

प्राचीनवैयाकरणतन्त्रे वाचिकान्यत्र पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि भाष्यवार्तिकयोरुपनिबद्धानि यानि परिभाषारूपाणि तानि व्याख्यायन्ते।

---

श्रीगणेशाय नम इत्यस्य विग्रहाः, श्रयति हरिमिति श्रीः लक्ष्मीः श्रयन्ति जना एनामिति श्रीः गण्यन्ते ये ते गणाः गणानामीशो गणेशश्श्रिया सहितो गणेशश्श्रीगणेशस्तस्मै।

श्रिया पार्वत्या सहितो गणेशश्श्रीगणेशस्तस्मै।

श्रीश्शोभा तया सहितो गणेशश्श्रीगणेशस्तस्मै।

श्रियं (१)गणयन्ति ये ते श्रीगणा लक्ष्मीवन्तस्तेषामीशो लक्ष्मीकान्तो विष्णुस्तस्मै।

श्रीश्शोभा गण्यते यत्र श्रीगणः कामदेवस्तस्येशश्शिवस्तस्मै।

श्रीणां गणाः श्रीगणा अणिमादयः नव निधयश्च तेषामीशश्शिवस्तस्मै।

श्रीगणेशम्पार्वतीसहितमेति बाललीलार्थम्प्राप्नोतीति श्रीगणेशायस्तत्सम्बुद्धौ हे श्रीगणेशाय शम्भो नमस्तुभ्यमित्यध्याहार्यम्।

श्रीगणेशस्यायनं श्रीगणेशायनं तन्मिमीते प्राप्नोतीति श्रीगणेशायनमः शङ्करो ध्येय इति।

श्रीगणेशाये शिवे नमो नतिः श्रीगणेशायनमः एवमनेकेऽर्थाः श्रीगणेशाय नमः पद्धतौ (स्वग्रन्थे) मयोक्ताः।

परिभाषेन्दुशेखरं कुरुत इति सामान्योक्त्या विषयो यद्यपि प्रस्फुटस्तथाऽप्युक्तस्यापि विषयस्य विशेषतस्स्फुटप्रतिपत्तिसौकर्य्याय विवरणङ्करोति प्राचीनवैयाकरणेति—"इन्द्रश्चन्द्रः काशकृत्स्नापिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा जयन्त्यष्टाऽदिशाब्दिकाः" एतत्पद्योक्ताः प्राचीनादिवैयाकरणाः, तन्त्रे शास्त्रे, वाचनिकानि वचनान्येव वाचनिकानि "विनयादिभ्यष्ठग्"-ति स्वार्थे ठक् "ठस्येक" इतीकादेशः। वचनरूपेण पठितानीत्यर्थः।

---

(१) श्रीगणेशाय नम इति–श्रीर्लोकोत्तरशोभा तया सहिताय गणेशायेति। अथवा श्रीःप्रकृतिः गणानामीशो गणेशः प्रधानपुरुषः श्रिया सहितो गणेशस्तस्मै, प्रकृतिविशिष्टपुरुषाय नमः प्रकृतिपुरुषाभ्यामिति यावत्। "अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः" इत्यादिश्रुत्यनुसारिप्रकृतिपुरुषनमस्कारिसाङ्ख्यानाम् मतेन। अथवा श्रीर्नित्यत्वादिधर्मोपेता विलक्षणा बुद्धिस्तया सहिताय। अथवा श्रीःसरस्वती तया सहिताय गणेशाय नमः। अत्रार्थे मानन्तु "श्रीश्च ते लक्ष्मीश्च पत्न्यावहोरात्रे,, इति मन्त्रे द्विवचनम् पुनर्लक्ष्मीपदोपादानञ्च। अयमेवार्थोऽभिव्यञ्जितो भूषणकारेण श्रीलक्ष्मीरमणमिति मङ्गलमाचरता।

अत्रशब्दस्य व्याख्यायन्त इत्यनेनान्वयः । ज्ञापकन्यायाभ्यां सिद्धानि प्रमाणीकृतानि भाष्यवार्त्तिकयोरुपनिबद्धानि भाष्यवार्त्तिककारयोरभिप्रायविषयीभूतानि यानि परिभाषारूपाणि तान्यत्र ग्रन्थे व्याख्यायन्ते । अल्पाच्तरत्वेऽपि न्यायशब्दस्य तदपेक्षया ज्ञापकसिद्धस्य प्राबल्येनाभ्यर्हितत्वा "दभ्यर्हितञ्चे"ति ज्ञापकशब्दस्यैव पूर्वनिपातः । नानुबन्धकृतमनेकाल्त्वमित्यत्रानेकाल्शित्सर्वस्येत्यत्र शिद्ग्रहणं ज्ञापकम् । एतच्छास्त्रलोकतन्त्रान्तरप्रसिद्धा युक्तिर्न्यायः । अत्र भाष्यवार्त्तिकयोरुपनिबद्धानीति विशेषणेन प्राचीनोक्तानां कासाञ्चिदप्रामाण्यम् "इको गुणवृद्धी, तस्मिन्निति निर्दिष्ट" इत्याद्यष्टाध्यायीस्थपरिभाषाणान्निरासः, वाचनिकानां ग्रहणञ्च । न च अकृतव्यूहाः पाणिनीयाः, संज्ञापूर्वको विधिरनित्य इत्यादिपरिभाषाणाम्भाष्यवार्त्तिकयोश्चर्चैव नास्तीति तासाम्व्याख्यानेन प्रतिज्ञाविरोध इति वाच्यम् ? प्राचीनवैयाकरणतन्त्रे यानि वाचनिकानि आसन् अत्र भाष्यवार्त्तिकयोरुपनिबद्धानि च यानि परिभाषारूपाणि तानि व्याख्यायन्त इत्याशयेन प्रतिज्ञाविरोधपरीहारात् । विनापि चकारमहरहर्नयमानो गामश्वम्पुरुषम्पशुमित्यादिवाक्येऽभिप्रायप्रकटनाय समुच्चयदर्शनात् । अथवा ज्ञापकन्यायशब्दावर्श आद्यजन्तौ । ज्ञापकन्यायौ विद्येते यत्रेति "अर्श आदिभ्योऽजि"त्यच् सिद्धशब्दश्च स्वतस्सिद्धपरः वाचनिक इत्यर्थः ।

अथवा वाचनिकानीत्यस्याऽवृत्तिः, विनाऽपि चकारं समुच्चय इति न्यायेन पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानि वाचनिकानि चेति व्याख्यानेनाव्रतेः ।

वस्तुतस्तु सर्वा अपि व्याख्येयपरिभाषा ज्ञापकन्यायसिद्धा एव । कुत्रचित् ज्ञापकं प्रमाणम् कुत्रचिच्च न्यायः प्रमाणमित्येवन्तत्तत्परिभाषानिरूपणस्थले मूल एव सुव्यक्तीकरिष्यतीति । "यस्मिन्विधि"रित्यत्र वाचनिक्येवेतिलेखस्तु भाष्ये ज्ञापकोपन्यासो नास्तीत्येवम्पर इति न तेन मूलग्रन्थेन विरोध इति सरयूपारीणशुक्लाः । प्राचीनवैयाकरणतन्त्रे वाचनिकानि वचनरूपेण पठितानि, अत्रेत्यस्य तन्त्रेऽन्वयः, अत्र कोऽर्थ एतस्मिन् पाणिनीयतन्त्रे ज्ञापकन्यायसिद्धानीत्याशयवर्णनेन भाष्याद्यनुक्तानां प्राचीनतन्त्राऽभिमतानामकृतव्यूहा इत्यादिवाचनिकानाञ्च संग्रहेण न कोऽपि विरोध इति तात्पर्य्यम्मन्वते—भाष्यवार्त्तिकयाः परिभाषात्वेन पठितानीत्याकूतम । एवञ्च सौत्रवत्तन्निराससंग्रहौ वैतदर्थमेव वार्त्तिकपदोपादानम् , अन्यथा भाष्य इति कथनेनाऽपि निर्वाहसम्भवात् । एवञ्चैतल्लेखेन रूढ्यर्थतावच्छेदकार्थदर्शनाच्छुद्धरूढमिदम्परिभाषापदं साङ्केतिकम् ।

किञ्च योग(१)रूढमपि परिभाषापदं सम्भवति "परितो भाष्यते या सा

(१) रूढमिति—पदञ्चतुर्विधम् भवति यौगिकं, रूढं, योगरूढं यौगिकरूढञ्च । यत्रावयवार्थमात्रं बुध्यते तद् यौगिकम् पाचकादिपदम् ।

परिभाषा प्रकीर्त्तिता" अत एव "परितो व्यापृताम्भाषाम्परिभाषाम्प्रचक्षत" इतिशिष्टोक्तिः । परिभाषा पुनरेकदेशस्थेत्यादि भाष्यञ्च सुगतं । नच शुद्धयौगिकमेवास्तु परितो भाष्यते या सेति विवरणादिति वाच्यम् ? संज्ञानियमाधिकारेष्वतिप्रसक्त्वाऽपत्तेः ।

सर्वेषु शास्त्रेषु परिभाषा विलक्षणा भिन्नलक्षणा वा । नोदनालक्षणो धर्म इति मीमांसा, जन्माद्यस्य यत इतिवेदान्तः, साधर्म्यवैधर्म्याभ्याम्प्रत्यवस्थानं जातिरिति न्यायः, यतोऽभ्युदयनिश्श्रेयससिद्धिस्स धर्म इति वैशेषिकाः, अनित्याऽशुचिदुःखानात्मसु नित्यशुचिसुखात्मख्यातिरविद्येति योगशास्त्रम् इत्येवन्तन्त्रत्याः प्रकाराः । परन्तु व्याकरणशास्त्रे परिभाषाद्वयं सामान्यपरिभाषा व्याख्येयपरिभाषा च । व्याख्यानञ्च "पद(१)च्छेदः पदार्थोक्तिर्विग्रहो वाक्ययोजना । आक्षेपोऽथ समाधानं व्याख्यानं षड्विधम्मतम्" इति शिष्टाऽभिमतम् । तत्र तावत्प्रकृतोपयोगित्वेन व्याख्येयपरिभाषात्वङ्किमिति विचार्य्यते । लक्ष्यधर्मिकसाधुत्वप्रकारकाऽप्रामाण्यज्ञानानाऽस्कन्दितबोधसहकारित्वेनाभिप्रेतत्वम् व्याख्येयपरिभाषात्वम् । अत एव "परितो व्यापृताम्भाषाम्परिभाषाम्प्रचक्षत" इति । व्यापारश्चात्र स्वलिङ्गलिङ्गितशास्त्रीयविषयसङ्कोचादिरूप एव क्वचित्प्रवृत्तिः क्वचिन्निवृत्तिरित्येवंविधः । यथा कृद्ग्रहणे गतिकारकपूर्वस्याऽपि ग्रहणमिति कृल्लिङ्गलिङ्गितशास्त्रं क्तेनेति तद्विषये गतिकारकपूर्वस्याऽपि ग्रहणेन बोधोपयोगिसहकारजनकत्वात्तत्त्वम् । अवतप्ते नकुलस्थितमिति उदाहरणम् ।

नच "न समास" इतिनिषेधशास्त्रस्याऽपि तत्त्वाऽपत्तिरिति वाच्यम् ? अनेकशास्त्रोपकारकत्त्वे सति लक्ष्यधर्मिकसाधुत्त्वप्रकारकबोधोपयोगिबोधजनकत्त्वम्, निषेधशास्त्रस्यानेकशास्त्रोपकारकत्त्वाऽभावात् । नच "तस्मिन्निति" त्यादीनामपि व्याख्यायेयपरिभाषात्वाऽपत्तिरिति वाच्यम् ? पाणिन्युच्चरितभिन्नत्वे सतीतिनिवेशात् । न च "वा नामधेयस्य संज्ञा वक्तव्ये" त्यादीनामपि व्याख्येयपरिभाषात्वाऽपत्तिरिति वाच्यम् ? संज्ञाभिन्नत्वे सतीतिनिवेशेनाऽदोषात् । एवं लिङ्गत्वे सति सन्दिग्धार्थनियामकत्वम्व्याख्येयपरिभाषात्वम् इति केचित् । लिङ्गवत्त्वे सति फलवत्त्वम्परिभाषात्वमिति केचित् । संज्ञाशास्त्रान्यत्वे सति

---

यत्रावयवशक्तिमन्तराऽपि समुदायशक्तिमात्रेणावगमस्तद्रूढं गोमण्डपादिपदम् ।
यत्रावयवशक्तिसहकृतसमुदायशक्त्या बोधस्तद्योगरूढम् पङ्कजादि ।
यत्र च यौगिकार्थरूढ्यर्थयोः स्वातन्त्र्येण बोधस्तद्यौगिकरूढमुद्भिदादि ।

( १ ) पदच्छेद इति—अत्र पदच्छेदःपदार्थोक्तिर्विग्रहो वाक्ययोजना ।
आक्षेपोऽर्थसमाधानम्व्याख्यानं षड्विधम्मतम् ॥

अर्थस्य समाधानम् अर्थेन सह समाधानम् अर्थेषु वाऽर्थेभ्यस्समाधानमिति प्रकारैस्समासं विधाय केचित् पाठान्तरं व्याचक्षते ।

विद्धयपेक्षितार्थविधायकत्वम्परिभाषात्वमित्यपि केचित्प्राचीनाः । संज्ञा च परिभाषाचेत्यत्र अतिदेशस्य पृथगुपादानं गाबली(१)वर्दन्यायेन बोध्यमिति ।

नचाधुनिकास्मदादिसङ्केतितपरिभाषाणामपि व्याख्यायेयपरिभाषात्वाऽपत्तिरिति वाच्यम् ? मुन्यभिमतत्वे सतीतिविशेषणदानात् । तथा च लक्ष्यधर्मिकसाधुत्वप्रकारकशास्त्रीयाऽप्रामाण्यज्ञानाऽनास्कन्दितबोधे सहकारित्वेनाऽभिप्रायविषयत्वे सति पाणिन्यनुच्चरितत्त्वे सति संज्ञाभिन्नत्वे सति अनेकशास्त्रोपकारकत्त्वे सति मुन्यभिमतत्वम्व्याख्येयपरिभाषात्वम् । परिभाषया कुत्रचित्कस्यचिच्छास्त्रस्य प्रवृत्तिः कुत्रचिच्च निवृत्तिः कुत्र चित्सङ्कोचः कुत्रचिच्च विकाश इति व्याख्येयपरिभाषाप्रकारः ।

अन्यत्रापि यत्र कुत्रचिद्दोष आपतेत्तद्भिन्नत्वे सतीति निवेशेन वारणोपायोऽभिधेयः । लक्ष्योपसहायकत्वे सति पातञ्जलमहाभाष्यप्रतिपाद्यत्वम् व्याख्येयपरिभाषात्वमिति केचित् । अनियमे नियमकारिणीत्वम्परिभाषात्वमिति प्राचीनाः ।

अत्रैव प्रसङ्गाच्छब्दशास्त्रीयसामान्यपरिभाषात्वङ्किमित्यपि विचार्य्यते । लक्ष्यधर्मिकसाधुत्वप्रकारकाऽप्रामाण्यज्ञानाऽनास्कन्दितबोधोपयोगिबोधजनकत्वम्परिभाषात्वम् । बोधेऽप्रामाण्यज्ञानाऽनास्कन्दितेतिविशेषणन्तु वस्तुतः फलितार्थोऽभिप्रायेण, न तस्य व्यावर्त्तकत्वम् । "तस्मिन्नितिनिर्दिष्ट" इतिसूत्रप्रवृत्तिमन्तरेणेको यणचीत्यस्य शाब्दबोधो न भवति सन्दिग्धत्वात् । व्यवहितस्याऽव्य-

---

(१) गोबलीवर्दन्यायेनेति—अयमपि न्यायो यथा ब्राह्मणवशिष्ठन्यायस्तथा । तथाहि ब्राह्मणपदम् ब्राह्मणत्वावच्छिन्ने शक्तम् वशिष्ठपदञ्च ब्राह्मणविशेषे इति यद्यपि सामान्यतो ब्राह्मणानयने वशिष्ठानयनं सुतरां सम्भवति तथापि तत्र विशेषावश्यकत्वावच्छिन्नप्राधान्यद्योतनाय वशिष्ठपदम्पृथगुपादीयते । तथा च विशेषवाचकपदसमभिव्याहारे तादृशविशेषातिरिक्तार्थबोधकत्वं सामान्यवाचकपदस्येति फलति । एवमेव गोबलीवर्दयोरपि सामान्यविशेषवाचकत्वम् ।

केचित्तु—"त्यदादीनाम-" इतिसूत्रे भाष्ये सामान्यविशेषवाचिनां द्वन्द्वाभावात् सिद्धम्, सामान्यविशेषवाचिनोर्द्वन्द्वो न भवति इति फलितम् । यद्येवमुच्यते तर्हि शूद्राभीरम् गोबलीवर्दम् तृणोलपम् इत्यादि कथं स्यात्-नैष दोषः इह तावत् शूद्राभीरम् आभीरा जात्यन्तराणि, गोबलीवर्दम् अत्र गाव उत्कालिकपुंस्का वाहाय च विक्रयाय च स्त्रिय एवावशिष्यन्ते इति भाष्यमुपन्यस्य गोशब्दःकेवलं स्त्रीत्वविशिष्टगोत्वावच्छिन्नबोधको लोकप्रसिद्धश्च । एवञ्च न तस्य सामान्यार्थकत्वमिति न सामान्यविशेषभावःकिन्तु ब्राह्मणवशिष्ठन्याय एव तादृशस्सम्भव इतिव्याचक्षते तन्न रोचतेऽस्मभ्यम् । यतो लोके शास्त्रे च गोशब्दस्य स्त्रीत्वावच्छिन्नमात्रे न पामरा अपि शक्तिमामनन्ति बलीवर्दस्य पुँस्त्वावच्छिन्नमात्रबोधकत्वं तेऽपि स्वीकुर्वते । तथा च तयोस्सामान्यविशेषभाव आपाततो मन्तव्यः ।

वहितस्य वा यणिति । नचाचीत्यौपश्लेषिकाधिकरणबोधिका सप्तमी सम्बन्धश्च विनिगमनावैकल्यात्पूर्वपरसाधारणः । अव्यवहितपूर्वत्वांशोपस्थितिः अजव्यवहितपूर्वत्वविशिष्टस्येको यणिति अप्रामाण्यज्ञानाऽनास्कन्दितो बोधः। अजव्यवहितपरत्वविशिष्टस्येको यणिति अप्रामाण्यज्ञानास्कन्दितो बोधः । तस्मिन्निति-परिभाषासाहाय्यमनुसृत्याजव्यवहितपूर्वत्वविशिष्टस्येको यणित्यप्रामाण्यज्ञानाऽनास्कन्दितो बोध उपपन्नः । तस्मिन्नितिशास्त्रजन्यबोधस्सुद्ध्युपास्यधर्मिकसाधुत्वप्रकारकबोधोपयोगी तन्निष्ठजन्यतानिरूपितजनकत्वेन परिभाषात्वं संघटते।

नच "वृद्धिरादैच्" 'अदेङ्गुणः' कृत्तद्धितसमासाश्चे"त्यादिसंज्ञाशास्त्राणामपि "वृद्धिरेचि'आद्गुणः'स्वौजसमौडि"तिशास्त्रीयबोधोपयोगिबोधजनकत्वेन परिभाषात्वाऽपत्तिः । किञ्च उत्सर्गसमानदेशा(१) अपवादा इतिन्यायेन व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाधः । प्रकृते सवर्णाऽजव्यवहितपूर्वत्वविशिष्टाऽकृत्वावच्छिन्नविषयतातिरिक्तेकृत्वावच्छिन्नविषयताया यणित्यपवादशास्त्राणामपि बोधोपयोगिबोधजनकत्वेन परिभाषात्वापत्तिश्चेति वाच्यम् ? अनाहार्य्याऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिशक्त्यविषयकसाधुत्वाऽप्रकारकबोधजनकत्वम्परिभाषात्वम् । शक्त्यविषयकत्वनिवेशात्संज्ञाशास्त्राणां शक्तिविषयकत्वेन तद्व्यावृत्तिः । संज्ञाभिन्नत्वे सतीतिनिवेशाद्वा, साधुत्वाऽप्रकारकत्वनिवेशेनाऽपवादशास्त्राणाम्व्यावृत्तिः, तेषां साधुत्वप्रकारकबोधजनकत्वात् । अधिकारशास्त्राणामपि विधिशास्त्रेण सहैकवाक्यतया बोधकत्वेन साधुत्वाप्रकारकबोधजनकत्वाऽभावान्न परिभाषात्वम् ।

नच विधिशास्त्रीयविषयतायान्निषेधशास्त्रीयविषयतातिरिक्तत्वेन सङ्कोचान्निषेधशास्त्राणामपि साधुत्वाऽप्रकारकबोधजनकत्वेन परिभाषात्वाऽपत्तिरिति वाच्यम् ? अनेकशास्त्रोपकारकत्वे सतीति विशेषणदानेनाऽदोषात् । नच "सङ्की-

(१) उत्सर्गसमानदेशा इति—अत्र प्रमाणन्तु"पूर्वं लोपापवादो विज्ञास्यते नच सकारस्य लोपःप्राप्नोति"इति भाष्यमेव । फलञ्च"छन्दसि वनमेके"असिक्नी पलिक्नी । नच तत्र वर्णादनुदात्तादितिसूत्रात्त इत्यस्य सम्बन्धे न दोषः,"स्पृशमृशकृषतृपदृपाञ्च्लेःसिज्वा वाच्यः"इति सिज्विकल्पःपौषादिकस्यैव, अङोऽपवादत्वात् । तेनात्र तुदादौ नित्यं सिच् अतर्पीत् । सिज्विकल्पे त्वतृपदिति रूपमप्यनिष्टमापद्येत । पुष्धातोरग्रे दिवादावेव पठितो यस्तृप् तस्मिन्नेव अङि प्राप्ते तम्प्रबाध्य सिज्विकल्पस्तथा च रूपद्वयमिष्टमनिष्टञ्च तुदादौ । अत्र न्याये ज्ञापकमपि वर्त्तते । तथाहि"तस्मिन्नणि च माद्यक"इतिन्यासेन सिद्धे युष्माकादेशविधानमेव । किञ्च तृफ तृम्फ् तृप्तौ इति तत्रानयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणोपपत्तौ च्लिःक्वापि न श्रूयत इति भाष्यविरोधः । मुख्यञ्च फलन्तस्येदमेव ।

ति वक्तव्य"मितिप्रत्याहारसम्पादकवार्त्तिकस्याऽपि परिभाषात्वाऽपत्तिरिति वाच्यम् ? झलीत्येतदेकवाक्यताऽपन्नत्वेन वार्त्तिकस्यानेकशास्त्रोपकारकत्वाऽभावेनाद्गतेः । नच "वा नामधेयस्य संज्ञा वक्तव्ये"तिवार्त्तिकस्याऽपि परिभाषात्वाऽपत्तिः, शक्त्यविषयकत्वनिवेशेन पूर्वोक्तेन तु न वारणसम्भवः, वृद्धिपदमादैज्निरूपितशक्तिमदितिवत् वार्त्तिके पूर्वोक्ते शक्तिज्ञानाऽभावादिति वाच्यम् ? संज्ञाभिन्नत्वे सतीतिनिवेशेन वारणस्य ध्रौव्यतरत्वात् । एवञ्चानेनैव निवेशेन 'वृद्धिरादैजि"त्यादीनामपि वारणसम्भवाच्छक्त्यविषयकत्वेतिनिवेशः पूर्वोक्तो हेय एव, सामान्येन संज्ञामात्रस्य ग्रहणात् ।

नच "छत्वममीतिवाच्यमि"त्यादिवार्तिकानामपि परिभाषात्वापत्तिस्सूत्रकारस्यानुक्तिं वार्त्तिककारः पूरयतीति भो सूत्रकार "शश्छोऽटी"त्यस्य स्थाने त्वया, "शश्छोऽमी"तिवाच्यमिदमेव तात्पर्य्यं वार्तिकस्य । एवञ्च "शश्छोऽटी"तिसूत्रजन्यबोधोपयोगित्वं "छत्वममी"तिवार्त्तिकस्येतिपरिभाषात्वाऽपत्तिरिति वाच्यम् ? अनेकशास्त्रोपकारकत्वाऽभावात् । नच व्यक्तिपक्षे यावल्लक्ष्यन्तावल्लक्षणमित्यर्थेनानेकशास्त्रोपकारकत्वेन परिभाषात्वन्दुर्वारमिति वाच्यम् ? वार्त्तिकभिन्नत्वे सतीति निवेशेनाऽदोषात् । नच "न भूसुधियो"रितिनिषेधशास्त्राणामनेकत्वेन विशेषणान्तरसंघटनेन च परिभाषात्वाऽपत्तिरिति वाच्यम् ? निषेधशास्त्रभिन्नत्वे सतीतिविशेषणेन परिहारात् । निषेधानां वार्तिकानाञ्च पृथक् साधुत्वाऽप्रकारकबोधजनकत्वाऽभावाच्च । अतिदेशशास्त्राणां प्राधान्यात्कार्यातिदेशकत्वेन परिभाषात्वव्यभिचारः । अतिदेशशास्त्रभिन्नत्वे सतीतियोजनेन दोषाऽभावाच्च ।

नच "व्याख्यानतो विशेषप्रतिपत्तिरि"त्यादिपरिभाषाणाम्बोधोपयोगिबोधजनकत्वाऽभावेनेष्टम्परिभाषात्वन्न स्यादिति वाच्यम् ? अनाहार्य्योऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकविधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाऽप्रकारकशक्त्यविषयकबोधजनकत्वे सति वार्त्तिकातिदेशनिषेधशास्त्रभिन्नत्वे सति अधिकारशास्त्रभिन्नत्वम्परिभाषात्वम् । एवमन्यत्रापि यत्रदोष आपतेत्तत्र२ तद्भिन्नत्वे सतीति निवेशेन वारणम् ।

नच "कर्मणि द्वितीया"कर्त्तृकरणयोस्तृतीया'षष्ठी शेषे" इत्यादिकारकसूत्राणामपि समुक्तलक्षणाक्रान्तत्वेन परिभाषात्वाऽपत्तिरिति वाच्यम् ? कारकाधिकारीयसूत्रभिन्नत्वे सतीति निवेशात् । नच "षठी शेष" इत्यस्य कारकाधि(१)

---

(१) षष्ठीशेष...कारकाधिकारीयत्वाभावेनेति—षष्ठयाःकारकत्वन्नास्तीतिप्रवादानुसारि वचनमेतत । तथाहि क्रियान्वयित्वं कारकत्वमिति यत् प्राच्यमतन्तत्र द्वितीयादेःकारकत्वसम्भवेऽपि देवदत्तस्य पितरम्पन्थानम् पृच्छति इति षष्ठयाःक्रियान्वयित्वाभावान्न कारकत्वम् । तथापि सप्तम्यादौ अव्याप्तिभिया परम्परासम्बन्धेन

कारीयत्वाऽभावेन परिभाषात्वापत्तिरिति वाच्यम् ? कारकाधिकारीयसूत्रशेषार्थ-कविभक्तिविधायकभिन्नत्वे सति विधिशास्त्रप्रवृत्तिनिवृत्त्युपयोगिसाधुत्वाऽप्रकार-कशक्त्यविषयकबोधजनकत्वे सति अनेकशास्त्रोपकारकत्वे सति संज्ञाभिन्नत्व-म्परिभाषात्वम् ।

वस्तुतस्तु "परितो भाषते या सा परिभाषा प्रकीर्त्तिता" परितो व्यापृताम्भा-षाम्परिभाषाम्प्रचक्षत" इत्यादिप्रमाणेन परिभाषाशब्दः प्राचीनवैयाकरणैर्लक्ष्य-साधुत्वादिसहायकवाक्ये सङ्केतीकृतः । रूढत्वेन संज्ञात्वेन यदृच्छाशब्दत्वेन वा व्यवहार इति न परिष्कारावश्यकता । अत एव "संज्ञा च परिभाषा च विधि-र्नियम एव च । अतिदेशोधिकारश्च षड्विधं सूत्रमुच्यते" इतिपार्थक्येनोपादानं सङ्गच्छते । नच निषेधादिशास्त्राणामनन्तर्भावात्कथं षड्विधत्वमिति वाच्यम् ? प्रतिषेधोऽनुवादश्च विभाषा च निपातनम् । एतच्चतुष्टयं क्षिप्त्वा दशधा सूत्रमु-च्यते" इति केषाञ्चित्प्रवादात् ।

अस्ति परिभाषेन्दुशेखरे प्रकरण(१) त्रयम् । १ शास्त्रत्वसम्पादकम् बाधबीजनामकम् ३ शास्त्रशेषनामकञ्च । व्याख्यानत इत्यारभ्यैकदेशविकृत-मनन्यवदित्यन्तमाद्यम् । उभयनिर्देशे पञ्चमीनिर्देशो बलीयानित्यन्तन्द्वितीयम् ।

---

तथा कल्पने लक्षणादौ गौरवेण परिदूष्य लक्षणमेतत् क्रियाजनकत्वन्तदिति नव्याः । षष्ठ्यन्तस्य देवदत्तादेःक्रियायामन्यथासिद्धत्वाज्जनकत्वाभावेन न कारकत्वमिति विशेषतःपर्यालोचनीयम् । नव्यमते अक्षशौण्डस्य धनमित्यादौ त्वगत्या लक्षणा स्वीकार्या । प्राचीनमते "कारकाणां क्रियाऽन्वयः" इति वाक्ये उद्देश्यतावच्छेदकविधेय-योरभेदापत्त्या युक्तशाब्दोऽपि नैव भवेदिदमपि दूषणम् । कारकपदस्य सङ्केतसम्बन्धेन कारकपदवत्त्वरूपलक्ष्यार्थतावच्छेदकावच्छेदेन स्वीकारे अपि गौरवमेवेति विचिन्तनीयम् ।

( १ ) प्रकरणत्रयमिति—अत्र प्रातः स्मर्त्तव्याः श्रीबालशास्त्रिणः, तत्र तत्र पदमर्थं वा परिपूर्य्य सन्देहं वा निराकृत्य कुत्रचित् कञ्चिद्धर्मं वाऽरोप्य शास्त्रस्य पारमा-र्थिकबोधजनकत्वं सम्पादयन्तीभिः परिभाषाभिरुल्लसितं भवतीति लक्षण(शास्त्र)त्वस-म्पादनोद्देशनामव्यवहार्यत्वमर्हति प्रथमम् ।

द्वितीये च विरुद्धानां शास्त्राणां बाध्यबाधकभावे बीजानामुपन्यासात् तत्तद्बाध-बीजनिरूपणाख्यामर्हति ।

तृतीये च प्रकरणद्वयशेषभूतानाम्परिभाषाणामुपन्यासात् पराभिमतानां संज्ञापूर्वक इत्यादीनां च परिभाषाणां खण्डनात् तच्छास्त्रशेषपदवीमर्हति । यथा साङ्ख्यैः साङ्-ख्यसूत्रषष्ठाध्यायः शास्त्रशेषाख्यया व्यवह्रियते तत्र पूर्वसिद्धान्तितार्थशेषोपन्यासात् नास्तिकादिमतनिराकृतेः ।

तत्र शेषत्वात् तृतीयमर्हति तृतीयत्वम् । प्रथमद्वितीयप्रकरणयोः प्रथमङ्कतरन्निरूप-णीयमिति सन्देहो यद्यपि तथापि बाधबीजनिरूपणप्रकरणे लक्षणयोर्विरोधज्ञानस्य मूर्द्धा-

ननु लण्अइउण्सूत्रयोर्णकारस्यैवोपादानेनाणिण्ग्रहणेषु सन्देहादनिर्णयोऽत आह—

---

आग्रन्थसमाप्ति तृतीयम् । तत्र च अनाहा(१)र्योऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वमेव शास्त्रत्वं शास्त्राणाञ्च सर्वशास्त्रोपकारकत्वेन महाभाष्ये सर्वपरिभाषाऽपेक्षया व्याख्यानत इत्यस्याः पूर्वमुक्तत्वेन शास्त्रत्वसम्पत्तिमन्तरा शास्त्राणाम्बाधबीजनिरूपणस्याऽयोग्यत्वेन तात्पर्यनिर्णायकत्वेन सकलशास्त्रोपयोगित्वेन शब्दशास्त्रमूलभूतचतुर्दशसूत्रीघटक "लण्" सूत्रघटकसाक्षान्महेश्वरोच्चरितानुबन्धज्ञापितत्वेन च सर्वथाऽभ्यर्हितत्वादन्यपरिभाषाप्रवृत्तिप्रयोजकत्वरूपमहाहेतुना चादौ व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषां सावतरणान्तावद्वक्तुमुपक्रमते ननु लण् अइउण् सूत्रयोरिति ।

नच प्रत्येकसूत्रे णकारद्वयन्नैवास्ति किन्त्वेक एव णकार इति द्वन्द्वो न स्यादिति वाच्यम् ? णपदं सूत्रद्वयघटकत्वेन वर्त्तमानणकारबोधकं सूत्रघटकौ यौ णकारौ तद्द्वयस्येति समाधानात् ।

अणिण्ग्रहणेष्विति—अणिणोर्ग्रहणं येषु सूत्रेष्वित्यर्थः । सन्देहादिति—शाब्दबोधो द्विविधः सन्देहात्मकशाब्दबोधः निर्णयात्मकशाब्दबोधश्च । तात्प-

---

भिषिक्तबीजत्वात्तस्य च वाक्यार्थज्ञानपरिपूर्त्तिपूर्वकत्वात्तस्याश्च लक्षणत्वसम्पादनोद्देशप्रकरणाधीनत्वादुपजीव्योपजीवकभावसङ्गत्या शास्त्रत्वसम्पादकमेव प्रकरणम्प्राथम्येनोपनिबद्ध्यते शेखरकृता व्याख्यायते च टीकाकारैरिति ।

(१) अनाहार्येति—इदञ्च शास्त्राणां सामान्यलक्षणम्, समन्वयश्च यथा लक्ष्यं सुद्ध्युपास्य इति तद्धर्मिको योऽनाहार्याप्रामाण्यज्ञानानास्कन्दितो बोधः सुद्ध्युपास्य इति यण्विशिष्टः प्रयोगस्साधुरित्याकारकः तज्जनकत्वम् "इको यणचि" इत्यस्येति ।

परिभाषाशास्त्रत्वन्तु—लक्ष्यधर्मिकसाधुत्वप्रकारकानाहार्याप्रामाण्यज्ञानानास्कन्दितबोधोपयोगिबोधजनकत्वम् । यथा लक्ष्यधर्मिकसाधुत्वप्रकारकोऽनाहार्याप्रामाण्यज्ञानानास्कन्दितो बोधः "संयोगान्तस्य लोपः" इत्यस्य तद्बोधोपयोगिबोधजनकत्वम् "अलोऽन्त्यस्य" इति शास्त्रस्येति तस्य तत्त्वं सिद्धम् ।

"वा नामधेयस्य" इत्यादीनाम्परिभाषात्ववारणाय लक्षणे संज्ञाभिन्नत्वमपि देयम् । एवम् "न समासे" इत्यादिवार्त्तिकानामपि तत्तावारणाय अनेकशास्त्रोपकारकत्वे सतीत्यपि विशेषणीयम् । अनाहार्यत्वम् आहार्यभिन्नत्वम् । आहार्यत्वञ्च स्वविरोधिधर्मधर्मितावच्छेदककस्वप्रकारकज्ञानत्वम् । अप्रामाण्यज्ञानञ्च सुद्ध्युपास्य इति यण्घटितः प्रयोगस्साधुरिदं ज्ञानमप्रमा (भ्रम इति यावत्) इत्याकारकन्तेनानास्कन्दितत्वं बोधे विवक्षितम् ।

र्यसन्देहे सन्देहात्मकशाब्दबोधः तात्पर्यनिर्णये निर्णयात्मकशाब्दबोध इति मतद्वयम् । प्रकृते च अण्पदशक्त्या अण्पदशक्तिज्ञाने न सन्देहरशक्यताव-च्छेदकाण्त्वाद्यानुपूर्व्या उभयत्र वर्त्तमानत्वात् । किन्तु वर्णत्रयबोधतात्पर्येण भगवता पाणिनिनोच्चारितमेतदण् पदमाहोस्वित् चतुर्दशवर्णबोधतात्पर्येणेत्या-कारकतात्पर्यसन्देहेऽप्रामाण्यज्ञानाऽनास्कन्दितशाब्दबोधाऽभावोऽर्थान्निर्णयात्म-कशाब्दबोधाऽभाव इत्याशयः । तात्पर्य(१)ज्ञानस्य शाब्दबोधमुख्यहेतुत्वात् । तात्पर्यसन्देहे सन्देहात्मकशाब्दबोधस्वीकर्त्तृमतेऽपि निर्णयात्मकशाब्दबोधः क-थमपि न स्यादिति तत्त्वम् ।

नच कपिञ्जलाधिकरणन्यायेन पूर्वणकारस्य पुरस्स्फूर्त्तिकतया पूर्वणकारे-णैव ग्रहणे नैव सन्देहो, न्यायाकारश्च कपिञ्जलानालभेतेति वाक्यम्, तत्र कपिञ्जलानिति बहुवचनं समेषां कपिञ्जलत्वजात्यवच्छिन्नानां ग्रहणन्न सम्भ-वति कथमिष्टसिद्धिरिति त्रयाणामेव कपिञ्जलानां ग्रहणेन वाक्यार्थरक्षा । एव-म्प्रकृतेऽपि पूर्वणकारस्य पूर्वोपस्थितिकत्वेन ग्रहणमिति वाच्यम् ? "निजान्त्रया-णामि"ति सूत्रे त्रयाणामितिपदोपादानेन शब्दशास्त्रे तन्न्यायानङ्गीकारात् । इति परीक्षालेखप्रकारः ।

## अथ शास्त्रार्थप्रकारः ।

अत्र पूर्वं सन्देहपदार्थो विचार्य्यते । नन्वेकस्मिन् धर्मिणि विरुद्धकोटिद्वयाव-गाहिज्ञानं संशय आहोस्वित् एकस्मिन्धर्मिणि विरुद्धनानाधर्मप्रकारकज्ञानं संशय इति प्रश्नः ? कोटिद्वयसमभिव्याहारे तयोरेव सन्देहे नैकस्मिन्धर्मिणि विरुद्ध-

---

(१) तात्पर्यज्ञानस्येति—अत एव सैन्धवमानयेत्युक्त्या कदाचित् लवणस्य कदाचिच्च वाजिनो बोधो युज्यते । एवमेव श्वेतो धावतीत्युक्ते कदाचिच्छ्वेतगुणविशि-ष्टस्याश्वादेः कादाचित्कश्च कुक्कुरादेर्बोधः (श्वा इतो धावतीति) अन्यथा कश्चिदेवार्थः प्रतीयेत । नच तात्पर्यज्ञानस्य शाब्दबोधमुख्यहेतुतामनङ्गीकृत्यापि तत्तदर्थनियामक-प्रकरणादीनां तादृशतात्पर्यज्ञानजनकत्वेन विधायानुगममिष्टसिद्धिरिति वाच्यम् ? लाघवात् तात्पर्यज्ञानस्यैव तत्त्वात् ।

"यत्संशयव्यतिरेकौ यदुत्पत्तिप्रतिबन्धकौ तन्निश्चयस्तद्धेतुः अनुमितौ व्याप्ते-रिव" इति चिन्तामणिरीत्या तात्पर्यसंशये व्यतिरेकनिश्चये वा शाब्दबोधानुत्पत्ते-स्तात्पर्यनिश्चयस्य शाब्दबोधमुख्यहेतुत्वम् । एकशक्तिनिरूपकार्थविषयकशाब्दत्वा-वच्छिन्नम्प्रति अपरार्थविषयकतात्पर्यज्ञानस्य प्रतिबन्धकत्वमिति प्रतिबन्ध्यप्रतिबन्ध-कभावनिदानभूतं "सकृदुच्चरितश्शब्दस्सकृदर्थं गमयति" इति नियममस्वीकृत्य आ-वृत्त्या वा क्वचिदुभयार्थकप्रत्ययोऽप्येकधैव सङ्गच्छते । तात्पर्यज्ञानशाब्दबोधयोर्जन्य-जनकभावश्च स्वप्रयोज्योच्चारणकर्मत्वसम्बन्धेन यादृशवाक्यविशेष्यकं वक्तुरिच्छा-रूपतात्पर्यज्ञानम्भवति तत् तादृशवाक्यजन्यशाब्दबोधे कारणमितिरूपः ।

कोटिद्वयावगाहिज्ञानं संशय इति लक्षणम् । अनेकपदार्थसमभिव्याहारे नानाधर्मावगाहि ज्ञानम्भवति अनेकधर्मप्रकारकसन्देहश्च भवतीति नात्र विप्रतिपत्तिः । वस्तुतस्त्वेकस्मिन् धर्मिणि विरुद्धनानाधर्मप्रकारकं ज्ञानं संशय इत्येव लक्षणम् । ननु स्थाणुर्वा पुरुषो वेति सन्दिग्धवाक्ये वाशब्दद्वयोपादानं किमर्थं ? स्थाणुः पुरुषो वेतिसन्देहाऽकारसम्भवात् । अयं घटः पटो वा देवदत्तो यज्ञदत्तो वेति, तथैव सर्वत्र दर्शनादिति चेन्न ? वाशब्दद्वयोपादानेन स्थाणुत्वस्थाणुत्वाऽभावपुरुषत्वपुरुषत्वाऽभाव इति सन्देहस्य हृदयङ्गमत्वात् । वाशब्दद्वयस्य समुच्चयार्थकत्वमयन्दृश्यमानः पदार्थः स्थाणुः पुरुषश्चेति तात्पर्याभिधानाद्वा ।

अथ सामान्यलक्षणपदकृत्यानि,केवलज्ञानत्वमात्रोक्तौ विपर्ययादिपदार्थेष्वतिव्याप्तिः । ज्ञानत्वनिवेशाऽभावे स्थाणुः पुरुषो वेति संशयो भूयादितीच्छायामतिव्याप्तिः । एकधर्मिविशेष्यकत्वे सति ज्ञानं संशय इति लक्षणे पर्वतो वह्निमानित्यनुमितावतिव्याप्तिः । विरुद्धनानाधर्मप्रकारकत्वे सति ज्ञानत्वमात्रोक्तौ ह्रदो वह्न्यभाववान् पर्वतो वह्निमानित्याकारकसमूहालम्बनज्ञानेऽतिव्याप्तिः । नानापदनिवेशफलन्तु घटत्वविरुद्धपटत्ववान् पट इति यथार्थज्ञाने पटरूपधर्मिविशेष्यकत्वस्य विरुद्धधर्मस्य च सत्त्वादतिव्याप्तिवारणमेव । विरुद्धपदोपादानफलन्तु घटपटवद्भूतलमित्यादावतिव्याप्तिवारणमेव । नच पर्वतो वह्निमान् ह्रदो वह्न्यभाववानिति विशिष्टज्ञाने एकधर्मिविशेष्यकत्वाद्धर्मिद्वयविशेष्यकत्वाऽभावादतिव्याप्तिरिति वाच्यम् ? एकधर्मिनिष्ठविशेष्यतानिरूपिता या विरुद्धनानाधर्मनिष्ठा प्रकारता तन्निरूपकज्ञानस्यैव संशयपदार्थत्वात् । नच द्रव्यम्वह्निमत् ह्रदो वह्न्यभाववानित्याकारकसमूहालम्बनज्ञाने द्रव्यत्वेन रूपेण ह्रदस्याऽपि विशेष्यतया एकस्मिन् ह्रदरूपे धर्मिणि वह्नितदभावयोः प्रकारत्वेनातिव्याप्तिरिति वाच्यम् ? एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मावच्छिन्नप्रकारतेतिविशेषणदानेनाऽक्षतेः । नच ह्रदो वह्निमान् वह्न्यभाववाँश्चेति समुच्चये ह्रदत्वरूपैकधर्मावच्छिन्नविशेष्यतानिरूपितेत्यादिविशेषणानां सत्त्वादतिव्याप्तिरिति वाच्यम् ? प्रकारताविशिष्टविशेष्यतानिरूपकत्वस्य विवक्षितत्वात् । प्रकारतावैशिष्ट्यञ्च विशेष्यतायां(१) स्वनिरूपितत्व स्वावच्छेदकधर्मावच्छिन्न-

(१) लक्षणसमन्वयस्तु पर्वतो वह्निमान्न वेत्यत्र प्रकारता वह्नित्वावच्छिन्ना वह्निनिष्ठा तद्विशिष्टा विशेष्यता पर्वतत्वावच्छिन्ना तन्निरूपकत्वं संशयात्मकज्ञानस्येति । तथाहि तत्र स्वं वह्निनिष्ठा प्रकारता तन्निरूपितत्वस्य एवम् स्वम् सैव तदवच्छेदको धर्मः वह्नित्वम् तदवच्छिन्नप्रतियोगितानिरूपकोऽभावो वह्न्यभावस्ताद्दशवह्न्यभावत्वावच्छिन्ना या प्रकारता ताद्दशप्रकारतानिरूपितत्वस्य च सत्त्वात् । नचैवम् परिष्कारेऽपि नातिव्याप्तिवारणं समुच्चय इति वाच्यम् ? संशयस्थले विशेष्यताया ऐक्येन समुच्चये च विशेष्यताद्वयस्वीकारेण तयोर्भेदस्य स्पष्टत्वात् । प्रकृते ह्रदो वह्नि-

प्रतियोगिताकाऽभावत्त्वावच्छिन्नप्रकारतानिरूपितत्वोभयसम्बन्धेन । अधिकन्त्व-
स्मत्कृतबृहत्परिष्कारदर्पणे द्रष्टव्यमित्यलम् ।

ननु तात्पर्य्ये कथं सन्देहः, पशुपदं लोमवल्लाङ्गूलावच्छिन्ने शक्तमित्या-
कारकशक्तिज्ञाने जाते लोमपदार्थस्य पशुपदशक्यतावच्छेदकावच्छिन्नत्वेऽपि
पशुपदं शुक्ललोमवल्लाङ्गूलावच्छिन्नतात्पर्य्यकमाहोस्वित् नीललोमवल्लाङ्गू-
लावच्छिन्नबोधतात्पर्य्यकमितिसन्देहो नैव भवति । तथैवाणिणोरपि अण्पद-
मकारादिणान्तसमुदायान्तःपातिवर्णनिरूपितशक्तिमदिति, इण्पदमिकारादि-
णान्तसमुदायान्तःपातिवर्णनिरूपितशक्तिमदितिशक्तिज्ञाने जाते तात्पर्य्यस-
न्देहसम्भवो नास्त्येव । नच "सकृदुच्चरितश्शब्दस्सकृदेवार्थं गमयती"तिन्या-
येनार्थद्वयतात्पर्य्यसन्देह इति वाच्यम् ? एकशक्तिनिरूपकार्थविषयकशाब्दबो-
धम्प्रति अपरार्थविषयकतात्पर्य्यज्ञानम्प्रतिबन्धकमितिकार्यकारणभावमूलकसकृ-
दुच्चरितश्शब्द इति न्यायस्य नानार्थकहर्य्यादिपदीयशक्तिभेदेऽनेकशक्तिसत्त्वे
प्रवृत्तेस्सार्वजनीनत्वेन कथन्तात्पर्य्यसन्देह इति चेन्न ? एवम्विधकल्पनायां
पूर्वणकारोच्चारणवैयर्थ्याऽपत्त्याऽकारादिपूर्वणकारान्तसमुदायान्तःपातिअइउ ए-
तद्वर्णत्रयान्यतमत्वावच्छिन्ने शक्तिरेवमकारादिपरणकारान्तसमुदायान्तः पा-
तिचतुर्दशवर्णान्यतमत्वावच्छिन्ने शक्तिरिति नानाशक्तिसत्तया सकृदुच्चरि-
तन्यायेन तात्पर्य्यसन्देहस्य जागरूकत्वात् । नचान्यतमत्वस्यैतत्प्रतियोगिकभेद-
विशिष्टैतत्प्रतियोगिकभेदविशिष्टैतत्प्रतियोगिकभेदविशिष्टभिन्नत्वरूपत्वेन जगता-
म्प्रवेशापत्तौ विशेष्यविशेषणभावे विनिगमनावैकल्येन नानाशक्यतावच्छेदकत्वेन
गौरवञ्चेति वाच्यम् ? अन्यतराऽन्यत(१)मशब्दावव्युत्पन्नौ रूढौ प्रकृतिप्रत्य-
यादिशून्याविति तत्र शास्त्रार्थप्रबन्धप्रवाहे फलाऽभावात् । णकारोच्चारणसाम-

---

मान् वह्न्यभाववांश्चेत्यत्र वह्नित्वावच्छिन्नप्रकारतानिरूपिता ह्रदत्वावच्छिन्ना विशे-
ष्यता एका, वह्न्यभावत्वावच्छिन्नप्रकारतानिरूपिता च ह्रदत्वावच्छिन्ना समुच्च-
यार्थकचकारसम्बोध्याऽपरेति नैकत्र विशेष्यतायामुभयसम्बन्धेन प्रकारतावैशिष्ट्य-
मिति ध्येयम् ।

परे तु संशयस्थले प्रकारतयोः परस्परमवच्छेद्यावच्छेदकभावः वह्नित्वावच्छिन्न-
प्रकारकत्वावच्छिन्नवह्न्यभावत्वावच्छिन्नप्रकारतानिरूपितेति न तथा समुच्चयीयप्रका-
रतयोरिति सत्प्रतिपक्षे भट्टाचार्याः ।

(१) तार्किकास्तु भेदद्वयावच्छिन्नप्रतियोगिताकभेदवत्त्वम् अन्यतरत्वम् एवम्
भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वम् अन्यतमत्वमिति परिष्कृत्य न कोऽपि दोष
इत्युद्भावयन्ति । अखण्डोपाधित्वमपि केषाञ्चिदभिमतमभावत्ववद् व्याचक्षते पूज्य-
पादा अव्युत्पन्नाविति ग्रन्थेन ।

**व्याख्यानतो विशेषप्रतिपत्तिर्नहि संदेहादलक्षणम् ॥१॥**

विशेषस्यान्यतराद्यर्थरूपस्य व्याख्यानाच्छिष्टकृतात् प्रतिपत्तिर्निश्चयो हि-यतः संदेहाच्छास्त्रमलक्षणमननुष्ठापकं लक्षणमलक्षणं तथा न,शास्त्रस्य निर्णयजनकत्वौचित्यादित्यर्थः। असंदिग्धानुष्ठानसिद्ध्यर्थे ऽत्र शास्त्रे संदिग्धोच्चारणरूपाचार्यव्यवहारेण सन्देहनिवृत्तेर्व्याख्यानातिरिक्तनिमित्तानपेक्षत्वं बोध्यत इति यावत् । तेनाणुदित्सवर्णस्येत्येतत्परिहाय पूर्वेणाणूग्रहणम्परेणेणूग्रहणमिति लणूसूत्रे भाष्ये स्पष्टम् ॥ १ ॥

---

र्थेना"दिरन्त्येने"तिसूत्रघटकान्त्यपदस्यान्त्यवर्णाऽव्यवहितपूर्ववर्णे लक्षणा । अकाराद्युकारान्तसमुदायघटकत्वावच्छिन्ने शक्तिसाम्राज्येन लाघवानुसन्धानध्वननाच्च ।

नच अणूपदमुभयार्थतात्पर्य्येणैव पाणिनिनोच्चारितमिति सन्देहाऽकार एवास्त्विति वाच्यम् ? पाणिनिमहर्षीणां शिष्टप्रधानत्वेन लक्ष्यैकचक्षुष्कत्वेन चैकपदस्य नानातात्पर्येणोच्चारणाऽभावात् । अणूपदमुयार्थतात्पर्य्याऽभाववत् शिष्टाप्तोच्चरितत्वात् वेदस्थपदवदित्यनुमानप्रमाणमपि प्रकृताभिप्रायप्रमाणम् ।

नच तात्पर्य्यसन्देहो नावतरितुमर्हति अणूपदमकारादिपूर्वणकारान्तसमुदायान्तःपातिवर्णनिरूपितशक्तिज्ञानाधीनबोधजननेच्छया पाणिनिनोच्चारितमाहोस्वित् अकारादिपरणकारान्तसमुदायान्तःपातिवर्णनिरूपितशक्तिज्ञानाधीनबोधजननेच्छया पाणिनिनोच्चारितमितिरूपकः मदीयः पुत्रो धनवान् मुण्डी जटी शिखी यशस्वी पण्डितराजश्च भवेदित्येकस्मिन् विषयेऽनेकेच्छाविशेष्यताया दृष्टचरत्वात्सन्देहाऽभाव इति वाच्यम् ? पूर्वोक्तरीत्या सकृदुच्चरितन्यायेनैकमेवाणपदमिदन्तात्पर्यमाहोस्विदपरमिति तात्पर्य्यसन्देहोऽवतरत्येव। अनिर्णय इत्यस्य निश्चयात्मकशाब्दबोधाऽभाव इत्याशयः ।

व्याख्यानतो विशेष इति-विशिष्टमाख्यानम्व्याख्यानम् व्याख्यायतेऽनेनेति वा व्याख्यानम् पञ्चम्यन्तात्तसिल् । विशेषप्रतिपत्तिरित्यत्र"कर्मणि च"तिषष्ठीसमा (१)सनिषेधो न भवति तस्योभयप्राप्ताविति सूत्रविषयकत्वात् । लक्ष-

---

(१) समासनिषेध इति-अयम्भावः, यत्र कर्त्तरि कर्मणि च "कर्त्तृकर्मणोः कृति" इत्यनेन षष्ठी प्राप्नोति तत्र क षष्ठीति जिज्ञासापनोदाय "उभयप्राप्तौ कर्मणि" इति कर्मण्येव षष्ठीनियमार्थं सूत्रम् । इह कर्त्तुरनुपादानात् तत्र षष्ठीप्राप्त्यभावेन नियमशास्त्रविषयत्वाभावात् तत्प्रवृत्तिविषयक "कर्मणि च" इतिनिषेधस्याप्यविषयत्वात् । निषेधशास्त्रस्य च यत्र कर्मणि इति पदं सूत्रोपात्तं सैव षष्ठीह गृह्यत इत्यर्थः, एतादृशी च "उभयप्राप्तौ कर्मणि" इत्येवेति तन्मात्रविषयकत्वम् इति "तृजकाभ्यां कर्त्तरि" कृद्योगा षष्ठी न समस्यत" इत्यारम्भाभ्यां ज्ञापनात् । स्ववा-

णमत्र साक्षात्परम्परया वाऽसन्दिग्धानाहार्य्योऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्य-
धर्मिकसाधुत्वप्रकारकबोधजनकम् । अस्मिन् शास्त्रे लक्षणपदं शास्त्रे रूढ-
मिति व्याख्यानमिदं युक्तमिति नतु मूलोक्तम्, सन्दिग्धपदमर्श आद्यजन्तम् स-
न्देहजनकमिति भावः । व्याख्यानादेव सन्देहनिवृत्तिः कार्य्येतिबोधनायैव महे-
श्वरेण णकारानुबन्धद्वयङ्कृतम् । अत एव यद्यपि "हृदयस्य हृल्लेखे"त्यत्राण-
न्तत्वेनैव निर्वाहे लेख(१)ग्रहणाद् घञन्तम्प्राप्नोति तथापि लेखग्रहणादुत्तरप-
दाधिकारे प्रत्ययग्रहणे तदन्तग्रहणन्नास्तीति परिभाषा भाष्यकारेण ज्ञाप्यते इति
व्याख्यानतो लेखेत्यणन्तमेव गृह्यते । लोकेऽपि कुत्रचिद् विचारे सन्देहापत्तौ
लौकिका जनाश्श्रेष्ठवा(२)क्येनैवेष्टन्निश्चिन्वन्ति । शास्त्रेऽप्येवमेव सन्देहनि-
वृत्तौ अखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवतां शिष्टानाम्व्यवहार एव
शरणीकर्तुंशक्यते नोपायान्तराऽपेक्षा । एतन्मूलकमेव यथोत्तरम्मुनीनाम्प्रामा-
ण्यम् इति वचनम्, उत्तरोत्तरमुन्यभिप्रेतेऽर्थे पूर्वपूर्वमुनीनामपि प्रामाण्यमित्या-
शयः । सन्देहनिवृत्तये व्याख्यानातिरिक्तन्न शरणमेतदर्थमेव महेश्वरानुबन्धद्व-
योपादानतो न स्वांशे चारितार्थ्यादिविचारः । "वाह ऊठ्" सूत्रस्थोड्ग्रहणेना-
न्तरङ्गपरिभाषावत् "अदसो मादि"ति सूत्रीयमाद्ग्रहणेनैकयोगनिर्दिष्टानामिति-
परिभाषावत् णकारस्सन्देहप्रयोजक एव नतु निरुक्तस्थलवत् ज्ञापकः । ज्ञा-
प्यं सिद्ध्यति नतु ज्ञापकमिदमेव वैचित्र्यम् । "लण्" सूत्रघटकलकारस्य ज्ञा-
पकत्वेऽपि स्वांशे चारितार्थ्यादिविवेको नेति विस्पष्टम्फलति । यथोत्तरम्मुनीना-
म्प्रामाण्यमित्यत्र प्रमाणान्तरमपि "धिन्विकृण्वोरचे"त्यत्राऽकारविधानमन्यथा
लोपानुवृत्त्यैव सिद्धेऽकारविधानन्निरर्थकम् । ज्ञापिते तु "न धातुलोप आर्द्धधा-
तुक" इत्यस्य प्रत्याख्यानाद् गुणनिषेधार्थञ्चरितार्थम् । फलानि तु "ङेर्य्यः"

---

चकशब्दप्रयोगं विना बोध्यमानकर्तृविषयेऽपि यद्युभयप्राप्ताविति प्रवृत्तिरस्वीक्रियते तदा इध्मव्रश्चन इति करणल्युडन्ते इध्मप्रव्रश्चन इति कर्तृल्युडन्तेनापि समासो निषिध्येत ।

(१) नच यत्र घञन्तलेखशब्दःप्रयोगघटक उत्तरपदन्तत्रापि हृदादेशार्थमेव लेखग्रहणमस्तु नोक्तार्थे ज्ञापकमिति वाच्यम् ? उत्तरपदाधिकारे इति परिभाषाज्ञापनपरभाष्यप्रामाण्येन तादृशल्यानभिधानादिति न क्षतिः ।

(२) अयञ्च "महाजनो येन गतःस पन्थाः"इतिरीत्या लोकानां श्रेष्ठाचरितानुकूलाचरणं शास्त्रीयमेवेति । अत "एव यद् यदाचरति श्रेष्ठस्तत्तदेवेतरो जनः । स यत्प्रमाणं कुरुते लोकस्तदनुवर्त्तते"इति मानवो नयः ।

शक्तिग्रहं व्याकरणोपमानकोषाप्तवाक्याद् व्यवहारतश्च ।
वाक्यस्य शेषाद् विवृतेर्वदन्ति सान्निध्यतस्सिद्धपदस्य वृद्धाः ॥

अत्र च शक्तिग्रहश्शिष्टवाक्यादेव निश्चीयते लौकिकैः ।

तत्र संज्ञापरिभाषाविषये पक्षद्वयमित्याह—

**यथोद्देशं संज्ञापरिभाषम् ॥ २ ॥**

**कार्यकालं संज्ञापरिभाषम् ॥ ३ ॥**

उद्देशमनतिक्रम्य यथोद्देशम् । उद्देश उपदेशदेशः । अधिकरणसाधनश्चायम् । यत्र देश उपदिश्यते तद्देश एव वाक्यार्थबोधेन गृहीतशक्त्या गृहीतपरिभाषार्थेन च सर्वत्र शास्त्रे व्यवहारः ।

---

ङेराम्नद्याम्नीभ्य" इति आद्येऽनया परिभाषया चतुर्थ्येकवचनस्यैव ग्रहणम् । "अट्कुप्वाङ्नुमि"तिशास्त्रे नुम उपादानात्तस्यैव ग्रहणे प्राप्ते व्याख्यानत इति परिभाषाबलादनुस्वारग्रहणमित्यादीन्यूह्यानि । अणुदित्सूत्रेऽण्प्रत्याहारः परेण णकारेणेति सिद्धान्ते "उरण्रपरः"इति सूत्रस्थतपरकरणं ज्ञापकम् । अन्यत्राण्प्रत्याहारः पूर्वेण णकारेण ज्ञेयः लण्सूत्रभाष्यात् । इण्प्रत्याहारस्तु सर्वत्र परेण णकारेणैव, न कचिदपि पूर्वेण णकारेणेत्यत्र ज्ञापकन्तु "अचि श्नुधात्वि"ति सूत्रे य्वो(१)रिति गुरुनिर्देश एवेति कौमुदीप्रक्रियाविचारपद्धतिः ।

अत्र मान्याः ।

अणुदित्सूत्रीयाऽप्रत्ययग्रहणेन भाव्यमानपरिभाषावच्चारितार्थ्यादिशङ्का न युक्ता, ज्ञापयतीत्यस्य बोधयतीत्यर्थोऽपि अनुस्वारस्यभङ्गापत्तेरयुक्तः । किञ्च नहि सन्देहादलक्षणमिति अंशादेव सन्देहात्मकपरिभाषोपस्थापकलिङ्गलाभेऽपि तदंशस्य प्रकृतानुबन्धद्वयोच्चारणरूपयत्नत एव सिद्धौ लाघवाच्चारितार्थ्यमपि । एवञ्चानुबन्धद्वयोच्चारणं साक्षादेव परिभाषाया ज्ञापकम्भवितुमर्हति । तथाच मूलग्रन्थो न सयुक्तिकतामर्हतीत्यलम् ।

यथा व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषा सकलशास्त्रोपकारिका अत एव तस्यास्सर्वापेक्षया प्रथमोल्लेख एवं यथोद्देशमिति परिभाषाऽपि सकलशास्त्रोपकारिकेति ताम्व्याख्यातुमुपक्रमते तत्रेत्यादिना । तत्र कोऽर्थश्शास्त्रे,

---

(१) यदि इण् प्रत्याहारः पूर्वेणैव णकारेणेष्टस्तदा इकारोकारयोरेव तेन बोधात् लाघवात् सूत्रे इण इत्येव पठितव्ये य्वोरिति गुरुपाठः किमर्थस्स एव ज्ञापयतीण्प्रत्याहारः परेण णकारेणैव सर्वत्र न क्वापि पूर्वणकारेणेति । तथा च तस्य (इणः) इकारोकारमात्रबोधकत्वाभावेन महानिष्टापत्तेरिति । अत एव "पूर्वेणैवाण्ग्रहास्सर्वे परेणैवेण्ग्रहा मताः । ऋतेऽणुदित्सवर्णस्येत्येतदेकम्परेण तु" इति युज्यतेऽभियुक्तिः ।

पूर्वेण णकारेणेण्ग्रहणे तु रामेषु कमलेषु इत्यादौ "इण्कोः आदेशप्रत्यययोः" इति षत्वाभावः, पपाचकृढ्वे इत्यादौ "इणःषीध्वम्" इतिढत्वाभावश्च प्रसज्ज्येतेति रीत्या दोषानुसन्धानं विधेयम् ।

देशश्चोच्चारणकाल एवात्र शास्त्रे व्यवह्रियते । तत्तद्वाक्यार्थबोधे जाते भविष्यति किंचिदनेन प्रयोजनमिति ज्ञानमात्रेण सन्तुष्यद्यथाश्रुतग्राहिप्रतिपत्त्रपेक्षोऽयं पक्ष इतीदूत्सूत्रे कैयटः ।

केचित्तु परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिः क्वेति पर्य्यालोचनायां सकलतत्तद्विध्युपस्थितौ सकलतत्तत्संस्काराय गुणभेदं परिकल्प्यैकवाक्यतयैव नियमः । कार्य्यकालपक्षे तु त्रिपाद्यामप्युपस्थितिरिति विशेषः ।

---

अवच्छेदकत्वं सप्तम्यर्थः अतः पक्षद्वयत्वावच्छिन्नाधेयतानिरूपिताधिकरणता शास्त्रत्वावच्छिन्नेति फलति । अतः प्रत्येकं संज्ञादिषु पक्षद्वयन्न किन्तु क्वचिद् यथोद्देशपक्षः क्वचित्कार्यकालपक्ष इत्यभिप्रायः । अलक्षणपदेन शास्त्रस्य पूर्वमुपस्थितत्वात्तत्रपदेन शास्त्रग्रहणम् । संज्ञापरिभाषाविषय इतरेतरयोगद्वन्द्वः । जातिरप्राणिनामित्यस्य तु न प्राप्तिर्जातिप्राधान्य एव तत्प्रवृत्तिसत्वादिह तु व्यक्तिप्राधान्यं विवक्षितमिति तात्पर्यम् । परिभाषाया अर्थमाह उद्देशमनतिक्रम्येति-परावरयोगे चेतिक्त्वाप्रत्ययः "यथा सादृश्य" इत्यव्ययीभावः । यत्र देशे उपदिश्यत इति । छात्रो द्विविधः एकश्च परमविश्वासपात्रः श्रद्धावान् अपरःपरमस्वार्थी । तत्राद्यः गुरुणा यदुपदिश्यते तन्मदिष्टसाधकमेवेति तदुपदिष्टविषयसंलग्नः । अपरश्च फलन्दृष्ट्वा प्राप्य वा कार्ये प्रवृत्तो भवतीति प्रथमविचार आद्यपक्षः, द्वितीये द्वितीयपक्षः ।

उच्चारणकाल एवेति-वैयाकरणा अपि अनीश्वरवादिनस्सांख्ययोगशास्त्रानुयायिन इति । वैयाकरणानां दिक्कालयोरैक्यमिति तात्पर्यम् ।

कैयट इति-कैयटमते यथोद्देशपक्षकार्यकालपक्षयोरपेक्षाबुद्धिः उपेक्षाबुद्धिश्च बीजभूते इत्यभिप्रायः ।

स्वसिद्धान्तमाह केचित्विति । एकवाक्यत(१)यैवेति-एकवाक्यता च

---

(१) एकवाक्यत्वञ्च मुख्यविशेष्यताप्रयोजकपदविशिष्टत्वम्, वैशिष्ट्यञ्च स्वघटितत्व स्वेतरमुख्यविशेष्यताप्रयोजकपदाघटितत्व स्वप्रयोज्यविषयतानिरूपितविषयत्वाप्रयोजकपदाघटितत्वस्वप्रयोज्यविषयतानिरूपितविषयत्वाप्रयोजकपदासमभिव्याहृतत्वैतच्चतुष्टयसम्बन्धेन । यथाहि एकवाक्यत्वं देवदत्तः पचतीत्यत्रेष्टम् तत्र शाब्दिकानां नये क्रिया ( व्यापार ) मुख्यविशेष्यकशाब्दबोधस्येष्टत्वेन मुख्या विशेष्यता पचतिप्रतिपाद्यव्यापारत्वावच्छिन्ना तत्प्रयोजकम्पदम्पचतीति तद्विशिष्टत्वम् देवदत्तः पचतीत्यस्य वाक्यस्य । तत्र हि स्वम् मुख्यविशेष्यताप्रयोजकम्पदम्पचतीति तद्घटितत्वस्य एवम् स्वम् पचतीति पदम् तदितरन्मुख्यविशेष्यताप्रयोजकम्पदं यज्ञदत्तो भुङ्क्ते इति यद् वाक्यन्तदीयम्भुङ्क्ते इति तदघटितत्वस्य, स्वप्रयोज्या या विषयता

द्विविधा । वाक्यैकवाक्यता पदैकवाक्यता च । उपजीव्योपजीपकभावापन्नबोधजनकत्वं वाक्यैकवाक्यत्वम् । यथोद्देशपक्षे संज्ञाशास्त्रेण परिभाषाशास्त्रेण च विधिशास्त्रस्य वाक्यैकवाक्यता । उपजीवयतीति उपजीव्यः, तस्मिन्नित्यादिपरिभाषाणां "वृद्धिरादैजि"त्यादिसंज्ञाशास्त्राणां "वृद्धिरेची"त्यादिविधिशास्त्राणाञ्च बोध उपजीवकः । अयम्प्रकारो यथोद्देशपक्षीयः । कार्यकालपक्षे तु पदैकवाक्यता भवति । निरूप्यनिरूपकभावाऽपन्नविषयताप्रयोजकपदघटितत्वम्पदैकवाक्यत्वम् । पदोपस्थापकत्वपक्षे "इको यणची"ति सप्तम्यन्तपदघटितशास्त्रेण सह स्वघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वेन पदैकवाक्यतेति ।

अथ खण्डनप्रकारः ।

केचित्त्वर्थैकवाक्यतामपि संयोजयन्ति अर्थोपस्थापकत्वपक्षाश्रयणात् । अर्थोपस्थापकत्वञ्च स्वोपस्थाप्यार्थनिष्ठविषयतानिरूपितविषयताप्रयोजकपदघटितत्वम् । तस्मिन्नित्यादिशास्त्राणामर्थोपस्थापकत्वमपि । समन्वयस्स्पष्ट एवेति वदन्ति । तन्न ? वाक्यैकवाक्यतापदैकवाक्यताभ्यामेव निर्वाहेऽर्थैकवाक्यताया निष्फलत्वात् । नहि वाक्यपदाभ्याम्भिन्नोऽर्थः कथमपि कुत्रचित्प्रतिभाति । सुप्तिङन्तयोः पदसंज्ञा, सुप्संज्ञा स्वादीनां, स्वादयश्च प्रातिपदिकाद्भवन्ति । प्रातिपदिकत्वन्तु अर्थवतो भवति । अर्थवत्ता च पदनिष्ठेति प्रक्रियाप्रबन्धात् ।

किञ्च घटमानयेत्यादौ घटपदतदर्थयोरेकवाक्यताऽपत्तेश्च तस्मान्नार्थैकवाक्यतेतिसरयूपारीणशुक्लाः ।

प्रथमपरिभाषीयकेचिरितिनागेशमतमग्रे मूलखण्डनप्रकारः ।

एतच्च पक्षद्वयसाधारणम्भाष्यं पक्षद्वयेऽपि प्रदेशैकवाक्यताया इति-सर्वशास्त्राभिज्वलनन्नामैकवाक्यतया संस्कारकत्वमेवेत्येवाशयः । परन्तु नायंग्रन्थो युक्ततरः ? संस्कारमात्रस्यैव ज्वलनशब्दार्थत्वेऽभीष्टसिद्धौ बाधकाऽभावेनैकवाक्यतयेतिनिवेशो निरर्थकः । स्वदेशे गृहीतवाक्यार्थबोधस्य तत्तद्विधौ स्मृतिमात्रेण तत्तत्संस्काराभिप्रायेणवैकदेशस्थस्सर्वं शास्त्रमभिज्वलयतीति

व्यापारत्वावच्छिन्ना तन्निरूपिता या कर्तृत्वावच्छिन्ना प्रकारत्वाख्या विषयता तादृशविषयत्वाप्रयोजकम्पदमुदासीनं घटादि तदघटितत्वस्य, स्वप्रयोज्यव्यापारत्वावच्छिन्नविषयत्वाप्रयोजकघटाद्युदासीनपदासमभिव्याहृतत्वस्य च सत्त्वेन समन्वयः । तत्र प्रथमसम्बन्धानुपादाने स्वाघटितस्य देवदत्तादिमात्रस्याप्येकवाक्यत्वमनिष्टम्प्रसज्ज्येत । द्वितीयसम्बन्धानुपादाने देवदत्तःपचति यज्ञदत्तो भुङ्क्ते इति विशिष्टे एकवाक्यत्वापत्तिः । तृतीयसम्बन्धानुपादाने च तादृशोदासीनघटादिघटितस्याप्येकवाक्यत्वापत्तिरतस्सम्बन्धत्रयं यथाक्रमन्निवेद्यम् । तृतीयेनैव वारणसम्भवाच्चतुर्थःप्रायो नोपादेय एवेति केचित् ।

एतदेवाभिप्रेत्याधिकारो नाम त्रिप्रकारः कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयतीति षष्ठीस्थाने इति सूत्रे भाष्ये उक्तम्। अधिकारशब्देन पारार्थ्यात्परिभाषाप्युच्यते। कश्चित्परिभाषारूप इति कैयटः। दीपो यथा प्रभाद्वारा सर्वगृहप्रकाशक एवमेतत्स्वबुद्धिजननद्वारा सर्वशास्त्रोपकारकमिति तत्तात्पर्यम्। एतच्च पक्षद्वयसाधारणं भाष्यं, पक्षद्वये ऽपि प्रदेशैकवाक्यताया इतः प्रतीतेः। तत्रैतावान्विशेषः। यथोद्देशे परिभाषादेशे सर्वविधिसूत्रबुद्धावात्मभेदं परिकल्प्य तैरेकवाक्यता परिभाषाणाम्, तदुक्तं क्ङिति चेति सूत्रे कैयटे। यथोद्देशे प्रधानान्यात्मसंस्काराय संनिधीयमानानि गुणभेदं प्रयुञ्जत इति।

कार्यकाले तु तत्तद्विधिप्रदेशे परिभाषाबुद्ध्यैकवाक्यतेति। अत्रैकसिद्धान्तोपपत्तिश्च। यद्येकवाक्यतयैव संस्कारकत्वन्नान्यथेति निश्चीयते तदा अधिकारशास्त्राद् वैलक्षण्याभिधानेच्छया तथोक्तेरसङ्गत्यापत्तिश्च। प्रदीपदृष्टान्तस्तु एवमेतत्स्वबुद्धिजननद्वारेत्येतेन ग्रन्थेन एकवाक्यतां विनैव त्वयैव दर्शितो योजितश्च, स्वबुद्धिजननद्वारेति विशेषणन्नागेशोक्तन्तु नैकवाक्यतां योजयति। विनिगमनाविरहेण कार्य्यकालपक्षेऽप्येवमेव वक्तुं शक्यत्वात्। नहि त्वन्मते कार्य्यकालपक्षे परिभाषाणां स्वदेशे वाक्यार्थाभावो वक्तुं शक्यो? बाधकाऽभावात्। संज्ञाशास्त्रस्य त्वितिवक्ष्यमाणविशेषोक्त्ययोगाच्च। एकवाक्यतया बोधो नहि स्वबुद्धिशब्दार्थः किन्तु स्मृतिमात्रम्। संस्कार्य्यत्वेनाभिमतानां विधिशास्त्राणामनन्तत्वेनैककालावच्छेदेन श्रोतृबुद्ध्यनारोहेण तावतामुपस्थानाऽसम्भवाच्च। प्रधानेन गुणाऽकर्षणेऽपि गुणेन प्रधानाऽकर्षणस्य युक्तिन्यायविरोधाच्च। नहि प्रयाजादिवाक्यमाकृष्यते सेवको राजदेशं गच्छति नहि राजा स्वोपकृत्यै सेवकदेशमिति व्यवहारस्य प्रचुरतरत्वाच्च। वस्तुतस्तु परिभाषादेशेऽप्रधाने प्रधानविधिसूत्रोपस्थितावपि परिभाषाशास्त्रेण विधिशास्त्राऽकर्षणन्न भवति। अत एव मूले तत्र २ तद्बुद्धावपीत्येवोक्तम्। उभयाकांक्षारूपप्रकरणात्मकचतुर्थप्रमाणेन प्रयाजादिवाक्यार्थेऽवगते काव्याकाङ्क्षायां तत्र दर्शपौर्णमासप्रधानवाक्यार्थोपस्थित्यैव तयोर्वाक्ययोरङ्गाङ्गिभावस्सिद्ध्यतीति केषाञ्चिद्विवेकः। क्ङिति चेति सूत्रीयकैयटस्तु एकदेशिपक्षाशयवर्णनाय प्रवृत्तः। एनयैवाऽरुच्या भाष्येऽथवेति पक्षान्तरमुपन्यस्तम्। तत्पक्षे तु विधिप्रदेशे एकवाक्यता संज्ञाशास्त्रस्य त्वितिवक्ष्यमाणविशेषोक्त्या कार्य्यकालपक्षे परिभाषाणां स्वदेशे वाक्यार्थबोधकत्वस्य त्वदभिमतत्वसिद्धिसौष्ठवात्। यदि केनचिदुपायान्तरेण ग्रन्थसङ्गतिश्चेत्तर्हि मृग्यतां सुधीभिः।

कार्यकालेत्विति—तुशब्द एवार्थकः, कार्यकालपक्ष एव त्रिपाद्यामुपस्थि-

**देशस्थ इत्यनेन तत्रतत्र तद्बुद्धावपि तत्तद्देशस्थत्वं वारयति, यथा व्यवहर्तॄणां कार्यार्थमनेकदेशगमनेपि न तत्तद्देशीयत्वव्यवहारः किं त्वभिजनदेशीयत्वव्यवहार एव, तद्वत् ।**

---

तिर्नान्यपत्त इत्याशयः । त्रिपाद्यामपीति—अपिशब्देन सपादो गृह्यते ।

अत्र केचिद्विलक्षणाः ।

परिभाषा द्विविधा, शास्त्रत्वसम्पादिका शास्त्रत्वावच्छिन्नोद्देश्यिका च । शास्त्रत्वसम्पादिका तु तस्मिन्नितीत्यादि तत्प्रवृत्तिमन्तरा अनाहार्य्याऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वमेव न सिद्ध्यति तत्परिभाषादृष्ट्या त्रिपादीस्थशास्त्राणाम्नाऽसिद्धत्वं शास्त्राऽसिद्धत्वपक्षस्यैव पूर्वत्राऽसिद्धमिति शास्त्रे सर्वसिद्धान्तत्वात् । शास्त्रत्वावच्छिन्नोद्देश्यिका च असिद्धम्बहिरङ्गमन्तरङ्ग इत्यादि तत्प्रवृत्तिमन्तरैव शास्त्रत्वसिद्ध्या सा त्रिपाद्यान्न प्रवर्त्तते पूर्वत्राऽसिद्धमित्यसिद्धत्वविधानात् । नच संज्ञाशास्त्रदृष्ट्या संज्ञाघटितशास्त्राणामसिद्धत्वेन कथं संज्ञाशास्त्रैकवाक्यतेति वाच्यम् ? जातस्संस्कारो न निवर्त्तते इतिन्यायेन जातशक्तिग्रहेण निर्वाहसम्भवात् । संज्ञाशास्त्रप्रवृत्तिमन्तरा तेषां शास्त्रत्वस्यैवाभावेन सुतरामसिद्धत्वाऽभावबोधनाच्चेति वदन्ति ।

स्वघटितेतरशास्त्रेणैकवाक्यतया बोधजनकत्वमधिकारत्वम् । किञ्च लघुजटाजूटे—स्वदेशे लक्ष्यसँस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकवाक्यार्थाननुभावकत्वे सति विधिशास्त्रीयलक्ष्यसँस्कारोपयोगिवाक्यार्थबोधप्रयोजकत्वमधिकारत्वम् । संज्ञादिष्वतिव्याप्तिवारणाय सत्यन्तम् । शेष इत्यादेर्विधिसूत्रत्वस्यासत्त्वात् स्वदेशे वाक्यार्थानुभावकत्वेऽपि तद्बोधस्य लक्ष्यसँस्कारोपयोगिविधिशास्त्रीयवाक्यार्थबोधोपकारकत्वाभावान्नाव्याप्तिः । विधिशास्त्रस्यापि स्वदेशे विध्यन्तरीयवाक्यार्थबोधोपकारकवाक्यार्थानुभावकत्वाद्तिव्याप्तिवारणाय विशेष्यदलम् । स्वदेशे विध्यन्तरीयवाक्यार्थबोधोपकारकवाक्यार्थानुभावकत्वाद्तिव्याप्तिवारणाय विशेष्यदलम् । स्वदेशे बोधशून्यत्वे सति साक्षादेकवाक्यतया बोधोपयोपगित्वमधिकारत्वम् इति केचित् ।

गमनेऽपीति—यदि च गमनेऽपि न तद्देशीयत्वन्तदा सुतरां स्मरणेन सेति दण्डाऽपूपिकन्यायेन लब्धम् ।

त्रिप्रकार इति—एकदेशस्थस्य सर्वशास्त्राभिज्वालकत्वन्तु यथोद्देशपक्षाऽभिप्रायेण पाणिनिपाठाभिप्रायेण वेति केचित् । एकः प्रकारश्च मूलोक्त एव । द्वितीयस्तु यथा रज्ज्वादिबद्धं काष्ठमनुकृष्यते तद्वच्चकारेणेति । तृतीयस्तु विनाऽपि चकारम्प्रत्येकयोग उपतिष्ठत इति "अङ्गस्ये"ति यथा । प्रदेशो विधिः ।

निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहारः क्ङिति चेत्यत्र भाष्ये । तत्रैकवाक्यता पर्युदासन्यायेन, प्रसज्यप्रतिषेधेऽपि तेन सह वाक्यार्थबोधमात्रेणैकवाक्यताव्यवहारः ।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोधः किन्तु प्रदेशवा·

---

तत्रैकवाक्यता पर्युदासन्यायेनेति—पदैकवाक्यतातात्पर्येण विधिशास्त्रे क्ङिति नेत्यस्योपस्थितौ नञो भेदार्थकत्वेन क्ङिद्भिन्नसार्वधातुकार्द्धधातुकयोरित्यर्थः । ननु प्रथमान्तान्यसमभिव्याहृताऽसमस्तनञो भेदबोधकत्वन्न भवति । अत एव भूतले न घट इतिवाक्याद् भूतलभेदवद्वृत्तित्वन्न घटे प्रतीयत एवञ्च क्ङिद्भिन्न इत्यर्थो न स्यात् इत्याशयेनाह प्रसज्ज्येति ।

किञ्च घटे न द्रव्ये इत्येवंविधवाक्याद् घटभिन्ने द्रव्ये इत्यर्थप्रतीत्यभावेन भूतले घटो नेतिवाक्याद् भूतलभिन्ने घट इतिबोधाऽभावेन च असमस्तनञो भेदबोधने प्रथमान्तप्रतियोग्यनुयोगिवाचकपदसमभिव्याहारः कारणमितिनियमेन प्रकृते प्रतियोगिवाचकपदयोस्सप्तम्यन्तत्वेन प्रथमान्तत्वाऽभावान्नञो भेदबोधकत्वन्नोपपद्येतेत्यभिप्रायेण चाह प्रसज्ज्येति । एकवाक्यतेति—वाक्यैकवाक्यतेत्याशयः । निषेधविधायकस्य विधिशास्त्रीयपदधर्मिकतात्पर्यग्राहकत्वेनोपजीव्योपजीवकभावापन्नबोधप्रयोजकता सुघटैवेति ।

निषेधशास्त्रीयविषयेऽपि परिभाषात्वव्यवहारेणैव व्यवस्था भिन्नादौ वर्णव्यवधाने गुणनिषेधसिद्धये "क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्त्तव्यमि"तिवार्त्तिकप्रत्याख्यानाय कार्यकालपक्षे सार्वधातुकार्द्धधातुकयोरिति वाक्यतापन्नस्याऽचारिताऽर्थ्येऽपि पुगन्तेति वाक्यतापन्नस्य निषेधशास्त्रस्याऽचारितार्थ्याद् व्यवधानेऽपि येन नाऽव्यवधानन्यायेन प्रवृत्तिरिति परिभाषात्वव्यवहारो विस्पष्टतर इति । निषेधवाक्यानामपि निषेध्यविशेषाकाङ्क्षितत्वाद्विध्येकवाक्यतयैवान्वय इति परिभाषासादृश्यात्परिभाषात्वेन व्यवहार इति । न पृथग्वाक्यार्थबोध इति—लक्ष्यसँस्कारोपयोगिबोधो नेत्यर्थः ।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोध इति–नच पृथग्वाक्यार्थबोधाऽभावे शक्तिग्राहकत्वानुपपत्त्या विधिशास्त्रेण संज्ञाशास्त्रीयाऽकर्षणाऽभावेन तदुद्देशेऽपि वाक्यार्थबोधो न स्यादिति वाच्यम् ? वाक्यार्थबोध इत्यनेन लक्ष्यधर्मिकसाधुत्वप्रकारकबोधस्यैव ग्रहणेन कार्यकालपक्षे संज्ञाशास्त्रस्य तादृशवाक्यार्थबोधाऽभावेऽपि क्षतिविरहात् । नचैवमभिप्राये विनिगमनावैकल्येन परिभाषाशास्त्रेऽप्येतदभिप्रायसंघटनेन संज्ञाशास्त्रस्येति विशेषाभिधानस्य वैयर्थ्याऽपत्तिर्यथोद्देशेऽप्येवं व्याप्तिसम्भवेन कार्यकाल इति विशेषाभिधानस्य वैयर्थ्याऽपत्तिश्चेति वाच्यम् ? वाक्यार्थबोधपदेन लक्ष्यसँस्कारक एव बोधः । लक्ष्यसँस्कार-

कयेन सहैव । अत एवाणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नादसोमादित्य-
कश्च द्विविधः साधुत्वप्रकारकः साधुत्वप्रकारकबोधाधिकरणत्वे सति तदुपयोगी
च । तथाच संज्ञाशास्त्रस्य तु न पृथग्वाक्यार्थबोधस्तादृशः कदाचिदपीति पृथगि-
त्यस्य स्वदेश इत्यर्थः । कार्यकालपक्षे प्रदेशदेशे तथा बोधेऽपि न स बोधः पृथ-
ग्बोध इत्यभिप्रायः । अत्र प्रमाणजिज्ञासायान्तु यथा परिभाषाशास्त्रैस्स्वोद्देश्य-
ज्ञानार्थं विधिशास्त्राऽकर्षणन्तथा संज्ञाशास्त्रस्य नापकर्षकताप्रयोजकत्वं संकेत-
काले व्यवहर्त्रपेक्षाऽभावात् । तथा च अपेक्षाबुद्धावाद्यपरिभाषा, उपेक्षाबु-
द्धावन्तिमा परिभाषा । पूर्वत्वपरत्वादिव्यवस्थानन्तु त्रिविधम्बोध्यन्तथाहि'
तद्देशत्वप्रयोजकम्पाणिन्युच्चारणाधिकरणत्वमेकम् । लक्ष्यसँस्कारोपयोगिबो-
धाधिकरणत्वन्द्वितीयम् , पाणिन्युच्चारणाधिकरणत्वविशिष्टलक्ष्यसँस्कारकबोधा-
धिकरणत्वन्तृतीयम् , तच्चोत्तरोत्तरम्बलवत् परिभाषाशास्त्राणां स्वदेशे तृतीय-
प्रयोजकस्य सत्त्वेन स एव देशः । वृद्धिरादैजित्यादिसंज्ञाशास्त्राणाम्विधिदेशे
द्वितीयप्रयोजकस्य सत्त्वेन स एव देशः । भपदसंज्ञाया अग्रिमप्रयोजकस्य कुत्रा-
प्यसम्भवात् स्वदेशे प्रथमप्रयोजकस्य सत्त्वेन स एव देश इति मूलाभिप्रायः ।
अत एव अयादिभ्यः परैव प्रगृह्येत्यादि "अणोऽप्रगृह्यस्ये"त्यादि अष्टाध्यायी-
पाठकृतेत्यादि तत्रपरत्वेनैवेत्यादि सर्वं सङ्गच्छते ।

## श्रीगुरुचरणास्तु

कार्य्यकालपक्षेऽपि संज्ञाशास्त्राणां स्वदेशे बोध एव न भवति । नच संज्ञात्व-
ज्ञानानुपपत्तिश्शङ्क्या ? वृद्धिसंज्ञासूत्रभाष्ये संज्ञाधिकारप्रत्याख्यानसमये संज्ञा-
संज्ञिनोस्समानविभक्तिकत्वेनैव निवेशोऽकारि । तथाच "वृद्धिरादैजि"ति
प्रथमान्तपदद्वयदर्शनेनानुमित्यैव वा तज्ज्ञानसौष्ठवात् । तथाच यथाश्रुतार्थक-
त्वमेव तत्तद्देशत्वप्रयोजकन्द्विविधमेव । बोधाधिकरणत्वविशिष्टोच्चारणा-
धिकरणत्वम् । तदसम्भवे बोधाधिकरणत्वम् परिभाषाणाम्विशिष्टाधिकरणत्वं
स्वदेशस्यैवेति तस्यैव तद्देशत्वम् । भपदसंज्ञानां स्वदेशस्यैव विशिष्टाधिकरण-
त्वेन तद्देशत्वम् । प्रगृह्यसंज्ञादीनाञ्च कार्यकालपक्षे स्वदेशे बोधाऽभावेन विधि-
देशे बोधात्तद्देशत्वमेव । यथोद्देशे च स्वदेशत्वमिति चोचुः ।

## अथ परिभाषाद्वयसम्बन्धिपरीक्षालेखप्रकारः ।

प्राचीनमते परिभाषाशास्त्रेण संज्ञाशास्त्रेण च विधिशास्त्राणां यथोद्देश-
पक्षे वाक्यैकवाक्यता । उपजीव्योपजीवकभावाऽपन्नबोधजनकत्वं वाक्यैकवाक्य-
त्वम्, तस्मिन्निति निर्दिष्ट इतिशास्त्रबोध उपजीव्य उपजीवयतीत्युपजीव्य इति
व्युत्पत्तेः । इको यणचीतिशास्त्रबोध उपजीवकः, कार्यकालपक्षे च संज्ञाशास्त्रे-
ण परिभाषाशास्त्रेण च विधिशास्त्राणाम्पदैकवाक्यता । निरूप्यनिरूपकभावाऽ-

तत् प्रति न मुत्वाद्यसिद्धम्, असिद्धत्वस्य कार्यार्थतया कार्यज्ञानोत्तर-मेव तत्प्रवृत्तिः कार्यज्ञानं च प्रदेशदेश एवेति तदुद्देशस्थस्यासिद्धत्वात्पु-र्वग्रहणेनाग्रहणात् । एवं तद्बोधोत्तरमेव विरोधप्रतिसन्धानं चेति तत्र-त्यपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ बीजम् । अत एव कार्यकालपक्षे ऽया-दिभ्यः परैव प्रगृह्यसंज्ञेत्यद्सोमादितिसूत्रे भाष्ये उक्तम् । आकडाराधि-कारस्थभपदसंज्ञादिविषये तु यथोद्देशपक्ष एवेति तत्रत्यपरत्वेनैव बा-

---

पन्नविषयताप्रयोजकपदघटितत्वम्पदैकवाक्यत्वम् ।

नागेशमते च यथोद्देशपक्षे कार्यकालपक्षे च पूर्वोक्तलक्षणकपदैकवाक्यतैव भवति । कार्यकालपक्षे त्रैपादिकविधिशास्त्रैः परिभाषाया आकर्षणञ्चाऽदृष्टपि-शाचन्यायादिना । संज्ञाशास्त्रस्य त्विति । अत्र प्रमाणन्तु परिभाषाशास्त्राणां स्वोद्देश्यकज्ञानाय विधिशास्त्रस्यापेक्षणात् ताभिस्तेषामाकर्षणम् यथा तथा व्यवहारो नैव संज्ञाशास्त्रस्य संकेतकालावच्छेदेन साङ्केतिकपदेन व्यवहर्त्तुरपे-क्षाऽभावान्न तेन तस्याऽकर्षणम् । तस्मिन् शक्तिग्रहेऽपेक्षाबुद्धौ यथोद्देशपक्षः उपेक्षाबुद्धौ च कार्यकालपक्ष इति परीक्षालेखप्रकारः ।

अथ शास्त्रार्थप्रकारः ।

**असिद्धत्वादिति**—नच "णोऽप्रगृह्ये"त्येकवाक्यतापन्नायाः प्रगृह्यसंज्ञाया यथाऽसिद्धत्वं तथा पूर्वत्राऽसिद्धमित्यस्याप्यसिद्धत्वे सिद्धत्वस्य विद्यमानत्वा "द-दसोऽसेरि"त्यत्र पूर्वग्रहणेन प्रगृह्यसंज्ञाया ग्रहणं सिद्धमत्ययुक्तोऽयं ग्रन्थ इति वाच्यम् ? सूत्रारम्भसामर्थ्यात्पूर्वत्राऽसिद्धमित्यस्याऽसिद्धत्वाऽभावकल्पनेना-ऽदोषात् ।

**यथोद्देशपक्ष एवेति**—अत एवाऽपादानमुत्तराणि कारकाणि बाधन्त इति भाष्यसिद्धान्तस्सङ्गतः । अन्यथा कर्मसंज्ञापेक्षयाऽपादानसंज्ञायाः पूर्वम्पाठेऽपि कार्यकालपक्षेऽपादाने पञ्चमीति विधिशास्त्रस्य परत्वादपादानमुत्तराणीति भाष्यासङ्गतिर्ध्रुवैव । किञ्च राजन्य इत्यत्र नलोपाऽपत्तिरूपदोषः । कार्यकाल-पक्षे राजन्य इत्यत्र "अल्लोपोऽन" इति सूत्रैकवाक्यतापन्नभसंज्ञापेक्षया नलोपविधायकसूत्रैकवाक्यतापन्नपदसंज्ञायाः परत्वेन नलोपो दुर्वार एव । न-चैवं सर्वत्र पदत्वस्वीकारे "नस्तद्धिते" ये चाऽभावकर्मणोः "अन्" इत्यादिसूत्रा-रम्भसामर्थ्याद् यजादिप्रत्ययपरत्ववन्नान्ते पदत्वबाध इति न दोष इति वाच्य-म् ? दण्डिनेत्यादौ भसंज्ञायास्तृतीयैकवचने किमपि फलन्नास्ति केवलपदसंज्ञया नलोऽपापत्तेः । तथा जरसेति तृतीयैकवचने रुत्वाऽपत्तेश्चैवञ्च यथोद्देशपक्ष आश्रेय एव ।

नच विशेषप्रमाणमन्तरा केवललक्ष्यमात्रप्रमाणप्रदर्शनेन किं साध्यमिति

वाच्यम् ? भपदसंज्ञाविषये यथोद्देशपक्षाश्रयणे "नस्तद्धित" इति सूत्रस्य ज्ञापकत्वात् । नचाध्यात्ममित्यत्र "न संयोगाद्वमन्तादि"तिनिषेधेनाल्लोपाऽप्राप्तौ तत्र "नस्तद्धित" इति सूत्रचारितार्थ्यमिति वाच्यम् ? "अह्नष्टखोरेवे"त्यस्य ज्ञापकत्वात् । तथाहि आह्निकमित्यत्र कार्यकालपक्षे नलोपे कृते "यस्येति-चे"त्यनेनाकारलोपे आह्निकमित्येव रूपं टिलोपेऽपि तदेव रूपमिति तस्य वैयर्थ्याज्ज्ञापकत्वसौष्ठवात् । नचायन्नागेशाऽभिप्रायो न संघटते रामावित्यादौ कार्यकालपक्षे कथम्पदत्वमित्याकारकैकदेशविकृतन्यायावतारणविरोध इति वाच्यम् ? अस्ति च कार्यकालपक्षेंऽशद्वयं स्वदेशत्यागः परदेशगमनञ्च । तत्रचैवकारेण विधिदेशीयत्वांशस्यैव व्यवच्छेदो नत्वन्यस्येति कल्पनात् । पदसंज्ञाऽपि भसंज्ञासाहचर्य्यात्प्रत्ययनिमित्तिकैव गृह्यते न तु सुप्तिङ्निमित्तिकेति सयुक्तिकसमाधानाच्च ।

प्रथमपरिभाषीयाहुरिति प्रतीकमनुसृत्य शाब्दिकम्मन्यानां खण्डनविभूतिः ।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थ इति मूलमाश्रित्य कार्यकालपक्षे संज्ञाशास्त्रस्य स्वदेशे वाक्यार्थाऽबोधकत्वन्नैव युक्ततरम् । सामग्रीसत्त्वेऽवश्यङ्कार्य्यमिति न्यायेन पदपदार्थोपस्थितौ वाक्यार्थबोधे प्रतिबन्धकाऽभावात् । अन्याकाङ्क्षायास्तत्प्रतिबन्धकत्वन्तु सर्वथैवाऽप्रामाणिकम् । तथा च संज्ञापरिभाषयोस्स्वदेशस्थता विधिदेशस्थता च । अत एव "क्ङिति चे"ति सूत्रभाष्ये काऽर्यकालपक्षे तस्याङ्गाधिकारस्थतोक्ता सङ्गच्छते । एवञ्च विधिप्रदेशस्थत्वेनैव पौर्वापर्य्यम्मुख्यम्विरोधप्रतिसन्धानादीनान्तत्रैव सम्भवात् । तदभावे पाठकृतमपि परत्वादिकम् । अत एवायादिभ्यः परैव प्रगृह्यसंज्ञेत्यादिभाष्यस्य "तस्मिन्निति" वक्ष्यमाणभाष्यस्य च नैवाऽसङ्गतिः ।

भादिसंज्ञाविषये यथोद्देशपक्ष एवेत्यपि न युक्तम्, भस्येत्युपस्थितमिदं भवति "यचि भमि"ति भाष्याऽसङ्गतेः । एकदेशविकृतन्यायावतरणे रामावित्यादिनागेशग्रन्थाऽसङ्गतेश्च ।

जातशक्तिग्रहेणेत्याद्यपि लेखोऽसङ्गतप्राय एव । तुल्यन्यायेन गृहीतपरिभाषार्थेनाऽसिद्धत्वेऽपि त्रिपादीस्थकार्यसंस्कारस्य दुर्निवार्यत्वात् । "षष्ठीस्थानेयोगे"ति परिभाषाया अपि शक्तिग्राहकत्वेन संज्ञाशास्त्रसमशीलतया त्वद्रीत्या तस्यास्त्रिपाद्याम्प्रवृत्त्युपपत्तौ तदभावाऽपादनपरेण "पूर्वत्राऽसिद्धमि"ति सूत्रीयभाष्येण विरोधाऽपत्तेश्च । संज्ञापरिभाषयोरैकरूप्यसम्भवे वैरूप्यकल्पनाया अन्याय्यत्वात् । "अदसो मादि"त्यत्र भाष्ये परैवेत्यस्य तत्प्रयुक्तप्रकृतिभाव इत्येवाशय इत्याशयानभिज्ञस्याग्रे प्रश्नः । कथं कार्यकालमित्यादीत्येकदेश्युत्तरमेवञ्च न तद्विरोधाऽभासः । तत्रापि स्वगृहे वाक्यार्थबोधः पूर्ववत् । अत एव भाष्ये संज्ञापरिभाषयोरविशेषेणैकदेशस्थत्वमुक्तम् । अत्रैव प्रसङ्गे कश्चित्परि-

ध्यबाधकभावः । पदादिसंज्ञानां तत्र जातशक्तिग्रहेणैव त्रिपाद्यामपि व्य-
वहारः । अत एव पूर्वत्रासिद्धमिति सूत्रे परिभाषाणामेव त्रिपाद्यामप्रवृत्ति-
माशङ्क्य कार्यकालपक्षाश्रयेण समाहितमित्याहुः । यथोद्देशपक्षः प्रगृ

---

भाषारूप इति कैयट इत्युक्तिरपि नैव युक्ता ? परार्थत्वेन संज्ञापरिभाषयोरेक-
रूपत्वेन परिभाषाणामिव संज्ञानामपि तुल्यत्वात् । अत एव सर्वशास्त्राणां
प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेऽपि परत्वादिकं सङ्गच्छते ।

अत एव शेखरकृता सर्वत्रप्रसिद्धं परेत्वित्यादिलेखम्विहाय स्वमतसूचकनिर्दे-
शमपहाय केचित्तु आहुरित्येवोक्तम् । एवञ्च संज्ञापरिभाषयोरैकरूप्यमेव
फलति एतावानेव विशेषःष्यङ्सूत्रभाष्यादीदूत्सूत्रभाष्याच्च । संज्ञाशास्त्राणां
वाक्यैकवाक्यता परिभाषणान्तु लाघवात्पदैकवाक्यतेत्येतद्ध्वननार्थमाह अल-
मिति । अलमर्थस्त्वग्रे विशेषरूपेण निरूपयिष्यत इति दिक् ।

नन्वेवमपि राजपुरुष इत्यादावप्येवम्प्रकारेण भत्वे पदत्वाऽभावेन नलोपो
न स्यात्, अन्तरङ्गानपीति न्यायेन पूर्वं समासे लुकि "नलुमते"तिनिषेधात्प्र-
त्ययाऽभावाद्भत्वानापत्तिरिति चेन्न ? इह किञ्चित् त्रपो ङ्गीतिन्यायेन संज्ञावि-
षयेऽन्तरङ्गानपीति न्यायो न प्रवर्तते ऽन्यथा सम्बुद्धिसंज्ञातः पूर्वमेव लुकि प्रत्य-
योद्देश्यके प्रत्ययलक्षणन्यायाऽप्रवृत्त्या सम्बुद्धित्वाभावेन गुणो न स्यादिति
चेन्न ? 'नलुमते'तिनिषेधस्तु प्रत्ययस्थानिक एव प्रत्ययलक्षणन्नेत्यभिप्रायक इति
कल्पनात् ।

नन्वैवं कल्पने सर्वेषाम्पुत्रस्सर्वपुत्र इत्यादावपि निषेधाऽप्रवृत्त्या प्रत्ययल-
क्षणन्यायेन पुनस्सुडागमस्स्यादिति वाच्यम् ! भाष्यप्रमाणेन सम्बुद्धिसंज्ञाया-
मन्तरङ्गानपीतिन्यायाऽप्रवृत्त्या त्रपो इति सिद्धिविधानात् ।

नन्वेवमपि इत्संज्ञालोपविषयेऽन्तरङ्गानपीति न्यायो न प्रवर्त्तत इतिक-
ल्पना तु कर्त्तव्यैव, नोचेदेवं "ञ्नित्स्वरे प्रत्ययलक्षणप्रतिषेधो वक्तव्य" इति
वार्तिकस्य वैयर्थ्याऽऽपत्तेः । पञ्चेन्द्र इत्यादिप्रयोगसिद्ध्यर्थं "लुकि न स्थानिव-
दि"ति वार्तिकप्रमाणेन लोपेऽन्तरङ्गन्यायाऽप्रवृत्तिकल्पनात् ।

न चाकडारस्थभपदसंज्ञायां कार्यकालपक्षाऽस्वीकारे पदशब्दाण्णिचि
टिलोपे स्थानिवद्भावेन जश्त्वन्न स्यादिति वाच्यम् ? आकडारसूत्रप्रमाणात्
यत्राकडाराधिकारीयसमानावधिकसंज्ञाद्वयप्रसक्तिस्तत्रैव यथोद्देशपक्षाश्रयणात्
इति दिक् ।

जातशक्तिग्रहेणैवेति—वाक्यार्थज्ञाने पदार्थज्ञानस्य कारणत्वात्स्वरूपवि-
धेर्बाधितत्वाच्च शक्तिस्मृतेः पूर्वं विधिशास्त्रीयसामान्यवाक्यार्थबोधस्याऽसम्भ-
वेन संज्ञाम्प्रति त्रिपाद्या नासिद्धत्वम् "न भकुर्छुराम्" न पदान्ताट्टोरनामि"त्या-

ह्यसंज्ञाप्रकरणे भाष्ये ॥ २॥ कार्यकालमित्यस्य च कार्येण काल्यते स्व-सन्निधिं प्राप्यत इत्यर्थः। कार्येण स्वसँस्काराय स्ववृत्तिलिङ्गचिह्नितपरि-

---

यत्रैवार्थे प्रमाणम् । इदमनाकडारीयप्रातिपदिकादिसंज्ञास्वपि तुल्यमेव । परेश्च घाङ्कयोर्निनदीभ्यामित्यादौ स्वरूपग्रहणे व्याख्यानमेव शरणमित्याशयः । उक्त-मर्थं भाष्यानुग्रहेण द्रढयति अत एवेत्यादि ।

स्वसँस्कारायेति—पूर्वोक्तबोधजननायेत्यर्थः। स्ववृत्तिलिङ्गचिह्नितेति—अत्र स्वपदेन विधिशास्त्रं गृह्यते तद्वृत्तिलिङ्गन्तत्तत्परिभाषीयोद्देश्यतावच्छेद-कन्तस्मिन्नितिनिर्दिष्टे पूर्वस्येत्यस्यौपश्लेषिकाधिकरणबोधकसप्तम्यन्तपदघटित-त्वम् । तद्धीको यणचीत्यत्र वर्तत एव । इदम्, त्रैपादिकम्विधिशास्त्रम् । तत्र कोऽर्थः परिभाषाशास्त्रे । तन्विह सिद्धमिति—तत्पदेन परिभाषाशास्त्रं गृह्यते इह कोऽर्थस्त्रैपादिकविधौ । यथा पिशाचोऽदृश्यमानोऽपि पुरुषमाकर्षयति एवमेव असिद्धमपि त्रैपादिकम्विधिशास्त्रम् परिभाषाशास्त्रमाकर्षयत्येवायमेवादृष्टपिशा-चन्यायः ।

अत्र केचिन्मान्याः, कैयटाऽभिमतकार्यकालपक्षाश्रयणन्नव्यमतेऽपि। तथाहि यासाम्परिभाषाणान्त्रिपाद्यामुपस्थितिर्न भवति तत्र नवीनाभिमतकार्यकालपक्षा-श्रयणम् । यथा सन्निपातपरिभाषा, असिद्धम्बहिरङ्गेति । सप्तमीनिर्देशादिः क्वे-त्यत्रातद्गुणसम्विज्ञानो बहु(१) व्रीहिः । यासाम्परिभाषाणां त्रिपाद्यामुपस्थि-तिस्तत्र चायं कैयटोक्तकार्यकालपक्ष इति ब्रुवन्ति ।

---

(१) नञ्तत्पुरुषभिन्नत्वे सति लाक्षणिकोत्तरपदत्वं बहुव्रीहित्वम् । सचायम् बहुव्रीहिः सामान्यतो द्विधा समानाधिकरणो व्यधिकरणश्च । यद्बहुव्रीहिघटकपदाना-म्परस्परं समानविभक्तिमत्तया विशेष्यविशेषणभावप्रत्यायकता स प्रथमः । लम्बौ कर्णौ यस्य स लम्बकर्ण इति तदुदाहरणम् यद्बहुव्रीहिघटकपदानां विग्रहे परस्परं विभिन्न-विभक्तिकतया विशेष्यविशेषणभावप्रत्यायकता स द्वितीयः शूलम्पाणौ यस्य स शूलपाणिरिति यथा ।

एवन्तद्गुणातद्गुणसंविज्ञानभेदेनापि बहुव्रीहिर्द्विधा भवति । यत्र विशेष्यैकदेशो विशेषणत्वेन सम्बध्यते स प्रथमः दीर्घग्रीव इत्यादौ । यत्र च अन्य एव विशेषणत्वेन सम्बध्यते सोऽतद्गुणसंविज्ञानो बहुव्रीहिः बहुधनादौ ।

नच यत्र विशेषणं क्रियान्वयि स एव प्रथमो यत्र च विशेषणन्न तथा स द्वितीय इति वाच्यम् । तथा विशेषणस्य क्रियान्वयित्वेन तद्गुणत्वे दीर्घग्रीवाय प्रयच्छेत्यादौ ग्रीवाविशेषणस्य दानानन्वयेन तद्गुणसंविज्ञानबहुव्रीहित्वानुपपत्तेः । बहुधनस्तिष्ठती-त्यादौ धनस्यापि क्रियान्वयेन तद्गुणत्वापत्तेश्च । इष्टापत्तिस्तु व्यवहाराभावान्न पार्यते

भाषाणामाक्षेप इति यावत् ।

अत एव पूर्वत्रासिद्धमिति सूत्रे भाष्ये त्रिपाद्या असिद्धत्वात्तत्र सपाद·

---

अत्र शाब्दिकम्मन्याः, यथोद्देशपक्ष इत्यारभ्य आहुरित्यन्तग्रन्थो "नच कार्यकालपक्षे" इत्यादिशाङ्कार्थग्रन्थोऽपि प्राचीनमतप्रतिपादनपर एवेति भाषन्ते । नच कार्यकालपक्षे इत्यादिशङ्कासमाधानग्रन्थोऽपीति विशिष्टः प्रकारः ।

वस्तुतस्तु अष्टाध्यायीपाठकृतमेव पूर्वत्वम्परत्वञ्च सर्वत्र शास्त्रप्रवृत्तिनिवृत्त्यन्यतरव्यवस्थापकमित्येव सिद्धान्तः । अयादिभ्यः परैव प्रगृह्यसंज्ञेत्यत्र तु यथा कायमिति प्रयोगसिद्धये शेखरे परत्वादित्यस्योत्कृष्टत्वादित्यर्थौ, विप्रतिषेधसूत्रभाष्येऽपि परशब्द इष्टार्थवाचकोऽपवादत्वपर एवम्प्रकृतभाष्यवाक्येऽपि परशब्द उत्कृष्टवचनोऽपवाद एवेति तात्पर्य्यम् ।

अत्र केचिन्मान्याः, यथोद्देशं संज्ञायाम् कार्य्यकालम्परिभाषायामित्येव परिभाषयोराकारः । नहि प्रत्येकम्पक्षद्वयस्वीकृतिः, अयादिभ्यः परैवेति भाष्ये परशब्द उत्कृष्टवचनोऽपवादत्वपर एव । विधिशास्त्रतुल्यत्वातिदेशेन गुणशास्त्राणामपि तत्त्वम्भवत्येव, अन्तरङ्गपरिभाषायाः सन्निपातपरिभाषावत्त्रिपाद्याम्प्रवृत्त्यभावश्च । "अनुदात्तम्पदमेकवर्जमि"त्यत्रापि कार्य्यकालपक्ष एवात एव अग्नी ३ इत्यत्राणोऽप्रगृह्यस्येत्यनुनासिकाभावोऽन्यथाऽणोऽप्रगृह्यस्येत्येतदेकवाक्यतापन्नेदीदूदेद्द्विवचनमित्यस्याऽसिद्धत्वेन त्रिमात्रिकत्वेन प्रगृह्यत्वाऽभावेनानुनासिको दुर्वार एव स्यात् । यथोद्देशे पूर्वमेव प्रगृह्यत्वे तु नैवानुनासिकः ।

नच संज्ञाशास्त्रीयविषये कार्यकालपक्षानङ्गीकारेऽमूषामित्यत्रा "दिरन्त्येन सहे"त्येतद्दृष्टचोत्वविधायकस्या "दसोऽसेर्दादुदो म"इत्यस्याऽसिद्धत्वेनेण्परत्वाभावेना "देशप्रत्यययो"रिति षत्वन्न स्यादिति वाच्यम् ? पूर्वत्राऽसिद्धमिति शास्त्रमष्टाध्यायीस्थशास्त्रदृष्ट्याऽसिद्धत्वविधायकमिति सिद्धान्ते निश्चितेऽपि "अइउण् ऋलृगि"ति माहेश्वरचतुर्दशसूत्रीदृष्ट्या नासिद्धत्वविधायकमेवञ्च माहेश्वरसूत्रबोध्यताया अमूषामितिलक्ष्यस्थोकारे वर्त्तमानत्वेना"दिरन्त्येने"ति सूत्रञ्च मध्यगानाम्महेश्वरसूत्रोपात्तानाम्वर्णानां या संज्ञा ताम्विदधातीत्यण्पदेनोकारग्रहणे क्षतिविरहात् इत्यूचुः ।

---

कर्त्तुम् । तस्मात् पूर्वोक्त एवार्थ इति ।

अत एव जगदीशतर्कालङ्कारा अपि यो बहुव्रीहिःस्वार्थस्य स्वार्थघटकपदार्थस्य क्रियादावन्वयानुकूलः स तद्गुणसंविज्ञानो यश्च ( स्वार्थस्य अन्वयिनि स्वार्थघटकस्यापि अर्थस्यान्वयबोधने समर्थस्स तयोस्तद्गुणः ) दीर्घग्रीवम्पश्येति । तदेव चोक्तम् प्राचीनैः,

> तद्गुणोऽतद्गुणश्चैव बहुव्रीहिर्द्विधा मतः ।
> प्रथमे लम्बकर्णादिर्द्वितीये दृष्टसागरः ॥ इति ।

सप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिमाशङ्क्य यद्यपीदं तत्रासिद्धं तत्त्विह

अत्र केचित्कल्पकाः, अष्टाध्यायीपाठकृतपरत्वस्येति प्रतीकमभिलक्ष्ये-त्थम्ब्रुवन्ति यत्र लक्ष्यसंस्कारोपयोगिबोधाधिकरणीभूतमुख्यदेशवृत्तित्वमवष्टभ्य व्यवस्थासम्भवस्तत्र तु तद्देशकृतपरत्वमेव तत्प्रवृत्तौ मुख्यबीजम् । अत्र अयादिभ्यः परैव प्रगृह्यसंज्ञेति भाष्यम्प्रमाणम् । यत्र च व्यवस्था न सम्भवति तत्र गौणं पाठकृतमेव परत्वादिकमत एवोभयनिर्देशे इतिपरिभाषायास्तुपि चेत्यतः परत्वादित्यादिग्रन्थसङ्गतिः । परिवीरिति लक्ष्ये कार्यातिदेशपक्षे परिपू-र्वकव्येञ्धातोः क्विपि सम्प्रसारणे स्थानिवद्भावेन तुग्दीर्घत्वयोः प्राप्तौ परत्वा-द् दीर्घ इति भाष्यञ्च सङ्गतमिति ब्रुवन्ति ।

नन्वेनयोः परिभाषयोः प्राचीननवीनमतशास्त्रार्थनिष्कर्षः क इति प्रश्नः ? प्राचीनमते जातसँस्कारो न निवर्त्तते भुक्तवन्तम्प्रति मा भुङ्क्था इति न्याया-भ्यां केवलस्मरणमात्रेणैव विधिशास्त्रीयवाक्यार्थबोधोपकारः । प्रभाकरानु-यायिनवीनमते तु अनुभवेनैव विधिवाक्यार्थबोधोपकारः नतु स्मरणेन । शा-ब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति नियमात् । अन्यथाऽशब्दादपि शाब्द-बोधप्रसङ्गापत्तिः । एवञ्च पदसमर्पणेनैव विधिशास्त्रार्थोपकृतिरितिस्मरणानु-भवयोरेवाचार्य्यद्वयशास्त्रार्थौ नत्वेकवाक्यतायां तत्र स्मरणेनैवोपकृतिरिति-वादिप्राचीनमतम्विस्पष्टीक्रियते ।

संज्ञापरिभाषाणां वाक्यार्थयोस्सतोर्जातस्य संस्कारस्य तल्लिङ्गलिङ्गितविधि-शास्त्रोद्बोधे स्मरणमात्रेण विधिशास्त्रोपकारः । तथा च यथोद्देशे वाक्यैक-वाक्यता फलति "भविष्यति किञ्चिदनेन प्रयोजनमि"ति न्यायात् तयोर्वाक्या-र्थे उपेक्षाबुद्धौ जातसँस्काराऽभावात् विधिशास्त्रेऽनुभवेनव पदसमर्पणाद्वाक्या-र्थबोधरूपोपकारः । तथा च पदैकवाक्यता फलत्ययमेव कार्यकालपक्ष इति ।

अनु(१)भवेनैवोपकारो न तु स्मरणेनेति प्रभाकारानुयायिनवीनमतम्वि-स्पष्टीक्रियते । शाब्दी ह्याकाङ्क्षा शब्देनैव प्रपूर्य्यत इति नियमान्न केवलसँस्का-

(१) ज्ञानं द्विविधम् स्मृत्यात्मकमनुभवात्मकञ्च । तत्रापि स्मृतित्वाव-च्छिन्नप्रतियोगितानिरूपकभेदविशिष्टज्ञानत्वमनुभवसामान्यलक्षणम् । बहिरिन्द्रियनि-ष्ठजनकतानिरूपितजन्यत्वाभावविशिष्टसंस्कारनिष्ठजनकतानिरूपितजन्यत्वावच्छिन्नज्ञान-त्वं स्मृतिसामान्यलक्षणम् । वै० च सामानाधिकरण्यसम्बन्धेन । स्वजन्यसंस्कारसम्ब-न्धावच्छिन्नानुभवत्वावच्छिन्नजनकतानिरूपितजन्यतावच्छेदकीभूतजातिमत्त्वं स्मृतेर्ल-क्षणम् वा । तत्रापि साक्षात् करोमि अनुमिनोमि उपमिनोमि शाब्दयामीति प्रतितिवै-लक्षण्येनानुभवश्चतुर्विधः । अतएव "अनुभूतिश्चतुर्विधा, प्रत्यक्षमप्यनुमितिस्तथोप-मितिशब्दजे" इति भट्टाचार्यो विश्वनाथः । तत्रापि प्रमाभ्रमभेदेन ज्ञानसामान्यद्वैवि-

सिद्धमित्युक्त्वा तावताप्यसिद्धिरित्यभिप्रायके कथमिति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र कार्यं तत्रोपस्थितं द्रष्टव्यमित्युक्तम् ।

न च कार्यकालपक्षे ङमो ह्रस्वादित्यादौ तस्मादित्युत्तरस्य तस्मिन्निति निर्दिष्टे पूर्वस्येति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देशो बलीयानिति तस्मिन्निति सूत्रस्थभाष्यासंगतिः, उभयोरेकदेशस्थत्वेन परत्वादित्यस्यासंगत्यापत्तेः, स्पष्टं चेदमिको गुणेत्यत्र कैयट इति वाच्यम् ? विप्रतिषेधसूत्रे ऽष्टाध्यायीपाठकृतपरत्वस्याश्रयणेनादोषात् । नहि कार्यकालपक्ष इत्येतावता तदपैति ? पक्षद्वयेपि प्रदेशेषु स्वबुद्धिजननेनाविशेषात् । नहि तत्पक्षेप्यचेतनस्य शास्त्रस्य स्वदेशं विहाय तद्देशगमनं संभवति । नाप्यस्मदादिबुद्धिजननेन स्वदेशत्यागो भवति । अत एव भाष्ये एकदेशस्थस्यैव सर्वशास्त्राभिज्वालकत्वमुक्तम् । अत एव तस्मिन्निति सूत्रे कैयटः सूत्रपाठापेक्षया परत्वस्य व्यवस्थापकत्वमिति । इकोगुणेति सूत्रस्थकैयटस्तु चिन्त्य एव । अन्यथा सर्वशास्त्राणां प्रयोगार्थत्वेन प्रयोगरूपैकदेशस्थत्वेन क्वापि परत्वं न स्यात् । किंच क्ङितिचेतिसूत्रस्थकैयटरीत्या विधिसूत्राणां यथोद्देशपक्षे परिभाषादेशे संनिधानेन तेषां परत्वं व्याहन्येत । एवं च वृक्षेभ्य इत्यत्र सुपि चेत्यतः परत्वाद् बहुवचने झल्येदित्येत्त्वमित्याद्युच्छिद्येतेत्यलम् ॥ ३ ॥

---

रस्मरणेनोपकारोऽपि त्वनुभवेनैव । तथा च परिभाषाविषये पक्षद्वयेऽपि पदैकवाक्यतयैव स्वपदार्पणमेव न तु प्रदेशे स्वस्य गमनं जडत्वादिति फलति । संज्ञाविषये तु यथासम्भवमेकवाक्यताद्वयम् प्रदेशगमनञ्च, विनिगमकत्वात् द्वयोर्म्मतेऽपि पक्षद्वयमपेक्षोपेक्षाबुद्धिकृतमेवेति ।

अलमिति—अलमर्थस्तु यथोद्देशकार्यकालपक्षयोर्निरुक्तमूलकत्वस्वीकारे-

---

व्यम् । तद्वन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वम् , तदभाववन्निष्ठविशेष्यतानिरूपिततन्निष्ठप्रकारताशालिज्ञानत्वन्तयोः क्रमशो लक्षणम् ।

तत्रापि प्रमात्वं द्विविधम् सर्वांशे प्रमात्वम् आंशिकप्रमात्वञ्च । तत्र विशेष्यताविशिष्टप्रकारताशालिज्ञानत्वमांशिकप्रमात्वम् वै० स्वाश्रयनिष्ठाधिकरणतानिरूपितनिरूपकतावत्त्वस्वनिरूपितत्वोभयसम्बन्धेन । निरूपकतावत्त्वञ्च स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वसमानाधिकरणत्वस्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्वैतच्चतुष्टयसम्बन्धेन । स्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्वसम्बन्धेन ।

सर्वांशे प्रमात्वञ्चानुगतम् विशेष्यताविशिष्टप्रकारतानिरूपकज्ञानत्वम् । वै० स्वनिरूपितत्व स्वाधिकरणनिष्ठाधिकरणतानिरूपितनिरूपकतावदन्यत्वोभयसम्बन्धेन । निरूपकत्ववत्ता च निरुक्तप्रसिद्धचतुष्टयसम्बन्धेन । समन्वयस्त्वयमूह्यः ।

ऽर्थाऽनुरोधेन विधिशास्त्रे संज्ञाशास्त्रे शास्त्रान्तरे च तदर्थसंघटनयोग्यता । तथा च संज्ञापरिभाषामात्रविषयिण्याविमे परिभाषे इति निर्णेतुन्नैव शक्नुयात् । किञ्च यथोद्देशमित्येनयोः परिभाषयोः परिभाषात्वलक्षणमपि वस्तुतो न संघटतेऽत एव वाक्यसँस्कारपदसँस्कारपक्षादीनाम्परिभाषात्वेन व्यवहारोऽपि शिष्टशिक्षानुकूलितग्रन्थे नैवास्ति । तत्र तत्र यथोद्देशमित्युक्तिस्तु वस्तुस्वरूपपरिकीर्त्तनपरैवैनयोः प्रकारयोरेव तत्र सम्भवात् ।

किञ्चैनयोः परिभाषयोः फलमपि नैवास्ति, तथाहि परिभाषाणां संज्ञानाञ्चोच्चारणाधिकरणप्रदेश एव परत्वादिनिर्णायकः । परिभाषा द्विविधा शास्त्रत्वसम्पादिका शास्त्रत्वावच्छिन्नोद्देश्यिका च । शास्त्रत्वसम्पादकतस्मिन्निती-त्यादिपरिभाषाणाम्पक्षद्वयेऽपि त्रिपाद्याम्प्रवृत्तिर्निराबाधैव । पूर्वत्राऽसिद्धमिति शास्त्रे शास्त्राऽसिद्धत्वपक्ष एव सार्वजनीनः । शास्त्रत्वञ्च अनाहार्य्याऽप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वन्तच्च तस्मिन्निती-त्यादिपरिभाषाप्रवृत्तिम्विना नैव सिद्ध्यति । तथा च न तत्परिभाषादृष्ट्या त्रिपादीस्थशास्त्राणामसिद्धत्वसम्भावनाऽपि । शास्त्रत्वेन रूपेणाऽसिद्धत्वविधानादेव "रोरी"त्यादावुत्वादिघटितनिर्देशस्सङ्गच्छते । असिद्धम्बहिरङ्गमन्तरङ्गे इत्यादिपरिभाषास्तु त्रिपाद्यान्नैव प्रवर्त्तन्ते, पूर्वत्रेत्यनेनाऽसिद्धत्वात् । तत्प्रवृत्तेः प्रागेव पूर्वोक्तशास्त्रत्वस्यासिद्धत्वात् । किञ्च यथोद्देशपक्षस्य आगच्छतमग्नी ३ इत्यत्र प्रगृह्यत्वसिद्धिरणोऽप्रगृह्यस्येत्यनुनासिकाभावश्च नैव फलम् "विरामोऽवसानमि"ति शास्त्रवैयर्थ्यापत्त्या संस्कारकशास्त्रदृष्ट्या संस्कार्य्यशास्त्रस्याऽसिद्धत्वन्न भवतीति कल्पनेन प्रगृह्यसंज्ञाशास्त्रदृष्ट्या प्लुतस्याऽसिद्धत्वात्स्वसँस्कार्यानुनासिकविधेश्च सिद्धत्वादग्नी ३ इत्यादावनुनासिकत्वाऽभावस्सिद्धः । विप्रतिषेधे पूर्वत्राऽसिद्धमित्यादिषु पूर्वत्वपरत्वव्यवहारस्तु शुद्धाष्टाध्यायीपाठकृत एवेति न काऽपि लक्ष्याऽसिद्धिदोषः ।

नच अमू इत्यत्र मुत्वस्याऽसिद्धत्वेना "दसो माद्दि"स्येतद्दृष्ट्याऽनुनासिकोऽणोऽप्रगृह्यस्येत्यनेन दुर्वार एवेति वाच्यम् ? "अदसो माद्दि"तिसूत्रारम्भसामर्थ्येन मुत्वस्याऽसिद्धत्वाऽभावपरिकल्पनादापत्त्यभावात् । एवञ्च पदैकवाक्यतावाक्यैकवाक्यतेत्यादिप्राचीननवीनसम्बन्धिविवेको विस्पष्टतया प्रपञ्चप्राय एवेति विचारयन्तु धीधनाः ।

अत्र सरयूपारीणशङ्काः, कथञ्चिदेनयोः परिभाषयोस्स्वीकारेऽपि कार्यकालपक्षेऽप्यसिद्धम्बहिरङ्गमन्तरङ्गे इत्यादिपरिभाषास्तु त्रिपाद्याम्प्रवर्त्तन्त एवात्र शेखरकारप्रयासो हि कृतभूरिपरिश्रम इति प्रतिज्ञाभङ्ग इवाभाति । तथाहि दध्यत्र मध्वत्रेत्यादौ त्रिपादीस्थेऽन्तरङ्गे संयोगान्तलोपे भाष्ये वार्त्तिके कैयटे चान्तरङ्गपरिभाषाया बहुशस्संचारितत्वात् । किञ्च "खरवसानयो"रिति सूत्रे

वार्त्तिककृता भूयस्संचारितत्वेन तत्र त्रिपाद्यामन्तरङ्गपरिभाषायाः कार्यकालेऽपि प्रवृत्तौ बाधकाऽभावाच्च । नच विसर्जनीयसूत्रभाष्येऽयुक्तोऽयम्परिहारो बहिरङ्गलक्षणत्वादित्युपक्रम्य यथा ह्यन्तरङ्गपरिभाषया पूर्वस्याऽसिद्धत्वमुच्यते एवम्पूर्वत्राऽसिद्धमितिपरिभाषया परस्यान्तरङ्गस्याऽपि असिद्धत्वं वक्तुं शक्यत एवेति विशिष्टो हेतुरुक्तः कथं ग्रन्थाऽसङ्गतिरिति वाच्यम् ? चोद्यान्तरमेतद्भाष्यमिति कैयटेन कृतसमाधानात् । वचनेनैव तत्र तत्र समाधाने गौरवात् । प्रत्यक्षसिद्धस्याऽप्यानुमानिकयाऽन्तरङ्गपरिभाषया बाधोऽपि सयुक्तिक एव, तस्मादित्युत्तरस्य कर्णोष्वनव्ययस्येति महामुनिपाणिनिप्रयोगात् । तथाच कार्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिर्युक्ततरैव । अत्र विषये सूक्ष्मविवेकवृद्धौ तु यावता विनाऽनुपपत्तिस्तावत्सर्वं ज्ञाप्यत इति "अजाद्यतष्टाबि"तिभाष्यप्रामाण्येन "तस्मादित्युत्तरस्य अतः कृकमिकंसकुम्भपात्रकुशाकर्णोष्वनव्ययस्ये"तिसूत्रनिर्देशा एवान्तरङ्गपरिभाषामन्तरङ्गपरिभाषायास्त्रिपाद्याम्प्रवृत्तिञ्च ज्ञापयन्तीति ।

किंच लक्ष्यधर्मिकसाधुत्वप्रकारकबोधोपयोगिबोधजनकत्वेनैव संज्ञानाम्परिभाषाणाञ्चावतारः । एवञ्च संज्ञाशास्त्राणाम्परिभाषाणाञ्च प्रवृत्त्या लक्ष्यासिद्धिर्यत्र तत्र प्रवर्त्तते यत्र न लक्ष्यासिद्धिस्तत्र न प्रवर्त्तते इत्येवम्प्रबन्धेन संज्ञापरिभाषयोः प्रवृत्तिनिश्चयसम्भवे निवृत्तिनिश्चयसम्भवे चालम्परिभाषाद्वयस्वीकारेण । किंच ढ्लोपसूत्रे ढग्रहणेन अजघा इति भाष्योदाहरणेन च "पूर्वत्राऽसिद्धमि"तिशास्त्रस्याऽनित्य(१)त्वकल्पनेनेष्टस्थलेऽसिद्धत्वम् सिद्धत्वञ्च लक्ष्यानुरोधात्परिकल्पनीये ।

अथ पुनरपि केषांचिन्महानुभावानां मूलखण्डनप्रकाराः । परिभाषाविषये तस्मिन्नित्यादिवाक्यार्थबोधे सप्तमीनिर्देशादिः क्वेति समारभ्य कार्यकालपक्षाश्रयणेन समाहितमित्याहुरिति पर्य्यन्तग्रन्थोऽनुपपन्नस्तथाहि इदन्तावद्विचार्य्यम्, सप्तमीनिर्देशः क ? किमस्य प्रयोजनमित्याद्याकाङ्क्षाया यथा भविष्यति किंचिदनेन प्रयोजनमिति सामान्यप्रयोजनकल्पनया शान्तिर्भवति तथैव भविष्यति शास्त्रे क्वचित्सप्तमीनिर्देश इति सामान्यकल्पनेनैव शान्तिस्सम्भवति । एवञ्च गुणभूतपरिभाषादेशे प्रधानभूतसकलतद्विध्युपस्थितिपूर्वकमेकवाक्यत्व-

(१) एवञ्च राम इत्यादौ असिद्धत्वादिशङ्कानिरासाय "नमुने" इत्यादिशास्त्रे "न" इति पृथग् योगस्तदर्थस्तु क्वचित् त्रिपाद्या असिद्धत्वन्नेति व्याख्यानेन निर्वाहोऽपि दुष्ट एव, अनावश्यत्वात् ।

केचित्तु "अधुने" त्यादिवदत्रापि "नमुने" इति सूत्रस्थाने सत्सप्तमीविषयसप्तमीभ्यामसमर्थद्वयादिकरणे गौरवापेक्षया "अमुना" इतिन्यास एव विधेयस्तावतैव मुत्वाद्यसिद्धिपरिहारसम्भवादिति त एव जानन्तु ।

कल्पनं सर्वथैवायुक्ततरम् । लोके राज्ञामुपकारापेक्षायां सत्यामपि सेवको राजदेशम्प्रतिगच्छति नतु राजा सेवकदेशं गच्छति प्रदेशविशेषविषयिण्याकाङ्क्षा तु प्रयोजनविशेषाकांक्षावत् कार्यकालपक्षेणैव शाम्यति ।

किञ्च द्वयोःपक्षयोरेकवाक्यत्वाङ्गीकारे यथोद्देशकार्यकालपक्षयोर्भेदश्च कथमपि न सिद्ध्येत् । नच कार्य्यकालपक्षे त्रिपाद्याम्परिभाषाप्रवृत्तिरित्येव विशेषेण पक्षद्वयविषयभेदसिद्ध्या परिभाषाद्वयावतार इति वाच्यम् ? तत्तद्देशं गच्छतां तत्तद्देशस्थत्वस्वीकारे यथोद्देशपक्षेऽपि त्वत्पक्षे परिभाषादेशं गच्छतां त्रिपादीपठितकार्य्याणां परिभाषादेशस्थत्वेन तत्र पूर्वत्राऽसिद्धमित्यस्याऽप्रवृत्त्या यथोद्देशपक्षेऽपि त्रिपाद्याम्परिभाषाणाम्प्रवृत्तिसम्भवात्तद्देशं गच्छतामपि न तत्तद्देशस्थत्वमिति भवत्कल्पनायां कार्य्यकालपक्षेऽपि त्रिपाद्याम्परिभाषाप्रवृत्तेर्दुरुपपादत्वात् ।

अधिकारो नाम त्रिप्रकार इति भाष्यम्पक्षद्वयसाधारणमिति लिखनमप्यसङ्गतम् । एकदेशस्थ इतिविशेषणदर्शनेन तस्य भाष्यस्य यथोद्देशपक्षाऽभिप्रायकत्ववर्णनात् । किञ्च गुणभूतपरिभाषानुरोधेन प्रधानीभूतविधिशास्त्राणामावृत्तिकल्पने शतदण्डनन्यायसम्पादककैयटग्रन्थविरोधस्तथाहि गर्गाश्शतं दण्डयन्तामर्थिनश्च राजानो हिरण्येन भवन्ति, नच प्रत्येकं दण्डयन्ति इति वृद्धिसूत्रस्थभाष्यग्रन्थः । दण्डपरायां हि चोदनायां शतस्येप्सिततमत्वात्प्राधान्यमित्यभिप्रायोऽर्थिनश्च राजान इत्यनेन वाक्येन गम्यते । अपादानस्थानप्राप्ता गर्गा गुणकर्म नैव गुणभेदेन प्राधानभेद इति नैवावृत्तिश्शतदण्डनस्येति समूहे शतदण्डनं समाप्यते इति हि तत्रत्यकैयटग्रन्थः । क्ङितिचेतिसूत्रीयकैयटग्रन्थः प्रधानविधिसूत्राणाम्परिभाषासन्निधिबोधकोऽपि न्यायविरोधेनोक्तभाष्यकैयटविरोधेन चोपेक्षणीय एव ।

किञ्च गुणदेशसन्निधौ प्रधानानां गुणभेदप्रयुक्तिरप्ययुक्ततरैव । सकृच्छ्रुतस्यैव गुणस्य भेदमन्तरेण युगपदुपस्थितसर्वप्रधानोपकारकत्वसम्भवात् । व्यक्तिपक्षे सर्वव्यक्तीनां युगपदनुपस्थितत्वात्तद्भेदे शास्त्रभेदो नानुपपन्न इत्याद्येकशेषसूत्रभाष्यादिविरोधाच्च ।

संज्ञाशास्त्रस्य तु कार्यकालपक्षे न पृथग्वाक्यार्थबोध इति लेखोऽप्यसङ्गत एव यथोद्देशपक्षेऽपि त्वत्पक्षे क वृद्धिसंज्ञेत्यपेक्षायां त्वत्पक्षे परिभाषासु दर्शितरीत्या सिचि वृद्धिरित्यादिसन्निधानेन तदेकवाक्यताया आवश्यकत्वात् ।

एतेन "अणोऽप्रगृह्यस्य" त्येतदेकवाक्यतापन्न "मदसो मादि" त्येतत्प्रति न मुत्वाद्यसि[illegible] इत्यादिग्रन्थोऽपि निरस्तो वेदितव्यः । त्वत्पक्षेऽदसो मादितिप्रगृह्यसंज्ञैकवाक्यतापन्नमणोऽप्रगृह्यस्येत्येतत्प्रति यथोद्देशपक्षे मुत्वादेरसिद्धत्वस्य दुर्वारत्वात् संज्ञाप्रदेश एव कार्य्यस्य ज्ञातत्वेन कार्यार्थोऽसिद्धत्वस्याऽप्रवृत्ति-

रित्यस्य दुर्वचत्वात् । त्वन्मते कार्यदेशं गच्छन्त्या अपि संज्ञायास्तद्देशस्थ-त्वाऽभावाच्च एकदेशस्थस्सर्वं शास्त्रमभिज्वलयतीतिभाष्योक्तहेतोस्संज्ञा-साधारण्यात् ।

आकडाराधिकारस्थभपदसंज्ञाविषये तु यथोद्देशपक्ष एवेति ग्रन्थोऽप्ययुक्तः, त्रैपादिकशास्त्राणां यथोद्देशपक्षे भादिसंज्ञाम्प्रत्यसिद्धत्वेन तत्रत्यभादिपदशक्तिग्राहकत्वाऽसम्भवात् कार्यकालपक्षस्य तासु अवश्यं स्वीकरणीयत्वात् । संज्ञाकरणस्य च सिद्धकाण्डस्थकार्ये चरितार्थत्वात् । अन्यसंज्ञायामपि तथात्वस्य वक्तुं शक्यतया आकडाराधिकारस्थसंज्ञास्विति विशेषाभिधानस्य सर्वथा निर्युक्तिकत्वात् । तथा च तत्र परस्परम्पूर्वत्वपरत्वाभ्याम्बाध्यबाधकभावे यथोद्देशपक्षः, त्रिपादीस्थकार्यसम्बन्धे तु कार्यकालपक्ष एवेति युक्तम् । कार्यकालपक्षेण यत्समाधानपरकम्परिभाषाविषयकम्भाष्यन्तत्संज्ञानामुपलक्षणम्बोध्यमन्यथा संयोगान्तस्य लोप इतिसूत्रस्य संयोगादिसंज्ञाम्प्रति असिद्धत्वेन तत्रत्यसंयोगादिपदशक्तिग्राहकत्वानुपपत्तेः । संयोगन्तसूत्रस्य बोधकत्वानुपपत्तिस्तु न शङ्क्या ? संयोगान्तशब्दस्य पदशब्दस्य च स्थाने लोपशब्द आदेशो भवतीतिव्याख्यानेनार्थबोधकत्वसौष्ठवात् । ननु स्वंरूपमिति शास्त्रम्प्रति संयोगान्तस्य लोप इत्यस्याऽसिद्धत्वान्नैवमर्थकल्पनेति चेन्न ? स्वंरूपमिति सूत्रन्तु प्रत्याख्यातन्नवा शब्दपूर्वको ह्यर्थे सम्प्रत्ययस्तस्मादर्थनिवृत्तिरिति वा वार्त्तिकोक्तान्तरङ्गन्यायम्प्रति संयोगान्तसूत्रस्याऽसिद्धत्वाऽभावात् । पूर्वशास्त्रम्प्रति परं शास्त्रमसिद्धमित्येवाभिप्रायो नतु न्यायं लौकिकम्प्रति, तस्य शास्त्रत्वाऽभावात् । अत एव पूर्वत्राऽसिद्धमितिसूत्रभाष्ये कार्यकालं संज्ञापरिभाषमिति संज्ञाग्रहणपूर्वकमन्वे प्रतिपादितमिति तत एवावगन्तव्यमिति प्रमाणाच्च संज्ञोपलक्षणत्वम् ।

किञ्च "अदसो मादि"तिसूत्रे मात्प्रगृह्यसंज्ञाया मयावेकादेशप्रतिषेध इति प्रगृह्यसंज्ञाम्प्रति मुत्वादेरसिद्धत्वमाशङ्क्य प्रगृह्यसंज्ञाविधानसामर्थ्यान्नाऽसिद्धत्वम्भवतीति समाधानमाशङ्क्य वचनार्थो हि सिद्धे इति कार्यकालपक्षेऽणोऽप्रगृह्यस्येत्यत्र वचनस्य चारितार्थ्यान्नेदम्वचनकभ्यमिति वार्त्तिके उक्तम् । तत्रैव यथोद्देशपक्षे आश्रयात्सिद्धत्वञ्च भाष्ये कैयटे चोक्तम् । तद्भाष्यकैयटग्रन्थविरोधादपि यथोद्देशपक्षे प्रधानविधिसूत्राणाम्परिभाषासन्निधिबोधकः "क्ङिति चे" तिसूत्रीयकैयटग्रन्थो हेय एव । तथाचैतावता व्याख्यानेनायन्निष्कर्षः, यथोद्देशपक्षे संज्ञाशास्त्राणाम्परिभाषाशास्त्राणाञ्च स्वदेशे स्वार्थमात्रबोधे सति तेनैव कार्यप्रदेशोपकार इति प्राचाम्पक्ष एव सयुक्तिको नतु नवीनपक्ष इतिविचारः पुरो मृग्यः यदि परिभाषाद्वयस्वीकृतिः। निरुक्तरीत्या परिभाषयोर्निष्फलत्वे तु नायम्विचारोपदेश इति दिक् ।

कार्यकालं संज्ञापरिभाषमिति मूलग्रन्थकतिपयखन्डनप्रकाराः ।

कार्यकालपक्षे "ञमो ह्रस्वादि"त्यादौ "तस्मादित्युत्तरस्ये"ति "तस्मिन्निती"ति परिभाषाद्वयोपस्थितौ परत्वादुभयनिर्देशे पञ्चमीनिर्देश इत्यारभ्य क्वापि परत्वन्न स्यात् । यथोद्देशपक्षे परिभाषादेशे सन्निधीयमानानां कार्य्याणाम्पाठापेक्षम्परत्वन्न स्यादित्यन्तग्रन्थोऽसङ्गत इवाभाति । तथाहि, तत्तद्देशं गच्छतां तत्तद्देशस्थत्वाऽभावे निर्णेतव्ये निश्चिते वा संज्ञाशास्त्राणाम्परिभाषाशास्त्राणाञ्च त्रिपाद्याम्प्रवृत्तिसिद्धये कार्यकालपक्षोऽप्याश्रयणीय एवेति "पूर्वत्राऽसिद्धमि"ति सूत्रीयभाष्यग्रन्थविरोधः । कार्यकालपक्षेऽपि संज्ञायाः परिभाषायाश्च सपादसप्ताध्यायीस्थत्वसिद्धिसौकर्य्यात् पूर्वत्राऽसिद्धमितिशास्त्रेण कार्याणामसिद्धत्वेन कार्य्योऽभावे संज्ञापरिभाषस्य तत्र प्रवृत्त्ययोगात् ।

प्रयोगरूपैकदेशस्थत्वात्सर्वशास्त्राणां क्वाऽपि परत्वन्न स्यात् इति ग्रन्थोऽप्यसङ्गतप्राय एव । क्वापि परत्वाभावे विप्रतिषेधसूत्रमेव व्यर्थं स्यात् । व्यर्थं सज्ज्ञापयति प्रयोगातिरिक्तप्रदेशसम्बन्धकृतपरत्वमेव विप्रतिषेधसूत्रप्रवृत्तौ गमकमिति परिकल्पनात् ।

यथोद्दशपक्षे परिभाषादेशं गच्छतां कार्य्याणां परत्वव्यवस्था न स्यादित्याद्यभिप्रायोऽप्यसङ्गत एव । यथोद्देशपक्षे कार्य्याणां परिभाषादेशगमनं न्यायानेकभाष्यकैयटग्रन्थविरोधेन निर्मूलम् । परस्परं परिभाषाणाम्बाध्यबाधकभावे यथोद्देशपक्षः, कार्य्यैक्यवाक्यतायान्तु कार्यकालपक्ष इत्येव व्यवस्था पक्षद्वयस्वीकारे । "इको गुणवृद्धी" इति सूत्रे यथोद्देशपक्षे च परिभाषयोः पौर्वापर्य्यन्नतु कार्यकालतायामिति कैयटस्सुगतः "तस्मिन्नि"ति सूत्रभाष्यस्थ- "ञमो ह्रस्वादि"त्यत्र "तस्मात्" इत्यस्योपस्थानम् । परत्वादित्यस्यार्थस्योपपत्तिश्च सुगता ।

नहि अचेतनस्य शास्त्रस्य स्वदेशम्विहाय तत्तद्देशगमनं सम्भवतीति ग्रन्थोऽप्यत्यन्ताऽसङ्गतः, अत्रायम्विवेकः शास्त्राणान्तद्देशस्थत्वन्नाम तद्देशे आचार्य्यतात्पर्य्यविषयज्ञानविषयत्वमेव नतु तद्देशपठ्यमानत्वन्तद्देशस्थत्वप्रयोजकं, ज्ञापकसिद्धपरिभाषासु तद्देशस्थत्वानुपपत्तेः । अत एवा "दसो मादि"ति सूत्रभाष्ये एवन्तर्हि परैव प्रगृह्यसंज्ञा इति प्रगृह्यसंज्ञायाः परत्वम्व्यवस्थाप्य पूर्वदेशपठितायास्तस्याः परदेशपठनं विना कथम्परत्वमित्यभिप्रायेण कथमिति परिचोद्य कार्यकालं संज्ञापरिभाषं यत्र कार्य्यन्तत्रोपस्थितमिदं भवति "अदसो मादि"ति इति ग्रन्थेन प्रगृह्यसंज्ञायाः परदेशे उपस्थितत्वात् तत्र परदेशपाठम्विनाऽपि परत्वम्भाष्योक्तं सङ्गच्छते । कार्य्याणाम्परिभाषादेशोपस्थितिर्न्यायविरुद्धाऽऽचार्यतात्पर्य्याऽविषयीभूता चेति कार्याणाम्विप्रतिषेधानुपपत्त्यभावात् । अत एवा "चः परस्मिन्नि"ति सूत्रे "इको यणची"ति सकृत्पठित-

इत्संज्ञका अनुबन्धास्तेष्ववयवानवयवत्वसंदेहआह—

अनेकान्ता अनुबन्धा इति ॥ ४ ॥

अनेकान्ता अनवयवा इत्यर्थः । योह्यवयवः स कदाचित्तत्रोपलभ्येत एव, अयं तु न तथा, तदर्थभूते विधेये कदाप्यदर्शनात् । शित्किदित्यादौ समीपेऽवयवत्वारोपेण समासो बोध्यः । वुञ्छणुकठेत्यादौ णित्वप्रयुक्तं कार्यं पूर्णस्यैवेत्यादि तु व्याख्यानतो निर्णेयम् । हलन्त्यमित्यत्रान्त्यशब्दः परसमीपबोधकः ॥ ४ ॥

वस्तुतस्तु—

---

स्यैव सूत्रस्य पट्व्या मृद्व्या इतिलक्ष्यभेदाद् भेदमनुसृत्य पटु ई आ इति स्थिते उकारेकारयोर्युगपद्यणि प्राप्ते लक्ष्यकृतन्तत्र परत्वमाश्रित्य ईकारस्य पूर्वं यणादेश इति "परश्चासौ व्यवस्थया"इति वार्त्तिकम् "व्यवस्थया चासौ पर" इति तद्भाष्यञ्च सुगतम् । अन्तरङ्गपरिभाषीयसमकालप्राप्तिकबहिरङ्गासिद्धत्वविचारावसरे क आ ई शाः केशाः पूर्वम्पूर्वमन्तरङ्गम्परम्परम्बहिरङ्गमित्यादि ।

इत्संज्ञका अनुबन्धा इति—इत्संज्ञकत्वमनुबन्धत्वमिति प्राचीनलक्षणन्तदनुवादोऽयमित्संज्ञका इति।सङ्गतिः षोढा"सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा। निर्वाहकैककार्य्यक्ये षोढा सङ्गतिरिष्यते" तत्र स्मृतिविषयत्वे सत्युपेक्षानर्हत्वरूपप्रसङ्गसङ्गत्या यथोद्देशं संज्ञापरिभाषमित्यत्र संज्ञानिरूपणस्य प्रकरणप्राप्तत्वादित्संज्ञोत्तरम्प्रत्याहार इतिभाष्याच्चेत्संज्ञायास्सर्वशास्त्रोपकारकत्वाच्च चतुर्दशसूत्र्यनुसारत्वेन प्राधान्याच्च तद्विषयकविशेषपरिभाषाम्प्रवक्तुमुपक्रमते इत्संज्ञका(१) अनुबन्धा इति । अत्रेत्संज्ञेत्युपलक्षणन्तेनेत्संज्ञायोग्यत्वम-

---

(१) इत्संज्ञका अनुबन्धा इति—अनूपसर्गो बन्धधातुःक्र्यादिस्थस्तस्मात्कर्मणि घञ् अनूपसर्गःप्राधान्यार्थकः बध्नातिरुच्चारणार्थकः । पाणिन्याद्याचार्य्यकर्तृकाऽप्रधानीभूतोच्चारणाविषया इत्संज्ञका इति भावः । अप्राधान्यञ्च लक्ष्यसमवायातिरिक्तकार्य्यसमर्पकत्वम् । अनुबन्धत्वञ्च पाणिन्याद्याचार्य्यकर्तृकलक्ष्यसमवायातिरिक्तकार्यसमर्पकोच्चारणविषयत्वम् ।

नन्वेवमपि"ख्यत्या"दित्यादावुच्चार्य्यमाणागन्तुकाकारादिष्वतिप्रशक्तिरितिचेन्न? अनुबन्धशब्दस्य योगरूढत्वाश्रयणात् । नच रूढिरेवास्त्विति वाच्यम् ? "जहत्स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी"तिसिद्धान्तात् । नन्वेवम् विडम्बनापेक्षया ख्यत्यादित्यादावुच्चारणार्थकेषु दोषवारणाय इत्संज्ञाप्रयुक्तस्वनिवृत्तिव्यतिरिक्तलक्ष्यगतकार्य्यसमर्पकत्वमेवानुबन्धत्वमितिचेन्न ? प्रत्याहारेऽनुबन्धानामितिवर्णसमाम्नायिकेषु इत्संज्ञकेषु भाष्याभिमतानुबन्धत्वव्यवहारभङ्गापत्तेः । प्रत्याहारमात्रोपयोगित्वेन लक्ष्यगतकार्याभावात् । तथाच विधेयघटकोच्चारणार्थकवर्णानां"दिव औदि"त्यादितकारादीनामप्यनु-

नुबन्धत्वमिति नवीनलक्षणमप्यनुकूलतया सङ्गतम् । अत एव "दोषोत्पादेऽनु-बन्धस्स्यात्प्रकृत्यादिषु नश्वरे" इति कोशः। प्रकृत्यादिषु प्रकृतिप्रत्ययागमादेशेषु इक् यण् सुडादिषु यन्नश्वरमित्संज्ञालोपाभ्यामदर्शनशीलमक्षरन्तत्रार्थेऽनुबन्धः? दोषोत्पादनं दोषोत्पादस्तस्मिन् सङ्गच्छते। नचोद्देश्यत्र(१)वचनम्पूर्वमिति न्याये-नानुबन्धा इति विधियमाणपदस्य पूर्वमेव प्रयोग उचित इति वाच्यम् ?पूर्वसंग-तिसूचनाय तथोपादानस्यावश्यकत्वात् । इत्संज्ञाइत्यस्येत्संज्ञाप्रयुक्तलोपान्यभावा-ऽभावकार्यभाज इति यथार्थोऽत एवोच्चारणार्थेषु न क्षतिः । एवमेव वाच्ये त-थोक्तिः प्राचाम्मतस्याऽपि संग्रहाय । नवीनमते ह्युच्चारणार्थानां वर्णानामपी-त्संज्ञालोपाभ्यामेव निवृत्तिरिति "दिव उत्"सूत्रे शेखरे ।

किञ्च पक्षतावच्छेदकावच्छेदे(२)नानुमितित्वावच्छिन्नम्प्रति पक्षतावच्छे-दकधर्मनिश्चयःकारणमिति नियमानुरोधेन पक्षोऽनुबन्धः पक्षतावच्छेदकमनुब-न्धत्वन्तल्लक्षणम्प्रदर्शयन्नप्याह इ(३)त्संज्ञका इति । इति पराक्षालेख-प्रकारः ।

नचेत्संज्ञका अनुबन्धा इति वाक्यस्य समानविभक्तिकत्वेन भेदान्वयबोधो-न स्यात्, शब्दभेदेऽपि प्रवृत्तिनिमित्ताभेदाद् घटः कलशइतिवदभेदान्वयबोधो-

---

बन्धत्वमिष्टमिति सिद्धः पन्थाः ।

(१) "उद्देश्यवचनम्पूर्वं विधेयवचनन्ततः" यच्छब्दयोगःप्राथम्यं स्यादुद्देश्य-स्य लक्षणम् । यच्छब्दयोगः पाश्चात्यं स्याद्विधेयस्य लक्षणम्"इत्यभियुक्तया शङ्को-त्थितिरिति ।

(२) अनुमितिश्च द्विधा भवति पक्षतावच्छेदकावच्छेदेन साध्योद्देश्यिका पक्ष-तावच्छेदकसामानाधिकरण्येन साध्योद्देश्यिका च । तथाहि पर्वतो वह्निमान् धूमात् इत्यत्र पक्षः पर्वतः पक्षता पर्वतनिष्ठा पक्षतावच्छेदकम्पर्वतत्वन्तदवच्छेदेनार्थात् पर्वतमात्रे वह्नेःसाध्यत्वे प्रथमा। पर्वतविशेषे साध्यसाधने द्वितीया । उभयोः कार्यकारणभावस्तु पक्षतावच्छेदकावच्छेदेनानुमितित्वावच्छिन्नम्प्रति पक्षतावच्छेदकसामानाधिकरण्येनानु-मितित्वावच्छिन्नम्प्रति च पक्षतावच्छेदकधर्मनिश्चयः कारणमेवंविधः। उभयोरन्तरन्त्वि-यदेव यत् पक्षतावच्छेदकावच्छेदेन बुद्धौ (अनुमितौ) पक्षतावच्छेदकव्यापकत्वं संसर्गांशे भासते, सामानाधिकरण्येन बुद्धौ तु शुद्धसम्बन्धावच्छिन्नत्वमेवेति । अत एव असति प्रतिबन्धक उद्देश्यतावच्छेदकावच्छेदेन बुद्धौ उद्देश्यतावच्छेदकव्यापकत्वं संस-र्गांशे भासत इति नियमस्सङ्गच्छते ।

नियमश्चायं कार्यकारणभावीयः विशिष्टबुद्धित्वावच्छिन्नम्प्रति विशेषणज्ञानङ्कारण-मितितार्किकाभिमतिमूलक एवेति ।

(३) इत्संज्ञका इत्युपलक्षणन्तेनेत्संज्ञायोग्यत्वमनुबन्धत्वमिति केषांचिन्मतं सिध्यति।

ऽपि न स्यात्तथा च भेदा(१)ऽभेदोभयविषयकबोधाऽभावेन कथं ग्रन्थसङ्गतिरितिवाच्यम् ? अनुबन्धपदस्यार्थपरत्वासम्भवेन शब्दपरत्वाश्रयणेन प्रवृत्तिनिमित्तभेदात् अभेदान्वयबोधे क्षतिविरहात् । अनुबध्यन्ते परस्मिन् सम्बध्यन्त इत्यनुबन्धाः कर्मणि घञ् । नन्वनुबन्धेऽवयवाऽनवयवत्वस्य प्रत्यक्षसिसिद्धत्वेन सिद्धेश्च पक्षताज्ञानप्रतिबन्धकत्वसिद्धान्तेन मूले सन्देह इति कथनमसङ्गतमिति चेन्न ? बोधकेतिपदाध्याहारेण अनुबन्धा बोधकावयवास्तदनवयवा वेति सन्देहसम्भवात् । नच निरूपकभेदेनावयवानवयवत्वयोरुभयोरप्येकत्र स्थितिसम्भवेन विरोधाऽभावान्न सन्देहस्सम्भवतीति वाच्यम् ? सन्देहत्वावच्छिन्नम्प्रति साधारणधर्म्मज्ञानं कारणमेवञ्च कर्मघञन्तानुबन्धशब्देन पूर्वोक्तव्युत्पत्त्या परस्मिन् सम्बन्धसामान्येन वृत्तिमत्त्वप्रतीत्या संयोगसमवायोभयसाधारणसम्बन्धस्यावयवानवयवत्वसाधकत्वप्रतीते"र्णौङो व्यतीहारे" "आटश्चे"त्यादौ प्रत्यक्षदृष्टिगोचरत्वेन संशयसम्भवात् । प्राचीनतार्किकमते साध्यसंदेहस्यैव पक्षतापदार्थत्वेन पक्षताया अप्यनुमितौ कारणत्वेन तान्दर्शयति अवयवानवयवत्वसन्देह इति ।

नचावयवत्वसन्देह इत्युक्तौ सन्देहशब्दादेव भावाऽभावयोरुभयोरुपपत्तिसम्भवादेकतरोपादानमेवोचितमिति वाच्यम् ? पक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृ(२)तसाध्यतावच्छेदका-

---

(१) भेदान्वयबुद्धित्वावच्छिन्नम्प्रति विभिन्नविभक्तिकत्वादिकं कारणम् । अभेदसम्बन्धावच्छिन्नयत्किञ्चिन्निष्ठविषयतानिरूपितयत्किञ्चिन्निष्ठविषयताशालिशाब्दबुद्धित्वावच्छिन्नम्प्रति विरूपोपस्थित्यादिकङ्कारणमिति समाशंक्य वाच्यत्वे सति वाच्यवृत्तित्वे सति वाच्योपस्थितीयप्रकारताश्रयत्वरूपप्रवृत्तिनिमित्तभेदं सम्पाद्य समाधीयतेक्षतिविरहादित्यन्तेन ।

(२) सन्दिग्धसाध्यधर्मत्वमिति चिन्तामणिग्रन्थस्य अनेकदोषदानपुरस्सरं प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यतानिरूपितप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नप्रकारताशालिनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतावत्वे सति तादृशनिश्चयत्वावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतविषयिताशून्यज्ञानत्वन्तादृशपक्षतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितसाध्यतावच्छेदकसम्बन्धावच्छिन्नसाध्यतावच्छेदकावच्छिन्नविधेयताशाल्यनुमितीयपक्षत्वमिति सिद्धान्तितम् । अत्रैवं सिद्धान्तायमानेऽपि वह्निव्याप्यसाध्यकस्थले वह्निमान्नवेति संशये पक्षताव्यावृत्तये प्राग्भिस्तादृशनिश्चयत्वावच्छिन्नप्रतिबन्धकतानिरूपितप्रतिबध्यतायां प्रकृतसाध्याभावत्वावच्छिन्नप्रकारित्वप्रकृतसाध्यविशेष्यकत्वान्यतरावच्छिन्नत्वं निवेशितम्, तथाच वह्नौ पक्षे वह्नेस्साध्यतायां वह्निर्वह्निमान्नवेति संशयसंग्रहोऽप्यकारि । तथापि ह्रदादौ वह्न्यभावस्यानुमाने ह्रदो वह्निमान्नवेति संशयस्य पक्षत्वन्न स्याद्

वच्छिन्नप्रकारताकानुमितित्वावच्छिन्नम्प्रति प्रकृतपक्षतावच्छेदकावच्छिन्नविशेष्यताकप्रकृतसाध्यतावच्छेदकसम्बन्धावच्छिन्नप्रकृतसाध्यतावच्छेदकावच्छिन्नप्रतियोगिताकाऽभावत्वावच्छिन्नप्रकारताकसंशयस्य प्राचीनतार्किकमते पक्षतात्वेन अनवयवत्वसन्देह इत्युक्तौ अवयवत्वाऽभावाऽभाववन्तोऽवयवत्वाभाववन्तोवेति संशये जातेऽभावाऽभावस्य प्रतियोगिस्वरूपत्वेन अवयवत्वसाध्यकानुमितौ पक्षतात्वन्नैव स्यात् ? साध्यतावच्छेदकावच्छिन्नप्रकारताकत्वाऽभावात्। अनयैव मुद्रया अवयवत्ववान् अवयवत्वाऽभावाऽभावाभाववान् वेतिसंशयेऽनवयवत्वानुमितौ पक्षतात्वन्न स्यात् ? साध्यतावच्छेदकावच्छिन्नाभावप्रकारकत्वाऽभावात्। तथाच अवयवत्ववान् अवयवत्वाऽभाववान् वेति द्विविधसंशये द्विविधानुमितावुभयोपादानेन पक्षतात्वसिद्धेः। एवञ्च परिभाषाद्वयसाधारण्येनावतरणप्रदर्शनायोभयोरुपादानसाफल्यात्। अत एव द्वितीयपरिभाषारम्भे वस्तुतस्तु एकान्ता इत्येव न्याय्यमित्येवोक्तन्तु पक्षतादिकम्।

नचान्यतरेणान्यतरस्याक्षेपः क्रियतान्तेनैवोभयविषयकसन्देहे परिभाषाद्वयावतरणसङ्गतिरिति वाच्यम् ? वह्निव्याप्यसाध्यकानुमितौ वह्निमान्नवेत्याकारकसंशयस्य पक्षधर्मिकवह्निव्याप्यवत्त्वरूपसाध्यनिर्णयनिवर्त्यत्वात्तादृशनिश्चयाऽप्रतिबन्धकत्वाच्च पक्षतात्वव्यावृत्तये यद्धर्मिकयत्सम्बन्धावच्छिन्नयत्प्रकारकनिश्चयत्वेन साध्याभावत्वावच्छिन्नप्रकारित्वसाध्यविशेष्यकत्वान्यतरावच्छिन्नयत्संशयम्प्रति निवर्त्तकत्वं तस्य सन्देहस्य तत्पक्षकतद्विधेयकानुमितौ पक्षतात्वं स्वीक्रियते। अत एव जलहृदादौ वह्न्यभावस्यानुमाने वह्निमान्नवेत्याकारकसंशयस्य पक्षतात्वन्न भवति। हृदनिष्ठसाध्यवत्तानिश्चयप्रतिबध्यताया वह्निमत्ताविषयकत्वेनैवावच्छेद्यतया साध्याऽभावत्वावच्छिन्नप्रकारित्वाऽनवच्छेद्यत्वात्। तथाच परिभाषाद्वयावतरणतात्पर्य्येणावयवानवयवत्वोपादानस्य सयुक्तिकत्वात्। स्पष्टार्थञ्चोभयोपादानमिति समाधानान्तराच्च। अस्मिन् संशये प्रमाणञ्च अनुबन्धविशिष्टसमुदायाद्विभक्तिदर्शनबोध्ये लक्ष्येऽनुबन्धाऽदर्शनञ्च।

नच "प्रतिज्ञा(१)हेतूदाहरणोपनयनिगमनान्यवयवा" इति न्यायसूत्रानु-

---

इति मा विभाव्यम् ? इष्टत्वात्। साध्यसाधनभेदेन पक्षतालक्षणस्याप्यनेकत्वात् व्याप्तेरिव।

जगदीशतर्कालङ्कारैस्तु वह्निव्याप्यवति वह्नेःसाध्यतास्थले वह्निव्याप्यवान् वह्निमान्न वेतिसंशयस्य आहार्यत्वेनाप्रतिबध्यत्वादीदृशप्रागभिमतप्रतिबध्यप्रतिबन्धकभावघटितलक्षणस्याप्रसिद्धेर्दूषितोऽयं संशयपक्षतावाद इति ध्येयम्।

(१) उचितानुपूर्वीकप्रतिज्ञादिपञ्चकसमुदायत्वरूपन्यायत्वप्रदर्शनाय "प्रतिज्ञाहेतु" इति गौतमसूत्रमवतारयन्ति पूज्यपादाः। अनुबन्धा बोधकानवयवाः बोध्य-

क्रमेण पञ्चावयवानान्नोपादानमित्यार्थिकप्रणालीविरुद्धमेतदिति कथमनुमित्याकारेण ग्रन्थलगनमिति वाच्यम् ? अनुबन्धा बोधकानवयवा बोधकावयवत्वेनोपलब्धिविषयत्वाभावात् । केषाञ्चिन्मते परार्थानुमाने पञ्चावयवाः, केषाञ्चिन्मते प्रतिज्ञाहेतूदाहरणाख्यास्त्रयोऽवयवाः । केषाञ्चिन्मते उदाहरणोपनयनिगमाख्यास्त्रयोऽवयवा द्वयोरेषु त्रिष्वन्तर्भावो लाघवात् प्रमाणप्रमेयसूत्रवत्, परार्थानुमानेन वक्ति अनेकान्ता इति । एवम्विधाकारे हेतुतावच्छेदकरूपेण हेतोरनुपादानेऽपि हेतुं साधयन्नाह विधेये इत्यादीति । एवञ्च अनुबन्धा बोधकानवयवाः बोध्यलक्ष्यावयवत्वेनोपलब्धिविषयत्वाऽभावात् । अनेकान्ता अनुबन्धा इतिवाक्ये इति पदेनेत्यस्येतिशेषः। अत्रत्यन्तस्त्वम्व्यतिरेकमुखेनोपपादयति यो ह्यवयव इति । शाखादिरित्यर्थः । छेदने तत्राऽनुपलम्भादाह कदाचिदिति । छेदनात्पूर्वकाले इत्यभिप्रायः । एवशब्देनानुपलम्भव्यवच्छेदः । अयन्तुनेति अनुबन्धत्वावच्छिन्नस्तु तथेति नावयव इति तत्त्वम् । तदर्थेति औपदेशिकबोधकबोध्ये लौकिकप्रयोगस्थ इत्यर्थः ।

ननु प्राप्तौ सत्यान्निषेधः अभावज्ञाने प्रतियोगिज्ञानं कारणमेवञ्च पूर्वमेकान्ता इति परिभाषान्निरूप्यानेकान्ता अनुबन्धा इत्यस्योल्लेख उचित इति चेन्न ? विवादास्पदवचनन्निरूप्य भाष्यप्रामाण्येन सिद्धान्तपरिभाषाया अन्ते समुल्लेखे शास्त्रीयव्यवहारविरोधाऽभावात् । इतिमूलावतरणपुरस्सरशास्त्रार्थप्रकारः ।

नन्वनवयवत्वे शित्किदित्यादौ समासो न स्यात् श् इत् यस्येति विग्रहाभिधानादवयवत्वे तु षष्ठ्यर्थोऽवयवावयविभाव इति समासो निश्शङ्कइत्याशयेनाह शित्किदित्यादाविति । ग्रामकूपो गङ्गातीरं गृहसमुदायस्य ग्रामपदार्थत्वेऽपि ग्रामकूपोऽयमित्यादौ यथा सामीप्यव्यवहारो दृष्टचरस्तथेहाऽपि कल्पना

लक्ष्यावयवत्वेनोपलब्धिविषयत्वाभावात इत्यनुमाने पक्षसाध्यहेतवस्सन्ति । साध्यनिर्देशःप्रतिज्ञेति गौतमानुरोधेन न्यायान्तर्गतत्वे सति प्रकृतपक्षतावच्छेदकावच्छिन्नपक्षकसाध्यतावच्छेदकावच्छिन्नसाध्यविषयताविलक्षणविषयताकबोधाजनकत्वे सति प्रकृतपक्षे प्रकृतसाध्यबोधजनकत्वम्प्रतिज्ञात्वम् ।

हेतुश्च द्विविधो भवति अन्वयव्याप्तिको व्यतिरेकव्याप्तिकश्च"उदाहरणसाधर्म्यात् साध्यसाधनं हेतुःतथा वैधर्म्यात्"इति सूत्रोक्तरीत्या ज्ञातान्वयव्याप्तिहेतुबोधकत्वं अज्ञातव्यतिरेकव्याप्तिकहेतुबोधकत्वञ्चेति क्रमशो लक्षणम् ।

साध्यसमानाधिकरणात्यन्ताभावाप्रतियोगित्वम्, साध्याभावव्यापकीभूताभावप्रतियोगित्वमिति क्रमशोऽन्वयव्याप्तिव्यतिरेकव्याप्त्योर्लक्षणम् ।

एवम्"साध्यसाधर्म्यात् तद्धर्मभावी दृष्टान्त उदाहरणम्" इति सूत्रानुसारिसाधनवत्ताप्रयुक्तसाध्यवत्तानुभावकत्वमुदाहरणत्वम्, साध्यसाधनव्यतिरेकव्याप्त्युपदर्शकत्वञ्चेति ।

सम्भवतीति । सामीप्यञ्च स्वोच्चारणाऽव्यवहितोच्चारणविषयत्वमिति तत्त्वम् । ननु यदि समीपेऽवयवत्वारोपेण बहुव्रीहिस्तर्हि विनिगमनाविरहेण युक्तेस्तौल्याद् "वुञ्छणि"ति सूत्रनिर्दिष्टकप्रत्ययस्याऽपि णित्त्वाऽपत्तिरित्यत आह वुञ्छणेति। व्याख्यानत इति णकारस्य ककारसामीप्यं यद्यप्यस्ति तथापि ऋश्यक इत्यादौ णित्वप्रयुक्तकार्याऽदर्शनमूलकवृद्धव्यवहारमूलकव्याख्यानेन कप्रत्ययसमीपेऽपि णकारे न ककारावयवत्वारोपोऽपि तु ककारावयवत्वारोप एवेति निर्णयप्रकारः।

किञ्च प्रमाणे द्वयसजितिसूत्रे द्वयसचश्चकारस्य पूर्वपरसमीपत्वेनोभयनिरूपितावयवत्वारोपेण द्वयोः प्रत्यययोश्चित्त्वेन "चित"इत्यनेन चित्स्वरसिद्धौ दघ्नचश्चकारो व्यर्थस्सन् ज्ञापयति । स्वविशिष्टेऽनुबन्धे स्वाऽवयवत्वारोप इति । वैशिष्ट्यञ्च स्वाऽघटितपदाऽघटकत्वस्वसमीपत्वोभयसम्बन्धेनेति व्याख्यानम् । सम्बन्धे घटकत्वन्तु व्यपदेशिवद्भावाद्यनतिदिष्टं गृह्यते तेन "घ्वसोरेद्धावभ्यासलोपश्चे"तिसूत्रे लोपश्चेत्यत्र सर्वादेशत्वार्थं शकारः प्रश्लिष्टस्तच्च पदं भिन्नं लोपाऽघटितं पदं शितीति तद्घटकत्वं व्यपदेशिवद्भावेन । तथा अत्र ओँ अटित इत्यादावपि नैवास्ति दोष एवञ्चेदमेव व्याख्यानतो विशेषप्रतिपत्तिरिति परिभाषया निर्णयमिति ग्रन्थाशयः । ङमुट् सूत्रे ङम् उट् इति पृथक् पदत्वकल्पने अर्थवद्घटकत्वम् ङम् उ ट् इति पदत्रयं प्रकल्प्यावयवत्वं क्रियते । परन्तु प्रथमकल्पे अर्थवत्त्वाभावात् अन्त्येऽतिदिष्टघटकत्वसत्त्वात् पूर्वोक्तः प्रकार एव ।

ननु यत्रान्त्यपदोपादानन्तत्र का वाचोयुक्तिरित्याह हलन्त्यमित्यत्रेति । अस्याम्परिभाषायाम्प्रमाणन्तु "उदीचाम्माङो व्यतीहारे" इति सूत्रनिर्देशोऽन्यथा ङकारस्य मेङ्धातोरवयवत्वे "आदेच उपदेशेऽशिती"त्यस्याऽप्रवृत्त्या सौत्रप्रयोगोऽनुपपन्न एव "अवर्णस्त्वसावनञ" इति विहितत्रादेशस्य सर्वादेशत्वञ्च । लाघवञ्च नानुबन्धकृतमनेजन्तत्वमितिपरिभाषाऽकरणमेव ।

अस्याः परिभाषाया अनुमितिप्रयोजकवाक्यात्मकत्वेन न्यायवासनाविलसितत्वेन च विशेषशास्त्रार्थघटितत्वात्पूर्वं परीक्षालेखप्रकारः प्रदर्श्यते अन्ते च शास्त्रार्थप्रकारो वक्ष्यते ।

अनेकान्ता अनुबन्धा इति—अनुबन्धा अनुबन्धपदवाच्याः । प्राचीनमते साध्यसन्देहस्यैव पक्षतात्वेन तान्दर्शयति अवयवानवयवत्वसन्दे(१ ह

(१) एकधर्मिकविरुद्धकोटिद्वयावगाहिज्ञानं संशय इति मूललक्षणम् । अत एव न्यायदर्शने द्वितीयाध्यायस्य प्रथमाह्निके प्रथमतःसप्तभिस्सूत्रैः "समानानेकधर्माध्यवसायादि"त्यादिभिस्संशयस्य परीक्षणं साधु संगच्छते । अस्योदाहरणन्तु स्थाणुर्वा पुरुषोवेति ।

इति । अनुमितिप्रकारस्तु अनुबन्धा अनेकान्ताः कोऽर्थस्स्वघटितपदाऽघटितविभक्त्यघटितपदघटकयावद्वर्णघटितानुबन्धाऽघटितसमुदायपर्य्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्माश्रयनिष्ठविषयताप्रयोजकानवयवाः । स्वघटितघटकबोध्यतावच्छेदकधर्म्मवत्त्वं स्वघटितघटकबोधकावयवत्वेन निश्चितोत्तरत्वविशिष्टं बोधकावयवत्वेनाऽनिश्चितं यत्तदनुत्तरत्वमित्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाऽभावात् इति हेतुः यन्नैवन्तन्नैवम् यथा सन्सकारः । समन्वयप्रकारस्तु सनित्वं सकारः तद्घटितम्पदं सन्निति तद्घटकबोध्यतावच्छेदकं सत्वन्तस्य स्वघटितघटकबोधकावयवत्वेन निश्चितस्स इति तदुत्तरम्बोधकावयवत्वेन अनिश्चितो नकारः तदनुत्तरत्वस्य च शब्दे सत्त्वान्नोभयाऽभावरूपहेतुसम्बन्धस्तत्र नकारे ह्युत्तरसम्बन्धसत्त्वेऽप्याद्यसम्बन्धाऽभावान्नोभयाऽभावः । अत्रानुबन्धा इत्यने-

---

कोटिद्वयेत्यत्र द्वित्वमुपलक्षणमेकेतरस्य । तथा च बहुकोटिकोऽपि संशयः । प्रकृते स्थाणुर्वा पुरुषोवेत्यत्र स्थाणुत्वस्थाणुत्वाभावपुरुषत्वपुरुषत्वाभावात्मकैकधर्मिककोटिचतुष्टयावच्छिन्नोऽपि सन्देह इति केचित् ।

विरुद्धकोटिद्वयावगाहिज्ञानत्वमात्रस्य लक्षणत्वे ह्रदपर्वतौ बह्नितदभाववन्तौ इतिज्ञानेऽतिव्याप्तिर्भवेत स्यादत एकधर्मिकेति विशेषणम् । एतस्य च एकधर्मितावच्छेदकविशिष्टविशेष्यकत्वावच्छिन्नेत्यर्थः । अत एव महानसं बह्निमत् द्रव्यं बह्न्यभाववदिति ज्ञाने नातिव्याप्तिः । वृक्षः कपिसंयोगवान् कपिसंयोगाभाववांश्चेति समुच्चयेऽतिव्याप्तिवारणाय विरुद्धपदनिवेशः । घटोऽद्रव्यं पृथिवी चेति ज्ञानेऽतिव्याप्तिवारणाय कोटिद्वयापेक्षया फलतो भावाभावप्रकारकत्वनिवेशः ।

नचैवमपि एकधर्मावच्छिन्नविशेष्यकत्वनिवेशे विभिन्नरूपेणकधर्मितावच्छेदकज्ञानस्य संशयत्वापत्तिः । एकधर्मावच्छिन्नविशेष्यतावच्छेदकताकत्वनिवेशे च निरवच्छिन्नविशेष्यतावच्छेदकताकसंशयासंग्रहापत्तिः । विभिन्नरूपेण धर्मितावच्छेदकतावच्छेदकावगाहिज्ञानस्य संशयत्वापत्तिश्चेति वाच्यम् ? स्वीयैककोटिप्रकारतावच्छिन्नप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकीभूतापरकोटिप्रकारताशालिज्ञानत्वं संशयत्वमिति केचित् ।

परे तु तन्निष्ठप्रकारतानिरूपितविशेष्यतावच्छेदकताकविशेष्यतानिरूपिततद्विरुद्धतदभावनिष्ठप्रकारताशालिज्ञानत्वन्तदिति परिष्कृत्य विशेष्यतावच्छेदकत्वादिभेदादसंग्रहादिदोषवारणं कुर्वते । परन्तु विशेष्यतावच्छेदकावच्छेदेनान्यतरकोट्यवगाहित्वविशेष्यतावच्छेदकसामानाधिकरण्येनोभयकोट्यवगाहित्वाभ्यां विरोधावगाहित्वानवगाहित्वाभ्याञ्च संशयसमुच्चययोः पार्थक्यसिद्धौ संशये भावाभावप्रकारतानिरूपितविशेष्यतायाःतदवच्छेदकतयोश्च भेद एवेति स्वीकर्तृणाम्मतेऽसम्भवापत्तेः परिष्कारस्य तादृशस्य दुष्टत्वात् ।

नानुमानेन बोधकानवयवत्वमेव साध्यम् बोध्यबोधकयोरभेदाभिप्रायेण तत्त्व-प्रत्यभिज्ञया चायं मौलिको हेतुरिति त्रिपथगा। अनेकान्ता इति प्रतिज्ञा, तदर्थ-भूते विधेये कदाऽप्यदर्शनादिति हेतुः यो ह्यवयवस्स कदाचित्तत्रोपलभ्यत एवे-त्युदाहरणम् । अथोऽवयवा इति पक्षमनुसृत्य परार्थानुमानेन नागेशप्रयत्न इत्यपि बोध्यम् । ननु सर्वत्रैव परार्थानुमाने पूर्वं प्रतिज्ञावाक्यलेखस्ततो हेतुवा-क्यलेखस्तत उदाहरणवाक्यलेख इति प्रचलितो व्यवहारो मूले तु यो ह्यवयवस्स कदाचित्तत्रोपलभ्यत एवेत्युदाहरणं लिखित्वा तदनन्तरन्तदर्थभूते विधेये कदा-ऽप्यदर्शनादितिहेतुवाक्यलेख इतिकथम्व्यवहारविरुद्धलेख इति चेन्न ? अत्यन्त-प्रसिद्धत्वेन पूर्वं हेत्वनुपादानात् । यत्स्वघटितघटकबोधकानवयवत्वाऽभाववत् तत्स्वघटितघटकबोध्यानवयवत्वाऽभाववत् इत्येवम्व्यतिरेकव्याप्तिरिह संघट नीया । "द्वयसज्दघ्नच्मात्रच" इति समुदाये व्यभिचारवारणाय पदाऽघटित-त्वनिवेशः । "सन्यत" इत्यादौ नकारे स्वघटितं पदं सनीति तद्घटकं बोधक इकारस्तदनवयवत्वस्यैव सत्त्वेन सिद्धसाधनदोषवारणाय व्यपदेशिवद्भावेन तद्-घटकं बोधकं सनीति तदवयवत्वस्यैव सत्त्वेन बाधाऽभाववारणाय पदे विभक्त्य-घटितत्वनिवेशः । "आद्गुण" इतिगुणघटकगकारे व्यभिचारवारणाय श्रावण-प्रत्यक्षविषयतावच्छेदकधर्मनिवेशः । "स्थाम्नोऽकार" इत्यत्र श्रावणप्रत्यक्षवि-षयतावच्छेदकम् अत्वम् तदवच्छिन्नविषयताप्रयोजकोऽकार इतिपदन्तदवयव-त्वस्यैव ककारे सत्त्वेन साध्याऽभावघटितहेतोर्विद्यमानत्वेन ककारे व्यभिचारवार-णाय स्वघटितपदाघटितविभक्त्यघटितपदघटकयावद्वर्णघटितसमुदायपर्य्याप्तत्व-न्धर्मविशेषणम् । सन्शब्दे सन्पदं सत्वावच्छिन्नविषयताप्रयोजकमेव नतु स-न्त्वावच्छिन्नविषयताप्रयोजकमिति तत्र सन्देहसिद्धये अनुबन्धाऽघटितत्व-निवेशः । "स्वंरूप" सूत्रबलेन साध्याऽप्रसिद्धिवारणाय समुदायपर्य्याप्तत्व-निवेशः । विभक्त्यघटितेतिनिवेशम्विहाय प्रत्ययाघटितेति योजने तु "स्थाम्नो-ऽकार" इत्यत्रापि न दोषः । साध्यघटकपदे यदि संज्ञातिरिक्तत्वनिवेशस्तर्हि "आद्गुण" इत्यत्र गुणघटकगकारे न दोषः । मनिन्घटकनकारे भागाऽसि-द्धिवारणाय पर्य्याप्तिनिवेशः । कुग्घटककारकरूपानुबन्धे बोध्यतावच्छेदककत्व-स्यैव सत्त्वेन भागाऽसिद्धिवारणाय उभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽभाव-रूपहेतुप्रकारः । पूर्वोक्तप्रकारेण बोध्यतावच्छेदकादिनिर्णये तु बोध्यपर्याप्तधर्म-वत्त्वसम्बन्धनिवेशो बोध्य इति परीक्षालेखप्रकारः ।

अथ शास्त्रार्थप्रकारः ।

पूर्वं हेतुवाक्याऽप्रदर्शकग्रन्थकारहृदयेऽनुमानद्वयं विद्यते तथा हि अनु(१) बन्धा बोधकाऽनवयवाः बोधकावयवत्वेनोपलब्धिविषयत्वाऽभावात् इत्येकम् ।

(१) अवयवानवयवत्वसन्देह इति मूलेकिञ्चत् एकस्मिन्धर्मिणि विरुद्धना-

अनुबन्धा बोधकावयवत्वेनोपलब्धिविषयत्वाऽभाववन्तः तदर्थभूते विधेये कदाप्यदर्शनादिति द्वितीयम् । विधेये कदापीति हेतुमेव व्यतिरेकव्याप्त्या

---

नाधर्मावगाहिज्ञानस्य (एकधर्मावच्छिन्नविशेष्यतानिरूपितविरुद्धनानाधर्मावच्छिन्नप्रकारताशालिज्ञानस्य) संशयत्वे (सिद्धान्तभूते) अवयवत्वसन्देह इत्येतावदुक्तावपि यद्यपि बोधकावयवत्ववान् तदभाववान् वेति संशयोपपत्तिस्सम्भवति ।। एवमेव अनवयवत्वसन्देहमात्रोपपादनेऽपि अनवयवत्ववान् तदभाववान् वेति संशयोपपत्त्या किमुभयोपादानेनेति प्रश्ने उभयपरिभाषासाधारणावतरणसूचनायेदमिति केचित् । विस्पष्टप्रतिपत्तय इति परे ।

अत्र प्राञ्चः, पर्वतो वह्निमानित्यनुमितौ यथा पर्वतो वह्निमान्नवेति संशयस्य पक्षतात्वमिष्टन्तथैवास्माकम्मते तत्रैव संशये यथा वह्निवह्न्यभावप्रकारकत्वन्तथैव कदाचिद् वह्निमान् वह्न्यभावव्याप्यवान् वा, वह्न्यभाववान् वह्निव्याप्यवान् वेतिरूपवतः संशयस्यापि पक्षतात्वमिष्टम् । समानविषयकत्वेनैव प्रतिबध्यप्रतिबन्धकभावस्याभीष्टत्वात् ।

एवञ्च प्रकारेणामुना यदि मूले अनवयवत्वसन्देह इत्येव उपपाद्यते तदा अनवयवत्वतदभावयोर्यथा सन्देहकोटिप्रविष्टत्वन्तथाऽनवयवत्वव्याप्यवान् तदभाववान् वेति, अनवयवत्वाभावव्याप्यवान् अनवयवत्ववान् वेति संशयस्य एकान्ता अनुबन्धा इति द्वितीयपरिभाषावतरणत्वञ्च स्यात् यतो हि तत्रावयवत्वं साध्यम् तदभावश्च साध्याभाव इति तयोस्तत्तद्रूपेण तादृशसंशये प्रवेशाभावात् ।

एवमेव अवयवत्वसन्देहमात्रोक्तौ अवयवत्ववान् तदभावव्याप्यवान् , अवयवत्वव्याप्यवान् अवयवत्वाभाववान् वेति रूपत्वेऽनेकान्ता इत्यनुमितीयपक्षतात्वसम्पादन एतस्य संशयस्य सामर्थ्याभावात्, यतो हि अनवयवत्वसाध्यकप्रथमानुमितौ यस्संशयो मया प्रादर्शि तादृशस्यात्र एतद्रूपेण प्रवेशाभावात् ।

इदमेव तात्पर्यं भूतिकाराणामन्यतरकोटिकसन्देह इत्यभिधाने । प्राचीनास्तावत्तत्तदभावान्यतरमात्रे पक्षसम्बन्धावगाहिज्ञानोपलब्ध्यापि पक्षतां वहन्ते । पर्वतो वह्न्यभाववान् वह्निव्याप्यवान् वेति संशये च साध्याभावमात्रविषयतामादाय पक्षतात्वं साधयन्ति ।

एतेषाम्मते पक्षताग्रन्थोक्ताः केषाञ्चित् प्राचाम्मतनिरासाय प्रवृत्ता वह्निः पर्वतनिष्ठाभावप्रतियोगी न वा, वह्नित्वम्पर्वतनिष्ठाभावप्रतियोगितावच्छेदकन्नवेत्याद्यभीष्टसन्देहा नैव भवन्तीष्यमाणाः, विलक्षणश्च व्याप्यघटितस्सन्देहोऽपीष्ट एवेति व्याचक्षते तदनुयायिनः ।

तार्किकास्तु मतमिदन्न युक्तं वह्निः पर्वतनिष्ठाभावप्रतियोगी न वेत्यादिसर्वाभिमतसन्देहासंग्रहात् , विलक्षणस्य व्याप्यघटितस्य कैरपि स्वीकाराभावाच्च ।

वस्तुतस्तु–नहि कस्य चिद् ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद् वस्तुसिद्धौ

संघटयतीति तात्पर्य्येणाह यो हीति । तत्रेत्यस्य विधेय इत्यर्थ इत्यपि केषाश्चिन्मतम् । एवमनुमित्याकारस्सिद्ध्यति । अनुबन्धा बोधकानवयवा बोध्यलक्ष्यावयवत्वेनोपलब्धिविषयत्वाभावात् ।

नन्वादूगुण इति सूत्रीयगुणपदघटकगकारे विधेये कदाप्यदर्शनादितिहेतोस्सत्त्वेन बोधकावयवत्ववति हेतोर्विद्यमानत्वाद् व्यभिचारः । किञ्च प्रत्युच्चारणं शब्दो भिद्यते नवा ? यदि भिद्यते तदा सन्प्रत्ययघटकसकारोऽन्यसूत्रस्थः लक्ष्यस्थोऽन्य इति विधेये कदाप्यदर्शनादिति हेतोस्सन्घटकसकारे सत्त्वेन व्यभिचा(१)रः । यदि न भिद्यत इति पक्षस्तदा मनिन्प्रत्ययघटकोत्तरनकारे भागा(२)ऽसिद्धिः । पक्षतावच्छेदकावच्छेदेनानुमितित्वावच्छिन्नम्प्रति पक्षैकदेशाऽवृत्तित्वं हेतोश्चेत्तर्हि भागाऽसिद्धिः । इत्संज्ञकनकारमनिन्प्रत्ययघटकनकारयोरैक्ये तस्य नकारस्य बोध्यलक्ष्यावयवत्वेनोपलब्धिविषयत्वात्तद्भावस्य तत्राऽभावात्पक्षैकदेशे नकारे हेतोर्वृत्तित्वाऽभावाद् भागाऽसिद्धिर्दुर्वारा । भागेऽसिद्धिर्भागाऽसिद्धिरेकदेशाऽवृत्तित्वमिति यावत् ।

किञ्च विधेये कदाप्यदर्शनादिति हेतौ विधेयपदेन यत्किञ्चिद्विधेयो गृह्यते विधेयसामान्यं वा गृह्यते, प्रथमपक्षे सन्प्रत्ययघटकसकारस्य यङादिविधेयेऽदर्शनाद् व्यभिचारः । द्वितीयपक्षे भेदेन अभेदेन च पूर्वोक्तव्यभिचारभागाऽसिद्ध्योर्वज्रलेपायितत्वापत्तेरिति चेन्न ? अनुबन्धाः स्वघटितपदघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकपदाऽनवयवाः स्वघटितपदघटकप्रयोज्यविधेयतावच्छेदकधर्माऽभावात् इत्यनुमितिस्वरूपम् । तथा च बोधकघटकगुणपदघटकगकारे स्वं गकारस्तद्घटितम्पदं गुणपदं तद्घटकवृ-

---

बाधकमितिसिद्धान्तानुसारेण नेदृशार्थप्रतिपादकोऽन्यतरकोटिकपक्षतावादी प्राचीन उपलभ्यमानस्तन्मतं वा कुत्रचिदुपलभ्यत इति स्वर्गसुधामहाह्रदावगाहिनो मान्या भूतिकारा एव स्वीयन्तात्पर्यमवगच्छन्तितराम् ।

भूतिकृतोऽनुयायिविशेषास्तु तद्वत्ताबुद्धिम्प्रति तदभाववत्तानिश्चयस्य तदभावव्याप्यवत्तानिश्चयस्य च प्रतिबन्धकत्वमितिरीत्या पर्वतो वह्निमान् इति सिद्धिनिश्चयत्वावच्छिन्नम्प्रति पर्वतो वह्न्यभाववानिति बुद्धेर्यथा प्रतिबन्धकत्वम् तथा वह्न्यभावव्याप्यवत्तानिश्चयस्यापि । इत्येवं साध्यतदभावान्यतरप्रकारकसन्देहमात्रस्य पक्षतात्वमङ्गीकृत्य ग्रन्थोऽयम्प्राचीनानुसारीति प्रवदन्ति । पूर्वोक्तानुगमादिदोषान् स्वीकृत्यैवैतदिति ध्येयम् ।

पूज्यचरणाः परमगुरवो विजयाकारास्तु प्रकारतावच्छेदकधर्मयोर्भेदेन लक्षणासंघटनादपक्षतात्वापत्तिर्दोषो देय इति वदन्ति नच तत्र कोऽपि विवादः पदमादधाति ।

( १ ) साध्याभाववद्वृत्तित्वं हेतोर्व्यभिचारः ।

( २ ) पक्षतावच्छेदकसमानाधिकरणावृत्तित्वं हेतोर्भागासिद्धिः ।

त्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मो गुणत्वं तद्धर्मावच्छिन्ना विधेयता यद्य-
प्यदेङ्निष्ठा नास्ति तथापि धर्मावच्छिन्नत्वं साक्षाद् गृह्यतेऽर्थात् श्रावणप्रत्यक्ष-
विषयतावच्छेदकधर्मविशिष्टमुख्यविशेष्यताप्रयोजकपदाऽनवयवा इति निवेशः ।
वैशिष्ट्यञ्च स्वावच्छिन्नत्वस्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यत्वाऽभाववत्
त्वैतदुभयसम्बन्धेन । एवं साध्यत्वग्रहणेन व्यभिचाराऽभावः। "अदेङ्गुण" इति
घटकगुणपदनिष्ठा विधेयता तत्प्रयोजकम्पदन्तत्तदनवयवत्वमाद्गुण इतिसूत्रघ-
टकगकारे इति न दोषः । सन्घटकनकारे च स्वम् अनुबन्धो नकारः तद्घटितम्पदं
सन्निति तद्घटकप्रयोज्यविधेयतावच्छेदकधर्मस्सत्वन्तस्य नकारेऽसत्त्वाद्धेतुदल-
सङ्गतिः । तथैव स्वमनुबन्धो नकारस्तद्घटितं पदं सन्निति तद्घटकवृत्तिश्रावण-
प्रत्यक्षविषयतावच्छेदकधर्मस्सत्वन्तद्धर्मावच्छिन्नसाक्षाद्विषयताप्रयोजकं पदं सन्
इति तदनवयवत्वमनुबन्धनकारे साध्यत इति साध्यदलसङ्गतिः । पूर्वोक्तरीत्या
मनिन्प्रत्यये भागाऽसिद्धिवारणन्तु हेतुदलीयविधेयतावच्छेदकधर्मश्च विशेष्यवि-
शेषणभावापन्नयावत्पदार्थसङ्कुचितो गृह्यते । एवञ्च मनिन्प्रत्यये विधेयतावच्छे-
दकधर्मो मन्त्वम् मकारोत्तराकारोत्तरनत्वरूपस्य अनुबन्धनकारेऽविद्यमानत्वेन
दोषाऽभावः सन्प्रत्यये विधेयतावच्छेदकधर्मस्सत्वं अकाराऽव्यवहितपूर्वत्व-
विशिष्टसकारत्वरूपम् तस्य सकारे वर्त्तमानत्वेनाभीष्टसिद्धिः ।

नच्चैवमपि गुणपदघटकीभूतगकारे गकारघटितगुणघटकाऽकारवृत्तिश्रा-
वणप्रत्यक्षविषयतावच्छेदकधर्मोऽत्वम् तेन धर्मेण साक्षादवच्छिन्नाऽकारनिष्ठा
विधेयता तत्प्रयोजकपदावयवत्वस्यैव गकारे सत्त्वेन भूयो व्यभिचारः । किञ्च
स्वमनुबन्धो नकारस्तद्घटिताष्टाध्यायी तद्घटकं "गुप्तिज्किद्भ्यस्सन्नि"ति-
सूत्रन्तद्वृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मस्य सर्वथैवाऽप्रसिद्धिरिति वा-
च्यम् ? अत्र स्वघटितघटकञ्च अनवयवत्वेन विवक्षितेतरयावद्घटितं विभ-
क्त्यघटितं च गृह्यते । पदत्वनिवेशादष्टाध्याय्या न ग्रहणम् । विभक्त्यघटितेति-
निवेशात्सन्यत इत्यादौ न दोषः । विभक्त्यघटितेत्यस्य स्थाने प्रत्ययाघटितेति-
निवेशस्तेन "स्थाम्नोऽकार" इत्यादौ न दोषः । गुणादौ व्यभिचारवारणाय
संज्ञातिरिक्तत्वनिवेशः । नच्चैवमपि कुक्मुमोर्विधेयतावच्छेदकधर्मः कत्वं मत्वञ्च
तदभावस्य उत्तरानुबन्धककारमकारयोरभावाद् भागाऽसिद्धिर्भूयो दुर्वारेति
वाच्यम् ? कुङ्मुमनुबन्धौ बोधकानवयवौ बोधकावयवोत्तरत्वविशिष्टबोधकान-
वयवोत्तरत्वादित्यनुमानाश्रयणेन क्षतिविरहात् ।

वस्तुतस्तु अनुबन्धत्वावच्छेदेन अनवयवत्वसाधनेच्छा चेत्तर्हीत्थम्प्रकारः।
स्वाऽभावादित्येव हेतुः, अभावीयप्रतियोगितावच्छेदकसम्बन्धौ तु स्वघटितघट-
कप्रयोज्यविधेयतावच्छेदकधर्मवत्त्व स्वघटितघटकबोधकावयवत्वेन निश्चितोत्तर-
बोधकावयवत्वेनानिश्चितोत्तरत्वाभाववत्त्वरूपौ । सनो नकारे आद्यसम्बन्धाऽभा-

वादुभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावोऽस्त्येव । कुङ्मुमोस्तु आद्यसम्बन्धसत्त्वेऽपि बोधकावयवत्वेन निश्चितः ककारो मकारश्च तदुत्तरस्तदवयवत्वेन अनिश्चित उकारस्तदुत्तरत्वसत्त्वेन तदनुत्तरत्वाभावादेकसत्त्वे द्वयन्नास्तीति नियममनुसृत्योभयसम्बन्धावच्छिन्नप्रतियोगिताकाऽभावोऽस्त्येवेति सर्वत्र वारणम् ।

केचित्तु भागाऽसिद्धिवारणाय पक्षेऽनुबन्धे कुक्कारभिन्नत्वनिवेशः । अयं कक्कारः स्वघटितघटकबोधकानवयवः स्वघटितघटकबोधकोनवयवत्वेन निश्चितोत्तरत्वात् यन्नैवन्तन्नैवमित्यनुमानेन ककारे नैव सन्देह इत्यूचुः ।

हलन्त्यमित्यत्रान्त्यशब्द इति—अत्र परसमीपपदेन परश्चासौ समीपश्चेति कर्मधारये तु निरुक्तरीत्या समीपेऽवयवत्वाऽरोपेणैव सिद्धौ नैव लक्षणोपयोग इति । कृतान्तस्तु अत्र चक्रकाऽपत्तिदोषवारणाय लक्षणैव युक्ता तथाहि, अवयवत्वारोपज्ञानेऽन्त्यत्वज्ञानम् तच्चानवयवत्वज्ञानपूर्वकन्तच्च विधेयाऽदर्शनहेतुसाध्यम् तज्ज्ञानञ्च लोपशास्त्रबोधाधीनं सचेत्संज्ञाधीन इति चक्रकाऽकार इति ।

अनेकान्तपक्षे नानुबन्धकृतमित्यादिपरिभाषात्रयाऽकरणेन यद्यपि लाघवन्तथापि अवयवत्वारोपः, सानुबन्धाद्विभक्त्युत्पत्तिः, आद्यन्तशब्दयोर्लक्षणा, अवयवत्वेनोपात्तस्य निरवयवत्वम् इत्यादि गौरवम् । किञ्च आनङ्बोध्ये नकारस्य गणयतीत्यादौ वृद्धिवारणाय गणबोध्येऽकारस्य च लोपात्कदाऽप्यदर्शनेन बोध्यपर्य्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकाऽत्त्वगणत्वादेर्बोधकावयवे नकारेऽकारे चाभावेन पूर्वोक्तहेतोर्व्यभिचार इत्याशयेनाह वस्तुतस्त्विति । नन्वेकान्तत्वेऽनुबन्धानां पचति भवतीत्यादौ तास्यनुदात्तेदिति स्वरो न स्यात् । अकारान्तोपदिश्यमानत्वाऽभावात् स्वरविधौ भाष्ये तथैव सिद्धान्तितत्वाच्च । अत एव हतो हथ इत्यादौ नानुदात्तत्वम् । शुद्धाकारे तु व्यपदेशिवद्भावेन सिद्धिरिति चेन्न ? नानुबन्धकृतमनेजन्तत्वमिति परिभाषायामनेजन्तपदस्यानकारान्तस्याऽप्युपलक्षकत्वादन्यथा नैकमुदाहरणमितिन्यायेन तास्यनुदात्तेन्ङिच्चादित्येव वदेदिति समाधानाश्रयणात् ।

न च शक्यार्थबाधे लक्षणयैवानवयवत्वे लक्षणाऽनवयवत्वञ्च बोध्यतावच्छेदकधर्माभावरूपहेतुनिर्णये, हेतोर्निर्णयश्चेत्संज्ञालोपाभ्याम्, इत्संज्ञा च हल्पदबोध्यवर्णनिर्णये, तन्निर्णयश्चानवयवत्वे इति चक्रक(१)दोष इति वाच्यम् ? निरुक्तरीत्या स्वघटितघटकबोध्यपर्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्माऽभा-

(१) न्यायदर्शनस्य प्रथमाध्याये प्रथमाह्निके चत्वारिंशत्तमे सूत्रे तर्कलक्षणं व्याचक्षाणेनाक्षचरणेन महर्षिणा दोषवीजारम्भस्समसूचि । तत्र च दोषा आत्माश्रयः अन्योन्याश्रयः चक्रकोऽनवस्था तदन्यबाधितार्थप्रसङ्गश्चेति पञ्च भट्टाचार्यविश्वनाथपञ्चाननैस्स्वीयवृत्तौ व्याख्याताः । तदपेक्ष्यपेक्ष्यपेक्षित्वञ्चक्रकत्वम् ।

## एकान्ताः ॥ ५ ॥

**इत्येव न्याय्यम् । शास्त्रे तत्रोपलम्भादन्यत्रानुपलम्भाच्च ।**

वस्यैव हेतुत्वेन बोध्यतावच्छेदकस्य निर्णयाऽभावेऽपि बोध्यस्य केवलपिपठिषती-ति लक्ष्यदर्शनमात्रनिर्णीतत्वेन चक्रकदोषाभावात् । नचेत्संज्ञांविनाऽनुबन्धत्वाऽ-भावेन पञ्चतावच्छेदकज्ञानाभावे नास्त्येव चक्रक इति वाच्यम् ? नवीनमते इत्सं-ज्ञायोग्यत्वमनुबन्धत्वमितिइत्संज्ञायोग्यस्याऽपि पञ्चत्वस्वीकारे क्षतिविरहात् ।

इत्येव न्या(१)य्यमिति—बोधकावयवत्वमेव साध्यते । अत्र हेतुमाह शास्त्र इति बोधक इत्यर्थः । बोधकेऽवयवा नतु बोध्ये । तथाच अनुबन्धास्त्व-

---

हलन्त्यमित्यादौ कोटिचतुष्टयसत्त्वेऽपि स्वस्य स्वापेक्ष्यपेक्ष्यपेक्षित्वसत्त्वान्नासंग्रहो दोष इति ।

( १ ) वस्तुतस्तु एकान्ता इत्येव न्याय्यमिति-तदुक्तं "तस्य लोप" इति सूत्र-भाष्ये "एकान्ता इत्येव न्याय्यम् कुत एतत् तत्र हि हेतुर्व्यपदिष्टः यच्च नाम सहेतु-कम् तन्न्याय्यमिति अनुपलम्भाच्चेति चकारो हेतुत्वसम्पादक एव नतु हेतुद्वयसाधकः । एवञ्च विशिष्टोऽयं हेतुः । नच भाष्ये तु एकान्तस्तत्रोपलब्धेरित्येवोक्तं नतु विशिष्टहे-तुरिति वाच्यम् ? कैयटानुसारेण ग्रन्थसङ्गतेः । तथा च अनुबन्धा उपस्थापकावयवाः तदवयवत्वप्रकारकोपलम्भविशिष्टात् । अन्यावयवत्वप्रकारकोपलम्भाभावादिति फलि-तार्थः । नचोपस्थापकावयवत्वेनोपलम्भ एव हेतुरस्तु विशेष्योपादानं किमर्थमिति वाच्यम् ?

अयं पुरुषः पुरुषत्वप्रकारकोपलम्भविशिष्टपरिस्पन्दवत्त्वप्रकारकोपलम्भादितिव-द्विशेष्यांशपूरणे हेतुत्वसम्भवोऽन्यथोपस्थापकावयवत्वस्य सन्दिग्धत्वेन साधनीयत्वा-त्तद्विषयकोपलम्भस्य संशयात्मनो हेतुत्वाऽसिद्धेः ।

ननु पदद्वयाऽघटितमुपस्थापकघटितं यत्पदं तदवयवत्वेनोपलम्भस्यैव हेतुत्वेनेष्ट-सिद्धौ विशेष्यांशपूरणङ्किमर्थमिति चेन्न ? "ङेर्य" इत्यादिसूत्रे यादेशाद्युपस्थापकाव-यवत्वाभाववति विसर्जनीयेऽपि तादृशोपालम्भस्य सत्त्वेन व्यभिचारप्रसक्तेः ।

ननु प्रातिपदिकान्तराऽघटितमुपस्थापकघटितं यत्प्रातिपदिकं तद्घटकत्वेनोपलम्भो हेतुरिति न पूर्वोक्तव्यभिचार इति चेन्न ? यावदनुबन्धानामवयवत्वन्न सिद्ध्यति ताव-त्तद्विशिष्टस्यार्थवत्त्वाभावेन प्रातिपदिकत्त्वाऽसिद्धेः । नच समुदायात्स्त्रुबुत्पत्तौ विवादो नास्ति प्रकृत्यन्तराऽघटितोपस्थापकघटितसुप्प्रत्ययप्रकृतिघटकत्वेनोपलम्भो हेतुरिति न दोष इति वाच्यम् ? "अतो लोपः आतो लोप इटि चे"त्यादौ तपरकरणस्योपस्थाप-कावयवत्वाभाववत्त्वेन प्रसिद्धेर्व्यभिचारसौष्ठवात् । तथाच विशेष्यांशपूर्त्तिस्सफला ।

ननु अन्यावयवत्वप्रकारकोपलम्भाभावात्मकविशेष्यांशस्यैव हेतुत्वमिति लाघव-

अनवयवो हि काकादिरेकजातीयसम्बन्धेन गृहवृक्षादिषु लभ्यते नैवमयम् । एवं हि बहुव्रीहिरपि न्यायत एवोपपन्नः । अन्त्यादिशब्दे लक्षणा च न । किंचावयवत्वे णशकप्रत्ययादौ णादेरित्त्वानापत्तिः, प्रत्ययादित्वाभावात् दृनचश्चकारस्य वैयर्थ्यापत्तिश्च । इदं च तस्य लोप इत्यत्र भाष्ये स्पष्टम् । तत्रहृयुक्तमेकान्ता अनुबन्धा इत्येव न्याय्यमिति दिक् ॥ ५ ॥

---

घटितपदाऽघटितपदघटकबोधकावयवा इत्याशयः । स्वघटितेतिनिवेशात् छणो णकारे करूपप्रत्ययबोधकावयवत्वन्न भवति । नच बोधकनिर्णयं विना कथन्तत्रोपलम्भनिर्णय इति वाच्यम् ? स्वघटितपदघटकत्वसम्बन्धेन साध्यनिर्णयमन्तरेणाऽपि बोधके उपलम्भनिर्णयसम्भवात् । तत्रोपलम्भादिति तदवयवत्वेनोपलब्धिविषयत्वादित्यर्थः । तदवयवत्वेनोपलब्धिविषयता तु विशिष्टाद्विभक्तिदर्शनेन अनुबन्धमात्रेऽनुमीयते । अत्र कैयटस्तु यस्यैव हेतोस्संशायकत्वन्तस्यैव कथन्निर्णायकत्वमित्याशङ्क्य तत्रैवोपलब्धेरिति समाहितवान् । तदनुसारेणाह अन्यत्रानुपलम्भाच्चेति । अनवयवो हीत्यादिना सामान्यव्याप्त्याऽनुमितिर्न विशेषव्याप्त्या प्रकृते इति फलति । महाभाष्ये तु वृक्षस्था शाखा वृक्षैकान्ता इत्यन्वयव्याप्तिरेवोदाहृता । तथाच अनुबन्धा बोधकावयवाः तत्रोपलब्धिविषयत्वे सति तदितरत्रोपलब्धिविषयत्वाभावात् । ननु शाखाया वृक्षावयवत्वन्न सम्भवति अन्यत्र रथ्यादावपि तदुपलम्भात् इति चेन्न ? येन सम्बन्धेन यस्य वस्तुनः तत्रोपलम्भस्तेनैव सम्बन्धेनान्यत्रानुपलम्भस्य विवक्षा, न सम्बन्धान्तरेण, समवायसम्बन्धेनैव शाखाया वृक्षे उपलम्भस्तेन सम्बन्धेनान्यत्रानुपलम्भत्वे क्षतिविरहात् ।

ननु चक्रे उत्पन्नो नष्टो घटश्चक्रादन्यत्रानुपलब्धस्सन् संयोगसम्बन्धेन चक्रे उपलब्धोऽपि न चक्रावयव इति व्यभिचार इति चेन्न ? हेतौ योग्यत्वनिवेशेनाऽदोषात् । अन्यत्रत्योपलब्धियोग्यतायास्तत्रापि सत्त्वात् । ननु सम्बन्धप्रतियोगिभेदेन सम्बन्धभेदे काकस्य गेहेन वृक्षेण च सम्बन्धभेदादवयवत्वापत्तिरिति सन्देहे आह एकजातीयेति । एकधर्मावच्छिन्नेत्याशयः । संयोगत्वावच्छिन्नसंसर्गेणैव

---

मिति चेन्न ? तस्य हि वृक्षाद्यनवयवीभूतवृक्षत्वादिसाधारणतयाऽवयवत्वसाधने हेतुत्वाऽयोगात् ।

नच विशिष्टस्य हेतुत्वेऽपि "गुपिज्किद्भ्य" इत्यादावुपस्थापकीभूतसनाद्यवयवनकारप्रभृतीनां धनवनादिशब्दोपलम्भेन हेतोः पक्षतावच्छेदकव्यापकत्वाभावात् कथमवयवत्वसिद्धिरिति वाच्यम् ? तेषां सजातीयवर्णान्तरत्वेऽपि तत्त्वाभावात् । तेषामनुबन्धत्वन्नास्तीति निष्कर्षः । युक्ततरोऽयं हेतुः, उपस्थापकतावच्छेदकानुपूर्वीघटकत्वमवयवत्वम्, तदघटकत्वमनवयवत्वम् ।

गृहवृत्त्योः काकोपलब्धेरवयवत्वाभावात् । नच घटरूपेऽपि घटावयवत्वं दुर्वारं समवायेनान्यत्रोपलब्धेरिति वाच्यम् ? इष्टापत्तेः । गुणसमुदायस्यैव वैयाकरणमते सांख्य इव द्रव्यत्वात् ।

वस्तुतोऽयं ग्रन्थोऽयुतसिद्धत्वप्रदर्शनपर एवेति केचित् । तथाहि, ययोर्द्वयोर्मध्ये एकमपराश्रितमविनश्यदेवावतिष्ठते तौ द्वावयुतसिद्धौ । अनुबन्धा बोधकावयवाः बोधकायुतसिद्धत्वात्, यो यदयुतसिद्धस्स तदवयवः यथा शाखादिः । सन्प्रत्ययायुतसिद्धत्वात् नकारानुबन्धस्य अवयवत्वम् । न च बोधकानां स्वावयवायुतसिद्धत्वेन तदवयवत्वापत्तिरिति वाच्यम् ? व्यापकत्वविशिष्टायुतसिद्धत्वस्य हेतुत्वस्वीकारेण समुदायस्य स्वावयवाव्यापकत्वेनाप्तत्तेः । तथाच प्रकृतेऽवयवावयविभावः यथा क्रियाक्रियावतोः गुणगुणिनोः । अस्मिन् कल्पे हेतुस्वरूपन्तु विशिष्टाद्विभक्तिदर्शनादित्येवेति मान्याः। अस्मिन् कल्पे विधेयसनादिपदे नकारेत्संज्ञकस्सो भवति इत्संज्ञालोपौ च सूत्र एव । पक्षद्वयेऽपि अनुबन्धविनिर्मुक्तपदार्थस्यैवोपस्थितिसिद्धान्तेन अनुवादे "सन्यत" इत्यादौ नकारेत्संज्ञकसशब्दे इत्याद्यर्थयोजनेति । परन्त्वयम्पक्षोऽनुपपन्नो नागेशीयः । विधेयबोधकपदस्य लक्षणयैवोक्तोऽर्थस्स च न सम्भवति नविधौ परश्शब्दार्थ इति न्यायात् । विधौ कोऽर्थो विधेयताप्रयोजके पदे परः कोऽर्थश्शक्यावन्यश्शब्दार्थो न भवति । तस्मादनुबन्धाः बोध्यावयवा बोधके उपलभ्यमानत्वात् सन्सकारवदित्यनुमानेनैव बोध्यावयवत्वं सिद्धयति । अस्मिन्पक्षे बोध्य एवेत्संज्ञालोपौ नतु सूत्रे गुप्तिजिति विधेयताप्रयोजके पदे "सन्यत" इत्यादावनुवादे च सन्शब्द इत्येवार्थः । "इदम इश्" अण्त्वात्सवर्णग्रहणम्प्राप्नोति अप्रत्यय इतिनिषेधात् । उपदेशे किम् अभ्र आँ अटितः पदे किं तन्त्रयुतम् "ध्वसोरेद्धावि"त्यत्र लोपश्चेति द्विशकारको निर्देश इत्यादीनि भाष्याण्यनेकान्तपक्षाभिप्रायेणेति । नचावयवत्वपक्षे वक्ष्यमाणपरिभाषात्रयकरणं गौरवमिति वाच्यम् ? निषादस्थपतिन्यायेन फलमुखगौरवस्याकिञ्चित्करत्वात् । परिभाषात्रयावतरणपरकभाष्यस्यावयवत्वपक्षे प्रबलप्रमाणत्वाच्च । अत एव भाष्ये तत्रोपलम्भादित्येव हेतुरुपदिष्टो नत्वन्यत्रानुपलम्भाच्चेति । अत एव यस्संशायको हेतुस्स कथन्निश्चायक इत्याशङ्क्य तत्रोपलम्भादित्यस्य तत्रैवोपलम्भादित्यर्थ इति कैयटोक्तिरपि निर्मूला । एकसंशायकहेतोर्निश्चायकत्वाऽभावे हेत्वन्तरस्य निश्चायकत्वे क्षतिविरहात् । यथा अनवयवत्वसंशायकहेतोर्गणयतीत्यादौ व्यभिचरितत्वेनावयवत्वसंशायकस्य निश्चायकत्वम् । अत एव स्थाणुर्वा पुरुषो वेति सन्देहे पुरुषत्वनिश्चायककरचरणादिमत्त्वरूपहेतुभ्रमेऽपि हेत्वन्तरस्य संशायकस्य कोटरादिमत्त्वस्य स्थाणुत्वानुमितिनिश्चायकत्वं लोके निर्विवादं सङ्गच्छते । अत एव भाष्येऽनुबन्धेषूभयमिदमुक्तमनेकान्ताश्चेति किमत्र न्याय्यमेकान्ता इत्येव न्याय्यम्, यतोऽत्र हेतुर्निर्दिष्टस्स-

हेतुकश्च भवति प्रमाणमित्यपि सङ्गच्छते ।

वस्तुतस्तु—अनुबन्धघटितबोधकवृत्तयो येऽनुबन्धत्वघटितातिरिक्ता आनुपूर्व्यतिरिक्ताश्च धर्मास्तन्निमित्तके कार्य्ये कर्तव्येऽनुबन्धानामविद्यमानवद्भावो भवतीति कल्पनेन निर्वाहे परिभाषात्रयमनारब्धव्यमिति लाघवम् । परिभाषात्रयारम्भकालेऽनुबन्धानामल्पद्वोध्यत्वन्नास्तीतिव्याख्यानस्य वक्ष्यमाणत्वेन परिभाषात्रयस्यानावश्यकत्वाच्चेति ।

कृतान्ततस्तु अनुबन्धविनिर्मुक्त इत्यारभ्य लोपश्चेतिद्विशकारको निर्देशो महाबिडम्बनेत्येतावत्पर्यन्तभाष्याणामनेकान्तपक्षाभिप्रायकत्वाद्यनेककुसृष्टिकल्पनापेक्षया भाष्योक्तैकान्तपक्षेऽनुबन्धा बोध्यावयवा बोधकावयवाश्चेत्युभयावयवत्वमत्यन्तसौख्यकरमिति बोध्यबोधकयोरभेदाध्यवसायात् इति तत्त्वप्रत्यभिज्ञान्यायेन न कैयटादिविवाद इत्यलं काकदन्तपरीक्षया ।

अनुबन्धविनिर्मुक्ते पदार्थोपस्थितिरिति बोध्यो निरनुबन्धक एव "गुप्तिजित्यत्र" नकारेत्संज्ञस्सो भवति इत्यर्थः। अत एव पदे किं तत्र युतमिति भाष्यं सुगतमन्यथोतमित्युकारे उञ्त्वाभावात्तदसंगतं स्यात् । ञकारेत्संज्ञकोकारे इत्यर्थे तु ञकारेत्संज्ञकत्वमारोप्यते उत्वन्तु स्वत एवेत्यारोपे प्रमाणाभावः। अन्त्याभिन्नणकारेत्संज्ञकाकारे इत्यर्थेन णप्रत्यये नाणप्रत्ययप्रयुक्तं कार्य्यमत एव देव हृहीत्यादौ उकारेत्संज्ञकरेफाभावा"द्धशिचे" त्युत्वन्न भवति । "इदम इश्"अण्त्वात्सवर्णग्रहणम्प्राप्नोति अप्रत्यय इतिनिषेधात् इति भाष्यासङ्गतिर्बोध्यस्याण्रूपत्वाभावात् । इकारस्य बोध्यत्वे तु अण्त्वात्सवर्णग्रहणम्प्राप्नोति अप्रत्यय इति निषेधो भाव्यमानपरिभाषया वा, उपदेशे किम् अभ्र आँ अटितः, पदे किं तन्त्रयुतम् , लोपश्चेति द्विशकारको निर्देश इति, "उञि च पदे" इतिसूत्रे उञ्पदस्य ञान्तबोध्ये उशब्दे लक्षणापि कुसृष्टिप्रायिकेति महाविडम्बना। धातोस्सन् भवतीति वृत्तिस्तु नायुक्ता ? स एवायमिति तत्त्वप्रत्यभिज्ञया सकारे सन्बुद्धेस्सत्त्वेन तदर्थसङ्गतेः ।

अत्र प्रसङ्गाद्विशिष्टशास्त्रार्थप्रकारः ।

एकान्तपक्षे "क्ङिती"त्यादौ लम्बकर्णादिवदवयवावयविभावे ,बहुव्रीहिः, अनेकान्तपक्षे तु समीपार्थे बहुव्रीहिः । अनेकान्तपक्षे "वुञ्छणि"तिसूत्रे प्रत्ययद्वयमध्यपठितस्यानुबन्धस्यान्यतरसम्बन्धे व्याख्यानमेव शरणम् । "काश्यादिभ्यष्ठञ्ञिठावि"त्यादौ ञिठप्रत्ययञित्त्वं व्यर्थीभूय एकस्यानुबन्धस्य प्रत्ययद्वयमध्योच्चारितस्यापि एकेनैव सम्बन्धो नतु द्वाभ्यामित्यर्थज्ञापकम् । एकान्तपक्षे तु "वुञ्छणा"दिसूत्रे प्रत्ययद्वयमध्यपठितस्यानुबन्धस्यैकतरेणैव सम्बन्धो व्याख्यानात् । नन्वेकान्तपक्षेऽनुबन्धानामनुबन्ध्यवयवत्वे निश्चिते "अष्टाभ्य औशि"त्यादावनेकाल्त्वादेवौशादेशसिद्धौ शिद्ग्रहणं व्यर्थमिति चेन्न ?

नानुबन्धकृतमनेकाल्त्वमिति परिभाषाज्ञापनार्थत्वात् । स्वरूपबोधकस्थले स एवायमिति तत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदाध्यवसायात् । स एवायमादेशो यो बोधके औशित्याकारक आसीत्स एव धर्मो बोध्येऽपि तिष्ठति । अतो बोध्येऽनेकाल्त्वाभावेन कथं शिद्ग्रहणं व्यर्थं सत्परिभाषाज्ञापकमिति वदन्तः परामूताः ।

वस्तुतस्तु–शिद्ग्रहणेनानुबन्धानामल्पदबोध्यत्वन्नास्तीत्येव ज्ञाप्यते, एतत्फलितार्थमेव "न ल्यपी"तिज्ञाप्यमनुबन्धकार्येऽनल्विधाविति निषेधो न प्रवर्त्तेत इति । एवञ्च वक्ष्यमाणपरिभाषाश्रयणन्नैव कार्य्यम् । नच रामशब्दे घञ्घटिते आनुमानिकस्थान्यादेशभावेन हलन्तत्वमादाय सुलोपापत्तिरिति वाच्यम् ? ङ्याब्ग्रहणसामर्थ्यात् । नचातिखट्व इत्यादौ सुलोपाभावाय प्रश्लेषार्थन्तदिति वाच्यम् ? भाष्यानुपपत्तेर्दोषाधायकत्वात् ।

नच व्रश्चनशब्देन कुशब्दस्य समासे कुव्रश्चन इत्यादौ धातुगतानुबन्धत्वाश्रयणेन "कोःकत्तत्पुरुषेऽचो"तिकदादेशापत्तिरिति वाच्यम् ? "अल्बोधकपदबोध्यत्वन्नास्तीति" ज्ञाप्यस्वीकारेणाजादिपदेनानुबन्धाग्रहणात् ।

नन्वनुबन्धानामल्पदबोध्यत्वाभावे हल्पदेनाऽप्यनुबन्धग्रहणं न स्याद्धलोऽन्तर्गतत्वात् इति चेन्न ? "हलन्त्यमि"तिसूत्रारम्भसामर्थ्याद्धलतिरिक्ताल एव ज्ञाप्यशरीरत्वात् । नच कित्पदघटककारादिपदेन ककारानुबन्धाग्रहणापत्तौ कित्त्वन्न सिद्ध्येदिति वाच्यम् ? इत्पदप्रयोज्यविषयतानिरूपितविषयत्त्वाऽप्रयोजकाल्बोधकपदबोध्यत्वन्नास्तीति ज्ञाप्यविषयत्वात् । नच यस्मिन्विधिस्तदादावल्ग्रहण इत्यादावपि अल्पदेनानुबन्धग्रहणानापत्तौ इत्संज्ञकशकारादावित्यर्थो न स्यादिति वाच्यम् ? यस्मिन्विधिरितिपरिभाषातिरिक्तत्वेन ज्ञाप्यविषयसङ्कोचात् "पाघ्राध्मे"तिसूत्रारम्भसामर्थ्याच्च ।

किञ्च यत्र कुत्रचिद्दोष आपतेत्तत्र सर्वत्रापि (१)निरुक्तरीत्या वारणसम्भ-

---

(१) गुरुवरश्रीविजयाकारास्तु—

इत्पदविशिष्टभिन्नं यदल्बोधकं पदन्तत्पदबोध्यत्वन्नास्तीति तात्पर्य्यमनुबन्धानामल्पदबोध्यत्वन्नास्तीत्यस्य । वैशि० स्वनिष्ठविषयतानिरूपितविषयताप्रयोजकत्व स्वप्रयोज्यविषयतानिरूपितविषयताप्रयोजकत्वैतदन्यतरसम्बन्धेन । हलन्त्यघटकहल्पदे किदादिघटककिति पदे च दोषवारणायाद्यसम्बन्धः । अनयोरित्पदविशिष्टत्वमेव न तद्भिन्नमिति यस्मिन्विधिरिति अल्ग्रहणघटकाल्पदे च दोषवारणायान्त्यसम्बन्धः । अत्रान्त्यसम्बन्धेनेत्पदविशिष्टत्वमेव न तद्भिन्नत्वमिति । अल्ग्रहण इति वाक्यस्याल्बोधक इत्यर्थः । प्रकृते अल् कःशब्घटकशकारस्तद्बोधकं पदं शितीति ग्रहणपदप्रयोज्या विषयता शित्पदे अपर्य्याप्त्या च तद्घटकेत्पदेऽस्ति, तन्निरूपिता विषयता अल्त्वावच्छिन्ना, तत्प्रयोजकत्वमल्पदे इति वैशिष्ट्यनिष्कर्ष इत्युक्तवन्तः ।

नन्वेकान्तत्वेऽनेकाल्त्वादेव औशादीनां सर्वादेशत्वसिद्ध्याऽनेकाल्-सूत्रे शिद्ग्रहणं व्यर्थमत आह—

नानुबन्धकृतमनेकाल्त्वम् ॥ ६ ॥

शिद्ग्रहणमेवैतज्ज्ञापकम्(१)तेनावर्णस्तृ इत्यादेर्न सर्वादेशत्वम् ।

---

वाद्भाष्योक्तप्रकारेण सिद्धे परिभाषात्रयमनारम्भणीयमिति सरयूपारीणशुक्लाः ।

अपवादसङ्गत्या परिभाषात्रयं क्रमशोऽवतारयति नन्वि(२)त्यादिना । एकान्तत्वे बोधकनिरूपितावयवत्वे इत्यर्थः । अनुबन्धानामेकान्तत्वे न्यायबला-त्स्वीक्रियमाणे प्रकारान्तरेणाऽपरिहार्य्या ये दोषास्तानुद्धर्त्तुं भाष्यकृदुपन्यस्ताः परिभाषाः क्रमशोऽवतारयति नन्वित्यादि इत्यप्यवतरणाशय इति केचित् । एवं द्यौः पन्था इत्यादावपि हलन्तबुद्ध्या लोपस्याऽप्युपलक्षणमेतत् ।

नन्वनेकाल्त्वं कीदृशम्बोध्यवृत्ति गृह्यते बोधकवृत्ति वा । न तावत्प्रथमपक्षः,

---

( १ ) अनुबन्धानामल्व्यवहारविषयत्वन्नास्तीतिज्ञापनार्थः ।

तथा च "नानुबन्धकृतमनेकाल्त्वम्, नानुबन्धकृतमनेजन्तत्वम्, नानुबन्धकृत-मसारूप्यम्" इति परिभाषात्रयमप्येतेनैव गतार्थम् । अनुबन्धकार्ये "अनल्विधौ" इति निषेधो न प्रवर्तते इति प्रवादोऽप्येतन्मूलक एव । निषेधो "नल्यपि" इत्यप्यत्रार्थ एव ज्ञापकः । भाष्य एतत्त्रयकथनन्त्वीदृशाभिप्रायेणैव । अत एव "अनुबन्धकृताऽनेका-ल्त्वव्यवहारो यथा न भवेत्तथा कर्त्तव्यम्" इति व्याख्याऽपि सङ्गच्छते ।

नचैवं हलादिपदेन "हलन्त्यम्" इत्यादावनुबन्धग्रहणात् शित् किदित्यादौ ने-त्संज्ञा स्यादिति वाच्यम्? तत्तत्सूत्रारम्भसामर्थ्यादित्पदप्रयोज्यविषयतानिरूपितविष-यत्वाप्रयोजकानुबन्धानामल्त्वव्यवहारो न भवतीति कल्पनया इत्पदप्रयोज्यविषयता-निरूपितविषयत्वप्रयोजकत्वाददोषात् ।

( २ ) अनुबन्धकृतमनेकाल्त्वन्न भवतीति परिभाषार्थे विचारः—नन्वल्त्वव्यवहा-रो नेत्यस्य अल्त्वनिमित्तककार्यसमर्पकत्वाभाव इत्यर्थोऽस्ति, अथवा अल्वृत्तिर्यो धर्म-स्तन्निमित्तककार्यसमर्पकत्वाभाव इत्यर्थ इति प्रश्नः? प्रथमपक्षे देवट् चोरट् इति पचा-दिगणपठितशब्दाभ्यां सौ लुप्तानुबन्धबलेन हल्ङ्यादिसुलोपापत्तेः । ङ्याब्ग्रहणसामर्थ्या-द्वारणे तु प्रदीव्य प्रपठ्येत्यादौ क्त्वाप्रत्ययगतककारमादाय वलादिलक्षणेडागमापत्तेः धूञ् प्रीञ्धातुभ्यां "गुरोश्च हलः" इतिअप्रत्ययापत्तेश्च । द्वितीयपक्षे अच्त्वहल्त्वयोरपि अल्त्वान्तर्गतत्वात् "उपदेशेऽजनुनासिक इत्" हलन्त्य"सूत्राभ्यामित्संज्ञाया दौर्लभ्या-पत्तेः । इत्संज्ञाम्विनानुबन्धत्वस्यैवाभावेन वारणेऽपि "उगिदचामि"त्युक्त्वनिमित्तक-नुम्विधानाऽसङ्गतेः । वुञ्छण्कठजिलेतिनिर्देशाऽसङ्गतेश्च । द्वयोःपक्षयोरपि "मिदेर्गुणः" इत्यादावेशि गुणाऽभावाय शितीत्यस्य कर्मधारयाश्रयणेन यस्मिन्विधिरितिपरिभाषाबो-धिततदादिविधेरिष्टस्य दौर्लभ्यापत्तेश्च । अतो बृहच्छास्त्रार्थकलायां शास्त्रार्थप्रवाहः ।

डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्यात्सिद्धम्॥६॥

अनुबन्धविनिर्मुक्तपदार्थोपस्थित्या शेखराभिमतया "इदम इशि"त्यादौ बोध्य-स्यानेकाल्त्वाभावेन सर्वादेशत्वानुपपत्तेः । न द्वितीयः "पादस्य लोपोऽहस्त्या-दिभ्य" इत्यादावपि लोपस्यानेकाल्त्वेन सर्वादेशत्वापत्तेः ।

न च द्वितीयश्शकार इदिति भाष्यबलेन भावरूपादेशस्थले बोधकवृत्त्यने-काल्त्वमेव सर्वादेशत्वप्रयोजकमिति वाच्यम् ? "मोऽनुस्वार" इत्यनुस्वारस्यापि सर्वादेशत्वापत्तेः । न च निर्दिश्यमानपरिभाषयात्र वारणमिति वाच्यम् ? "अ-त्रानुनासिकः पूर्वस्य तु वे"त्यत्र सर्वादेशत्वापत्तेः । नच सङ्केततावच्छेदकरूपा-नवच्छिन्नानेकाल्बोधकबोध्यस्यादेशत्वप्रयोजकत्वमिति वाच्यम् ? "खरवसा-नयो" रितिरेफादीनां सर्वादेशतापत्तेः । औशादौ शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय तु न सर्वादेशत्वसिद्धिः ? "शि सर्वनामस्थानम्" जसश्शी"त्यादौ विशेषणार्थत्वेन तच्चारितार्थ्यात् । अत्रोत्तरम् स्वरूपबोधकस्थले स एवायमितितत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदस्स एवायमौकाराद्यादेशो यो बोधके औशित्याकारक आसीदिति अनेकाल्त्वमप्यस्यैव धर्म इतिसर्वादेशत्व-सिद्ध्या व्यर्थं सत् परिभाषां(१)ज्ञापयतीति मूलाशयात् ।

डादिविषये त्विति—अत्रानुबन्धपदं तद्योग्यपरमनेकाल्सूत्रे शित्पद-मपि तद्योग्यपरम् । अत एव डा आ इति प्रश्लेषेण (२)सर्वादेशत्वमुक्तम् ।

वस्तुतस्तु नवीनमतेऽनुबन्धविनिर्मुक्तपदार्थोपस्थितिसिद्धान्तः । इत्संज्ञायो-ग्यत्वमनुबन्ध(३)त्वमिति सिद्धान्तेऽयुक्तोऽयं ग्रन्थः । किञ्च डादिविषये एत-

---

(१) नचैवं ज्ञापनेऽपि ज्ञापकस्य स्वांशे चारितार्थ्यनियमात् प्रकृते च तस्यैवास-म्भवः, भूतपूर्वानेकाल्त्वमादायौशादौ शकारोच्चारणसामर्थ्यात् सर्वादेशत्वसिद्धेरिति वाच्यम् ? "विभाषा ङिश्योः" शिसर्वनामस्थानम्, जश्शसोश्शिः, जसःशी" इत्यादौ विशेषणार्थन्तच्चारितार्थ्येन तथा भूतपूर्वगतेराश्रयस्येह कर्तुमशक्यत्वात् ।

इयं च परिभाषा अनुबन्धा अवयवा इति पक्षे बोध्या ।

(२) वस्तुतस्तु—परिभाषाया अस्यास्स्वीकारे णलस्सर्वादेशत्वसिद्धये "आनु-पूर्व्यात्सिद्धमिति"शेखरः । तत्र हि सति सर्वादेशे णलो णकारस्य प्रत्ययादित्वेनोपदे-शत्वम् ततः "चुटू"इतीत्संज्ञा ततोऽनुबन्धत्वम् । तदेवं सर्वादेशपूर्वकमनुबन्धत्वन्न क्ष-मेत सर्वादेशं विहन्तुम् । इति प्राचीनरीत्यैवायं ग्रन्थो योजनीयः ।

योग्यत्वरूपानुबन्धत्ववादिनव्यानान्नये तु प्रश्लेषरीत्यैव ।

(३) अत्रार्थे णप्रत्ययबाधकशस्य विकल्पार्थमारब्धं "ददातिदधात्योर्विभाषा" यत्सूत्रन्तत्रत्यविभाषाग्रहणमेव ज्ञापकम् । अन्यथा इत्संज्ञायाः पूर्वम् प्रत्ययसंज्ञाया अभावेन "वा ऽसरूप" सूत्रेणैव विकल्पसिद्धौ तद्वैयर्थ्यंध्रुवं स्यात् ।

नन्वेवमप्यवदातं मुखमित्यत्र पलोपोत्तरमात्वे कृतेऽदाप् इति घुसंज्ञाप्रतिषेधो न स्यादैपः पकारसत्त्वेऽनेजन्तत्वादात्त्वाप्राप्त्या पलोपोत्तरं पकाराभावेनास्य दाप्त्वाभावादत आह—

नानुबन्धकृतमनेजन्तत्वम् ॥ ७ ॥

उदीचां माङ इति निर्देशोऽस्या ज्ञापकः। आदेच उपदेश इति सूत्रेणोपदिश्यमानस्यैजन्तस्यात्वं क्रियते ङकारसत्त्वे त्वेजन्तत्वाभावादात्त्वाप्राप्तेस्तस्यासङ्गतिः।

---

इयपरिभाषाप्रवृत्तौ सर्वादेशत्वाऽभावे प्रत्ययत्वस्यैव दुर्लभतया "चुटू" इत्यादिशास्त्राऽप्रवृत्त्याऽनुबन्धत्वमुपजीव्य प्रवर्त्तमानयाऽनयाऽनुबन्धत्वस्यैव विघातः कृत इत्युपजीव्यविरोधात् परिभाषेयन्नैव प्रवर्त्तते इति।

नन्वियम्परिभाषा शिद्ग्रहणञ्च व्यर्थमनेकाल्त्वादेवाष्टावित्यादिरूपसिद्धिः। नचावर्न्तावित्यत्र आदेशस्य सर्वादेशतापत्तिरिति वाच्यम्? तृङिति न्यासेन ङित्वात्तत्सिद्धेः। न च "ससजुषोरुरि"त्यत्र सर्वादेशतापत्तिरिति वाच्यम्? तत्रापि रुङिति न्यासेनादोषात्। नच "ऊदुपधाया गोहः" "ऋदृशोऽङि गुणः" "ऊदनोर्देशे' बन्धस्येदुत्पूतिसुसुरभिभ्यः' दिव उदि"त्याद्यादेशोऽपि सर्वादेश इति वाच्यम्? तपरसूत्रे वर्णस्यैव संज्ञात्वेन शेखराभिमतेन बोध्यबोधकयोः कुत्राप्यनेकाल्त्वस्याऽभावेन परिभाषायाः प्रयोजनाऽभावात्। तकारस्य मुखसुखसम्पादनमात्रप्रयोजनकत्वेन सर्वादेशत्वाऽप्रयोजकत्वाच्चेति नैव परिभाषायाः काऽप्युपयोग इत्यलम्। परिभाषास्वीकारपक्षे तु अनेकाल्घटकाल्पदेनानुबन्धस्य ग्रहणन्न भवतीति फलति। तथाच बोधकावस्थायामपि औशादेशस्थलेऽनेकाल्त्वाभावेन शिद्ग्रहणञ्चरितार्थम्। अल्विशिष्टत्वमनेकाल्त्वम्। अलिहानुबन्धभिन्नो गृह्यते। वैशिष्ट्यञ्च स्वघटितत्व स्वेतरो योऽनुबन्धभिन्नोऽल् तद्घटितत्वमित्युभयसम्बन्धेनेति तत्त्वम्।

नन्वेवमप्यवदातम्मुखमित्यत्रेति—एवमपीत्यस्य शिद्ग्रहणसार्थक्येऽपीत्यर्थः। पलोपोत्तरमिति–दैप् शोधन इत्यस्यैवावदातमिति रूपं नतु दाप् लवन इत्यस्येति बोधयितुमेतल्लेखः।

नन्वादेच इति सूत्रे धातोरित्यस्य निवृत्त्या पान्तस्यानेजन्तत्वेऽपि ततः पूर्वमेजन्तत्वमादायात्वं युक्तमेवेति चेन्न? पलोपोत्तरन्तत्सम्भवात् कथमत्र तदन्तविधिर्विशेष्याऽभावात्। नचोपदेश इत्यस्य विभक्तिविपरिणामेन विशेष्यतया तदन्तविधौ समुदायोपदेश एव ऋषीणां तात्पर्य्येण पकारसत्त्वे उपदिश्यमानैजन्तत्वन्नेत्यात्वं नेति वाच्यम्? पलोपोत्तरमितिग्रन्थाऽसङ्गतेः।

वस्तुतस्तु पलोपोत्तरमपि स एवायमिति तत्त्वप्रत्यभिज्ञया एकाच इत्यादाविवोपदिश्यमानैजन्तत्वसत्त्वे क्षतिविरहात्।

नचास्यामवस्थायां तस्य धातुत्वाभावात्कथमात्वम् ? तत्र धातोरि-त्यस्य निवृत्तेरित्यन्यत्र विस्तरः ।

अत्र केचित्—यद्यपि "उञि च पदे" इत्यत्र पदग्रहणात् घिसंज्ञासूत्रे नदीतरे ह्रस्वापादनपरभाष्यप्रामाण्यात् स्थानिवत्सूत्रे अतिखट्वायेत्यत्र दीर्घे कृतेऽपि अप्राप्तौ भूतपूर्व इति भाष्याच्च अनुबन्धसहितशब्दोपादाने इत्संज्ञकतदवयवस्ये-त्यर्थः । स्त्रीलिङ्गप्रकरणे शब्दरत्नेऽप्येवम् । क्यस्य विभाषेत्यत्र च इत्संज्ञकका-द्यवयवकस्येत्यर्थ इति यकि न दोष इति तत्र २ सिद्धान्तस्तथापि तदनाश्रित्येदं कथनमिति बोध्यम् । अनेकान्तपक्षाभिप्रायकत्वाद्वा । "उञिचे" त्यत्र पदग्रहण-मुत्तरार्थं देव रुहीत्यादौ हशिचेत्युत्वम्, अनुनासिकत्वप्रतिज्ञाविशिष्टरोरुत्वमि-ति व्याख्यानात् ।

नच पलोपोत्तरमात्वे इति कथम्, उपदेशत्वाऽभावादिति वाच्यम् ? "दो-दद्घो" रितिसूत्रे द इत्युपादानेनानुबन्धलोपोत्तरमप्युपदेशत्वकल्पनात् । अट् धातावस्येत्संज्ञोत्तरं टस्येत्त्वन्तु न शङ्क्यमित्संज्ञाविधौ अनतिदिष्टोपदेशत्वस्य "इदमस्थमु" रितिसूत्रे मकारपरित्रायकोकारेण ज्ञापितत्वात् । अन्तत्वञ्च स्वघ-टकवर्णप्रागभावानधिकरणक्षणवृत्तित्वम् । परिभाषास्वीकारेऽनुबन्धेतरस्वघटक-वर्णप्रागभावानधिकरणक्षणवृत्तित्वमिति लक्षणम् । दाप्त्वमानुपूर्वीरूपमेव तदेव च दाप्पदशक्यतावच्छेदकं "स्वं रूपमि" तिसूत्रेण तस्यैव शक्यतावच्छेदकत्व-बोधनात् । पकारेत्संज्ञकत्वे सति दात्वमेव दाप्त्वमिति तु न ? लक्षणायाम्प्र-माणाऽभावात् । नानुबन्धकृतमनुपदिश्यमानत्वमिति तु न परिभाषाऽकारः ? अनेजन्तत्वस्य भाष्यकृता प्रतिपादनात् । अट्धातावकारस्येत्संज्ञोत्तरं टान्ते उपदिश्यमानत्वारोपेण टकारस्येत्त्वापत्तेश्च । "उदीचाम्माङ" इति माङ् मान इत्यस्य तु न ग्रहणम् ? ज्ञापकपरभाष्यात् ।

ननु ज्ञापितायामपि परिभाषायाम्बोधके आत्वप्रवृत्तिर्बोध्ये वा ? बोधके-त्वात्वप्रवृत्तिर्न भवति दैप्शोधने धेट् पान इत्यादावपि आत्वश्रवणापत्तेः । एवम्बोध्येऽप्यात्वप्रवृत्तिर्न भवति अनुबन्धरहितस्यैव बोध्यत्वेन तावतापि दाप्त्वाभावेन निषेधाऽप्रवृत्त्यापत्तेरिति चेन्न ? आत्वप्रवृत्तिर्बोधक एव औप-देशिकं बोधकत्वेन तात्पर्य्यविषयीभूतमैकारादिघटितमेवेति बोधनार्थमात्वघटि-तन्नोच्चारितम्बोध्यन्तु दैं धे इत्याद्येव स्वरूपम्, बोधकत्वेन विवक्षितस्वरूप-स्यैव "स्वंरूपमि" तिशास्त्रेण शक्यत्वबोधनात् । धेट् दैबित्यादौ पकारा-दीनामलोऽन्त्यपरिभाषयाऽत्वन्तु न भवति, निर्दिश्यमानपरिभाषया एच एवात्वविधानेनाक्षतेः ।

अन्यत्र विस्तर इति—"आदेच उपदेश" इतिसूत्रशेखर इत्यर्थः ।

धातोरित्यस्य निवृत्तेरिति—अत एवोपदेशे किं गोभ्यां नौभ्यामिति

स्पष्टं चेदं दाधाघ्वदाप् इति सूत्रे भाष्ये ॥ ७ ॥

नन्वेवमपि वाऽसरूपसूत्रेण कविषये ऽणोऽप्यापत्तिरित्यत आह—

नानुबन्धकृतमसारूप्यम् ॥ ८ ॥

ददातिदधात्योर्विभाषा इति णबाधकशस्य विकल्पविधायकमस्यां

---

भाष्यंस(१)ङ्गच्छतेऽन्यथा गोनौशब्दयोःप्रातिपदिकत्वेन धातुत्वाऽभावात्तदसङ्ग-तिर्दुर्वारा । भाष्ये तु नैतस्या आवश्यकत्वन्तथाहि,नायन्दैप् किन्तु दिवादिषु दाप् शोधने पठ्यते,दायतीत्यत्र स्वरे भेदस्तु न ? उभयथाऽप्यन्तोदात्तत्वात् । ताच्छीलिके चानशि दायमान इत्यत्रापि न स्वरभेदः,श्यन्स्वरस्याद्युदात्तस्य सति शिष्टस्वरबलीयस्त्वमन्यत्र विकरणेभ्य इत्युक्तेन बलवत्त्वम् । उभयथाऽप्य-न्तोदात्तस्यैव सत्त्वात् । प्रणिदापयतीत्यत्रादाबितिप्रतिषेधायाऽपिदिति न्यासो-ऽपि दर्शितो दाधाघ्वितिसूत्रभाष्य इति । "उदीचाम्माङ"इत्यत्र तु कृतानुबन्ध-लोपस्य मेङ आत्त्वे स्वोपलक्षितोच्चारणार्थो ङकार इति तदाशयः ।

दाधाघ्वदाबिति सूत्रे भाष्य इति—तत्र हि गोद्यच इत्यत्रात्त्वमाशङ्क्य "गोतो णिद्"तिज्ञापकात्तदभावःकृतः, गोशब्दस्यात्त्वे(२) तु णित्त्वमव्यर्थमेव स्यादिति तदाशय इति ।

नन्वेवमपि वाऽसरूपसूत्रेणेति—एकान्ता अनुबन्धा इति पक्षे बोधक-

---

(१) भाष्ये हि "उद्देशश्च प्रातिपदिकानान्नोपदेशः" इति सिद्धान्तो विस्प-ष्टीकृतः ।

नच अवदातमित्येतन्मात्रम्प्रयोजनमस्ति चेत् "दाधाघ्वपिदिति" न्यास एवा-स्तु तथैव प्रतिषेधासिद्धेः । मात्रालाघवस्य नानुबन्धकृतेतिपरिभाषालाघवस्य च विद्य-मानत्वात् इति वाच्यम् ? लक्षणप्रतिपदोक्तपरिभाषायाअप्रवृत्तिज्ञापनाय सूत्रकृन्न्यास-स्यैवौचित्यात् । तथाहि अदाबिति निषेधकोटौ विधिकोटौ च लाक्षणिकालाक्षणिको-भयग्रहणमिष्यत इति । यद्यपि अपौ इति निर्दिश्य अविद्यमानः पकारो ययोस्ताविति रीत्या प्रतिषेधकोटौ दाबृदैपोरुभयोर्ग्रहणसामर्थ्यात् विधिकोटावपि सहजत एवोभय-ग्रहणे सिद्धे न लाक्षणिकपरिभाषाप्रवृत्त्यभावज्ञापनप्रयोजनमिति । तथापि प्रणिदा-पयतीत्यादौ पुकि तत्राप्यपाविति निषेधशङ्काप्रसङ्गात् ।

वस्तुतस्तु-अपिताविति न्यस्य तत्रापि दोषो नास्तीति न्यासे दोषान्तरम् मृग्यम् ।

(२) अनुबन्धकृतमित्यत्र तृतीयातत्पुरुषसमासः । अनेजन्तत्वमित्यत्र षष्ठीत-त्पुरुषगर्भोऽव्ययीभावः । तथाच अनुबन्धप्रयुक्त एज्वृत्तिचरमावयवत्वाभावो नेति परिभाषार्थः ।

उपदेशजन्यश्रावणप्रत्यक्षविषयतापर्य्याप्त्यधिकरणत्वमुपदिश्यमानत्वम् । उपदेश-जन्यशाब्दविषयतापर्य्याप्त्यधिकरणत्वं वा ।

ज्ञापकम् । तेन गोद् इत्यादौ नाणिति वाऽसरूपसूत्रे भाष्ये स्पष्टम् ॥८॥

ता त्वनुबन्धघटित एवेति तस्याऽसरूपत्वेन वाऽसरूपसूत्रप्रवृत्तेरिति तत्त्वम् ।

ननु"वाऽसरूप"सूत्रेऽसारूप्यमौपदेशिकम्प्रायोगिकं वा गृह्यत इति प्रश्नः? न तावत्प्रथमपक्षः,औपदेशिकसारूप्यवतां 'कर्मण्यण्"अण् कर्मणिचे"त्यादीनां वैकल्पिकबाधेऽपि फले विशेषाऽभावादसरूपग्रहणस्यैव वैयर्थ्याऽपातात् ।। न द्वितीयःपक्षः,प्रायोगिकसारूप्यस्य कार्य्योरप्यक्षतत्वेनावतरणाऽसङ्गतेः ।

अथ सिद्धान्तः, लक्षणैकचक्षुषां वाक्यार्थबोधकाले प्रायोगिकरूपज्ञानाऽभावेनौपदेशिकरूपग्रहणस्यैवावश्यकत्वात् । असरूपग्रहणवैयर्थ्यन्तु न? "हनश्च वध" इत्येतद्विहितस्यापः औपदेशिकसारूप्यवता मूर्त्तौ घन इत्येतद्विहितापा वैकल्पिकबाधे मूर्त्तावपि अभ्रवध इत्यापत्तेः ।

नच"हनश्च वधोऽमूर्त्तावि"ति न्यासेन पूर्वेण प्रत्ययः केवलघनादेशमात्रविधानम् बाध्यबाधकभाव एव नेति न चारितार्थ्यमिति वाच्यम्? इगुपधलक्षणकप्रत्ययस्य"तुन्दशोकयोःपरिमृजापनुदोरि"तिविहितकप्रत्ययेन वैकल्पिकबाधाऽभावाय तत्सार्थक्यात् । वैकल्पिकबाधे च उत्सर्गकप्रत्यये शोकस्यापनुदः शोकापनुद इति समासविकल्पापत्तिरिष्यते तु"उपपदमतिङि"तिनित्यसमास एवेति तात्पर्य्यात् । एवं"म्मूलविभुजादिभ्य"इत्यनेनेगुपधेत्यस्य नित्यबाधे मूलविभुज इति नित्यसमासोऽपि फलम् ।

नन्वसरूपग्रहणस्य कप्रत्यये रूपद्वयाऽभाव एव फलञ्चेत्तर्हि"वा कोऽस्त्रियामि"त्येवास्तु न्यास इति न दोष इति पुरस्समाधानम्मृग्यमिति सरयूपारीणशङ्काः ।

नन्वनुबन्धविनिर्मुक्तोपस्थितेरेवैतन्मतसिद्धान्ततया अ अ इत्युभयोस्समानरूपवत्त्वेन"वाऽसरूप"इत्यस्याऽप्राप्त्या कथमवतरणमिति चेन्न? बोधकवृत्तिधर्माणाम्बोध्ये आरोपेण क्त्वणत्वाद्यानुपूर्व्या आरोपात्सरूपत्वाभावेन "वाऽसरूप"सूत्रप्रवृत्त्या ग्रन्थसङ्गतिसम्भवात् ।

नच क्त्वणत्वाद्यानुपूर्व्या आरोपेऽपि तत्समनियताऽसारूप्यस्य कथङ्कारमारोप इति वाच्यम्? असारूप्यस्यैवारोपेण ग्रन्थसङ्गतेः । नच स्वाश्रयसारूप्यसत्त्वात् सरूपत्वावच्छिन्नप्रतियोगिताकाभावस्याऽभावात्कथम्वैकल्पिकबाध इति वाच्यम्? अतिदिश्यमानधर्मविरुद्धस्वाश्रयप्रयुक्तकार्य्याऽभावस्यातिदेशस्वभावसिद्धत्वात्, शब्दत्वेन सारूप्यस्य सर्वत्र सत्त्वेनाऽसरूपग्रहणवैयर्थ्यापत्तेश्च तथाच न समानमसमानं रूपं यस्येति विग्रहो विभिन्नरूपवदिति यावत् । आनुपूर्व्यारोपेऽसारूप्यं युक्तमिति ग्रन्थसङ्गतेः । अनुबन्धप्रयोज्यस्सारूप्याऽभावो न भवतीत्यर्थः अनुबन्धघटितसमुदायवृत्तिवैरूप्यानतिदेश इति परिभाषाभिप्रायात् ।

ननु संख्याग्रहणे बह्वादीनामेव ग्रहणं स्यात्प्रकरणस्याभिधानियामक-त्वसिद्धात्कृत्रिमाकृत्रिमयोः कृत्रिमे कार्यसंप्रत्यय इति न्यायात्। अस्ति च प्रकृते बह्वादीनां संख्यासंज्ञा कृतेति ज्ञानरूपं प्रकरणम्। न तु लोक-प्रसिद्धैकद्व्यादीनामित्यत आह—

## उभयगतिरिह भवति ॥ ६ ॥

इह शास्त्रे। "संख्याया अतिशदन्तायाः" इति निषेधोऽस्या ज्ञापकः। नहि कृत्रिमा संख्या त्यन्ता शदन्ता वास्ति। तेन "कर्तरि कर्मव्यतिहारे करणमेधेभ्यः करणे विप्रतिषिद्धं चानधिकरणे"त्यादौ लौकिकक्रियाद्व्या-द्यवगतिः। तत्र कोभयगतिः, काकृत्रिमस्यैव, क कृत्रिमस्यैवेत्यत्र लक्ष्या-नुसारि व्याख्यानमेव शरणम्। अत एवाम्रेडितशब्देन कृत्रिमस्यैव ग्रहणं न तु द्विस्त्रिर्घुष्टमात्रस्य। स्पष्टं चेदं संख्यासंज्ञासूत्रे भाष्ये।

---

ननु निरुक्तरीत्या समानरूपत्वं सरूपत्वमिति लक्षणश्चेत्तर्हि समेषां रू-पाणां स्वापेक्षया समानत्वेनाव्यभिचार इति चेन्न? स्वविशिष्टत्वं स्वसरूपत्वम् वैशिष्ट्यञ्च स्ववृत्तिरूपवत्त्वसम्बन्धेनेति वर्णनेनाऽदोषात्।

नचैवमपि शुद्धघटशब्दसरूपत्वं नीलघटेऽपि स्यात्, शुद्धक्तप्रत्ययसरूप-त्वन्तव्यत्प्रत्ययेऽपि स्यादिति वाच्यम्? स्वविशिष्टत्वं स्वसरूपत्वम् स्वपर्य्याप्त-श्रावणप्रत्यक्षविषयतावच्छेदकधर्मपर्य्याप्त्यधिकरणत्वसम्बन्धेनेति पर्याप्तिनिवे-शात्। परिभाषास्वीकारपक्षे तु स्वघटकवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्म-वद्घटितत्वस्वघटकाऽवृत्त्यनुबन्धाऽवृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मवद्घ-टितत्वमित्युभयसम्बन्धेन। अत एव सरो रसः राज जरा नदी दीनः माला लामेत्यादिषु न परस्परवैशिष्ट्यम्।

संज्ञाप्रक्रमात्तद्विषयिणीम्परिभाषामवतारयति ननु संख्याग्रहण इति। अवतरणेऽभिधापदेन तात्पर्यमेव गृह्यते नतु शक्तिः!प्रकरणेन शक्तिसङ्कोचे माना-ऽभावात्। शाब्दिकमते स्वरूपयोग्यतारूपबोधजनकतारूपा शक्तिः, ईश्वरेच्छा-रूपा नैयायिकमते। सम्बन्धान्तरमेव शक्तिरिति मीमांसकमते। सर्वमते तस्या नित्यतया तन्नियामकत्वाऽसम्भवात्। इह शास्त्र इति—सप्तम्यर्थोऽवच्छेदक-त्वम्, तेन कचित्कृत्रिमस्यैव कचिदकृत्रिमस्यैव कचिदुभयोश्च ग्रहणं सिद्धयति।

ननु कृत्रिमशब्दस्य कृतिप्रयोज्योत्पत्त्याश्रय एवार्थः। कृत्या निर्वृतं कृत्रि-ममिति विग्रहात्। सच संज्ञैव नतु संज्ञीति चेन्न? शब्दार्थयोस्तादात्म्येनैता-दृशव्यवहारबलीयस्त्वात्।

न हि त्यन्तेति—नच कतीत्यत्र कृत्रिमाया अपि त्यन्तायास्सम्भवेनायुक्तो-ऽयं ग्रन्थ इति वाच्यम्? नहि कृत्रिमा संख्येत्यस्यार्थवत्त्यन्तेत्यर्थःकतीत्यत्रैक-

देशत्वेन अनर्थकत्वात् मूलसङ्गतेः । नच तिग्रहणसामर्थ्यादर्थवत्परिभाषाबाध एवाऽस्त्विति तिग्रहणं सार्थकमिति वाच्यम् ? तिपदजन्योपस्थितिकाले एवार्थवत्परिभाषयाऽर्थवत्तिग्रहणे पश्चाच्छाब्दबोधे संख्येत्यनेनान्वयेऽर्थवत्त्यन्तसंख्याया असम्भवेन जातसंस्कारन्यायेन परिभाषाज्ञापनस्यैवौचित्यात् । किञ्च भाष्ये विंशतिरित्यत्रापि विन्नादेशशतिप्रत्ययस्योक्ततयाऽर्थवत्परिभाषाया असम्भवादेवाऽप्रवृत्तिरित्याशयेनाह शदन्ताया इति । कृत्रिमाकृत्रिमयोश्शास्त्रप्रसिद्धलोकप्रसिद्धयोरर्थयोः कृत्रिमे शास्त्रप्रसिद्धेऽर्थे कार्य्यम्भवति । अङ्गाधिकारेऽङ्गपदेन "यस्मात्प्रत्ययविधिरि" तिविहिताङ्गस्यैव ग्रहणन्नतु शरीरावयवानाम् लोकप्रसिद्धानाम् इति न्यायार्थः ।

न्यायरूप एव परिभाषाऽकारो नतूभयगतिरिह भवतीति परिभाषाकारः ।

इह खण्डनप्रकारः प्रदर्श्यते ।

नचोभयगतिरिह भवतीत्युक्त्वा लौकिकक्रियाद्रव्याद्यवगतिरिति फलकथनमयुक्तम् । तथा तत्राभावात् , संख्याग्रहणस्थले च तथा फलम्वक्तुं युक्तमिति वाच्यम् ? उभयगतिरित्यस्योभयोः कृत्रिमाकृत्रिमयोर्विषयभेदेनैकत्र विषये च गतिग्रहणमित्यर्थेन त्रितयलाभसम्भवात् । एवम्विशिष्टयोजनया ग्रन्थयोजनापेक्षया कृत्रिमाकृत्रिमयोः कृत्रिमे कार्य्यसम्प्रत्यय इत्येव भाष्योक्तप्रकारो न्यायानिति ।

विधित्वे सम्भवति नियमत्वायोगादिति—अयमपि ग्रन्थोऽयुक्त इव भाति । शास्त्रप्रयुक्तशब्दार्थजिज्ञासायामिदं परशास्त्रप्रसिद्धार्थस्यैव शीघ्रोपस्थितिकत्वेन प्रवर्त्तकन्तेनैवाकाङ्क्षाशान्तिरिति लोकप्रसिद्धार्थस्य स्वत एव निवृत्त्या नियमत्वसम्भवात् । गौरित्युक्ते सर्वे सन्देहा निवर्त्तन्ते नाश्वो न गर्दभ इतिलक्षणप्रतिपदोक्तयोःप्रतिपदोक्तस्यैव शीघ्रोपस्थितिकत्वान्नि(१)यमवत् । अत एव संख्यासंज्ञासूत्रे अर्थात्प्रकरणाद्वा लोके कृत्रिमाकृत्रिमयोःकृत्रिमे कार्य्यसम्प्रत्यय इति आतश्चार्थात्प्रकरणाद्वा अङ्ग हि भवान् ग्राम्यं पांशुलपादमप्रकरणज्ञमागतं ब्रवीतु गोपालकमानय कटजकमानय उभयगतिस्तस्य भवति साधीयो वा यष्टिहस्तं गमिष्यति । कृत्रिममात्रग्रहणं दूषयित्वा कृत्रिमस्यैव ग्रहणमिति ज्ञापनाय यथैवह्यर्थात्प्रकरणाद्वा कृत्रिमे कार्यसम्प्रत्ययो भवति

---

( १ ) अगृहीतशक्तिग्राहकत्वमेव चात्र विधित्वम्मूले ध्वननाव ।

अनेकाल्शिदितिसूत्रे अल्विशिष्टत्वमनुबन्धत्वम् । वैशिष्ट्यञ्च स्वघटितत्व स्वेतरो योऽनुबन्धभिन्नोऽल् तद्घटितत्वमित्युभयसम्बन्धेन । शिद्ग्रहणं जसश्शीत्यादौ विशेषणार्थमिति न तद्वैयर्थ्यशङ्का ।

इति अनूक्तानुबन्धत्वपरिष्कारऽपरिभाषायां सत्यामिति निष्कर्षः ।

एज्विशिष्टत्वमेजन्तत्वम् वैशिष्ट्यञ्च स्वघटितत्व स्वोच्चारणक्षणध्वंसाधिकरणक्षणवृत्त्यल्घटितत्वमित्युभयसम्बन्धेन समन्वयस्स्वयमूहनीयः ।

यत्तु संज्ञाशास्त्राणां मच्छास्त्रेऽनेन शब्देनैव एवेति नियमार्थत्वं कृत्रिमाकृत्रिमन्यायबीजमिति, तन्न ? तेषामगृहीतशक्तिग्राहकत्वेन विधित्वे सम्भवति नियमत्वायोगात् । सर्वे सर्वार्थवाचका इत्यभ्युपगमोपि योगिदृष्ट्या, विशिष्य सर्वशब्दार्थज्ञानस्याशक्यत्वात्सामान्यज्ञानं तु न बोधोपयोगीत्यन्यत्र निरूपितम् ॥ ६ ॥

---

जानातिह्यसौ बह्वादीनामियं संज्ञा कृतेति हेतुरुक्तः। संज्ञासूत्रप्रयोजनजिज्ञासायामनन्यार्थसंज्ञासूत्रेणैव शक्तिग्रहौचित्यम् । अत एव संख्यासंज्ञायां संख्याग्रहणं संख्यासम्प्रत्ययार्थमितरथा ह्यसम्प्रत्ययो यथा लोके इति कथनमप्यनुकूलम् । व्यवहाराय नियमस्संज्ञायास्संज्ञिनि क्वचिदिति वाक्यम् । सर्वार्थाभिधानशक्तियुक्तश्शब्दो यदा विशिष्टेऽर्थेऽभिधीयते अर्थात्सम्व्यवहाराय नियम्यते तदा तत्रैव प्रतीतिञ्जनयति नान्यत्रेति ग्रन्थेन शास्त्रे यश्शब्दो यस्मिन्नर्थे संज्ञात्वेन विनियुक्तस्स शब्दस्तमेवार्थम्बोधयतीति न्यायसिद्धत्वोपादानम् ।

यत्तु भाष्ये न यथा लोके तथा व्याकरणे उभयगतिरिह भवति, यच्च कैयटे संख्याशब्दो हि बह्वादिप्रतिपादनाय संज्ञात्वेन विनियुक्तो नत्वेकादिसंख्यानिरासायेति तदुभयम्प्रौढिवादमात्रम् । अत एव कैयटेन कर्त्तरि कर्मव्यतिहार इत्यत्र लौकिककर्मग्रहणे धातोःकर्मव्यतिहारे वृत्त्यनुपपत्तिरूपहेतूपादानम् "कर्मणा यमभिप्रैती"तिसूत्रभाष्येऽप्येवमेव । तथाचासति बाधके कृत्रिमस्यैव ग्रहणम् , यत्र च प्रमाणान्तरवशेनार्थान्तरेऽपि तात्पर्य्यनिर्णयोऽर्थान्तर एव वा, तत्र लोकवदेवार्थान्तरग्रहणम् । यत्र तु तादृशबाधकाऽभावस्तत्र कृत्रिमस्यैव ग्रहणमिति । तथाच कृत्रिमाऽकृत्रिमयोःकृत्रिमे कार्य्यसम्प्रत्यय इत्येव परिभाषाऽकार इत्यलमप्रस्तुतजल्पनेन ।

सर्वे सर्वार्थवाचका इति—योगिनां हि योगजलक्षणसन्निकर्षवशादतीतानागतयावदर्थविषयकज्ञानसम्भवेऽपि अस्मदादीनां न तावदर्थज्ञानमिति कथं साम्यम् । अर्थत्वेन रूपेण न ज्ञानम्बोधजनकमर्थाद्विशेषरूपेणार्थबोधजनकन्न भवतीति । ययोर्द्धर्मिणोर्यद्धर्मपुरस्कारेण सम्बन्धग्रहस्तदेकतरधर्मिज्ञानेऽपरतद्धर्मविशिष्टस्यैवोपस्थितिरिति नियमोऽन्यथा द्रव्यत्वप्रकारकशक्तिज्ञानेन घटत्वप्रकारकशाब्दबोधाऽपत्तेरिति दिक् ।

संज्ञाप्रकरणादित्संज्ञाविशेषविषयिणीम्परिभाषामाह(१)नन्वध्येतेति—सिं·

---

(१) कार्यमनुभवन्निति:—

कार्यमस्त्यस्येति विग्रहेऽत इनि ठनाविती निः । अतएवतत्कार्यकर्मकानुभवकर्तृत्वविशिष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वमिति फलति । निमित्तत्वेनेति कर्त्तरि

नन्वध्येता शयितेत्यादाविङ्शीङोर्ङित्वाद् गुणनिषेधः स्यादत आह—

**कार्यमनुभवन् हि कार्यी निमित्ततया नाश्रीयते ॥ १० ॥**

स्थण्डिलाच्छयितरि इति निर्देशश्चास्यां ज्ञापकः । ऊर्णुनविषती-त्यादिसिद्धये कार्यमनुभवन्निति । अत्र हि द्विर्वचनेचीति नुशब्दस्य द्वित्वम् । अन्यथा सन्यङोरित्यस्य षष्ठ्यन्तत्वात्सन्नन्तस्य कार्यित्वेनेसो द्वित्वनिमित्तत्वाभावात्तत्प्रवृत्तिर्न स्यात् ।

वस्तुतः समवायिकारणनिमित्तकारणयोर्भेदस्य सकललोकतन्त्रप्र-सिद्धतया तस्य तत्त्वेनानाश्रयणाभावेन नैषा ज्ञापकसाध्या । अत एव हिः प्रयुक्तः । स हि तत्त्वेनानाश्रयणे हेतोः प्रसिद्धत्वं द्योतयतीति तत्त्व-म् । द्विर्वचनेऽचीत्यत्र भाष्ये ध्वनितैषा ॥ १० ॥

---

हावलोकनन्यायेनेत्संज्ञकविशेषोद्देश्यकविधौ विचारो ज्यायानिति तात्पर्यन्ध्व-नयन्नप्याह नन्वध्येतेति—शयितेति तृजन्तन्नतु क्तान्तमन्यथा "निष्ठा शीङि"-तिसूत्रे शीङ्ग्रहणम्व्यर्थं स्यादिति केषाञ्चिद्विप्रलाप एव । परिभाषाया असत्त्वे शीङ्ग्रहणवैयर्थ्यापत्तिरूपदोषस्याऽप्यवतरणाङ्गत्वात् । आदिना शयितेत्यादिसं-ग्रहः । ङित्वाद् गुणनिषेध इतिक्ङितीत्यत्र सत्सप्तम्या आश्रयणादिति भावः ।

---

तृतीया । आश्रीयत इति कर्मणि लकारः । निमित्तत्वं कर्तृ कार्यिणन्नाश्रयतीति निमित्तत्वेन कर्त्रा नहि कार्यी आश्रीयत इति विनिगमनाविरहाद् वैपरीत्यमपि । निमित्तमपि कार्यित्वेन नाश्रीयते । कार्यित्वं कर्तृ निमित्तन्नाश्रयतीति निमित्तं कार्यि-त्वेन नाश्रीयत इति ।

शास्त्रे हि उद्देश्यदलम्, विधेयदलम्, निमित्तदलञ्चेति त्रय ऽ प्रकाराः । तत्र सा-क्षादुद्देश्यदलीया वर्णा निमित्तदलन्न गच्छन्तीति । एवन्निमित्तदलीया वर्णा उद्देश्य-दलीयकार्य्यन्न वहन्तीति फलितार्थः । कार्य्यीत्यत्रापि तद्धितीयेनिप्रत्ययः । निमित्तत्व-मित्यत्र च तद्धितीयस्त्वप्रत्यय इति नार्थवैगुण्यम् । निमित्तत्वधर्मावच्छिन्नविषय-ताश्रयीभूत ऽ कार्य्यी न भवति, कार्यित्वधर्मावच्छिन्नविषयताश्रयीभूतन्निमित्तन्न भवतीति विस्पष्टविवरणम् ।

कार्यमनुभवन्नितिपरिभाषायाश्शाब्दबोधः, कार्यमिति कर्मसंज्ञकद्वितीयान्तम्प-दम्, कार्यशब्दश्शब्दशास्त्रीयसङ्केतानुसारेण विहितकार्यत्वावच्छिन्नार्थकः, तदुत्तरव-र्त्यम्प्रत्ययस्य वृत्तित्वं विषयता वाऽर्थः, फलाश्रयत्वञ्च कर्मत्वम् । अनन्यलभ्यो हि शब्दार्थ इति न्यायात् फलस्यापि धातुलभ्यत्वेनाश्रयमात्रं द्वितीयार्थः । अनुपूर्व-कभूधातोर्ज्ञानमर्थः, पदार्थमनुभवामीति प्रतीतेः । तदुत्तरवर्त्तिशतुस्समानाधिकरणकर्त्तृ-रूपोऽर्थः, कार्यिशब्दः कार्यस्वामिरूपार्थकः । हिशब्दो निश्चयार्थकः, निमित्तशब्दः कारणत्वावच्छिन्नार्थकः, निमित्तत्वं धर्मः, निमित्तं धर्मि, नशब्दो निषेधार्थकः, आङ्

नच शास्त्रे निमित्तत्वञ्च सप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयत्वमेवेति प्रकृते षष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वेन निषेधाऽप्रवृत्त्या कथमवतरणमिति वाच्यम् ? "क्ङिति चे"तशास्त्रे तन्निमित्तग्रहणं कर्त्तव्यमिति वार्त्तिकन्तत्र निमित्तपदेन यत्किञ्चित्पदप्रयोज्यविषयताश्रयस्योद्देश्यस्याऽपि कारणमात्रग्रहणेन ग्रहणात् परिभाषास्वीकारे तु सप्तम्यन्तपञ्चम्यन्तान्यतरस्यैव निमित्तपदेन बोधनात्। सप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयत्वं निमित्तत्वम्। उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वं ङ्कार्यित्वमिति हि भेदः।

अयमभिप्रायः निमित्तपदं समवायिकारणनिमित्तकारणोभयपरम्, कारणत्वञ्च कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्याधिकरणवृत्तित्वमेव, तस्य च प्रकृतहकारे विद्यमानत्वान्निषेधस्स्यादिति शङ्कितुः। इयञ्च शङ्का निमित्तग्रहणमुपधा रोरवीत्यर्थमितिवार्त्तिकाभिप्रायेण।

---

पूर्वक श्रिञ् सेवायामिति धातुराश्रयरूपार्थकः, कर्मत्वम् वर्तमानत्वञ्च तदर्थः, निमित्तत्वेनेति तृतीयायाः प्रयोजकत्वमर्थः। कार्यीत्यत्र कार्यशब्दा "दृत इनिठनावि"त्यस्त्यर्थे इनिः। निमित्तत्वपदार्थस्य स्वरूपसम्बन्धेन तृतीयार्थप्रयोजकत्वेऽन्वयः, तस्य च निरूपितत्वसम्बन्धेनाश्रयार्थकधात्वर्थेऽन्वयः, तस्य च प्रतियोगित्वसम्बन्धेन नञर्थाभावेऽन्वयः, तस्य चाभेदसम्बन्धेन मतुबर्थाश्रयेऽन्वयः, कार्यपदार्थस्य विषयितासम्बन्धेन वा अनुभवधात्वर्थेऽन्वयः, तस्या हि आश्रयत्वसम्बन्धेन कर्त्तर्यन्वयः, तस्य च वृत्तित्वसम्बन्धेन क्रियायामन्वयः, अभेदसम्बन्धेन तस्यैव कार्यिपदार्थेऽन्वयः। तथाच वैयाकरणमते स्वरूपसम्बन्धावच्छिन्ना निमित्तत्वनिष्ठा या निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना निमित्तत्वावच्छिन्ना निमित्तत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या तृतीयार्थप्रयोजकत्वावच्छिन्ना प्रयोजकत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या निरूपितत्वसम्बन्धावच्छिन्ना प्रयोजकत्वावच्छिन्ना प्रयोजकत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽश्रयत्वावच्छिन्नाऽश्रयनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या प्रतियोगित्वसम्बन्धावच्छिन्नाऽश्रयत्वावच्छिन्नाऽश्रयनिष्ठाप्रकारता तादृशप्रकारतानिरूपिता या नञर्थाभावत्वावच्छिन्नाऽभावनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा या स्वरूपसम्बन्धावच्छिन्नाऽभावत्वावच्छिन्नाभावनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता तथा निरूपकत्वसम्बन्धावच्छिन्ना कार्यत्वनिष्ठा निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना कार्यत्वावच्छिन्ना कार्यनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या धात्वर्थज्ञानत्वावच्छिन्ना ज्ञाननिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा याऽभेदसम्बन्धावच्छिन्ना ज्ञानत्वावच्छिन्ना ज्ञाननिष्ठा प्रका-

अत्र प्रसङ्गात् केचित्—निमित्तकारणनाशेऽपि कार्यनाशस्तथाहि वातपित्त-श्लेष्मादयो दोषा ज्वरादिव्याध्युत्पत्तौ निमित्तकारणम् । दोषेषु दोषान्यतमेषु नष्टेषु निमित्तकारणेषु ज्वरादिव्याधिरूपं कार्य्यन्नष्टम्भवतीति समुदाहरणम् ।

नचात्रैवं संघटनेऽपि लोके कुत्रापि निमित्तकारणनाशे कार्यनाशो न दृष्टि-पथमायाति । कुलाले तज्जनके वा नष्टे घटो न नश्यत्येवं तन्तुवाये नष्टे न पटो नश्यति । तथाच कथमियं व्याप्तिरिति वाच्यम् ? यावन्निमित्तकारणस्थायिका-र्यमर्थाद् यावन्निमित्तकारणन्तिष्ठति तावदेव कार्य्यमपि तिष्ठति । यदा निमि-त्तकारणन्नश्यति तदैव कार्यमपि नश्यति । तत्रैव कार्यमपि नश्यति । तत्रैव निमित्तकारणनाशे कार्यनाश इत्यभिप्रायात् । उदाहरणञ्च यथा तैलनाशे दीप-नाश इति ।

अत्र सरयूपारीणशुक्लाः, दीपं प्रति तैलस्य यथा निमित्तकारणत्वन्तथैव वर्त्तिकाया अपि, वर्त्तिकानाशेऽपि दीपनाशः, मृन्मयदीपनाशे लालटेननाशेऽपि दीपनाशः, अग्निसंयोजकनाशे तदनुपस्थितौ वा कारणान्तरसत्त्वेऽपि दीपना-श इति कारणकूटेऽपि तथा निमित्तत्त्वमस्तीति सर्वत्र साम्यान्न निमित्तकारण-नाशे कार्यनाश इति ।

किञ्च न केवलतैले निमित्तकारणता किन्तु सूक्ष्मतया तदन्तःप्रविष्टा समवायिकारणताऽपीति । तथाच तैलदृष्टान्तेन लेखोऽसङ्गतः ।

नच चिकित्साशास्त्रानुसारेण व्याधिदोषयोर्निमित्तकार्ययोःपूर्वोक्तयोस्सं-घटने सुघटमेवेति कथमेतदिति वाच्यम् ? व्याधौ नष्टेऽपि सूक्ष्मतया वातादी-नाम्विद्यमानत्वात् । नहि दोषपदवाच्या वातादयोऽत्यन्ताभावम्भजन्ते । तथाच न निमित्तकारणनाशे कार्यनाश इत्येव तर्कशास्त्रीयव्यवस्था सयुक्तिकेति सम्वदन्ति ।

अत्रैव प्रसङ्गात्सामान्यकारणत्वम्विचार्य्यते—

अन्यथासिद्धिशून्यत्वे सति नियतपूर्ववर्त्तित्वमिति ।

नन्वत्र लक्षणेऽन्यथासिद्धित्वस्यानुगतरूपेण ज्ञानाभावात्कथं लक्षणसि-

रता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नै कत्वत्वनि-ष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधि-करणा या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृपदार्थनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना कार्यित्वावच्छिन्ना कार्य्यित्व-निष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्नकार्यिनिष्ठ-विशेष्यता साच पूर्वोक्ताभावत्वावच्छिन्नप्रकारतानिरूपिता इति तादृशविशेष्यत्वा-भिन्नःकार्य्यीति शाब्दबोधः ।

अत्रैव प्रसङ्गादुद्देश्यत्वम्विधेयत्वञ्च विचार्यते ।

द्धिरिति चेन्न ? नियतपूर्ववर्त्तिवृत्तिदण्डत्वादिभेदकूटवत्त्वे सति घटनियतपूर्ववर्त्तित्वं घटकारणत्वम् । अनियतपूर्ववर्त्तिपटादिवारणाय विशेष्यदलम् । नच विशेषणकोटौ पटादिभिन्नत्वे सतीत्यस्य निवेशो, गौरवात् ।

अत्र नियतपूर्ववर्त्तित्वञ्च कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्यसमानाधिकरणात्यन्ताभावप्रतियोगितानवच्छेदकधर्मवत्त्वम् । दण्डत्वादिवारणाय सत्यन्तनिवेशः ।

अत्र वयम्—

ननु कार्यप्राक्क्षणे कार्याऽसत्त्वेन तदानीं कार्याधिकरणत्वस्य कथंकारं सम्भवः, कार्यकारणयोरेककालावच्छेदेनैकाधिकरणकारणज्ञानवृत्तित्वाभावात् यावत्कार्यज्ञानन्न भवेत् तावत्कारणज्ञानन्न स्यात् यावच्च कारणज्ञानन्न भवति तावत्कार्यज्ञानन्न भवति इति परस्परापेक्षत्वात् ।

नच कार्यकारणयोस्साक्षात्सम्बन्धाभावेऽपि परम्परासम्बन्धेन कथञ्चित्कार्याऽसत्त्वकालेऽपि कार्यवत्त्वाङ्गीकारेणैकाधिकरणवृत्तित्वात्कारणत्वलक्षणं युक्तमेवेति वाच्यम् ? परम्परासम्बन्धेन कार्यवत्त्वमित्यत्रापि कारणत्वज्ञानमन्तरा सिद्धिर्न भवेत्, भक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायात् । परम्परासम्बन्धस्वीकारेऽपि कार्यकारणयोरैक्याभावेन लक्षणे महाप्रलयस्य दुर्वारत्वात् ।

किञ्च उक्तकारणत्वलक्षणात् प्राक् एवं किञ्चिदस्तीत्यवगम्यते, तदुत्पत्तिस्तु कुतो न ज्ञायते, तदुत्पत्तिप्रयोजकत्वादिकं किञ्चिद् विलक्षणमङ्गीकार्यं स्यात्तर्हि विलक्षणं कीदृशम् विलक्षणे विलक्षणम् कीदृशमित्यनवस्थैव स्यात् एवम्विचारे प्रचलिते इत्थम् । कल्पितं कार्यकारणयोरेकाधिकरणत्वमाश्रित्य लक्षणसंघटने कथञ्चिद् विवादराहित्यम् । ननु तद्विषयकशाब्दानुकूलशक्तिमत्त्वेन पदार्थज्ञाने जाते पदानां कारणत्वसिद्धौ भाविभूतपदज्ञानाच्छाब्दबोधो न स्यात् तयोश्शाब्दबोधाऽव्यवहितप्राक्क्षणावच्छेदेनावर्त्तमानत्वात् कारणस्य च कार्याव्यवहितप्राक्क्षणवृत्तित्वस्योक्तत्वात् इति चेन्न ? केषाञ्चिन्मते पदानां नित्यत्वात् । नच शाब्दधाराप्रसङ्गः ? ज्ञानविषयतापन्नशक्तिमत्त्वेन पदानां हेतुत्वात् ।

नच शब्दस्याकाशगुणत्वाच्छाब्दबोधकारणत्वं कथमिति वाच्यम् ? कालिकविशेषणतया कार्यकारणभावाऽभ्युपगमेन कार्यकारणयोस्सामानाधिकरण्यसम्भवात् । पुरुषान्तरीयज्ञानेन पुरुषान्तरस्य शाब्दबोधस्तु न भवति ? तत्तत्पुरुषीयत्वस्य तत्र तत्र निवेशादिति ।

स्थण्डिलाच्छयितरीतिनिर्देश इति—नच "निष्ठा शीङि"ति सूत्रेण शीङः परीभूतनिष्ठासंज्ञकप्रत्ययस्याऽकित्त्वविधानेन शीङो ङित्त्वस्य गुणनि-

षेधकत्वन्नास्तीति कथं ग्रन्थसङ्गतिरिति वाच्यम् ? "गोरध्ययने वृत्तमि"ति निर्देशस्याऽपि ज्ञापकत्वात् ।

किञ्च "निष्ठा शीङि"ति अकित्त्वविधानमपि परिभाषायाम्प्रमाणमिति सूक्ष्मवेत्तारः ।

कार्यमनुभवन्नित्यस्य साक्षादवयवद्वारा वा कार्यानुभवकर्तृत्ववानित्यर्थः । निर्देशश्चेति—"शीङस्सार्वधातुके गुण"इत्यत्र शीङ उद्देश्यतयोपादानेन निमित्तत्वानाश्रयणाद् गुणनिषेधस्स्यादिति तत्त्वम् । निर्देशश्चेत्यत्र चशब्देन "निष्ठा शीङि"ति सूत्रस्थशीङः कुटादिगणे कुङ्धातुपाठस्य "पूङः क्त्वा-चे"त्यस्य च संग्रहो बोध्यः । कार्यीति—कार्यनिष्ठविधेयता(१)निरूपितोद्दे-श्यताश्रयो निमित्ततया गृह्यत इति फलति । उद्देश्यत्वम् विधेयतया साक्षान्नि-रूपितविषयताश्रयत्वम् । विधेयत्वञ्च अपूर्वज्ञानीयविषयताश्रयत्वम् । अत एव परिभाषाऽसत्त्वदशायामूर्णुनविषतीत्यादौ "सन्यङो"रितिषष्ठ्यन्तपदप्रयो-ज्यविषयताश्रयस्याऽपीसेकारस्य निमित्तत्वमाश्रित्य "द्विर्वचनेऽची"त्यस्य प्रवृ-त्तिरुपपादिता । अनन्तरम्परिभाषया समाधानमित्यन्यदेतत् ।

ननु निमित्तपदेन सप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताश्रयस्यैव ग्र-हणमिति सिद्धान्ते सप्तम्यन्तपदस्योदाहरणानि शास्त्रे प्रसिद्धान्येव । पञ्चम्य-न्तपदप्रयोज्यविषयतायाः कुत्र फलमिति प्रश्ने प्रमाणसहितमुत्तरम्मृग्यम् ।

अथ शास्त्रार्थप्रकारः ।

ननु "क्ङिति चेति"सूत्रप्रवृत्तिप्रयोजकगित्प्रत्ययसाहचर्यान्ङिदपि तादृगे-

---

(१) यदि विधेयतानिरूपितत्वमुद्देश्यत्त्वन्तदोद्देश्यतानिरूपितत्त्वम्विधेयत्त्व-मिति परस्परापेक्षत्त्वेनान्योन्याश्रयापत्तिः । नच विशेष्यतावच्छेदकताभिन्नमुख्यवि-शेष्यतानिरूपितप्रकारत्त्वम्विधेयत्त्वं पर्वतो वह्निमान् पर्वते वह्निरित्त्यादौ पर्वते उद्देश्य-त्त्वम्वह्नौ विधेयत्त्वमिति वाच्यम् ? तावताऽप्यन्योन्याश्रयस्य परिहर्त्तुमशक्यत्त्वात् । अथोत्तरम्—विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । एवञ्च विषयताविशेषत्त्वमुद्देश्यत्त्वम्विषयताविशेषत्त्वम्विधेयत्त्वमिति लक्षणात् ।

नचोद्देश्यपदार्थे विशेष्यतासम्बन्धो विधेयपदार्थे प्रकारतासम्बन्धः "इको यण-चो"त्त्यत्रोद्देश्येकपदार्थे विशेष्यतासम्बन्धो विधेये यण्पदार्थे प्रकारतासम्बन्ध इति स्वीकारे पर्वतो वह्निमानित्त्यादिषु निर्वाहेऽपि सर्वेषु घटेषु रूपम् पर्वते वह्निरित्त्यादौ विधेयरूपस्य प्रथमान्तत्त्वेन तस्यैव विधेयत्त्वात्तत्र न प्रकारत्त्वमपि तु विशेष्यत्त्वमिति उद्देश्ये पर्वते प्रकारत्त्वं विधेये वह्नौ विशेष्यत्त्वमिति कथमुद्देश्यत्वविधेयत्त्वलक्षणं सुगतमिति वाच्यम् ? उद्देश्यविधेययोरेव विशेष्यत्वम्विशेषणत्वञ्चेति न सार्वजनीनो नियमः किन्तु विशेष्यविशेषणभावयोरन्वयव्यतिरेकसहचारगम्यत्त्वात् । इतोऽधिक-शास्त्रार्थोऽस्मत्पितृकृतपरिष्कारदर्पणे द्रष्टव्यः ।

वेति मूलोक्तत्रावतरणमिति चेन्न ? सुनोतीत्यादौ ङित्प्रत्ययस्यैव सत्त्वेन तत्र निषेधार्थम्परिभाषावतार इति समाधानात् । हस्तयते कामयते इत्यत्र "कमेर्णिङ्"इतिङित्प्रत्ययस्याऽपि विद्यमानत्वेन साहचर्य्याश्रयणेऽपि दोषजागरूकत्वाच्च । नच ङित्पर्य्याप्तनिमित्तताकत्वं गुणे नास्तीति कथन्निषेधप्रवृत्तिरितिवाच्यम् ? अरिरिषतीत्याद्यर्थं परिभाषास्वीकारात् । तथाहि सन्प्रत्यये "स्मिपूङ्रञ्ज्वशां सनि"इतीडागमे परिभाषयेसो द्वित्वनिमित्तत्वाभावेन द्विर्वचनेऽचीत्यस्याऽप्रवृत्त्या परत्वाद् गुणे रिसित्यस्य द्वित्वेऽरिरिषतीति रूपम् परिभाषाऽभावेतु "द्विर्वचने" इतिप्रवृत्त्या गुणात्पूर्वन्द्वित्वे रूपासिद्धेः ।

नच द्वित्वनिमित्ततापर्य्याप्त्यनधिकरणाजिनिमित्तककार्यस्यैव तेन निषेधाऽप्रवृत्त्या न दोष इति वाच्यम ? चक्रतुरित्यादौ अकारस्य द्वित्वनिमित्ततापर्य्याप्त्यनधिकरणत्वेन निषेधाप्रवृत्त्या परत्वाद्यणि द्वित्वाऽसिद्ध्यापत्तिरिति दोषात् । नच द्वित्वनिमित्तताश्रयाच्पर्य्याप्तनिमित्तताककार्यस्यैव निषेध इति न चक्रतुरितिदोष इति वाच्यम् ? जग्मतुरित्यादावुपधालोपीयनिमित्तताऽतुसि पर्य्याप्ता न त्वाकारे इति निषेधाऽप्रवृत्त्या प्रथममुपधालोपे रूपासिद्धेः । नच अजादौ क्ङिति लोप इत्यर्थेनाच्त्वावच्छिन्ननिमित्ततायाः अच्पर्य्याप्तत्वात् निषेधप्रवृत्तिसम्भवेन न दोष इति वाच्यम् ? दुद्यूषतीत्यस्यव परिभाषाफलत्वात् "हलन्ताच्चे"तिसनःकित्वेन परत्वात्पूर्वं वकारस्योठि द्वित्वयणोः प्राप्तयोः परत्वादन्तरङ्गत्वाच्च यणि द्यूशब्दस्य द्वित्वे दुद्यूषतीति रूपम् ।

परिभाषाया अभावे न सिद्ध्येदित्यभिधानात् । नच प्रत्ययइति वक्तव्यमितिद्विर्वचनेऽचीतिभाष्यम् तथाच द्वित्वनिमित्ततापर्य्याप्तचधिकरणप्रत्ययघटकाच्पर्य्याप्तनिमित्तताकादेशो नेति सूत्रार्थे उकारस्य प्रत्ययघटकत्वाभावान्निषेधाप्रवृत्त्या रूपसिद्धिस्स्यादेवेति वाच्यम् ? भवनमिच्छति भवनीयति भवनीयितुमिच्छति विभवनीयिषतीत्यादौ प्रत्ययघटकाचस्सत्त्वान निषेधप्रवृत्त्याऽभ्यासे इकारश्रवणापत्तेः । यद्यत्र यण्स्यात्तर्हि उकारस्यापि कार्यित्वेनास्याऽप्रवृत्तिस्स्यादित्युपसञ्जनिष्यमाणन्यायेन तस्य द्वित्वनिमित्तग्रहणेनाग्रहणाच्च । नच द्वित्वनिमित्तत्वम्प्रत्ययघटकत्वंचेति विशेषणद्वयनिवेशात् द्वित्वनिमित्ततापर्य्याप्त्यधिकरणप्रत्ययघटकाच्पर्य्याप्तनिमित्तताकादेशो नेत्यर्थे फलाभावात् द्विर्वचन इतिप्रत्ययविशेषणमिति भाष्यात् इति वाच्यम् ? अध्यजीगपदित्यस्यापि अफलत्वात् । द्वित्वनिमित्ततापर्य्याप्त्यत्यधिकरणप्रत्ययघटकाज्विशिष्टकार्येनेति सूत्रार्थः । वैशिष्टयञ्च (१)स्वपर्य्याप्तनिमित्तताकत्व स्वाव्यवहितपूर्वपर्य्याप्तिनिमित्तत्वाऽ-

(१) पूर्वम् परिभाषाया अभावे अध्यजीगपदित्यत्र दोषो दत्तस्तदुद्धाराय प्रयतते वैशिष्टयञ्चेति । एवम् द्वित्वनिमित्तता पर्याप्तिसम्बन्धेन चङ्प्रत्यये यतो द्वि-

निरूपकत्वोभयसम्बन्धेन । अत्र द्वित्वनिमित्ततापर्याप्त्यधिकरणप्रत्ययघटको-ऽचकोऽकारस्तद्विशिष्टत्वञ्च चङादेशस्य, स्वपर्याप्तनिमित्तताकत्वेऽपि स्वाव्यवहितपूर्वणिच्निष्ठनिमित्तताकत्वात् लक्षणाऽसंघटनेनाऽदोषादिदमपि परिभाषाया न फलम् ।

केचित्तु परसप्तम्याश्रयणे दण्डिशब्दादाचारक्विबन्ताद्वनिपि नलोपस्याऽसिद्धतयोपधासंज्ञायां लघूपधगुणे दण्डेवन्शब्दाण्णौ कर्त्तरि क्विपि निषेधाश्च बलीयांस इति पूर्वं गुणाभावे क्विब्निमित्तकनिषेधापत्तिरित्याहुस्तन्न ? लोपो-व्योरित्यस्यापि क्विविधित्त्वाणिणलोपस्य स्थानिवद्भावाऽभावाल्लोपो व्योरितिवलोपापत्तेः । दण्डिशब्दादाचारक्विबन्तात्तृचि दण्डेतृशब्दाण्णौ कर्तृक्विपि दण्डेतृशब्दादाचारक्विपि दण्डेततीत्यादौ गुणनिषेधापत्तिः । नलोपस्य संयोगसंज्ञायामसिद्धतया संयोगान्तलोपस्तु न प्रातिपदिकादाचारक्विपो विधानेन पदत्वाऽभावादित्यपि न, सिद्धान्तकल्पनया वारणसम्भवात् ।

सिंहावलोकनन्यायेनावशिष्टं किञ्चिद्विचार्य्यते—ननु "क्ङिति प्रतिषेधे तन्निमित्तग्रहणं कर्तव्यमि"ति वार्तिकन्न कार्यम्परसप्तम्याश्रयणमेवास्तु क्ङिदव्यवहितपूर्वत्वविशिष्टस्येको गुणवृद्धी न स्त इति सूत्रार्थात् । परिभाषापि न कार्या । भिन्नमित्यादौ तु न दोषः "त्रसिगृधिधृषिक्षिपेः क्नु"रिति कित्त्वविधानसामर्थ्यात् वर्णैकव्यवधानं गृह्यते । नच भवत इत्यादौ गुणनिषेधस्स्यादिति वाच्यम् ? ज्ञापकस्य सजातीयापेक्षत्वेन हल्वर्णव्यवधानस्यैव सहनीयत्वात् । नचाचैष्टामित्यादौ सकारव्यवधानसहनाद् वृद्धिनिषेधस्स्यादिति वाच्यम् ? साक्षाद्धातुघटकवर्णव्यवधानस्यैव सहनीयत्वात् ज्ञापकसाजात्यात् । नच गुतेत्यादौ ङानिमित्तकनिषेधो न स्यात् तकारस्य धात्वघटकत्वात् , एवमगुषीदित्यादावपि इति वाच्यम् ? ज्ञापकसाजात्यात् निषेधशास्त्रे स्वघटकसप्तम्यन्तपदप्रयोज्यविषयत्वाऽभावविशिष्टयन्निषेध्यशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयत्वं तदभाववान् यो वर्णस्तद्व्यवधानमेव सह्यत इति कुटादित्वाङ्डित्वे गुणनिषेध इति वर्णनात् क्षिपेः क्नुरिति ज्ञापकसाजात्यात्पुगन्तलघूपधसूत्र एव हल्वर्णव्यवधानस्य सहनीयत्वाच्चेति ।

केचित्तु कुटादौ कुङ्धातोः पाठात् "दीधीवेवीटामि"ति सूत्रसामर्थ्याच्च "निष्ठाशीङ्स्विदिमिदि"इति कित्त्वाऽभावविधानसामर्थ्याच्च प्रकृतिनिष्ठङित्त्वादिकमादाय सार्वधातुकार्धातुकप्रत्यययोर्गुणनिषेधो नेति कल्पने तु नावतरणम्

---

चङि जाते सत्येव "चङि" इति सूत्रेण द्वित्वम्भवति एवञ्च द्वित्वनिमित्ततापर्याप्त्यधिकरणं चङ्प्रत्ययस्तद्घटकोऽच् अकारस्तदीया पर्याप्तिसम्बन्धावच्छिन्ना निमित्तता यद्यप्यस्ति तथापि तादृशाजव्यवहितपूर्वत्वविशिष्टो यो णिच्प्रत्ययस्तन्निष्ठनिमित्ततानिरूपकत्वस्यैव सत्त्वेन द्वितीयसम्बन्धासङ्घटनात् ।

साधुतरन्नागेशीयम् । असति बाधके प्रमाणानां सामान्ये पक्षपात इतिन्यायेन क्त्त्वांशेऽपि निषेधविधानेन इक् स्मरणे अध्येतीत्यपि नावतरणम् । यद्यपि निरुक्तरीत्या परिभाषायाः फलन्नास्ति तथापि लोकानुरोधेन "नहि कार्यी निमित्ततयाश्रीयत" इति स्वीकार्य्यम् । लोके कार्यिणो निमित्तत्वेनाश्रयणन्न भवति निमित्तस्य च कार्यित्वेनाश्रयणन्न भवति इति लोकप्रत्यक्षप्रतीतिसिद्धो व्यवहारः । इतिशास्त्रार्थप्रकारः ।

अथ सावतरणपरीक्षालेखप्रकारः—

द्विर्वचनेऽचीत्यत्र द्विरुच्यतेऽनेनेति व्युत्पत्त्या द्विर्निमित्त इत्यर्थः । द्वित्वनिमित्तेऽचीति तदर्थः, द्वित्वनिमित्तताप(१)र्य्याप्त्यधिकरणेऽचि इति फलति ।

(१) ननु कोऽयम्पर्याप्तिपदार्थो यश्च भूरिशो वैयाकरणान् सन्तापयतीति चेच्छृणु ? अयमेको घटः इमौ द्वौ इति प्रतीतिसाक्षिकस्स्वरूपसम्बन्धविशेष एव न तु समवायाख्य इति । पूर्वत्र प्रतीतौ एकमात्रवृत्तिधर्मावच्छेदेन घटस्य पर्याप्तिः, द्वितीये चोभयवृत्तिधर्मावच्छेदेन द्वित्वस्य पर्याप्तिः । नचायमेक इत्यादिप्रतीतेः समवायेनैवोपपत्तौ तदर्थम् विलक्षणपर्य्याप्त्याख्यसम्बन्धस्वीकारो व्यर्थ इति वाच्यम् ? इदन्त्वावच्छिन्न एव घटत्वमेकत्वञ्च पर्याप्तमित्याद्यानुभविकप्रतीतेरेव तत्स्वीकारात् । एवमेव पर्याप्तिसम्बन्धानङ्गीकारे द्वौ घटः अयन्द्वौ इत्यादिप्रत्ययोऽप्यापद्येत । इत्थं घटत्ववत् अयं द्वित्ववानित्यादिप्रतीत्यनुरोधेन द्वित्वेदन्त्वादेरपि घटत्वद्वित्वादिसमवायावच्छेदकत्वस्यावश्यकत्वात । नचोक्तप्रतीतेर्द्वित्वेदन्त्वादिसामानाधिकरण्येन घटत्वद्वित्वादिसमवायावगाहित्वस्यैवाभ्युपगमेनोक्तरीत्याऽवच्छेदकत्वावगाहित्वमेवासिद्धमिति वाच्यम् ? शाखी संयोगवानित्यादिप्रतीतेःशाखादौ संयोगसमवायाद्यवच्छेदकत्वावगाहित्वेन तत्तुल्याया एतत्प्रतीतेरप्यवच्छेदकत्वस्यैवौचित्यात्, प्रतीतिमात्रस्यैव सामानाधिकरण्यावगाहित्वाभ्युपगमसम्भवेनावच्छेदकत्वावगाहिप्रतीतेरुच्छेदप्रसङ्गाच्च । नच समवायातिरिक्तपर्य्याप्तिस्वीकारेऽपि निरुक्तापत्तिर्दुर्वारा द्वित्वेदन्त्वादेर्घटत्वद्वित्वादिपर्याप्त्यवच्छेदकत्वे बाधकाभावादिति वाच्यम् ? घटत्वादिनिरूपितायास्तस्या एकमात्रवृत्तिधर्मावच्छिन्नत्वस्य, द्वित्वादिनिरूपितायाश्चोभयादिवृत्तिधर्मावच्छिन्नत्वस्यैव धर्मिग्राहकमानसिद्धत्वात । प्रत्येकघटव्यक्तिघटद्वयादिव्यक्तिस्वरूपायास्तस्याः द्वित्वेदन्त्वादेरतिप्रसक्ततया न्यूनवृत्तितया चावच्छेदकत्वासम्भवाच्च । नचोक्तप्रतीतेरापादकाभावः ? असंसर्गाग्रहादेरेवापादकत्वात । नचासंसर्गाग्रहादिसत्त्वे भ्रमात्मकताहशप्रतीताविष्टापत्तिरितिवाच्यम् ? तस्याःफलतःप्रमात्वस्यैवापाद्यत्वात् ।

केचित्तु—घटत्वमेकस्मिन् पर्याप्तम्, द्वित्वन्तु द्वयोरेव पर्याप्तमित्यादिप्रतीत्या घटत्वादिपर्याप्तेरेकमात्रवृत्तिधर्मावच्छिन्नाया द्वित्वादिपर्याप्तेरुभयवृत्तिधर्मावच्छिन्नत्वमात्राक्रान्तायाश्च सिद्धिरिति वदन्ति ।

परे तु—एकगोदानेन सहस्रगोदानजन्यफलस्यानुत्पादात् तत्कारणतावच्छेदकत-

नन्वेवमर्थे चक्रे इत्यादौ वारणे कृतेऽपि चक्रतुरित्यत्रातुसोऽकारस्य द्वित्वपर्याप्त्यधिकरणत्वाभावेन सूत्राऽप्रवृत्त्या द्वित्वात्परत्वाद्यणि रूपमनिष्टं स्यादिति वाच्यम् ? घटकत्वं सप्तम्यर्थो द्वित्वनिमित्ततापर्य्याप्त्यधिकरणघटकेऽचीति

---

याऽतिरिक्तपर्याप्तिसिद्धिः । प्रत्येकगोदानवृत्तिधर्मसहस्रस्य दण्डत्वचक्रत्वादिवत् कारणतावच्छेदकत्वकल्पनेऽतिगौरवादित्यामनन्ति ।

एतेन अयमेको घट इत्यादिप्रतीतेः समवायविषयकत्वेनैवोपपत्तौ घटत्वादेः पर्याप्त्याख्यस्वरूपसम्बन्धे मानाभावः । एको द्वावित्यादिप्रतीतिस्तु पर्याप्तिस्वीकारेऽपि दुर्वारा, प्रत्येकावृत्तिधर्मस्य समुदायावृत्तित्वनियमेन द्वित्वादिस्वरूपायास्तस्याः प्रत्येकमपि सत्त्वात, अतिरिक्तत्वे च मानाभावात् । अस्तु वा तादृशी प्रतीतिः एकत्वादौ द्वित्वाद्यवच्छेदकत्वाभावादेव वा न तादृशप्रतीतिः, एकत्वादिकं धर्मितावच्छेदकीकृत्य तादृशप्रतीतेरापादकाभावश्च ।

वस्तुतस्तु—समवायैक्यपक्षे यथा समवायो न वायौ रूपादीनां सम्बन्धोऽपि तु पृथिव्यादावेव, तथा समवायो नैकैकस्मिन् द्वित्वादिसम्बन्धः किन्तु मिलित एव यथापर्याप्तिस्वीकाणारिम् । तथाच एको द्वौ इति प्रतीत्यापत्तिवारणं सुकरमेवेति किम्पर्य्याप्तेर्विलक्षणायास्स्वीकारेणेति बहुभाषिणां बहुतरजल्पनमपि परास्तम् । तन्निवेशप्रकारश्च प्रकृते द्वित्वनिमित्ततापर्याप्तीत्यत्र स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं यद्रूपन्तद्वृत्तिप्रतियोगिताकपर्याप्तिर्निवेश्या । स्ववृत्तित्वञ्च प्रतियोगितायां स्वावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्वसम्बन्धेन । स्वमत्र द्वित्वनिमित्तता । पर्याप्तिरपि द्विविधा एका न्यूनवारकपर्याप्तिरेका चेतरवारकपर्याप्तिरिति । यथाहि घटत्वं घटमात्रे पर्याप्तमत्र घटत्वस्पर्याप्तिसम्बन्धेन भासते । एवञ्च घटत्वनिष्ठावच्छेदकताभिन्ना याऽवच्छेदकता तदनिरूपिका सती घटत्वनिष्ठावच्छेदकतानिरूपिका या प्रतियोगिता तादृशप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकं रूपं एकत्वन्तद्वृत्तित्वमस्त्येवेति । तदनिरूपिकेत्यन्तम् इतरवारकपर्याप्तिस्वरूपम् । ततो न्यूनवारकपर्याप्तेस्स्वरूपम् ।

नच यदि तादृशावच्छेदकत्वानिरूपकेत्यनेन तादृशावच्छेदकतानिरूपकत्वत्वनिष्ठावच्छेदकताभिन्नावच्छेदकत्वानिरूपकत्वनिष्ठप्रतियोगिताकाभावस्य विवक्षायान्न दोषः तादृशानवच्छेदकत्वनिरूपकत्वघटोभयाभावीयप्रतियोगिताया निरूपकत्वत्वनिष्ठावच्छेदकत्वभिन्नेन घटत्वनिष्ठावच्छेदकत्वेन निरूपकत्वाद् वारणमित्युच्यते, तदाऽसम्भवः निरूपकत्वत्वनिष्ठावच्छेदकताया अपि निरूपकत्वत्वनिष्ठावच्छेदकताघटोभयभेदवत्त्वात् । तादृशावच्छेदकतात्वावच्छिन्नप्रतियोगिताकभेदविवक्षणे तु स्यादनन्ताप्रामाणिकपदार्थकल्पनाविश्रान्त्यभावरूपाऽनवस्था दोष इति चेद्गुरवः, वस्तुविशिष्टप्रतियोगिताकत्वमेव निवेश्यम् । वैशिष्ट्यञ्च स्वनिरूपितावच्छेदकताविशिष्टान्यावच्छेदकत्वानिरूपितत्वस्ववृत्तित्वोभयसम्बन्धेन । स्ववृत्तित्वञ्च स्वनिरूपितावच्छेदकताविशिष्टा-

सूत्रार्थेनातुसोऽकारस्य घटकत्त्वेन द्विर्वचनेऽचीति प्रवृत्त्या पूर्वन्द्वित्वे पश्चाद्य- णि दोषाऽभावात् । नचाधिकरणसप्तम्यामव्यवहितपूर्वत्त्वांशोपस्थित्या जग्मतु- रित्यत्र मकारेण व्यवधानात् द्विर्वचनेऽचीत्यस्याऽप्रवृत्त्या द्वित्वात्पूर्वं गमहने- त्युपधालोपे एकाच्त्वाभावेन द्वित्वमपि न स्यादिति वाच्यम् ? द्वित्वनिमित्त- तापर्य्याप्त्यधिकरणघटकाज्निमित्तकोऽजादेशो नेति सूत्रार्थेनाऽक्षतेः ।

नचैवमर्थे जेघ्रीयत इत्यादौ "ईघ्राध्मो"रितीत्त्वन्न स्यात् द्वित्वनिमि- त्ततापर्य्याप्त्यधिकरणं यङ् तद्घटकोऽच् यकारावयवाकारस्तन्निमित्तकोऽजा- देश "ईघ्राध्मो"रितीकारादेशस्स न स्यात्किन्तु द्वित्वमेव, द्वित्वे चानिष्टापत्ति- रिति वाच्यम् ? द्वित्वनिमित्ततापर्य्याप्त्यधिकरणघटकाच्पर्य्याप्ता या निमित्त- दलप्रविष्टा विषयता तन्निमित्तकेऽजादेशो न स्यादिति सूत्रार्थः । अच्पदीया निमित्तदलप्रविष्टा या विषयता जग्मतुरित्यादावतुसोऽकारे वर्त्तत एवेति न तत्र क्षतिः । जेघ्रीयत इत्यादौ यङोऽकारे निमित्तदलीयायाः कस्या अपि विष- यताया न सम्भव इति रूपसिद्धौ बाधकाभावात् । नचैवमपि ऊर्णुनविषती- त्यादाविस इकारेऽपि कस्या अपि विषयताया अभावाद् गुणनिषेधाभावेन गुणे पश्चाद् द्वित्वेऽभ्यासे उकारो न श्रूयेतेति वाच्यम् ? अच्पदीयविषयताया इस इकारे सत्त्वेनावादेशे निषेधप्रवृत्तेस्सौष्ठवेनादोषात् । एवञ्च कार्यमनुभव- न्नितिपरिभाषा नैव कार्येति विशिष्टो विचारः ।

नच दुद्यूषतीत्यत्र दिवसेति दशायां यणो द्वित्वनिमित्ततापर्य्याप्त्यधिकर- णघटकाच्पर्य्याप्तनिमित्तदलप्रविष्टविषयताकत्त्वेन निषेधप्रवृत्त्या यणोऽभावा- त्पूर्वं द्वित्वेऽभ्यास उकारश्रवणन्न स्यात्परिभाषायां सत्यान्तु परिभाषाघटक- कार्यानुभवकर्त्तृत्वं साम्भावनिकं गृह्यते । यद्यत्र "द्विर्वचनेऽची"ति सूत्रन्न प्रवर्त्तेत तर्हि पूर्वं यणि परिभाषाया विषयस्स्यादिति सम्भावनया नात्र लक्ष्ये दोष इति वाच्यम् ? "द्विर्वचनेऽचो"ति सूत्रभाष्ये "प्रत्यय इति वक्तव्यमि"ति वार्त्तिकात्प्रत्ययघटकाचो ग्रहणेन प्रकृते धातुघटकत्वेन निषेधाप्रवृत्त्या पूर्वं यणि अभ्यासे उकारश्रवणसौष्ठवात् ।

नच प्रत्ययघटकाच्त्वनिवेशे आत्मनो भवनमिच्छति भवनीयति भवनी- यितुमिच्छति विभवनीयिषतीत्यत्र सनि द्वित्वात्पूर्वं ल्युट्स्थानिकानादेशनि- मित्तकगुणनिषेधे "ओः पुयण्जो"त्यस्याभ्यासोत्तरखण्डव्यवधान एव

न्यावच्छेदकत्वानिरूपकत्वसम्बन्धेन । उभयत्रावच्छेदकतावैशिष्ट्यञ्च प्रसिद्धस्वसामा- नाधिकरण्य स्वावच्छेदकसम्बन्धावच्छिन्नत्व स्वानवच्छेदकानवच्छिन्नत्व स्ववृत्तित्व- चतुष्टयसम्बन्धेन । उभयत्र वैशिष्ट्यघटकस्ववृत्तित्वञ्च स्वानवच्छेदकानवच्छिन्नत्व- रूपेणेति ।

अतोऽपि प्रकारान्तरमस्मत्पितृकृतपरिष्कारदर्पणे द्रष्टव्यम् ।

प्रवृत्त्या प्रकृते तदप्रवृत्त्या विभवनीयिषतीति रूपाऽसिद्धिरत ऽपरिभाषेति वाच्यम् ? द्वित्वविधायकशास्त्रीयनिमित्तदलप्रविष्टविषयताप्रयोजकप्रत्ययघटकाच्पर्य्याप्तनिमित्तदलप्रविष्टविषयताके कार्य्येऽजादेशो नेति सूत्रार्थनात्रानादेशस्य द्वित्वविधायकशास्त्रे निमित्तत्वेन आश्रयणाऽभावान्निषेधाऽप्रवृत्त्या रूपसिद्धौ बाधकाऽभावात् ।

नचैवमपि अध्यजीगपदित्यत्रानेन निषेधाद् गाङादेशो न स्यादिति वाच्यम् ? तत्राचिनष्ठा निमित्तता तु प्रत्ययनिष्ठविशेष्यतानिरूपिताऽव्यवहितपूर्वत्वसम्बन्धावच्छिन्नप्रकारत्वासमानाधिकरणा गृह्यते । "णौ च संश्चङोरि"त्यस्य प्रकारतासमानाधिकरणनिमित्ततायास्सत्त्वेन निषेधाऽप्राप्त्या द्वित्वात्पूर्वं गाङादेशे रूपसिद्धेः । "कास्प्रत्ययादामि"ति भाष्यादेकाच आचारक्विपोऽविधानेनाऽप्रवृत्त्या वा चक्रतुरित्यस्यैवासिद्धिः । नच उशब्दादाचारक्विबन्तात्सनि अविविषतीत्यत्र द्वित्वात्पूर्वं गुणेऽपि अवादेशस्यैवानेन निषेधाद् द्वित्वे रूपाऽसिद्धिरिति वाच्यम् ? अच ऽपरस्मिन्नि"त्यतः पूर्वविधावित्यनुवर्त्य पूर्वत्वेन दृष्टस्यैव द्वित्वे कर्त्तव्ये निषेधविधानेन अविविषतीत्यत्र पूर्वत्वेन दृष्टत्वाऽभावान्निषेधाऽप्राप्त्या द्विर्वचनेऽचीतिनिषेधाऽप्रवृत्तये कार्यमनुभवन्नितिपरिभाषाया अनावश्यकत्वात् । आदेशनिषेधकल्पे इसशब्दस्य द्वित्वप्राप्त्या पूर्वविधित्वाभावेन रूपातिदेशकल्पे रिसूशब्दस्य द्वित्वप्राप्त्या पूर्वपरोभयविधिसत्त्वेन पूर्वस्यैव विधानाऽभावेन अरिरिषतीत्यत्राप्यनयैव रीत्या "द्विर्वचनेऽची"तिसूत्राऽप्रवृत्त्या न परिभाषाफलम् । इति परीक्षालेखप्रकारः ।

### अथ शास्त्रार्थप्रकारः ।

नच अस्य स्त्री ई: "पुंयोगादिति"ङीषि तस्मादाचारक्विपि अयतीत्यत्र गुणनिषेधाभावार्थम्परिभाषेति वाच्यम् ? धातुविहितप्रत्यय एव निषेधविधानेनाऽफलात् ।

नच आङ्पूर्वकधाधातो "रुपसर्गे घोःकिरि"तिकिप्रत्यये आचारक्विप्प्रकृतिगतमनुबन्धमादायात्मनेपदन्न भवति "ब्राह्मणमाणववाडवाद्यनि"ति यन्ग्रहणं किमर्थं ? "केदाराद्यञ्चि"ति यञनुवृत्त्यैव सिद्धेः । वृद्धौ तु न विशेषः, क्वचिदन्यतो विधानार्थं "पृष्ठादुपसंख्यानम्" पृष्ठ्यम् । यञनुवृत्तौ स्वरितञितइत्यात्मनेपदम् कथन्न प्रदर्शितमतस्तथाचोक्तलक्ष्ये ङित्प्रयुक्तनिषेधो न भविष्यतीति समाधानात् ।

नच साजात्याश्रयणेन तद्वितीयप्रत्ययगतानुबन्धमादाय कार्य्यन्न भवतीति कल्पनया आधयतीत्युक्तलक्ष्ये 'क्ङिति चे"तिनिषेधाभावार्थम्परिभाषाया आवश्यकत्वात् ।

नच साजात्याश्रयणे प्रमाणाऽभावा वैजात्याश्रयणे तु "क्वचिदन्यतो

विधानार्थम्पृष्ठादुपसंख्यानम्पृष्ठ्यमिति" वार्त्तिकमुदाहरणञ्च प्रमाणन्तथाच आचारक्विपूप्रकृतिगतानुबन्धमादायापि कार्य्यन्न भवति इति सामान्यकल्पनया आधयतीत्यादौ "क्ङिति चे"तिनिषेधाऽप्रवृत्त्या परिभाषाफलाऽभावात् । अत एव भाष्ये कण्ठरवेण न क्वचिदुप्युक्तैषा ।

फलाभावेऽपि मूलानुरोधेन विचारः प्रस्तूयते ।

कार्यमनुभवन्नित्यस्य कार्य्यीयसाक्षादुद्देश्यताश्रय इत्यर्थः । इन्प्रत्ययस्याद्देश्यताश्रयत्त्वमर्थः । कार्यित्वञ्च उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वम् । स्वविशिष्टं स्वस्य निमित्तन्न भवति स्वं कार्य्यम् , वैशिष्ट्यञ्च स्वीयसाक्षादुद्देश्यताविशिष्टत्वसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वाश्रयत्वस्वाश्रयघटितत्वान्यतरसम्बन्धेन । द्वितीयसम्बन्धघटकाद्यसम्बन्धफलमध्येतेति । द्वितीयस्य च शयितेति । अत्रोद्देश्यत्त्वञ्च विधेयतया साक्षान्निरूपितविषयताश्रयत्वम् । विधेयत्वञ्च अपूर्वज्ञानीयविषयताश्रयत्वम् ।

अत्रैव प्रसङ्गाद्विधेयत्वंविचार्य्यते—

नचोद्देश्यतानिरूपितत्त्वम्विधेयत्त्वमिति वाच्यम् ? परस्परसापेक्षत्वेनान्योन्याश्रयापत्तेः । नच विशेष्यतानिरूपितप्रकारत्वम्विधेयत्वमिति वाच्यम् ? पर्वतो वह्निमानित्यादौ संघटनेऽपि पर्वते वह्निः सर्वेषु घटेषु रूपमित्यादौ वह्निरूपयोरेव विधेयत्वेन तत्र प्रकारत्त्वाऽसम्भवात् । तस्मादुद्देश्ये विशेष्यतासम्बन्धो विधेये प्रकारतासम्बन्ध इति न सिद्धान्तः किन्तु क्वचिद्विशेष्यता उद्देश्ये क्वचित्प्रकारता विधेये, क्वचिद्विधेये विशेष्यता, क्वचिदुद्देश्ये प्रकारता, विशेष्यविशेषणभावयोरन्वयव्यतिरेकसहचारगम्यत्वात् ।

अत एव "यच्छब्दयोगः प्राथम्यं स्यादुद्देश्यस्य लक्षणम् । यच्छब्दयोगः पाश्चात्यं स्याद्विधेयस्य लक्षणमि"त्यनेनापि न विरोधः ।

तथाच विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । विषयताविशेषत्वम्विधेयत्वम्विषयताविशेषत्वमुद्देश्यत्वमिति नान्योन्याश्रयो नापि प्रकारत्वविशेष्यत्वयोर्विवादः । "इको यणची"त्यत्रेकि विशेष्यता यण्विधेये प्रकारता परन्तु न नीलो घटः पीतो घट इत्यादिदर्शनादव्यभिचारस्तस्मात्प्रकरणानुरोधेनान्वयव्यतिरेकसहचारगम्यत्वमेव प्रायेणोद्देश्ये विशेष्यताया उदाहरणान्यधिकानि लभ्यन्ते पूर्वोक्त एव प्रकारो ज्यायान् ।

सकललोकतन्त्रेति—सकललोके(१) तन्त्रे चेत्यर्थः । तथाच वेदान्तिमते

(१) केचित्त्वत्र सकललोकतन्त्रेऽप्रसिद्धतयेति च्छित्वा ज्ञापकसाध्या न, अपि तु ज्ञापकसाध्यैवेति वर्णयन्ति ।

अपरे तु शब्दशास्त्रे वास्तवो न निमित्तकारणत्वव्यवहारः किन्तु काल्पनिकः । जन्यत्वपक्षे कण्ठताल्वाद्यवच्छेदेन यथा वायुसंयोगो निमित्तकारणन्तथा स्थानिरूपस-

ब्रह्मण एवोपादानकारणत्वन्निमित्तकारणत्वञ्च विस्पष्टम् । तस्य, समवायिकारणस्य । तत्त्वेन, निमित्तत्वेनेति तत्त्वम् । वैयाकरणमते "सिद्धे शब्दार्थसम्बन्धे" इति भाष्यवार्त्तिकबलेन शब्दानान्नित्यतया शब्दम्प्रति शब्दान्तरकारणत्वमेव नास्ति, अनीश्वरवादित्वाच्च शाब्दिकानाम् । नैयायिकमते शब्दबुद्धिकर्मणां द्विक्षणावस्थायित्वेन पूर्वोत्पन्नशब्दनाशोत्तरोत्पत्स्यमानशब्दम्प्रति तस्य कारणत्वाऽसम्भव एव ? शब्दस्य गुणत्वेन गुणकर्मणोरसमवायिकारणताया एव तत्सम्मतेः । सांख्यशास्त्रे तु "न समवायोऽस्ति प्रमाणाऽभावादि"ति सूत्रम् । समवायस्य स्वरूपसम्बन्धेऽन्तर्भावो वा । वेदान्तिमतेऽपि समवायो नास्ति तादात्म्यसम्बन्धेऽन्तर्भावो वा ।

"अच×परस्मिन्नि"तिसूत्रेण प्लायत इत्यत्र लत्वार्थं स्थानिवद्भावः, दीर्घसमवायिन×परस्य निमित्तत्वाऽभावे परनिमित्तकत्वाभावेन स्थानिवद्भावो न स्यात् । अत एव समवायीतिप्रतीकमनुसृत्य तत्त्वञ्चात्र कल्पितम्बोध्यम् ।

इदञ्चिन्त्यम्—कालसंयोगम्प्रति कालस्याद्वैतनये जगत्प्रति ब्रह्मणस्तदुभयदर्शनात् । किञ्च अद्विष्ट्कार्य्यस्थले समवायिकारणस्य निमित्तकारणत्वन्न, तेन आयसावित्यादौ नुमो वारणाय एकादेशस्याच×परस्मिन्नितिस्थानिवत्त्वम् इति केन चिन्निगदितम् ।

अत्रास्मद्गुरवः, "अच×परस्मिन्निमित्तकारणं यस्येति नार्थ×किन्तु परन्नियमेन पूर्वकालिकं यस्मादित्येवार्थ इति न कार्यमनुभवन् व्याकरणे निमित्तम् । अत एव शब्दस्य नित्यत्वात्तम्प्रति(१) समवायिकारणमसम्भवीति न ? तात्पर्य्यान्तरप्रदर्शितत्वात् इत्यूचुः ।

---

मवायिकारणत्वमपि कल्पनाप्रत्याख्यमेव । लोका अपि घटोत्पादानन्तरन्न तत्र कपाल इति व्यवहरन्ति । एवमादेशोत्पत्त्यनन्तरं स्थानिनो व्यवहाराभावेऽपि निमित्तात पृथक् समवायिकारणत्वेन परिभाषैषा न ज्ञापकसिद्धेति भणन्ति ।

( १ ) कारणत्वञ्च—अन्यथासिद्धिशून्यत्वे सति कार्याऽव्यवहितप्राक्क्षणावच्छेदेन लघुनियतपूर्ववर्त्तितावच्छेदकधर्मवत्त्वम् ।

समवायिकारणत्वञ्च—यद्रूपावच्छिन्नं स्वकारणतावच्छेदकयद्धर्मावच्छिन्ने समवायसम्बन्धेनोत्पद्यते तद्धर्मावच्छिन्नम्प्रति तद्धर्मावच्छिन्नत्वम् । घटत्वाद्यवच्छिन्नं हि स्वकारणतावच्छेदककपालत्वाद्यवच्छिन्ने समवायसम्बन्धेनोत्पद्यते इति भवति घटत्वाद्यवच्छिन्नम्प्रति कपालत्वाद्यवच्छिन्नं समवायिकारणम् । स्वकारणतावच्छेदकेत्युक्त्या च न द्रव्यत्वादेर्घटादिसमवायिकारणतावच्छेदकत्वमिति ।

समवायस्तु—गुणक्रियादिविशिष्टबुद्धिर्विशेषणविशेष्यसम्बन्धविषया विशिष्टबुद्धित्वात् दण्डी पुरुष इति, विशिष्टबुद्धिवदित्यनुमानेन यथा क्षित्यादिजनकतयेश्वरो लाघ-

अत्र सरयूपारीणशुक्लाः, शाब्दिका अपि समवायम्मन्वते तथाहि, जाति-जातिमतोर्गुणगुणिनोस्समवायः । अत एव "समवायोऽपृथग्भावो द्रव्यादीनां गुणैर्मतः । स नित्यो यत्र हि द्रव्यं न तत्रानियतो गुण"इति चरके पतञ्जलिः । द्रव्यादीनामाधारभूतानां गुणैराधेयैस्समवायस्सम्बन्धो मतस्तेन पृथिवीत्वगन्धयोर्न समवाय आधाराधेयत्वाभावात् मानाभावादेक एव । हरिणाऽप्युक्तम् "ततस्तु समवायाख्या शक्तिर्भेदस्य वाधिका । एकत्वमिव ता व्यक्तीरापादयति कारणैरि"तिसमवायस्वीकरणम्, "समवायान्समवैती"तिपाणिनिसूत्रे समवपूर्वकेणधातुः । निमित्तात्कर्मयोग" इतिवार्त्तिके योगस्संयोगसमवायान्यतरात्मकः । पुनरपि चरके पतञ्जलिर्विमानखण्डे "वादमार्गे जयाय द्रव्यगुणकर्मसामान्यविशेषसमवाया ज्ञातव्या"इतिसमवायस्य समवायिभिस्समूर्छितावभासात् भेदानवभासनेन समवायस्य स्वतः पदार्थत्वेन च न मुख्यं सम्बन्धत्वम्, अत एव समवायस्संयोगवन्न षष्ठीवाच्योऽपि । तथाच शाब्दिकमतेऽपि समवायो जागर्ति । तथा च शब्दशास्त्रसिद्धसमवायिकारणनिमित्तकारणयोर्भेद इत्याशयम्वदन्ति ।

परनिमित्तोऽजादेश इत्युक्तिस्तु ज्ञाननिष्ठकारणताया विषये आरोपमात्रेणैव निर्व्वहतीति नित्ये स्वतस्सिद्धे शब्दे प्रक्रियाप्रपञ्चवत् इति केचित् ।

वस्तुतस्तु समवायिकारणनिमित्तेति—समवायेन सम्बन्धेन यत्र कार्यमुत्पद्यते तत्समवायिकारणम्, यत्र समवायातिरिक्तसंयोगादिसम्बन्धेन कार्यन्तन्निमित्तकारणमिति निष्कर्षः ।

अत्रेयमाशङ्का—नन्ववयववावयविनोस्समवायाभ्युपगमाद् घटपटादिरूपकार्यारम्भकत्वं कपालादीनामिति तेषां समवायिकारणत्वम् । प्रकृतोदाहरणे च दर्भाणां स्थाने शरैः प्रस्तरितव्यमितिवत् स्थान्यादेशयोर्निवर्त्यनिवर्त्तकभाव एव प्रतीयते नतु समवाय इति कथङ्कारं शीङादीनां समवायिकारणत्वं कथञ्च तेन निमित्तकारणताबोध इति प्रश्नः ।

नच सुवर्णं कुण्डलमिव "शी"इतीगन्तमङ्गमेव गुणविशिष्ट "शे" इति रूपमारभते नतु निवर्त्यनिवर्त्तकभाव इति वाच्यम् ? शब्दानित्यत्वप्रसङ्गात् ।

---

वादेक एव [कृतिजन्यत्वव्याप्यकार्यत्ववानिति परामर्शादपि कृतेरेकत्वे लाघवमिति लाघवज्ञानसहकृतात् क्षित्यंकुरादिकमेककृतिजन्यमित्यनुमितिवत् सम्बन्धस्यैक्ये लाघवमिति ज्ञानसहकृतात् विशेष्यविशेषणसम्बन्धविषयकत्वव्याप्यविशिष्टबुद्धित्ववती गुणक्रियादिविशिष्टबुद्धिरिति परामर्शादपि विशेष्यविशेषणयोरेकसम्बन्धविषयिण्यनुमितिरिति] तथैव लाघवादेकस्समवायस्सिध्यति ।

नव्यतार्किकास्तु—पृथिव्यां गन्धस्य समवायो न जले इति प्रतीत्या समवायो नानेति वदन्ति ।

अथोक्तम्—घटपटादौ तन्तुकपालादीनामिव गुणादेशोत्तरमिगन्ताङ्गस्य शास्त्रबलेन सुतरान्निवृत्तिरेवञ्च समवायिकारणसाधर्म्येण आरोपितस्य निवृत्तिः अन्यस्मिन् शास्त्रीयातिदेशे तथा व्यवहारदर्शनात् अयमेवाभिप्रायः कथञ्चित् ।

वस्तुतस्तु एवम्बिधारोपस्याऽशास्त्रीयस्य शास्त्रप्रवृत्तिनिवृत्तिरूपव्यवस्थापकत्वानर्हत्वात् शास्त्रीयत्वसम्पत्तये प्रमाणाभावाच्छयितरीत्यादिनिर्देशेन ज्ञापकासिद्धत्वमेवास्था इति ।

अथ खण्डनप्रकारः ।

ननु ऊर्णुनविषतीतिवाक्येऽभ्यासे उकारश्रवणसिद्धये शयितरीति निर्देशाऽज्ञापितमप्यंशं कार्य्यमनुभवन्निति नागेशेन योजितम्परन्तु लक्ष्यानुरोधेनैव विशेषणयोजना, लक्ष्ये तु "सन्यङोरि"ति केवलषष्ठ्यन्तमात्रश्रवणेनोद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वरूपकार्यित्वन्नैव सफलमपि तु "सन्यङो"रितिशास्त्रे सामान्यरूपेण सन्यङोरुपादानम्परन्तु विशेषरूपस्य बाधकत्वेना "जादेर्द्वितीयस्ये"त्यस्य जागरूकत्वेन सामान्यकोटेर्बाधेन व्यक्तिपक्षे यावल्लक्ष्यमिति न्यायेन च षष्ठ्यन्तपदप्रयोज्यविषयताया प्रकृते सन्नन्तभागेऽक्लृप्तत्वेन सनो द्वित्वरूपकार्य्यानधिकरणत्वेन केवलोद्देश्यतानुशब्दे पर्य्याप्ता सन कार्यित्वाभासोऽपि नास्तीति तद्विशेषणन्निरर्थकमत एव भाष्यादौ तद्विशेषणन्नास्ति, कौमुद्यां शेखरे च कथमुपात्तमिति प्रश्नः ।

नच "अचि किं जेघ्रीयते देध्मीयत" इति "द्विर्वचनेऽची"ति भाष्याद् विशेषणविशिष्टैषा ध्वनितेति तात्पर्य्यन्तथाहि, "स्वरान्तरे व्यञ्जनान्युत्तरस्ये"ति न्यायेन द्वित्वरूपकार्य्यानुभवकर्तृत्वाऽभावेऽपि षष्ठ्यन्तपदप्रयोज्यविषयताया कार्यिताया "स्सन्यङोरि"त्यस्य षष्ठ्यन्तत्वेन यङि विद्यमानत्वान्निमित्तत्वन्नस्यात् । एवञ्चाज्ग्रहणाऽभावेऽपि नैव क्षति कथम्भाष्यकृता फलन्दत्तन्तथाच तादृशभाष्यप्रामाण्येन विशेषणविशिष्टैषा ध्वनितेति वक्तुं शक्यत एवेति वाच्यम् ? "द्विर्वचनेऽची"ति सूत्रभाष्ये "प्रत्यय इति वक्तव्यमि"ति वार्त्तिकन्तेन "द्विर्वचनेऽची"त्यस्य द्वित्वनिमित्तताश्रयीभूतो योऽच् स प्रत्ययघटक एवेति सूत्रार्थवर्णनेन घ्राऽकारस्य प्रत्ययघटकत्वाभावेन तत्सूत्राऽप्रवृत्त्या "ईघ्राध्मोरि"तीत्वे घ्रीशब्दस्य द्वित्वे रूपसिद्धौ विशेषणविशिष्टैषा ज्ञाप्यत इत्यर्थवर्णनस्य कर्त्तुमशक्यत्वात् । "द्विर्वचनेऽचो"ति सूत्रभाष्ये "प्रत्यय इति वक्ष्यामी"ति वार्त्तिकन्तु कार्यमनुभवन्नितिपरिभाषालभ्यमेवेति तु वक्तुं शक्यत एव गूढाभिप्रायात् । किञ्च भाष्यबलेनैतत्परिभाषाऽभावस्यैव ध्वननमाभाति तथाहि, जेघ्रीयते देध्मीयत इत्येवाज्ग्रहणव्यावर्त्यरूपं फलम् । तत्र च कार्य्यातिदेशे तदानर्थक्याद्रूपातिदेशे "ईघ्राध्मोरि"तीत्वस्य निवृत्त्याऽनिष्टाऽपत्तिस्तत्र

च "नटभार्य्यावद् व्यञ्जनानि भवन्ती"ति षाष्ठभाष्यसिद्धान्ताद् द्वितीयाजव-धिकस्य द्वित्त्वे यङो निमित्तत्वानापत्त्या दोषाऽभावेन भाष्याऽसङ्गतिरिति शाङ्कितत्त्वानुसन्धानात् ।

नच "स्वरान्तरे व्यञ्जनान्युत्तरस्ये"ति न्यायेन प्रातिशाख्येन ग्रन्थाशय इति वाच्यम् ? नटभार्यावदितिन्यायपरित्यागे बीजाऽभावात् । नचैतत्परिभाषाऽभावे "द्विर्वचनेऽची"ति सूत्रेऽज्ग्रहणसत्त्वेऽपि दोषस्तथाहि, उद्देश्यदलप्रविष्टषष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्त्वमेव हि कार्य्यित्वं "सन्यङोरि"ति सन्नन्तयङन्तत्वाभ्यां सन्नन्तत्वावच्छिन्नयङन्तत्वावच्छिन्नविषयतयोरेव ग्रहणम् । परिभाषाया एतस्या अभावे निमित्ततापदेन यङन्तत्त्वावच्छिन्नविषयताया-पर्य्याप्तिसम्बन्धेन ग्राशब्दे विद्यमानत्वेऽपि अपर्याप्त्या ग्राघटकाकारेऽपि विद्यते । "ईद्यात्मोरि"ति शास्त्रे स्थान्यादेशभावेन पर्याप्तिसम्बन्धेनैवालोऽन्त्यपरिभाषोपस्थित्याऽन्त्याल्त्वावच्छिन्नविषयता तु शुद्धाकारे ग्राघटके विद्यते । द्वित्वनिमित्तताश्रयीभूत आकारस्तत्पर्य्याप्ता अल्त्वावच्छिन्ना निमित्तता तन्निरूपक "मीग्राध्मोरि"तीकारादेशो न स्यात् । तथाचाज्ग्रहणस्य नैतत्फलमिति कथम्भाष्यसङ्गतिरिति "द्विर्वचनेऽची"ति भाष्यसंयोजनायेयं परिभाषा ध्वननीया । परिभाषायान्तु जेघ्रीयत इत्यत्रानया परिभाषया ग्राशब्दस्य षष्ठ्यन्तपदप्रयोज्यविषयताश्रयत्वरूपकार्यित्वेन कार्यानुभवकर्तृत्वविशिष्टकार्यित्वेन वा निमित्तत्वाऽभावेन ग्राधातुघटकाऽऽकारेऽपर्य्याप्तचाऽपि अर्थात्पर्य्याप्तिसम्बन्धाऽयोजनेऽपि द्वित्त्वनिमित्तत्वाभावेनाज्ग्रहणे दोषाऽभावः । अत एव मूले "द्विर्वचनेऽची"त्यत्र भाष्ये ध्वनितैषेति सामान्येनोपादानञ्च सङ्गच्छते । इति परिभाषासत्त्वमस्मद्गुरुचरणैर्दर्शितम्पाठितञ्चेति वाच्यम् ? विशेषणविशिष्टैषा ध्वनितेति सिद्धान्तखण्डन एव तात्पर्याभिधानात् । परिभाषाया लोकसिद्धानुवादकत्वेन सम्पूर्णपरिभाषायां भाष्यसम्मतिसत्त्वे विवादाऽभावाच्च ।

"प्रत्यय इति वक्तव्यमि"ति "द्विर्वचनेऽची"ति भाष्यसम्मतपक्षाश्रयणे तु ग्राकारस्य प्रत्ययघटकत्वाऽभावेन सम्पूर्णपरिभाषासिद्धेर्भाष्यबलेन कर्तुमशक्यत्वाच्च ।

नच "द्विर्वचनेऽची"ति सूत्रभाष्ये "अचि किं जेघ्रीयते देध्मीयत" इतिप्रत्युदाहरणम्प्रदर्श्य दूरङ्गत्वा "प्रत्यय इति वक्ष्यामी"ति निर्देशस्तथाच प्रत्युदाहरणकाले ज्ञानमेव प्रत्यय इत्यस्य नास्तीति न विरोध इति वाच्यम् ? भाष्यकर्त्तुस्साक्षाद्भगवत्स्वरूपत्वेन सम्पूर्णपूर्वापरविषयकत्रिकालज्ञानविशिष्टत्वेन "प्रत्यय इति वक्ष्यामी"त्यस्य ज्ञाने क्षतिविरहात् ।

अत्रायम्विचारः, भाष्ये कार्य्यातिदेशे चक्रतुरित्यादौ अनकाराभ्यासता प्राप्नोतीत्याशङ्क्याज्ग्रहणेन रूपातिदेशे ज्ञापिते उक्तं दोषवारणं कृतम् ।

अयमाशयः, अचि ग्रहणाऽभावे द्विरुच्यतेऽस्मिन्निति व्युत्पत्त्या द्वित्वनिमित्ते परे आदेशस्स्थानिवदित्यर्थकः "द्विर्वचने" इत्येव न्यासः। ध्माधातोर्यङि "ईघ्राध्मो"रितीत्त्वे द्विर्वचन इत्यनेन कार्यातिदेशे ध्मा इति बुद्धौ सत्त्यामपि द्वित्वन्तु ध्मीत्यस्यैवेति जेध्मीयत इति रूपं सिद्धचत्येवेति शङ्कः। चक्रतुरित्यत्र द्वित्वात्परत्वाद्यणि अनच्कत्वेन द्वित्वाऽप्राप्तौ अनेन कृबुद्धौ सत्त्यामपि यण् विशिष्टस्यैव द्वित्वेऽभ्यासेऽकारश्रवणन्न स्यादेतदर्थं रूपातिदेशे स्वीक्रियमाणे जेध्मीयते देध्मीयत इत्यत्राप्यापत्ति "ध्मोध्मे"ति रूपातिदेशे अभ्यासे एकारश्रवणन्नैव स्यात्। तदर्थमचिग्रहणे कृते "स्वरान्तरे व्यञ्जनान्युत्तरस्ये"ति प्रातिशाख्येन यङ्प्रत्ययस्याजादिद्वित्वनिमित्तत्वाभावेन "द्विर्वचन" सूत्राऽप्रवृत्त्याऽतिदेशाभावेनेष्टं सिद्धचति। इदमेव "द्विर्वचनेऽची"ति सूत्रघटकमचिग्रहणं रूपातिदेशे ज्ञापकमिति तात्पर्य्यम्। अग्रे "अधिजगे इत्यत्रेवर्णाभ्यासता प्राप्नोती"ति रूपातिदेशे दूषणमभिधाय "गाङ्लिटी"तिद्विलकारको निर्देशः लिटि लकारादाविव्त्युक्तम्।

एवञ्चाज्ग्रहणस्यैतदेव व्यावर्त्यमित्याशयः। तथाच अधिजगे इतिवदरिरिषतीति दोषानुपन्यासेन भगवता सा ध्वनितैव। आर्द्धधातुकीयास्सामान्येन भवन्तीति पक्षे तद्भावभावितामात्रेणेव तद्बुद्धिभावितामात्रेणाऽपि निमित्तत्वमित्यङ्गीकारात् अधिजगे इत्यस्य तद्व्यावर्त्यम्बोध्यम्। ईदृशनिमित्तत्वाश्रयणे लिङ्गन्त्वज्ग्रहणमेवेति।

इयम्परिभाषा "द्विर्वचनेऽची"त्यत्र भाष्ये ध्वनितेति लेखेन "द्विर्वचनेऽची"ति सूत्रस्थ "गाङ्प्रतिषेध" इति वार्त्तिकप्रत्याख्यानपरभाष्येण ध्वनितेत्येवाभिप्रायस्तथाहि, "गाङ्लिटी"ति द्विलकारको निर्देशो लकारादौ लिटि इको गाङादेश इत्यर्थम्प्रदर्श्य वार्त्तिकम्प्रत्याख्यातम्। अचीति नाधिकरणसप्तमी किन्तु सत्सप्तम्येवाधिकरणसप्तम्यान्तु द्वित्वनिमित्ताजव्यवहितपूर्वस्याच आदेशो नेत्यर्थे एसादेशोत्तरं द्वित्वे कर्त्तव्ये स्थानिरूपातिदेशापत्तिरेवञ्चेङवयवाश्रयणेन सूत्रप्रवृत्तिसम्भवे प्रत्याख्यानपरकम्भाष्यमसङ्गतं स्यात्। कार्य्यमनुभवन्निति परिभाषासत्त्वे तु इङ्कार्य्यित्वेन निमित्तत्वाभावाद् "द्विर्वचनेऽची"ति सूत्राऽप्रवृत्त्या परिभाषाध्वननपक्षस्य गरीयस्त्वात्।

नच "द्विर्वचनेऽची"ति सूत्रेऽचीत्यधिकरणसप्तमी नतु सत्सप्तमी द्वित्वनिमित्तताश्रयीभूतो योऽच् तदव्यवहितपूर्वस्याच आदेशो नेति सूत्रार्थेऽचि किं जेघ्रीयते देध्मीयत इति कथम्भाष्यानुकूलध्वननादिविवेक इति वाच्यम्? अधिजगे जग्ले इत्यादौ द्वित्वनिमित्तताश्रय एकारस्तदव्यवहितपूर्वस्येङो गाङादेशस्यात्त्वादेशस्य च सिद्धचभावापत्तेः। द्विर्वचनेऽचाति सूत्रस्य व्यवधानरहिते चक्रतुरित्यादौ सार्थक्येन जग्मतुरित्यादौ मकारव्यवधानेन लोपरूपादेशस्था-

निभूतस्याचो द्वित्वात्पूर्वमकारस्य "गमहनजने"ति सूत्रेण लोपे एकाच्त्वाभावेन द्वित्त्वाभावेन द्वित्त्वानापत्तेश्च । तथा च "निमित्तसप्तम्येवे"ति पूर्वोक्तभाष्यसंलगनात् ।

केचित्तु—

ननु "द्विर्वचनेऽची"त्यत्र भाष्ये ध्वनितैषेत्यस्य ज्ञापकपरभाष्याद्ध्वनितैषेत्याशयः । तथाहि नुनावयिषतीत्यादौ नु इ स इति दशायां णिच्प्रत्ययेकारेऽप्यपर्य्याप्त्या निमित्तताया विद्यमानत्वेन "द्विर्वचनेऽची"ति निषेधाद् वृद्ध्यवादेशयोऽपूर्वमप्रवृत्त्या नुशब्दस्य द्वित्त्वेनैव रूपसिद्धौ "णिच्यच आदेशो न स्याद् द्वित्त्वे कर्त्तव्य" इति ज्ञाप्यवचनं किमर्थमिति चेन्न ? नह्यवयवाऽपर्य्याप्तस्य समुदाये पर्य्याप्तिरिति न्यायेन नुशब्दद्वारा नु इ इ स इतिसमुदायस्यापि कार्य्यानुभवकर्त्तृत्वविशिष्टकार्यित्वेन परिभाषाप्रवृत्त्या निमित्तताश्रयणाऽभावेनेकारे णिजवयवेऽपर्य्याप्तचापि निमित्तताया अभावात् । एतत्परिभाषाऽभावे तु "णिच्यच आदेशोने"ति वचनम्व्यर्थमेव स्यादिति पूर्वोक्तध्वननप्रकार एव श्रेयानिति ।

परेतु—

भाष्ये ध्वनितैषेतिमूलस्याभिप्रायमन्यथैव वर्णयन्ति ध्वनितेत्यत्राऽध्वनितेति छिन्दन्ति भाष्यविरुद्धेयमिति यावत् । परन्तुअध्वनितेत्यस्य ध्वननाभाव इत्येवाशयस्स ध्वननाऽभावस्तु "द्विर्वचनेऽची"तिवत् "एकाचो द्वे प्रथमस्ये" त्यत्रापि समान एवेति "द्विर्वचनेऽची"ति विशेषोपादानस्याऽसङ्गतेः । ननु "नटभार्यावद् व्यञ्जनानि भवन्ती"ति न्यायेन "एकाज्द्विर्वचनन्यायेन वृत्तप्रचलनन्यायेन च यङवयवाकारवर्त्तमानयकाररूपव्यञ्जनसहितस्य ग्रायित्यस्यैव प्रथमैकाचो द्वित्वेन शयितेत्यत्रेकारद्वारा शीधातोरिवावयवद्वारा यशब्दस्यापि कार्यानुभवकर्त्तृत्वविशिष्टकार्यित्वेन "कार्यमनुभवन्नि"ति परिभाषया द्वित्वनिमित्तत्वाभावेन "द्विर्वचनेऽची"त्यस्याऽप्रवृत्त्या "ईघ्राध्मोरि"त्यनेनेत्वे पश्चाद्द्वित्वेऽज्ग्रहणाऽभावेऽपि रूपसिद्धौ "अचि किं जेघ्रीयत" इति प्रत्युदाहरणपरभाष्यासङ्गत्या परिभाषाया अभावो ध्वनित इत्यर्थऽकुतो नेति चेन्न ? ध्वनितैषेतिमूलग्रन्थाऽसङ्गतेः । ध्वननस्यैव सर्वटीककसम्प्रदायसिद्धत्वाच्च । स्वरान्तरे व्यञ्जनान्युत्तरस्येति न्यायेन अपर्य्याप्तचापि यकारस्य कार्यानुभवकर्त्तृत्वाऽभावाच्चेति वदन्ति ।

अत्र केचिन्मान्याः—

ननु ऊर्णुनविषतीत्यत्र गुणस्य तथाविधाच्पर्याप्तनिमित्तताकत्वन्नैवास्तीति गुणस्स्यादेवेति नोकारोऽभ्यासे श्रूयेतेति चेन्न ? अवादेशस्य तथाविधाच्पर्य्याप्तनिमित्तताकत्वेन निषेधान्नोशब्दस्य गुणविशिष्टस्य द्वित्वेऽभ्यासह्रस्वे नोकारे उका-

ननु प्रणिदापयतीत्यादौ दारूपस्य विधीयमाना घुसंज्ञा दापेर्न स्यादत आह—

## यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्ते ॥ ११ ॥

रश्नतेस्सफलत्वात् । एवञ्च अचिकिमितिभाष्यन्तु सम्पूर्णपरिभाषासत्त्वप्रयोजकमन्यथा कृतेऽप्यज्ग्रहणे तथाविधसमुदायो ग्राय् इति तद्घटकोऽच् आकारस्तत्पर्य्याप्तनिमित्तताकत्वमीग्राध्मोरित्यस्य नैव स्यादित्यज्ग्रहणव्यावर्त्यंन्न स्यात् । परिभाषासत्त्वे तु आकारस्य कार्यानुभवकर्तृत्वेन परिभाषया निमित्तत्वेन अनाश्रयणाद् द्विर्वचनेऽचीत्यस्याऽप्रवृत्त्या भाष्यं सङ्गतमितिभावमूचुः ।

अत्र शाब्दिकम्मन्याः—

अस्यां परिभाषायां कार्य्यित्वं कार्य्यसदेशीयत्वमेव कार्यिशब्दे प्रशंसायामिनिर्भूमनिन्दाप्रशंसासु नित्ययोगइत्युक्तेस्तदा कार्यमनुभवन्निति विशेषणन्नोपादेयमिति वदन्ति । "कार्य्यमनुभवन्निति" पूर्वपरिभाषायां "शयितरी"ति सूत्रनिर्देश⌒प्रमाणतया मूलोपन्यस्त⌒परन्त्विड्विशिष्टे आर्द्धधातुकत्वाऽभावाद् गुणप्राप्तिरेव नास्तीति विशेषाकाङ्क्षयोपोद्घातसङ्गतिसम्बलितया संज्ञा(१)प्रसङ्गादेव संज्ञाकर्मके संज्ञिविशेषोद्देश्यके विधौ विवेक इति ध्वननाभिप्रायेण चाह ननु प्रणिदापयतीत्यादाविति । घुसंज्ञाशास्त्रघटकनिषेधांशाऽव्याप्तिवारणार्थस्य "नानुबन्धकृतमनेजन्तत्वमि"त्यस्य निरूपणानन्तरं प्रसक्तानुप्रसक्त्या मध्ये परिभाषान्तरनिरूपणेऽपि सिंहावलोकनन्यायेनेदानीन्तच्छास्त्रघटकविध्यंशाऽव्याप्तिवारकस्य "यदागमा"इत्यस्य निरूपणमुचितमाकाङ्क्षितत्वादिति सूचयन्नाह दारूपस्येति चावतरणं चन्द्रिकाकारा आहुः । "दाधाघ्वदाबि"तिसूत्रभाष्यादिबलात्तु "तदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त"इत्येव परिभाषाकार इति भाष्यतत्त्वविदो नतु "यदागमा"इति ।

दापेर्नस्यादिति—दारूपत्वाऽभावेन पुग्विशिष्टदाप्धातोर्न स्यादिति भावः । नच दाब्घटकदाशब्दस्याऽपि दारूपत्वमक्षतमिति तस्य घुसंज्ञया णत्वन्निर्बाधमिति वाच्यम् ? "दाधाघ्वदाबि"तिसूत्रे दारूपाश्चत्वारो धातवो

(१) एतेनेह प्रसङ्गसङ्गतिस्सूचिता । सङ्गतिश्चानन्तराभिधानप्रयोजकजिज्ञासाजनकस्मरणप्रयोजकनिरूप्यनिष्ठसम्बन्धः । सा च षोढा

सप्रसङ्ग उपोद्घातो हेतुतावसरस्तथा ।
निर्वाहकैक्यकार्यैक्ये षोढा संगतिरिष्यते ॥ १ ॥ इत्यभियुक्तोक्तेः ।

प्रसङ्गसङ्गतित्वञ्च उपोद्घातादिपञ्चकभिन्नत्वे सति पूर्वाभिहितवस्तुसम्बन्धेन स्मृतिविषयत्वे सति द्वेषविषयतानवच्छेदकत्वम् । अतोऽप्यधिकमस्मत्पितृरचितपरिष्कारदर्पणतोऽनुसन्धेयम् ।

धारूपे द्वे दाधेतिविशिष्टरूपोपादानेन तन्मूलकार्थवद्ग्रहणपरिभाषोपस्थित्यार्थवद्दाधोर्ग्रहणेन घटकतया विद्यमानदाशब्दस्य समुदायोऽर्थवान् समुदायैकदेशोऽनर्थक इतिमूलकागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वमिति भाष्यध्वनिसिद्धवचनेनानर्थकत्वात् ।

नच "गामादाग्रहणेष्वविशेष"इति परिभाषया लक्षणप्रतिपदोक्तनिरनुबन्धकपरिभाषाऽप्रवृत्तिबोधनवदर्थवद्ग्रहणपरिभाषाऽप्रवृत्तिबोधनेनार्थवद्विशेषे न प्रवृत्तिरपित्वनर्थकेऽपीति प्रकृते घुसंज्ञया न दोष इति वाच्यम् ? भाष्यप्रामाण्येन लक्षणप्रतिपदोक्तनिरनुबन्धकपरिभाषाद्वयबाधिकैव "गामादाग्रहणेष्वि"तिपरिभाषा नत्वर्थवद्ग्रहणपरिभाषाबाधिकेति समाधानात् ।

ननु "दाधाघ्वदाबि"तिसूत्रे धेटो ग्रहणन्न स्यात् आत्त्वेन लाक्षणिकत्वात् "गामादाग्रहणेष्वविशेष"इत्यस्य तु न प्राप्तिर्दारूपत्वाभावादिति चेन्न ? गामादां ग्रहणं यत्रेति बहुव्रीहिणा सूत्र इत्यर्थः । एवञ्च दाघटितसूत्रे लाक्षणिकस्याऽपि ग्रहणेनाऽदोषात् ।

नचैवमर्थे "गातिस्थाघुपाभूभ्य"इतिसूत्रस्याऽपि गाघटितत्वेन पापदेन पै ओवै शोषण इति लाक्षणिकस्यापि ग्रहणाऽपत्तौ "गातिस्थे"तिसूत्री "येणूविबत्योर्ग्रहणं कर्त्तव्यमि"तिभाष्यवार्तिकविरोधापत्तिरिति वाच्यम् ? गाश्च माश्च दाग्रहणञ्चेति बहुव्रीह्युत्तरपदकद्वन्द्वाश्रयणेन गाशब्दे माशब्दे दाघटितसूत्रे चेत्यर्थाश्रयणेनाविरोधात् ।

नच दाघटितत्वं डुदाञ् दान इति शास्त्रस्य "ददातिदधात्योर्विभाषे"तिशास्त्रादेश्चेति तद्व्यभिचरितमिति वाच्यम् ? "गामादाधाग्रहणेष्वविशेष"-इतिपरिभाषाऽकारात् । परिभाषीयदापदं धेटोऽप्युपलक्षणम्प्रमाणञ्च धेट्धातोर्व्यावृत्त्यर्थं क्रियमाणं "दोदद्घोरि"तिसूत्रे दाग्रहणमिति विशिष्टव्याख्यानेन धेटो ग्रहणसौष्ठवाच्च ।

नच प्राणिदापयतीत्यत्र घुसंज्ञायास्तु प्राप्तिरेव नास्ति सूत्रीयादाबिति निषेधादिति वाच्यम् ? पकारेत्संज्ञकदाधातोर्दैप् शोधन इत्यस्यैव भाष्यबलेन तत्र पर्य्युदस्तत्वात् । अदाबित्यत्र दाबिति बकारो ननु पकारश्रुत्त्वेन पकारश्रुतेर्गरीयस्त्वादिति भाष्यबलेनाऽप्रवृत्तेश्च ।

ननु दाधेति विशिष्टरूपोपादानेनार्थवद्ग्रहणपरिभाषोपस्थित्या प्रणिदापयतीत्यत्रार्थवद्दारूपत्वाभावेन घुसंज्ञा न स्यादिति चेन्न ? यदागमपरिभाषयांऽशद्वयम्बोध्यते आगमसमभिव्याहारे विशिष्टेऽर्थवत्त्वमागमिग्रहणेनागमविशिष्टग्रहणञ्चेति व्याख्यानात् ।

वस्तुतस्तु—अर्थवत्त्वस्य लौकिकान्वयव्यतिरेकसाध्यत्वेन यदागमपरिभाषानपेक्षणात् दाग्रहणेन परिभाषया दापो ग्रहणेन णत्वसिद्धेः ।

नच "प्रकृतिग्रहणे ण्यधिकस्याऽपि ग्रहणमि"तिपरिभाषयैव प्रणिदापयतीत्यत्र न दोष इति वाच्यम् ? कृत्वविषये प्रजिघापयिषतीत्यादौ "हेरचङी"तिभाष्यबलेनैव प्रवृत्तिस्वीकारात् ।

नच लक्षणम्बिशिष्टरूपोपादानस्य कीदृशम् आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्बिशिष्टरूपत्वम् । मुख्यविशेष्यत्वञ्च प्रकारत्वानवच्छिन्नत्वम् प्रकारत्वासमानाधिकरणत्वं वा । साक्षादवच्छिन्नत्वञ्च स्वावच्छिन्नत्व स्वावच्छिन्नावच्छेदकतानिरूपिताऽवच्छेद्यत्वाभाववत्त्वोभयसंबन्धेन श्रावणप्रत्यक्षविषयताऽवच्छेदकधर्मविशिष्टत्वम् ।

तथाच प्रकृतेऽर्थवत्त्वमर्थबोधजनकत्वरूपं गृह्यते चेत्तर्हि स्वरूपयोग्यतारूपा जनकता फलोपधायकतारूपा च । कारणतावच्छेदकधर्मवत्त्वं स्वरूपयोग्यत्वम् । कार्याऽव्यवहितप्राक्क्षणावच्छेदेन कार्य्याधिकरणवृत्तित्वम्फलोपधायकत्वम् । घटकार्य्यम्प्रति वनस्थोऽपि दण्डः कारणमित्याद्याद्योदाहरणम् । वर्त्तमानकालिकघटोत्पत्तिकालावच्छिन्नदण्डःकारणमित्यन्त्योदाहरणम् । तत्र स्वरूपयोग्यताया ग्रहणे प्रणिदापयतीत्यत्र णत्वन्निर्बाधमेव । फलोपधायकत्वग्रहणे कदाचित्कामाद्युपहतमनसां कामिन्यादिप्रतिबन्धकदशायाम्प्रणिदातेत्यत्रेष्टमपि णत्वं न स्यादिति वाच्यम् ? आगमविशिष्टभिन्नत्वे सति अर्थविषयकबोधजनकत्वप्रकारकतात्पर्य्यीयविशेष्यताश्रयत्वमर्थवत्त्वम् । वैशिष्ट्यञ्च स्वनिष्ठविधेयतानिरूपितोद्देश्यतावत्त्वसम्बन्धेनेति तात्पर्य्यवर्णनात् ।

नचार्थवत्त्वन्नह्यवयवाऽपर्याप्तन्यायेन दाबूघटकदाशब्देऽपि वर्त्तते अर्थबोधनेच्छयोच्चरितत्वमर्थवत्त्वम्पुग्विधायकेन दाशब्दोच्चारणस्थले दाबित्युच्चारणीयमिति बोधितमिति तु वाच्यम् ? डुदाञ् दान इति धातुमूलकशब्दशास्त्रीयव्यवहारेण दाशब्दस्यापि तथा तात्पर्य्येणोच्चरितत्वादिति वाच्यम् । अर्थविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यत्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्मवत्त्वमर्थवत्त्वम् । अवच्छेदकता च अन्यूनानतिप्रसक्तरूपा, पर्य्याप्तिश्चायमेको घट इमौ द्वावित्यादिप्रतीतिसाक्षिकस्वरूपसम्बन्धविशेषः । प्रकृते च अनुयोगितावच्छेदकधर्मो दापूगतत्रित्वमेव नतु दागतन्द्वित्वन्तस्य न्यूनवृत्तित्वेनावच्छेदकत्वाऽसंघटनात् । नह्यवयवाऽपर्य्याप्तस्य समुदाये पर्य्याप्तिरिति न्यायेऽवयवस्य समुदायातिरिक्तत्वस्वीकारेणाक्षतेरिति गूढाभिमतिरिति ।

तथाच "दाधाघ्वदाबि"तिसूत्रस्यायमर्थः अर्थवद्दाशब्दस्य घुसंज्ञेत्यस्य कोऽर्थः । अर्थवत्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्य्याप्तिप्रतियोगिभूतदात्ववतो घुसंज्ञेति ।

नन्वेवन्निवेशेऽपि "भक्षितेऽपि लशुने न शान्तो व्याधि"रितिन्याये-

नार्थवत्त्वपर्य्याप्त्यनुयोगितावच्छेदकत्ववद्दात्त्वपर्याप्त्यनुयोगितावच्छेदकत्वयोश्च केवलप्रणिदातेत्यादौ द्वित्वे विद्यमानत्वेन तादृशपर्याप्त्यनुयोगितावच्छेदकद्वित्वविशिष्टदात्त्वस्य समुदायैकदेशदाब्घटकदाशब्देऽपि सत्त्वाद् घुसंज्ञया प्रणिदापयतीति रूपसिद्धौ कथमवतरणमिति चेन्न ? अर्थवत्त्वप्रतियोगिकपर्याप्त्यनुयोगितावच्छेदकत्ववद्दात्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकत्वयोरर्थानुरोधेनैकत्वन्न तत्र द्वन्द्वसमासोऽपि तु कर्मधारय एव।

तथाच दात्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकं यदर्थवत्त्वप्रतियोगिकपर्य्याप्त्यनुयोगितावच्छेदकन्तादृशपर्य्याप्त्यनुयोगितावच्छेदकीभूतदात्त्ववतो घुसंज्ञाविधानेन तादृशविशेषणविशिष्टधर्मस्य शुद्धप्रणिदातेत्यादौ सत्त्वेन दाब्घटकदाशब्दस्य तथात्वाभावेनावतरणसङ्गतेः।

नचैवमपि ब्राह्मणत्वावच्छिन्नेषु ब्राह्मणत्वम्मैत्रे विद्यमानस्य ब्राह्मणत्वस्यैव चैत्रवृत्तित्वमपि चैत्रवृत्तित्वेन रूपेण चैत्रे एवाधिकरणत्वमिति लोकव्यवहारवत् दाप्समुदायपर्य्याप्तार्थवत्त्वस्य दावृत्तित्वेन रूपेण दाशब्दे एव पर्य्याप्तिर्विद्यमानत्वेन तदनुयोगितावच्छेदकत्वस्य दाशब्दगतद्वित्वे एव विराजमानत्वेन पुनरप्यवतरणभङ्ग इति वाच्यम् ? अर्थवत्त्ववत्त्वावच्छिन्ना या पर्य्याप्तिसम्बन्धावच्छिन्नाऽऽधेयता तादृशाधेयतानिरूपिताधिकरणतावच्छेदकधर्मावच्छिन्नानुयोगितानिरूपकपर्याप्तिप्रतियोगिभूतदात्त्ववतो घुसंज्ञेति "दाधाघ्वदाबि"त्यस्यार्थः। दावृत्तित्वविशिष्टार्थवत्त्वनिष्ठावच्छेदकता पर्य्याप्तिसम्बन्धेन दावृत्तिमतीति प्रतीत्या दावृत्तित्वनिष्ठैव स्वीकार्य्या। पर्याप्तिसम्बन्धेन दावृत्तिमतीति प्रतीतिविषयीभूताऽऽधेयतावच्छेदकताऽपि तत्र वर्त्तते। दावृत्तित्वविशिष्टार्थवत्त्ववान् दाशब्द इतिप्रतीतावपि सैवाऽऽधेयता विद्यते। एवञ्च तादृशाधिकरणतावच्छेदकन्दाब्गतत्रित्वमेव नतु दागतन्द्वित्वमिति मूलोक्तावतरणस्य निष्प्रत्यूहत्वादधिकन्तु स्पष्टीकृतं श्रीगुरुचरणैः।

अत्र केचित्—आगमसमभिव्याहारन्यायविषये। ननु "त्रेस्त्रय"इत्यादिना किम्बोध्यते। यदित्वामव्यहितपूर्वत्वविशिष्टत्रयशब्द प्रयोक्तव्य इत्यर्थस्तदा त्रीणामपि प्रयुज्येतेति, त्रयादेश एवोच्चारणीय इत्यर्थस्तु न नियम्यशास्त्रसहस्रेणाऽपि, नवार्थविषयकबोधजनकत्वस्यापि शास्त्रेण नियमस्सम्भवति, लोकेऽसाधुशब्दादप्यर्थप्रतीतेः।

नवा आमव्यवहितपूर्वत्वविशिष्टत्रिशब्दोऽसाधुः त्रयशब्दस्साधुरिति युक्तियुतम्, पूर्वपूर्वशास्त्रबोधितसाधुत्वके एव सकलशास्त्रप्रवृत्तेः अपभ्रंसशब्दावावपि यणादिविधानप्रसङ्गः।

नच दध्यत्रेत्यादौ दधीत्यस्य साधुत्वं केन बोधितमिति वाच्यम् ?

व्युत्पत्तिपक्षे धातुप्रत्ययादिना तस्य साधुत्वबोधनात् । अव्युत्पत्तिपक्षे तु "अइउण्"सूत्रभाष्ये"ग्रहणप्रातिपदिकानामुपदेशः कर्त्तव्यःये पुनर्गगादावन्यत्र वा गृहीतास्तेषान्तु तेनैवोपदेशो बोध्यते कथम्पुनरेकेन यत्नेनोभयं लभ्यते लभ्यमित्याह "आम्राश्च सिक्ताःपितरश्च प्रीणिता"इत्युक्तन्तथाच तेनैवोपायेन दृध्यादौ साधुत्वबोधनात् । यदितु पूर्वबोधितसाधुत्वं (१)विनश्येत तदोत्तरशास्त्रप्रवृत्तिरेव न स्यात् । गदतीत्यादौ तिबादिविधायकैःपूर्वत्राऽसाधुत्वे बोधिते धातोर्यत्कार्य्यन्तन्न स्यात्तस्याऽसाधुत्वबोधनात् । तस्मात्साधुत्वन्द्विविधम् शास्त्रप्रवृत्तिप्रयोजकम् अपरं लोके प्रयोगत्वसम्पादकञ्च । तत्रोत्तरोत्तरं प्रवृत्तैश्शास्त्रैः पूर्वपूर्वप्रवृत्तशास्त्रबोधितस्य लोके प्रयोगाऽभावरूपमेवाऽसाधुत्वम्बोध्यते नतु शास्त्रप्रवृत्त्युपयोगिसाधुत्वं वार्य्यते। तथाचार्थबोधजनकत्वम्पूर्वपूर्वबोधितसाधुत्वकस्याऽस्त्येवेति कथमागमसमवधाने आगमिनोऽनर्थकत्वं सम्भवति । तथाच प्रणिदापयतीत्यत्र नैव दोष इति प्रश्नः । आगमसमभिव्याहारन्यायेऽनेकभाष्याणि प्रमाणमिति वक्ष्यते । सर्वेषामिति यदागमपरिभाषाफलम् । सुडागमस्य सुब्ग्रहणेन ग्रहणाद्"बहुवचने झल्येत्"इत्येत्वम् इत्यूचुः।

नच कुर्वञ्छेत इत्यत्र"शि तुगि"ति तुकि तस्य पूर्वग्रहणेन ग्रहणान्नकारस्याऽपदान्तत्वेन पदान्तस्येत्यस्याऽप्रवृत्त्या णत्वं स्यादिति वाच्यम् ? स्तोःश्चुने"तियोगविभागेन स्तोःश्चुना योगे णत्वनिषेधेनाऽक्षतेः । नच अग्निचित इत्यादौ "जसि चे"तिगुणापत्तिरिति वाच्यम् ? "भ्रुवःपञ्चानामि"तिनिर्देशेन वर्णप्रयुक्तकार्याऽभावज्ञापनात् ।

नच छो छेदने इत्यस्माल्लिटि चच्छावित्यत्राभ्यासे तुको निवृत्तिस्स्यादिति वाच्यम् ? ह्रस्वग्रहणेऽनुवर्त्तमाने पुनस्तदनुकर्षणार्थञ्चकारकरणाद्ह्रस्व एवागमी न ह्रस्वान्तःसच समुदायग्रहणेन न गृह्यत इत्यभ्यासग्रहणेनाऽग्रहणा·

---

(१) भाष्यकारास्तु "वृद्धिरादैच्"इति सूत्रे भाष्ये "साध्वनुशासनेऽस्मिन् शास्त्रे" इत्युक्तवन्तः । एवञ्च पाणिनिसूत्राणां साधुत्वविधायकत्वमात्रम् इति गगर्यादिपदेऽचि "इको यणचि" इत्यादिप्रवृत्त्या साधुत्ववारणाय यत्किञ्चिच्छास्त्रबोधितसाधुत्ववति पाणिनेः प्रवृत्तिः कल्पनीया । नचैवम् यच्छास्त्रम्प्रथमं वर्त्तते तस्य किंशास्त्रबोधितसाधुत्ववति प्रवृत्तिरिति वाच्यम् ? संज्ञाशास्त्राणाम्प्राथम्यमुपगतानां यत्किञ्चिच्छास्त्राबोधितसाधुत्वकेष्वपि प्रवृत्तिस्वीकारात् । नचैवम् "अर्थवत्" सूत्रस्यापि असाधुषु प्रवृत्तिरापद्यत इति वाच्यम् ? तत्र "अधातुः" इतिपर्युदासात् यत्किञ्चिच्छास्त्रबोधितसाधुत्वकेष्वेव प्रवृत्तिस्वीकारात् । एवञ्च संज्ञासूत्राणाम् आवृत्त्या साधुत्वविधायकत्वं संज्ञाविधायकत्वञ्च फलति ।

एवञ्चानेककल्पनापेक्षया गौरवभीत्या न भू सत्तायामित्यादेस्साधुत्वविधायकत्वं किन्तु संज्ञाशास्त्राणामेवेत्यधिकमूहनीयम् ।

लुको निवृत्त्यभावात्।

नच दधिच्छादयतीत्यत्र तुकि"तिङ्ङतिङ"इति निघातो न स्यादिति वाच्यम्? "स्वरविधौ व्यञ्जनमविद्यमानवदि"तिपरिभाषया भाष्यसम्मतया निघातप्रवृत्तेस्सौष्ठवात्।

नन्वागमसमभिव्याहारन्याये किम्प्रमाणम्फलञ्चेति प्रश्नः "उद्यपदान्तादि"तिसूत्रे अपदान्तात्किं का उत्रा कोत्रा अपदान्तादिति शक्यमकर्त्तुं कस्मान्न भवति का उत्रा कं त्रा"अर्थवद्ग्रहणेनानर्थकस्ये"ति नैषा परिभाषेह शक्या विज्ञातुमिह हि दोषस्स्याद् भिन्द्युश्छिन्द्युरित्यागमसमभिव्याहारन्याये सत्येव भिन्द्युरित्यादि सङ्गच्छेत।

किञ्च"समस्तुट् चे"तिसूत्रभाष्ये पूर्वान्तोऽयं तुट् परादिर्वेति शङ्कायां यद्ययं प्रत्ययस्य स्यात्तर्हि प्रत्ययस्यैकादेशो न प्राप्नोति प्रत्ययादिठस्याऽभावात् इत्याशङ्क्य ठकारेणोक्तसन्नियोगशिष्टस्तुड् विधीयत इत्युक्तन्तच्च भाष्यमेतन्न्यायसत्तादशायां सङ्गच्छेतान्यथा तुट्यपि प्रत्ययादिठस्य विद्यमानत्त्वेन सन्नियोगशिष्टठविधानमसङ्गतमेव स्यात्।

किञ्च "स्यसिच्सीयुट्"इतिसूत्रे भावकर्मवाचिनि प्रत्यये परे ये स्यादय इत्यर्थे स्यसिच्तासयो विशेषिता केवलस्सीयुडविशेषितस्स्यादिति भाष्यम्। सीयुट्समभिव्याहारे लिङोऽनर्थकत्त्वेन भावकर्मवाचित्वाऽभावेन भाविषीष्टेत्यत्र सीयुटो भावकर्मवाचिप्रत्ययपरत्वाऽसम्भवात् इत्यविशेषितोक्तिः। अर्थवत्त्वे तु भावकर्मवाचिप्रत्ययपरत्वसम्भवेनाविशेषितोक्तिरसङ्गतैवापद्येत। सीयुट्समभिव्याहारे लिङि प्रत्ययत्वाऽभावस्तु न वक्तुं शक्योऽर्थवत्त्वाभावस्यैवाल्पत्वाद् भाष्यान्तरसिद्धत्वाच्च। आगमप्रवृत्तियोग्ये आगमरहितः अनर्थकः तदर्थविवक्षायान्तद्रहितस्याऽप्रयोगात् इत्यनुमानमपि आगमसमभिव्याहारन्यायं गमयति।

किञ्च "दाधाघ्वदाबि"तिसूत्रभाष्ये"नैतौ दाधावर्थवन्तौ कौ तर्हि पुग्विशिष्टावि"तिभाष्यमपि गमकं लक्ष्यानुसारि व्याख्यानञ्चेति।

किञ्च आगमप्रवृत्तियोग्ये आगमरहितोऽनर्थकः शक्तिविशिष्टत्वात्। वैशिष्ट्यञ्च स्वाश्रयत्त्वस्वाश्रयसमभिव्याहृतत्त्वस्वाश्रयघटकत्त्वैतत्त्रितयसम्बन्धेन। यथा घटशब्दघटको घकारःघकारे कम्बुग्रीवादिमद्व्यक्तिरूपशक्त्याश्रयत्वम्। स्वाश्रयो घकारस्तत्समभिव्याहृतत्त्वञ्च। स्वं घकारस्तदाश्रयो घटशब्दस्तद्घटकत्वञ्चेति सम्बन्धत्रयसङ्घटनेन घकारस्यानर्थकत्वम्, इत्यनुमानमपि गमकम्।

नन्वेवमनुमितौ राजपुरुषघटकराजेत्यस्याऽप्यनर्थकत्वं(१)स्यादिति चेन्न? एकार्थीभावानापन्नेतिशक्तौ विशेषणात्।

---

(१) तथाच प्रातिपदिकत्वन्न स्यात्, तत्प्रयुक्तस्वाद्युत्पत्तिस्तत्प्रत्ययप्रयुक्तपदत्वञ्च न स्याताम्। एवञ्च नलोपादिकन्नैव भवेत्।

एतन्न्यायस्वीकारे फलन्तु रामाणामिति । अत्रोक्तन्यायाऽभावे आमूभागस्याऽप्यर्थवत्त्वेन प्रत्ययत्त्वेन रामन्नित्यस्यान्नन्ताङ्गत्त्वेन परनिमित्तकत्त्वेन बहिरङ्गत्वान्नामीत्यस्याऽसिद्धत्त्वेन"अल्लोपोऽन"इत्यनेनाल्लोपापत्तिः । न्यायसत्त्वे तु आम्मात्रस्यार्थवत्त्वप्रत्ययत्वाऽभावेन तत्पूर्वभागस्य भत्त्वाऽभावेनाल्लोपाऽप्रवृत्तेः ।

न च सन्निपातपरिभाषया अदन्तमादाय जातो नुट् तद्विघाते निमित्तन्न स्यादिति न तत्र दोषः "नामी"तिसूत्रारम्भसामर्थ्यात्तु तत्सूत्र एव(१)सामर्थ्यकल्पनया सन्निपातपरिभाषाया अप्रवृत्तिकल्पना, नतु "ह्रस्वनद्याप"इतिसूत्र इति वाच्यम् ? पूतक्रतुदिति प्रयोगे"पूतक्रतोरैचे"तिसूत्राऽप्रवृत्त्यर्थन्न्यायाऽश्रयणमिति समाधानात् ।

नच तत्रानुपसर्जनाधिकारऽप्रकृते आचारक्विबर्थनिष्ठविशेष्यतानिरूपितप्रकारताप्रयोजकत्वरूपोपसर्जनत्वसत्त्वेन न ङीपऽप्राप्तिरिति वाच्यम् ? भूयास्तामित्यत्र तामात्रस्याऽप्यर्थवत्त्वेनार्द्धधातुकत्वादिडागमापत्तेः ।

नच धातोरिति पञ्चमी दिग्योगलक्षणाक्रान्ता धात्वव्यवहितोत्तरत्वविशि-

---

येतु—"कृत्तद्धितेति"निर्वाहस्ते सर्वथैव भ्रान्ताः । तस्य समुदाये (समस्ते) एव प्रवृत्तेर्नतु तद्घटकेष्वपीति सिद्धान्तात् प्रस्फुटात् । एकार्थीभावत्वन्तु प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टैकार्थत्वात्मकत्वम् । अत एव "पदार्थःपदार्थेनान्वेति नतु पदार्थैकदेशेन"इति सिद्धान्तेन राजपुरुषघटके राज्ञि ऋद्धादिविशेषणन्नोपेयते । अत्रैव"सापेक्षमसमर्थवत्"इति सिद्धान्तोऽपि सफलः ।

नच देवदत्तस्य गुरुकुलम् इत्यादावपि अन्वयोऽभीष्टो न स्यात् इति वाच्यम् ? तत्र षष्ठ्यर्थस्य न गुरुपदार्थेनान्वयःकिन्तु प्रधानीभूतकुलेनैवेति व्याख्यानात् । अत एव "समुदायेन सम्बन्धो येषां गुरुकुलादिना । संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह" इति उपस्थितगुरुद्वारक एव षष्ठ्यर्थस्सम्बन्धः ।

अथवा—नित्यसाकांक्षपदार्थातिरिक्तस्थले एव व्युत्पत्तिस्साऽङ्गीक्रियते । अत एव च "सम्बन्धिशब्दस्सापेक्षो नित्यं सर्वस्समस्यते"इत्यादि व्याख्यानं शाब्दिकानाममनोरमाकृतां सङ्गच्छते । नचैवम् राज्ञोऽपि नित्यसापेक्षत्वात् एकदेशत्वेऽपि ऋद्धादिविशेषणत्वापत्तिस्तदवस्थेति वाच्यम् ? ईशितृ राज्ञ ईशितव्यम्प्रति साकाङ्क्षत्वेऽपि ऋद्धादिकम्प्रति निराकाङ्क्षत्वात् ।

( १ ) नच "कष्टाय क्रमणे"इत्यादिनिर्देशेन दीर्घविषये नैषा प्रवर्त्तत इति नोक्तदोष इति वाच्यम् ? ज्ञापकसाजात्यात्"सुपि च"इति शास्त्रप्रवृत्त्यभावस्यैव तेन कल्पनात् । दीर्घप्रवृत्तियोग्यलक्ष्यातिरिक्तमात्रे सा न प्रवर्त्तत इति तु न ज्ञापनं युक्तमिति विभावयन्ति केचित् ।

ष्टार्द्धधातुकसंज्ञकवलादेरित्यर्थेन यासुटा व्यवधानेन नेडागमप्राप्तिरिति वाच्यम् ? समस्तबहुकुमारीशब्दात्कपि आगमसमभिव्याहारन्यायेन कबुत्तरम्पूर्वभागस्य कप॒प्राग्वर्त्तिनोऽर्थवत्त्वाभावेन प्रातिपदिकत्वाऽभावेऽपि कप्प्रत्ययोत्पत्तिकालावच्छेदेनैव पूर्वभागस्य प्रातिपदिकत्वाऽपत्तौ "गोस्त्रियोरुपसर्जनस्ये"तिह्रस्वाऽपत्तिः । न्यायेन तु कबुत्तरमर्थवत्त्वाभावेन विशिष्टस्यैवार्थवत्त्वेन ङ्यन्तभागस्य प्रातिपदिकत्वाऽभावेन ह्रस्वो न भवतीति सिद्धान्तात् । एवम्बहुगोक इत्यपि फलम् । नच कप्प्रत्ययस्यागमत्त्वे किम्प्रमाणमिति वाच्यम्? अकचोऽप्यागमत्वं सुवचं प्रत्यङ्ङकैदित्यत्र "तिङ्ङतिङ" इति निघातसिद्ध्यर्थमेवं कपोऽप्यागमत्त्वे क्षतिविरहात् । नन्विहाऽपि"न कपी"तिनिषेधेनैव बहुकुमारीक इति सिद्धौ नैतदपि फलमिति चेन्न ? ऐधिष्टेत्यत्र"ह्रस्वादङ्गा"दिति सिज्लोपाऽभावस्यैव न्यायफलसत्त्वात् । किञ्च प्रणिदायक इत्यपि युक्तमवतरणम् ।

नचात्रा"ऽऽतो युट् चिण्कृतो"रिति न्यासो यकारस्य धात्ववयवत्वाभावात्प्रणिदायिकेत्यादौ "धात्वन्तयकोस्तु नित्यमि"तिवार्तिकेन नित्येत्त्वाऽपत्तेरिष्यते तु "उदीचामात"इति विकल्पेत्त्वम् ।

ननु "अर्त्तिह्रीव्लीरीक्नूयीक्ष्माय्यादूभ्यो णौ॒पुङि"तिन्यास॒प्रकृतेरर्थवत्त्वेन प्रणिदापयतीत्यत्र घुसंज्ञया णत्वन्निर्बाधमिति"पुगन्तलघूपधस्ये"तिसूत्रे पुगन्तग्रहणञ्च न कार्य्यमिति लाघवमिति चेन्न ? उत्तरसूत्रे षष्ठ्यन्तणेरेवानुवृत्त्यापत्तौ लुक् लुक् इत्यादीनामन्त्यावयवित्त्वेन ह्लापयति वाजयतीत्याद्यसिद्ध्यापत्तेः ।

नच तत्रापि युट् इति जुट् इति वा न्यस्यतामिति वाच्यम ? विलीनयतीत्यादौ गुणापत्तेः । नचोत्तरसूत्रे सप्तम्यन्तत्त्वेन विपरिणाम इति न दोष इति वाच्यम् ? दाब्धातोर्लुङि पुङ्विशिष्टस्य णेर्लोपेऽदीदपदितिरूपाऽसिद्धेः । दावस्योकारस्योपधात्वाऽभावेन ह्रस्वाऽसिद्धेश्च । अतिष्ठिपदित्यत्राकारस्योपधात्वाभावेनेत्त्वानापत्तेश्च । नच निर्दिश्यमानपरिभाषया पुङ्विशिष्टस्य नलोप इति वाच्यम् ? क्नापयतीत्यादाविडागमापत्तेश्च । श्यप्करणे तु सार्वधातुकत्त्वेऽपि घ्रापयतीत्यादौ "पाघ्राध्मे"तिजिघ्रादेशापत्तेः ।

नचैकदेशविकृतन्यायेनापि प्राणिदापयतीत्यादावर्थवत्त्वेन घुसंज्ञया णत्त्वसिद्धौ न बाधेति पुनरप्यवतरणमसङ्गतमिति वाच्यम् ? आगमपदेन शास्त्रेऽस्मिन् विकारस्य न ग्रहणं "ध्रुवं कूटस्थमविचाल्यनपायोपजनविकारिभिरि"ति भाष्यवार्त्तिके उपजन आगमः तस्मात्पृथग्विकारपदोपादानात् ।

नचान्तरङ्गपरिभाषयाऽनैमित्तिकान्तरङ्गभूतघुसंज्ञया पुको बहिरङ्गत्त्वेनासिद्धत्वात्प्रणिदापयतीत्यादौ णत्त्वं सुलभमिति पुनरप्यवतरणमसङ्गतमिति

यमुद्दिश्यागमो विहितः स तद्गुणीभूतः शास्त्रेण तदवयवत्वेन बोधितोऽतस्तद्ग्रहणेन तद्ग्राहकेण तद्बोधकेन शब्देन गृह्यते, बोध्यत इत्यर्थः।

तत्र तद्गुणीभूता इत्यंशो बीजकथनम्। लोकेऽपि देवदत्तस्याङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तग्रहणेन ग्रहणं दृश्यते ।

---

वाच्यम् ? संज्ञाशास्त्राणाम्विधिनिमित्तनिमित्तकत्त्वेन घुसंज्ञाया अपि णत्त्वनिमित्तनिमित्तकत्त्वेन बहिरङ्गत्त्वात् ।

नच यथोद्देशपक्षे पूर्वं जातं घुत्वमादाय णत्त्वसिद्धिः । किञ्च "पूर्वन्धातुरुपसर्गेण युज्यते पश्चात्साधनेने"तिभाष्यात्पूर्वमुपसर्गयोगे णत्त्वसिद्धिश्चेति वाच्यम् ? पूर्वन्धातुस्साधनेन युज्यते पश्चादुपसर्गेणेत्येव भाष्यसिद्धान्तोऽत एव प्रत्यय इति सिद्ध्यति । अनुभूयत इत्यत्र भूधातोरेवानुभवोऽर्थः, प्रकृतार्थतात्पर्य्यग्राहकत्त्वेनानूपसर्गयोग इति सिद्धान्ताच्च यथोद्देशपक्षे दाशब्दस्य घुसंज्ञासत्त्वेऽपि निशब्दे तन्निरूपितोपसर्गत्वन्नास्ति "उपसर्गादती"तिसूत्रीययोगलब्ध "यत्क्रियायुक्ताःप्रादयस्तम्प्रत्येव गत्युपसर्गसंज्ञे"तिनियमेन यदर्थक्रियायोगस्तन्निरूपितोपसर्गत्वम्। जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्य्यग्राहकत्त्वे सति प्राद्यन्यतमत्वमुपसर्गत्वम् । अत्र दाशब्दस्य पुक्समभिव्याहारेऽर्थबोधकत्त्वाभावेन घुजन्यबोधाभावेन घुनिरूपितोपसर्गत्वाभावेन तन्निरूपितोपसर्गत्वाऽसम्भवात् ।

नच "सर्वे सर्वपदादेशा दाक्षीपुत्रस्य पाणिनेः । एकदेशविकारे हि नित्यत्वन्नोपपद्यते" अनागमकानां सागमका आदेशा"इतिन्यायाभ्यां स्थानिवद्भावेन घुसंज्ञया णत्त्वे न बाधेति वाच्यम् ? स्थानिवद्भावाऽप्रवृत्तेर्ग्रन्थकृतैव वक्ष्यमाणत्वात् ।

यमुद्दिश्यागमो विहित इति—यस्यागमो यदागमः लक्षणेन हि लक्ष्यसंस्कारश्च प्रत्येकं भवतीत्यभिप्रायेण व्याख्याप्रवाहे आगम इत्येकवचनम् । अत एव "एकान्ता अनुबन्धा"इति वाक्यम् । व्याख्यानञ्च योह्यवयवस्स कदाचिदित्येकवचनान्तेन यमुद्दिश्यागमो विहित इति कथनेन अवयवत्वावच्छिन्नविधेयताश्रयो ह्यागमपदार्थः ।

ननु आगमपदेनैव विधेयांशलाभे मूले विहितपदं कथमुपात्तमिति चेन्न ? फलितार्थकत्त्वेन स्पष्टतया बोधनार्थमुपादानात् ।

ननु पकारादौ विषयित्वसम्बन्धावच्छिन्नव्यापकत्त्वरूपाऽवयवत्वाऽभावादवयवत्वावच्छिन्नविधेयता कथमित्यत आह तद्गुणीभूता इति । तस्योद्देश्यस्याग्रहणा अनवयवा अपि तद्गुणीभूताश्शास्त्रेण तदवयवत्वेन बोधितास्तन्निरूपितावयवत्ववन्त इत्यर्थः ।

यमुद्दिश्य विहित इत्युक्तेः प्रनिदारयतीत्यादौ न दारित्यस्य घुत्वम् ।

अथावयवत्वारोपेऽपि लोके आहार्य्यज्ञानन्न प्रवृत्तिप्रयोजकं गङ्गायां घोष इत्यत्र गङ्गापदेन तीरबोधेऽपि नहि तेन स्नानादिकार्य्यं कर्त्तुं शक्यते । यथा मुखे चन्द्रत्वारोपेऽपि नान्धकारे गमनादिप्रवृत्तिप्रयोजकत्वमिति चेत् ? शास्त्रे तादृशज्ञानस्याऽपि प्रवृत्तिप्रयोजकत्वाच्छास्त्रबोधितारोपस्यैव वैयर्थ्यप्रसङ्गादत आह तद्ग्रहणेन गृह्यन्त इति । तद्ग्रहणमित्यत्र कर्त्तरि ल्युट् ग्रहधात्वर्थश्चात्र ज्ञानमतआह तद्ग्राहकेणेति । तथा च आगमोद्देश्यकबोधकपदजन्यबोधविषया आगमा इति इति फलति ।

नन्वत्रार्थे केवलपकारस्यैव दाग्रहणेन ग्रहणं स्यादिति चेत् ? घटकतया आगमोद्देश्यबोधकपदजन्यबोधविषया इत्यर्थवर्णनात् । अयमभिप्रायः, यमुद्दिश्यागमा विहितास्तद्घटितागमोद्देश्यबोधकपदजन्यबोधविषया इति ।

नन्वेवमपि णिज्वशिष्टस्याऽपि तद्घटितत्वात्तद्ग्रहणेन ग्रहणं स्यादिति चेन्न ? तद्विशिष्टास्तद्ग्रहणेन गृह्यन्त इति । तद्वैशिष्ट्यञ्च स्वघटितत्वस्वोद्देश्ययावद्घटितत्व स्वविशिष्टाऽघटितत्वैतत्त्रितयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्व स्वोद्देश्ययावद्वितरत्वोभयसम्बन्धेन । तथाच दाप एवार्थवत्त्वन्नत्वापो नापि णिज्विशिष्टस्य ।

नन्वेवमपि स्वविशिष्टापूघटितत्वेन दापोऽपि ग्रहणन्न स्यादिति चेन्न ? तृतीयसम्बन्धस्थाने स्वविशिष्टवर्णाऽघटितत्वसम्बन्धनिवेशः । वैशि०स्वाघटकत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाघटकत्वोभयसम्बन्धेन । एवञ्चापः पकारे स्वाऽघटकत्वाभावः, आकारे द्वितीयसम्बन्धाऽभावात्स्वविशिष्टवर्णत्वाभावेन तद्घटितस्यापि ग्रहणे नास्ति दोष इति तात्पर्य्यम् ।

ननु तदवयवस्तद्ग्रहणेन गृह्यत इत्येवार्थोऽस्तु लोकदृष्टान्तोऽपि सुलभतर इत्याशयेनाह यमुद्दिश्यविहित इत्युक्तेरिति । अवयवावयवस्समुदायावयवो भवतीति न्यायेन दानिरूपितावयवत्वस्यापि रेफे सत्त्वेन यदागमन्यायेन दाग्रहणेन दारित्यस्याऽपि ग्रहणापत्तिरिति तात्पर्यम् ।

ननु अवयवावयवन्यायस्य किम्फलम् ? शेरत इत्यत्र "शीङो रुडि"ति रुडागमे यदागमन्यायाऽप्रवृत्त्या "शीङस्सार्वधातुक" इतिगुणो न स्यात् । यदागमन्यायेन सार्वधातुकत्वमानेतुन्न शक्यते । लोकदर्शनाच्छास्त्रेऽपि तथा ग्रहीष्यत इति । अत एव शेरत इत्यत्र गुणः । अनेन न्यायेन तद्ग्रहणेन ग्रहणन्न बोध्यते तथाहि—अनेन न्यायेन स्वनिरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकत्ववन्निरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकत्वविशिष्टस्य स्वनिरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकत्वम्बोध्यते । तच्च स्वव्यापकव्यापकत्व-

मित्येतत्सिद्धार्थकथनमात्रम् । यदागमन्यायेन तु तद्ग्रहणेन ग्रहणञ्च टचुटचुलोष्टित्वसामर्थ्यादागमविधानात्प्राक्कालिकसमुदायावयवत्वेन दृष्टो यस्तदवयवत्वमेव बोध्यते, तच्च सायन्तनीत्यादौ ङीबर्थम् । तत्रैकान्तवादिनो नवीनस्य मते बोधकावयवत्वस्य टकारे बोधनं शास्त्रे एव, तत्प्राक्काले च तुटो न समुदायावयवत्वम् इति ट्युट्युलोष्टित्वेनैव ङीबुत्पन्न इति तुटष्टित्वस्य वैयर्थ्यं स्पष्टमेवैवञ्च शेरते प्रनिदारयतीत्यादौ नैव दोषः । परन्तु "शीङो रुडि"तिन्यासेन सिद्धौ नावयवन्यायफलम् । एधेतेत्यत्र लिङ्सलोप इत्यपि न फलम् । तन्मध्यपतितन्यायेन "तिथोरि"तिषष्ठीनिर्देशस्य पञ्चम्यन्तत्वेन तकारावधिकपूर्वत्वविशिष्टलिङवयवस्सुड् भवतीति कल्पनेन चादोषात् ।

एधिषीष्टेत्यत्रापि प्रत्ययलोपसूत्रभाष्यबलेन प्रत्ययावयवे प्रत्ययत्वव्यवहारेण षत्वसिद्धः ।

ननु तन्मध्यपतितन्यायाद्वाऽत्र तन्मध्यपतितत्वन्नाम समुदायविशिष्टत्वम् वैशि० स्वघटकयत्किंचिदवधिकपूर्वत्वस्वघटकयत्किंचिदवधिकपरत्वस्वपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वैतत्त्रितयसम्बन्धेन । एवञ्च नात्रैतत्प्रवृत्तिः ? सार्वधातुकपर्याप्तोद्देश्यतानिरूपितविधेयतायास्सकारेऽसम्भवात् इति चेन्न ? संज्ञापरभाष्यप्रामाण्यात्स्वाऽपर्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वस्यापि वैशिष्ट्यनियामकत्त्वात् । दधिच्छादयतीत्यपि न फलम् छकाराऽव्यवहितपूर्वत्वम्विशेष्यीकृत्य ह्रस्वान्तस्य तुगित्यर्थेनाऽदोषात् । परमन्दधिच्छादयतीत्यत्र तु सन्निपातपरिभाषया समाधानम् ।

अस्मद्गुरवस्तु—

दीव्यमान इत्यत्र श्यनोऽकारस्य नित्यत्त्वान्मुगागमे तास्यनुदात्तेदिति स्वरो न स्यात् , मान्तभागे उपदिश्यमानाकारान्तत्त्वाकारत्वयोरभावात् । यदागमपरिभाषया तु न तदानयनं यशब्दस्यागमित्वाऽभावात् अकारस्योपदिश्यमानत्वाऽभावाच्च । अवयववयवन्यायसत्त्वे तु यशब्दावयवस्याकारस्यावयवो मकारो यशब्दावयवतद्ग्रहणग्राह्यश्च यम्शब्दस्याकारान्तोपदिश्यमानत्वेन स्वरसिद्धिरिति फलम् । प्रनिदारयतीति ग्रन्थासङ्गतिस्तु यमुद्दिश्य विहित इत्युक्तेरित्यस्य यत्पर्याप्तोद्देश्यतानिरूपितविधेयताश्रय इत्येवाभिप्रायः । प्रनिदारयतीत्यत्र आकारवृत्त्युद्देश्यताया अपर्याप्तचा दावृत्तित्वेऽपि दापर्याप्तत्वाभावान्न दोष इत्येवम् ।

अथ च यदागमपरिभाषार्थं एवम्विधो येन नास्य न्यायस्य प्रयोजनन्तथाहि स्वविशिष्टोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयस्स्वग्रहणेन गृह्यत इत्याकारकः । वैशिष्ट्यञ्च स्वपर्याप्तत्वस्वावयवत्वविशिष्टत्वान्यतरसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यन्तु स्वसामानाधिकरण्यस्वोत्तरकालिकत्वोभयस-

आने मुगिति मुग्विधानसामर्थ्यादेषाऽनित्या । अन्यथा पचमान इत्यादावकारस्य मुकि अनया परिभाषया विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यं स्पष्टमेव ।

---

म्बन्धेन । शेरत इत्यत्र स्वमतशब्दस्तद्विशिष्टोद्देश्यता अत्निष्ठा रुडागमनिरूपिता यतस्तत्र अतशब्दावयवत्वमच्छब्देऽस्ति तत्सामानाधिकरण्यं तदुत्तरकालिकत्वञ्चेति तन्निरूपितावयवत्वावच्छिन्नविधेयताश्रयो रुट् इति तद्घटिते सार्वधातुकत्वमेव। अत्रैतत्सूत्रस्थभाष्यमेव मानम् । दीव्यमान इत्यत्रापीत्यूचुः।

ननु दात्वन्नाम दकारोत्तरत्वविशिष्टमात्वमेव । आर्शब्दे हि आत्वन्दकारोत्तरत्वञ्च विद्यत एव यदागमन्यायात्। एवञ्च दारशब्दे दात्वबुद्ध्या घुत्वन्दुर्वारमित्यत आह आने मुगित्यादि । तथा च नित्यत्वान्न आरशब्दे आत्वमिति भावः। मुग्विधानसामर्थ्यादिति । नच पच अआनेति स्थिते "आने मुगि"तिमुग्विधान "मातो ङिति" इतीयादेशबाधनार्थमिति कथमनित्यत्वे प्रमाणमिति वाच्यम् ? "आतो ङित"इत्यस्यानन्तरं नान इति अनान इति वा न्यासम्विधाय यादेशबाधे सिद्धे मुग्विधानवैयर्थ्यात् ।

किञ्च "अकस्सवर्णे दीर्घ" इत्यनन्तर "माने चे"तिन्यासेन विशिष्य दीर्घविधानाच्च । नच पच म आन इति स्थिते कण्ठोष्ठस्थानिकानुनासिकस्य कण्ठोष्ठस्थानिकानुनासिकदीर्घविधानार्थम्मुग्ग्रहणमिति वाच्यम् ? आनस्यों ऊँ दानस्येति न्यासेन वाऽनुनासिकत्वविशिष्टसिद्धेः ।

वस्तुतस्तु पादमात्रिके मुकि विधातव्येऽर्द्धमात्रिकमुग्विधानमेतदनित्यत्वे ज्ञापकम् । नच पादमात्रिकवर्णसत्त्वे प्रमाणं किमिति वाच्यम् ? "व्योर्लघुप्रयत्ने"तिविहितपकारवकारयोर्जिह्वामूलीयोपध्मानीययोर्विसर्गस्य च पादमात्रिकत्वेन तत्र २ आचार्यैःप्रतिभाषणात् ।

निष्कर्षतस्तु—पूर्वोक्तनानस्येति न्यासे गौरवमतस्तन्मात्रफलकत्वे "अतो दीर्घो यञोत्य"स्य स्थाने "अत आ ने दीर्घः इदा सः यञि च" इतिन्यासेन "ईदास"इत्यत्र ई इति दीर्घग्रहणाभावरूपफलेन च विशिष्य दीर्घविधानात्तद्बाधसिद्धेः। मुग्विषये यदागमपरिभाषाऽप्रवृत्तिस्तु न शङ्क्या ? अनित्यत्वकल्पनस्यैव लघीयस्त्वात् ।

किञ्च सम्भवति सामानाधिकरण्ये वैयधिकरण्यमन्याय्यमिति न्यायेन अदन्ताङ्गस्य मुगित्येवार्थः। करिष्यमाण इत्यादौ स्वरसिद्धिश्च उपदेशविशेषणकतदन्तविधिना सार्वधातुकप्रत्ययेन च तदादिविशेषणकतदन्तविधिना च तदन्तविधिद्वयमदन्तोपदिश्यमानान्ततदादेःपरं यत्सार्वधातुकमित्यर्थेनादन्तोपदिश्यमानान्ततदादिग्रहणेन मुग्विशिष्टस्य ग्रहणात्पचमान इत्यादौ "तास्यनुदात्तेदि"ति स्वरसिद्धेः ।

तेन दिदीय इत्यादौ यणादि न, जहारेत्यादावातऔणल इति च न । नचाकारादेर्वर्णस्य वर्णान्तरमवयवः कथमिति वाच्यम् ? वचनेनावयवत्वबोधनात् । तस्य चावयवत्वसादृश्ये पर्यवसानं बोध्यम् ।

न चोक्तज्ञापकाद्वर्णग्रहणेऽस्या अप्रवृत्तिरिति वाच्यम् ? आनेमुगिति सूत्रभाष्येऽकारस्याङ्गावयवस्य मुगित्यर्थे पचमान इत्यत्र तास्यनुदात्तेदिति स्वरो न स्यादित्याशङ्क्याद्उपदेशभक्तस्तद्ग्रहणेन ग्राहिष्यत इत्युक्तेरसङ्गत्यापत्तेः ।

---

तथाचाङ्गग्रहणेन मुको ग्रहणेऽपि अगृग्रहणेनाऽग्रहणान्नैतदनित्यत्वज्ञापकम् । किन्तु "न पदान्ताट्टोरनामि"त्यत्रानामिति पदं यदागमपरिभाषाऽनित्यत्वे ज्ञापकमन्यथा षण्णामित्यत्र "यचि भमि"तिभत्वेन जश्त्वाऽप्रवृत्त्या ष्टुत्वप्राप्तिर्दुर्लभैवेति तु न ? नम्धातोः क्विपि षड्नामित्यत्र ष्टुत्वनिषेधाभावार्थन्तस्यावश्यकत्वात् ।

केचित्तु "वुग्युटावुवङ्यणोः प्रतिषेधो वक्तव्य" इति वार्तिके युटस्सिद्धत्वविधानमेतदनित्यत्वे ज्ञापकमिति वदन्ति ।

तेन दिदीय इति—नच "वुग्युटावुवङि"तिवार्त्तिकारम्भसामर्थ्यान्न यणिति वाच्यम् ? शास्त्रबाधाऽपेक्षया परिभाषाऽनित्यत्वस्यैव लघुभूतत्वात् । नच"दीङो युगचि क्ङिती"ति न्यासेन दोषाऽभाव इति वाच्यम् ? दीयिकेत्यादौ "धात्वन्तयकोस्तु नित्यमि"ति नित्येत्त्वाऽपत्तेः । सिद्धान्ते तक्रन्यायेन युटो बाधकत्वन्तु न क्षमम् ? दीङ्धातोर्घञर्थे कप्रत्यये यणोऽप्राप्तिस्थले युटश्चारितार्थ्यात् ।

वर्णग्रहणेऽस्या अप्रवृत्तिरिति—अननुगताऽनित्यत्वकल्पनापेक्षयाऽनुगतस्थलेऽप्रवृत्तिज्ञापने लाघवमिति भावः । वर्णत्वव्याप्यधर्मघटितधर्माऽनयन इत्यर्थः ।

ननु वर्णग्रहण इत्यस्य कोऽभिप्रायः आगमनिष्ठविधेयतानिरूपितोद्देश्यताश्रयपर्याप्तवर्णत्वव्याप्यधर्मघटितधर्मो न आयातीत्यर्थ आहोस्वित् आगमिवृत्तिवर्णवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मो न आयातीत्यर्थ आहोस्वित् आगमिनिष्ठवर्णत्वव्याप्यधर्मो न आयातीत्यर्थः । तत्र नाद्यः, इत्याह पचमान इत्यादिना । आकारस्येति—उपदिश्यमानाऽदन्तस्येत्यर्थः । अत एव दीव्यमान इत्यादौ स्वरसिद्धिः । अदुपदेशभक्त इति—उपदिश्यमानाऽकारस्यावयव इत्यर्थः । दीव्यमान इत्यत्र स्वरसिद्ध्यर्थं "तास्यनुदात्तेदि"त्यस्य तदन्तविधिना अकारान्तोपदिश्यमानादित्यर्थः उपदिश्यमानाऽकारान्तत्वन्तु यदागमन्यायेनादाय तस्य वर्णत्वव्याप्यधर्मघटितत्वात्सूत्रप्रवृत्तिः । आद्यनस्यापि पदान्तग्रहणेन ग्रहणादिति—नकारविशेषणस्य पदान्तस्य वर्णत्वेन

किञ्च ङमन्तपदावयवस्य ह्रस्वात्परस्य ङमो ङमुडित्यथ कुर्वन्नास्त इत्यादौ ङमो ङमुडागमे णत्वप्राप्तिमाशङ्क्य यदागमा इति न्यायेनाद्यन-स्यापि पदान्तग्रहणेन ग्रहणात्पदान्तस्येति (१)निषेध इत्यनया परि-भाषयागमानामागमिधर्मवैशिष्ट्यमपि बोध्यत इत्याशयकङमुट्सूत्रस्थ-भाष्यासङ्गतेः ।

किञ्च गुणादेरपरत्वे रेफविशिष्टे गुणत्वाद्यष्टव्यम् । अन्यथा ऋका-रस्य गुणवृद्धौ अरारावेवेतिनियमो न स्यात् । तच्च वर्णग्रहण एतदप्रवृत्तौ न सङ्गच्छते । अत एव रदाभ्यामितिसूत्रे भाष्ये "गुणो भवति वृद्धिर्भवति रेफाशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्तत" इति । अत एव "नेटि णेरनिटी" त्यादि चरितार्थम् ।

---

वर्णग्रहणेऽप्रवृत्तौ सत्यामपि अत्रास्यप्रवृत्त्या भाष्यासङ्गतिरिति तात्पर्यम् ।

कृतान्ततस्त—

वर्णत्वव्याप्यधर्मस्य तद्घटितस्य वा नातिदेश इति तदर्थः । पदविशिष्टत्वं पदान्तत्वम् , वैशिष्ट्यञ्च स्वघटकत्वस्वघटकवर्णप्रागभावाधिकरणक्षणाऽ-वृत्तित्वमित्युभयसम्बन्धेन । एवञ्च पदविशिष्टत्वस्य वर्णसमुदायेऽपि सत्त्वेन वर्णत्वव्याप्यत्वाऽभावेनातिदेशे क्षतिविरहात् ।

आगमानामागमिधर्मवैशिष्ट्यमपीति—अयुक्तोऽयं ग्रन्थः, रामायणमि-त्यादावाम्वृत्तिपदान्तत्वस्य नकारेऽतिदेशात्पदान्तस्येत्यनेन णत्वनिषेधाऽपत्तेः फलाऽभावाच्च यत्किञ्चिदेतदित्याशयेनाह किञ्चेति ।

वस्तुतस्तु "गुणो भवति वृद्धिर्भवती"ति भाष्येण जायमानौ गुणवृद्धि-संज्ञकौ अकाराकारौ रेफशिरस्कौ इत्येव बोध्यते नतु विशिष्टे गुणत्वम्वृद्धित्व-म्वातिदिश्यते प्रयोजनाभावात् । ऋकारस्य गुणवृद्धौ अरारावेवेति तु नैव भाष्य-वाक्यम् । ऋकारस्य यत्र गुणवृद्धौ भवतस्तत्राराराववेव सम्पद्येते इति तस्य व्याख्यानाच्च । आदेशकोटौ ऋकारस्यान्तरतमो नास्ति अकारस्यापि स्थानि-कोटावन्तरतमो नास्ति । एवञ्चान्तरतमत्वाऽभावेनाकारस्यैव ऋकारान्तरतम-त्वाच्च, तदुक्तमनान्तर्यमेवैनयोरान्तर्यमिति ।

परमार्थतस्तु "गुणवृद्धिसंज्ञकोऽकारादिःरेफशिरा अभिनिर्वर्तत" इति भाष्याशयान्नैवानेनापि विरोधाभासः । रेफशिरा इत्यत्राऽतद्गुणसम्वि-ज्ञानमेवञ्चाद्यमेव दूषणन्दोध्यमान इत्यत्रेति, तत्रापि यद्युपदिश्यमानाकारा-

---

( १ ) परममूले पदान्तस्येति निषेध इति—नच पदान्तस्येत्यत्रावयवत्वं षष्ठ्य-र्थः । एवञ्च पदान्तावयवस्य नकारस्य णत्वन्न भवतीत्यर्थे व्यपदेशिवत्त्वेनोभयत्र णत्वनिषेधसिद्धौ परिभाषा नाश्रेयेति वाच्यम्? तथासति रामेणेत्यादावपि व्यपदेशिव-त्त्वमन्तरेणापि नेतिसमुदायस्य पदान्तत्वेन तद्घटकनकारस्यापि तथात्वेनाव्याप्तेः ।

न्तात्परत्वस्योपलक्षणत्वन्तदा तत्रापि न दोष इति । एवञ्च वर्णग्रहणे यदाग-मपरिभाषाया अप्रवृत्तौ न क्वापि दोषः ।

किञ्च "स्वरविधौ व्यञ्जनमविद्यमानवदि"तिपरिभाषयैव पचमान इत्यत्र मकारव्यवधानेऽपि स्वरस्सिद्ध्यत्येवेति तत्फलम् । नचाग्निचित्वानित्यत्र मतुप उदात्तत्वापत्त्या नायम्पाठोऽपितु "ह्रस्वस्वरप्राप्तौ व्यञ्जनमविद्यमानवदित्येवे"ति वाच्यम् ? एवमपि वर्णग्रहणे यदागमपरिभाषाप्रवृत्तौ स्वीकृतायामेनया परि-भाषयोदात्तत्वापत्तिर्दुर्वारैव स्यात्, ह्रस्वभक्तस्य तुकस्तद्ग्रहणेन ग्रहणात् ।

नचैतस्या अनित्यत्वान्नोदात्तत्वरूपदोष इति वाच्यम् ? स्वरविधौ व्यञ्ज-नमविद्यमानवदिति पाठेऽपि तस्या अनित्यत्वादिहाऽप्रवृत्तिरित्यस्य वक्तुं शक्य-त्वात्तस्मान्न पचमान इति फलम्वर्णग्रहणे यदागमपरिभाषाप्रवृत्तेः । ङमुट्-सूत्रभाष्योपपत्तियोजनमपि न फलम् । आगमरहितस्य कार्यं सागमे एतत्प-परिभाषालभ्यन्नतु आगमेऽपि आगमिधर्मः । भूयास्त्वभूयास्मेत्यादौ यासुटि तिङ्त्वातिदेशेन पदसंज्ञायां रुत्वादिप्रसक्तेः । एवञ्च नकारद्वयघटितसमुदाय-स्य पदान्तत्वेऽपि पूर्वनकारस्य पदान्तत्वाभावेन भाष्योपपत्त्यभावेन भाष्य-कैयटयोरेकदेशित्वात् । अत एव "शि तुगि"तिपूर्वसूत्रे "तुगयं नियोगतः पूर्वान्त एषितव्यःकुर्वञ्छेत इत्यत्र छत्वं यथा स्यात् णत्वन्तु न भवति "स्तोःश्चुनेति"योगविभागेन स्तोःश्चुना योगे णत्वन्नेति व्याख्यानादि"ति भाष्यम् । यदि आगमिधर्म आगमेऽनयाऽतिदेश्यस्तर्हि नकारस्य स्वतःपदा-न्तत्वात् पदान्तस्येति णत्वनिषेधसिद्धौ योगविभागप्रणयनं भाष्यकृतोऽस-सङ्गतं स्यादिति हृदयम् ।

किञ्च वर्णग्रहणे परिभाषाऽप्रवृत्तौ अयधातोꣳक्विपि वलि लोपे तुकि अतावित्यत्र वृद्धिप्रसङ्गः । अत इत्यत्र "प्रथमयोरि"तिदीर्घः अतमित्यत्रा"मि पूर्व"इति च । नचानित्यत्वेन परिहारः ? प्रयोजनानामाधिक्यात् अल्पदोषेषु अनित्यत्वविधानस्याऽयुक्तत्वात् । किञ्च "तास्यनुदात्तेदि"त्यत्रादुपदेशादि-त्युपदेशग्रहणसामर्थ्यात् शप्प्रवृत्तिकालेऽतꣳपरत्वमाश्रित्य मुका व्यवधाने-ऽपि स्वरसिद्धेःउपदेशग्रहणादेव स्वरइति कैयटोऽपि ।

अरारौ गुणवृद्धी—इत्यपि न ? अनान्तर्य्यमेवैतयोरान्तर्य्यम् इति भाष्येण सम्प्रयोगो वा नष्टाश्वदग्धरथवत् इति वार्त्तिकेन, इदञ्च "ऋवर्णसामा-न्याभिप्रायमि"ति कैयटव्याख्यानेन "सिद्धन्तु प्रसङ्गे रपरत्वादि"ति वार्त्तिकेन' उस्स्थानेऽण् प्रसज्यमान एव रपरो भवतीति ऋवर्णविशेषचिन्तापक्षीयभाष्येण च प्रवृत्तिकालावच्छेदेनैव रपरत्वविधानेन स्थानसाम्यसिद्धेः । "इको गुणवृद्धी" इति भाष्ये गीर्यते पूर्य्यतेऽत्र स्वरः "अचꣳकर्तृयकी"ति न प्राप्नोति नैष दोष' उपदेश इति वर्त्तते" इति भाष्येण"स्य सि"च्सूत्रे कारिष्यते हारिष्यते परत्वा-

द्गुणे रपरत्वे चानजन्तत्वाच्चिण्वद्भावो न प्राप्नोति उपदेशग्रहणाद्भवति"इति भाष्येण च रेफस्यावयवत्वं कथमिति विचार्य्यताम्। अनित्यत्वेन भाष्ययोजना तु न? इष्टस्थलेऽप्यप्रवृत्तौ परिभाषाया निर्विषयत्वापातात्। "ऋतो भारद्वाजस्य-थलि च सेटि-न शसददवादिगुणानामि"तिसूत्रभाष्येऽपि वर्णग्रहणे यदागमपरिभाषाया अप्रवृत्तिरेव ध्वनिता तत एव दृश्यतामलम्बिस्तरेण।

मुग्विधानसामर्थ्यादनित्येति—अयुक्तोऽयमपि ग्रन्थः, नह्यत्र सवर्णदीर्घःप्राप्नोति किन्तु "आतो ङित"इतीयादेशः यद्यपि सवर्णदीर्घं प्राप्नुयात्तथापि नाप्राप्ते तस्मिन्नारभ्यमाणो मुक् अपवादत्वेन सवर्णदीर्घम्बाधते नह्यपवादेनोत्सर्गे बाध्यमाने कस्यचिदनित्यत्वं ज्ञापयितुं शक्यम्। अनागमकानां सागमका आदेशा इतिभाष्यविरोधश्च शब्दस्य नित्यत्वसमर्थनार्थोऽयम्पक्षो भाष्यउक्तो नतु स्थान्यादेशभावाभिप्रायेणेत्यसङ्गतमिवाभाति। स्थान्यादेशभावाभिप्रायकत्वे बाधकाऽभावात्। अत एव "आद्यन्तौ टकिताावि"ति सूत्रे आगमपक्षेऽपि यत्तावदयं सामान्येन शक्नोत्युपदेष्टुम् इत्यादिना भाष्ये शब्दानित्यत्वसमर्थनं कृतम्। "अनागमकानां सागमका"इति च अनागमकार्य्यस्य स्थानिवद्भावेन सागमके लाभ एव प्रयोजनम्। स्थानिवत्सूत्रे "एकदेशविकृतस्योपसंख्यानमि"तिवार्त्तिकेन एकदेशे विकृते सर्वत्र स्थान्यादेशभावस्य विस्पष्टीकरणात्। विकारपदेन लोपः वर्णान्तरम् आगमश्चोच्यन्ते। "एकदेशविकारे हि नित्यत्वन्नोपपद्यत" इतिभाष्यश्लोके आगमे विकारशब्दप्रयोगेण पचत्विति तदुदाहरणेन श्वापुच्छे कर्णे वा छिन्न इति दृष्टान्तेन च त्रयाणाम्विकारपदेन ग्रहणात्। शास्त्रे शब्दान्तरस्योच्यमानं कार्य्यं शब्दान्तरस्य यत्नम्बिना न भवति "स्वंरूपमि"ति वचनात्।

किञ्च "येन विधि"रितिभाष्ये अक्तपरिमाणस्य संज्ञा कृता केनाधिकं स्यात् "स्थानिव"त्सूत्रे च दृष्टान्तस्याऽपि पुरुषारम्भो निवर्त्तको भवति अस्ति च स्वरूपविधिर्न्नाम। अत एव स्थानिवत्सूत्रभाष्ये वार्त्तिककृता "एकदेशविकृतस्योपसंख्यानमि"त्युक्तम् भाष्ये चादेशग्रहणस्येदमेव प्रयोजनमुक्तम्।

किञ्च स्थानिवत्सूत्रीयकार्यविपरिणामाद्वा सिद्धमिति वार्त्तिके बुद्धिविपरिणाम एव स्थानिवद्भावप्रयोजक इत्युक्तम्। अपवादप्रसङ्गस्तु स्थानिवत्त्वादिति "आतोऽनुपसर्गे क" इति भाष्यम्। वृद्धिसूत्रभाष्ये "षष्ठीनिर्दिष्टस्यादेशा उच्यन्ते" इतिव्याख्यावसरे षष्ठ्यभावेऽपि तदर्थसद्भावाद्भवत्येव स्थान्यादेशभावः नाभि नभश्चेति कैयटः। तथा च शेखरकाराणाम्प्रलाप एव।

अत्र विशेषः—

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते एकदेशविकृतमनन्यवत् यदागमास्तद्गुणीभूतास्तद्ग्रहणेन गृह्यन्त इतिपरिभाषात्रयन्नारब्धव्यम्? स्थानिवत्सूत्रेण

सिद्धः । अत्र ज्ञापकापेक्षायान्तु "नेदमदसोरकोः' णेरनिटि' आढ्यसुभगस्थूले"तिसूत्राण्येवादेशपदेन सर्वेषां ग्रहणे ज्ञापकानि । अल्विधौ यदागमपरिभाषैकदेशविकृतपरिभाषयोरप्रवृत्तये ज्ञापकान्तरानुसन्धानमपि न कर्त्तव्यम्भवति। अनल्विधाविति निषेधेनैवेष्टसिद्धेस्तथाच स्थान्यादेशभावपक्ष एव गरीयान् ।

नन्वेवमपि स्थानिवद्भावेनैव लावस्थायामडिति पक्षे पाशब्दस्य अपादेश इति स्थानिवद्भावेनाड्विशिष्टस्य पिबादेशᳶप्रसज्येतेति वाच्यम् ? वक्ष्यमाणनिर्दिश्यमानपरिभाषया वारणात् ।

ननु स्थानिवद्भावे निर्दिश्यमानपरिभाषया वारणे तिसृणामित्यत्र निर्दिश्यमानत्रिशब्दाऽभावादेव त्रयादेशाऽभावे सिद्धे "त्रयादेशे स्नन्तस्य प्रतिषेध" इतिभाष्यवार्त्तिकप्रणयनवैयर्थ्यविरोध इति वाच्यम् ? अनागमकानां ये केचित्सागमका आदेशाः। तथा सति तव्यस्य अभू इत्यादेशप्रसङ्गात् । किन्तु सागमकास्त एवेति तद्बुद्धिपूर्वकमेवादेशशास्त्रप्रवृत्तेः । अत एवैतस्याᳶपरिभाषायाᳶप्रयोजनं "सुप्तिङादेशेष्वि"तिवार्तिकोक्तप्रयोजनकथनपरभाष्ये यस्यै तस्यै इत्यत्र स्याटि कृते स्मैभावᳶप्राप्नोति निर्दिश्यमानपरिभाषया न दोषो भवति इत्यागमस्थले उदाहरणं दर्शितम् । अन्यथा त्वत्पक्षेऽपि यदागमा इतिशास्त्रस्य आगमविशिष्टे केवलकार्य्याप्रवृत्त्यर्थतया तद्विरोधेन कथन्निर्दिश्यमानपरिभाषाप्रवृत्तिरित्याक्षेपस्य तुल्यत्वात् । आगमविशिष्टे अनागमकार्य्यानङ्गीकारे सर्वेषामित्यत्र सुड्विशिष्टस्य सुप्त्वाभावेन "बहुवचने झल्येदि"त्येत्त्वन्न स्यात् । किञ्च देवदत्तस्याऽङ्गाधिक्ये तद्विशिष्टस्यैव देवदत्तबुद्धिविषयत्वमिति स्वीकार्य्यतया निर्दिश्यमानपरिभाषोपस्थानेऽपि अपाशब्दस्य पिबादेशो दुर्वार एव स्यात् । तथाच यत्र निर्दिश्यमानबुद्ध्यविरोधेनादेशप्रवचनन्तत्र निर्दिश्यमानपरिभाषाप्रवृत्तिरित्येव भाष्यवार्तिकाशयो युक्तः । यत्र तु निर्दिश्यमानबुद्धिविषयाऽघटित एवादेशस्तत्र स्थानिवत्सूत्रेण कार्यप्रवृत्तौ न निर्दिश्यमानपरिभाषाऽपेक्षाऽस्तीति न त्रयादेश इति भाष्यवार्त्तिकयोर्विरोधः ।

अथ च "शदेश्शित" इति सूत्रभाष्ये आच्छेदित्यत्राटि कृते साट्कस्य श्च्छिभावᳶप्राप्नोतीत्याशङ्क्य "अस्तु शब्दान्तरस्य कृत आडि"तिकृत्वा पुनराड् भविष्यतीति समाधाय ननु पुनश्च श्च्छिभावः पुनराडिति चक्रकाद्व्यवस्था प्राप्नोतीत्याशङ्क्य नैष दोषः चक्रकेष्विष्टतो व्यवस्था इति समाहितम् । तद्रीत्या अपा इत्यस्य पिबादेशेऽपि तस्य शब्दान्तरत्वात् पुनरटि इष्टतो व्यवस्थया अपिबदिति सिद्धमिति न तदर्थमेतस्याᳶपरिभाषाया अनित्यत्वमाश्रयणीयमिति दिक् । एतावता प्रयासेन स्थानिवत्सूत्रेण सिद्धौ तन्मध्यपातियदागमैकदेशविकृतमितिपरिभाषात्रयन्नारब्धव्यमिति सरयूपारीणशुक्लाः ।

अस्मद्गुरवस्तु—

यदागमपरिभाषा न कार्य्या, स्थानिवत्सूत्रेण च सर्वेषामादेशानां ग्रहणं यस्य निर्दिश्यमानत्वन्तस्यादेशो यस्य न निर्दिश्यमानत्वन्तस्य नादेश इति सिद्धान्तः । निर्दिश्यमानत्वञ्च षष्ठीप्रकृतिविशिष्टत्वम् वैशिष्ट्यञ्च स्वप्रयोज्य-शाब्दबोधीयविषयताश्रयत्वस्वप्रयोज्यशाब्दबोधीयविषयताविशिष्टवर्णाऽघटि-तत्वस्वजन्योपस्थितीयविषयताश्रयनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नवि-धेयताश्रयाऽघटितत्वस्वजन्योपस्थितीयविषयताश्रयविशिष्टवर्णाऽघटितत्वैतच्च-तुष्टयसम्बन्धेन। सम्बन्धघटकप्रथमवैशिष्ट्यञ्च वर्णे स्वानाश्रयत्वस्वाश्रयसमभि-व्याहृतत्वोभयसम्बन्धेन । सम्बन्धघटकद्वितीयवैशिष्ट्यञ्च वर्णे(१) स्वसमभि-व्याहृतत्वस्वनिष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयत्वोभयसम्ब-न्धेन । जराया जरा जराजरा ते जराजरसौ व्याघ्रपात्पद इत्यादावजादिविभ-क्त्यव्यवहितपूर्वत्वाभावान्न जरसादेशः पूर्वजराशब्दस्य । एवं पूर्वपाच्छब्दस्य न पदादेशः स्थाने द्विर्वचने पदद्वित्वस्थले जराजरसाविति समुदायस्येष्ट एव जर-सादेशो जरसावित्येव रूपन्नतु जराजरसाविति । "जराया असुङि"तिभाष्य-न्यासस्तु पदद्वित्वस्थलानवलोकनेनैव प्रवृत्त इति तात्पर्य्यम् । पदद्वित्वाऽनन्तर-मतिजरा जरसावित्येव रूपम् । अशूवचनं साकच्कार्थम् "इमोऽः" इत्येव सिद्धे कादेशस्साकच्कार्थ इति भाष्यम्पदद्वित्वस्थलीयदोषेण निरस्तप्रायम् इति न वाच्यम् ? पदद्वित्वस्याऽप्युपलक्षकत्वात् अधिकलाभे न हानिरिति न्यायात् । "पाद॒पदि"ति सूत्रभाष्ये उपधाया ह्रस्वत्वम्वाच्यम् , अन्यथा द्विपद॒पश्ये-त्यादौ समुदायस्यादेशापत्तिः । न वक्तव्यम् निर्दिश्यमानस्यैवादेशादित्यर्थक-भाष्यविरोधस्तु न ? तस्य वार्तिकस्य द्विपद इत्यादौ समुदायादेशाऽभावरूपं यत्प्रयोजनं तस्या निर्दिश्यमानपरिभाषयाऽन्यथासिद्धिप्रतिपादनमात्रपरं हि तद्भाष्यम् । ह्रस्वकरणे दोषो नास्तीत्यत्र तात्पर्य्यम् तद्भाष्यस्येत्यभिधानात् । पदद्वित्वस्थले निर्जरसावित्यत्र स्थानिवद्भावेन जरात्वधर्मानयनविशिष्टस्यादेश इति सिद्धान्तः । "स्नात्वाकालकादीनाम्प्रतिषेधो वक्तव्यः" स्नात्वाकालकः स्नात्वाकालकीकृत्येत्यादौ वार्तिकेनैव "अन्त्यबाधेऽन्त्यसदेशस्ये"तिपरिभा-षया वा वारणम् । वार्तिकन्तु भाष्ये प्रत्याख्यातम् । अनञ्पूर्वपदकस्य क्त्वा-न्तसमासस्य ल्यबित्यर्थः । प्रतिषेधो न वक्तव्यः तदन्तनिर्देशात्सिद्धमिति भाष्यम् । मयूरव्यंसकादौ स्नात्वाकालकेत्यस्य पाठो निपातनाल्ल्यबभाव इति केचित् । प्रतिषिञ्चति सजूस्सजूर्भ्यामित्यादावपि न दोषस्तस्माद्यदागमपरिभाषा न कर्त्तव्येति तत्त्वसंकलपनमाहुः ।

(१) समभिव्याहृतत्वञ्च वस्तुविशिष्टत्वम् वै० च स्वाव्यवहितपूर्वत्वस्वाव्यव-हितोत्तरत्वान्यतरसम्बन्धेन बोध्यम् ।

अनागमकानां सागमका आदेशा इत्यस्य त्वयमर्थः । आर्धधातुकस्येडागम इत्यर्थे ज्ञाते ;नित्येषु शब्देष्वागमविधानानुपपत्त्यार्थापत्तिमूलकवाक्यान्तरकल्पनेनेड्रहितबुद्धिप्रसङ्गे सेडबुद्धिः कर्तव्येति । एवं चादेशेष्विवात्रापि बुद्धिविपरिणाम इति न नित्यत्वहानिः । स्थानिवत्सूत्रे च नेदृशादेशग्रहणं साक्षादष्टाध्यायीबोधितस्थान्यादेशभाव चारितार्थ्यात् ।

किं चैवं सति स्थानिबुद्ध्यैव कार्यप्रवृत्त्या निर्दिश्यमानस्येति परिभाषाया अप्राप्त्याऽडागमसहितस्य पिबाद्यादेशापत्त्या लावस्थायामडितिभाष्योक्तसिद्धान्तासंगतिः । स्थानिवद्भावविषये निर्दिश्यमानस्येति

---

केचित्तु—षष्ठीप्रकृतिविशिष्टत्वन्निर्दिश्य(१) मानत्वम । वैशिष्ट्यञ्च स्वोपस्थाप्याघटितो यस्स्वबोध्यस्तद् घटकत्वस्वोपस्थाप्यावधिकपूर्वत्वोभयसम्बन्धेन । पूर्वत्वञ्चेह व्यवहिताव्यवहितसाधारणम ; तेन स्नात्वाकालकीकृत्त्येत्यादौ न दोष इति भणन्ति ।

नन्वनित्यत्ववारणायागमस्थलेऽपि स्थान्यादेशभावोऽङ्गीकार्य्यः अनागमकानां सागमकाआदेशा इत्यस्येति मूलम । एवंच स्थानिवत्सूत्रेणैव निर्वाहे यदागमपरिभाषा न कार्य्येत्यत आह स्थानिवदिति साक्षादिति—अष्टाध्यायीस्थसूत्रघटकषष्ठीप्रतिपाद्येत्यर्थः । अयं हि स्थान्यादेशभावोऽष्टाध्यायीस्थशास्त्रकल्पितशास्त्रघटकषष्ठीप्रतिपाद्य इति तस्य न ग्रहणम ।

ननु "न्नेटि' णेरनिटो"तिशास्त्रज्ञापकेनोभयविधस्थान्यादेशभावयोः स्थानिवत्सूत्रे एव ग्रहणमस्तु परिभाषा किमर्थेति भावेनाह किञ्चेति । स्थानिवद्भावविषये निर्दिश्यमानपरिभाषाप्रवृत्तौ भाष्यविरोध इत्यत आह स्थानिव-

---

( १ ) अत्र च स्वशक्यत्वत्वविशिष्टवर्णाघटितत्वोभयसम्बन्धेन पूर्वं वैशिष्ट्यन्नियोज्यम् । "जराया जरसन्यतरस्याम्" इति निर्जरशब्दघटकजरांशस्यैव जरसादेशमादिशति । तथाहि षष्ठी जराया इति, तत्प्रकृतिः जरा, तद्विशिष्टत्वमस्ति जरांशस्य । तत्र हि स्वं षष्ठीप्रकृतिर्जरा, तच्छक्यत्वम् वर्त्तते । एवम् स्वम् जरा, तद्विशिष्टो वर्णो निरो रेफस्तदघटितत्वन्निर्जरैकदेशजरस्येति भवति तस्यादेशः । प्रकृतिविशिष्टत्वोपपादकयोर्द्वयोः सम्बन्धयोस्समन्वयस्तु स्वं जरा तदुपस्थाप्याघटितो यस्स्वबोध्यः कोऽर्थस्स्वजन्यशाब्दबोधीयविषयताश्रयो नतूपस्थितीयविषयताश्रयस्तत्त्वस्यासंकुचितत्वेन विषयतामात्रसाधारण्यात् । तदघटकत्वस्य स्वोपस्थाप्यनिर्जरैकदेशजरावधिकपूर्वत्वस्य च निरो रेफे सत्त्वेन तादृशवर्णाघटकत्वस्य जरांशेऽपि विद्यमानत्वेन निर्वाह इति । एवञ्च त्रिशब्दादाचारक्विबन्तात् कर्त्तरि क्विपि तुकि त्रितामित्यादौ न निर्दिश्यमानत्वमादाय यदागमपरिभाषासहकारेण त्रयादेशापत्तिसम्भवः ? परिभाषाया यदागमा इत्यस्या लक्षणाग्राहकत्वेन स्वशक्यत्वरूपप्रथमसम्बन्धासंघटनादिति ध्येयम् ।

परिभाषायाः प्रवृत्तौ तिसृणामित्यत्र परत्वात्तिस्रादेशे स्थानिवद्भावेन त्रयादेशमाशङ्क्य सकृद्गतिन्यायेन समाधानपरभाष्यासंगतिः।

एरुरित्यादौ स्थानषष्ठीनिर्देशात्तदन्तपरतया पठितवाक्यस्यैव समुदायादेशपरत्वेनादेशग्रहणसामर्थ्यात्तस्य स्थानिवत्सूत्रे ग्रहणेन न दोषः। आनुमानिकस्थान्यादेशभावकल्पनेऽपि श्रौतस्थान्यादेशभावस्य न त्याग इत्यचःपरस्मिन् इत्यादेर्नासंगतिः।

एतेन यदागमा इति परिभाषा स्थानिवत्सूत्रेण गतार्थेत्यपास्तम्। एतत्सर्वं दाधाघ्वदाविति सूत्रे भाष्ये स्पष्टम्॥ ११॥

नन्वेवमुदस्थादित्यादावुदःस्थास्तम्भोः पूर्वस्येतिपूर्वसवर्णापत्तिरत

---

द्भावविषयइति।

ननु स्थानिवत्सूत्रे आदेशग्रहणसामर्थ्यात् पाणिनितात्पर्यविषयीभूतस्थान्यादेशमात्रग्रहणमेव युक्तन्नतु पाणिन्युच्चरितपदप्रयोज्यशक्तिलक्षणान्यतरज्ञानाधीनोपस्थितिविषयीभूतस्थान्यादेशपरिकल्पितमित्यत आह किञ्चेति। लाघवस्थायामिति—असिद्धवत्सूत्रप्रत्याख्यानकल्पे आयन्नित्यादिसिद्धिरेतत्पक्षफलम्।

वस्तुतस्तु—सुमनिष्ठ इत्यादौ "टेरि"ति लोपानन्तरं "नस्तद्धित" इति लोपवारणायासिद्धवत्सूत्रस्यावश्यकत्वेनाऽपिबदित्यत्र परत्वात्पिबादेशे ततोऽप्यपिबदिति सिद्ध्यत्येव, प्रत्याख्यानपक्षस्त्वेकदेश्युक्तिरित्यत आह स्थानिवद्भावविषय इति। एरुरित्यादाविति। इकारस्थान उकार इति बाधपूर्वकशब्दाऽनित्यत्वाऽपत्तिप्रतिसन्धानपूर्वकेकारान्तस्योकारान्त आदेश इत्यर्थबोधेच्छयैव सूत्रप्रणयनम्। श्रौतानुमानिकोभयविधार्थस्य शक्तिलक्षणाऽन्यतरज्ञानाधीनोपस्थितिविषयत्वमिति तत्त्वम्। "अचःपरस्मिन्नि"त्यादेशग्रहणमत्रमानम्। तदभाववत्तानिश्चयमुद्रया तदभावव्याप्यवत्तानिश्चयमुद्रया परस्परविरुद्धधर्मद्वयमर्थाऽपत्तिविषयः। जीवन्चैत्रो गेहे नेत्यत्र जीवनाश्रयत्वसत्त्वाभावौ तदभाववत्तानिश्चयमुद्रया विरुद्धौ। पीनो देवदत्तो दिवा न भुंक्ते इत्यत्र पीनत्वभोजनत्वाभावौ तदभावव्याप्यवत्तयेति। एवन्नित्यत्वमवयवित्वञ्च तदभावव्याप्यवत्तया विरुद्धमिति श्रुतार्थोऽपत्त्याऽनागमकानामिति कल्पनम्। अर्थशब्दः प्रयोजनवाची। अर्थापत्तिकल्पितो यद्यपि पाणिनितात्पर्यविषयस्तथापि न पाणिन्युच्चरितपदप्रयोज्य इति।

ननु यदागमपरिभाषयाऽपिबदित्यत्र अपा इत्यस्य पाशब्दत्वेऽपि निर्दिश्यमानपरिभाषयाऽड्विशिष्टस्य निर्दिश्यमानत्वाऽभावेन न पिबादेश इत्युक्तं, का सा परिभाषेत्यपवादसङ्गतिं सूचयन्किञ्च तत्र मानमित्याद्यशेषविशेषान्वक्तुमुपक्रमते नन्वेवमिति। यदागमपरिभाषास्वीकारे इत्याकूतम्। उदस्थादिति

आह—

## निर्दिश्यमानस्यादेशा भवन्ति ॥ १२ ॥

षष्ठी स्थानेयोगेति सूत्रमावर्तते । तत्र द्वितीयस्यायमर्थः, षष्ठ्यन्तं निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव, निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थाननिरूपितसंबन्धेन युज्यते न तु प्रतीयमानमिति तेनेदं सिद्धम् ।

---

लावस्थायामडिति पक्षेऽयं ग्रन्थः । सिजन्ताङ्गस्याटि तु अड्विशिष्टे स्थात्वाऽसम्भव एव स्यादित्याशयः । पूर्वस्सवर्णोऽपन्त्रिरिति—ईकारस्यान्तर्यतो दकार इति भाष्येण सम्वारा नादाघोषाश्चेति चकारेण यरलवाश्चेति चकारेण अचामपि सम्वाराद्यल्पप्राणवत्त्वम्वोकारेण तत्साम्येन दकारापत्तिरिति भावः । पूर्वस्य दकारस्य सवर्णऽप्रथमोपस्थितत्वादकारस्य तकारस्स्यादिति केचित् । न च "उदः स्थास्तम्भोरि"ति सूत्रे लुप्तषष्ठीनिर्दिष्टसकारप्रश्लेषेण सकारस्यैव पूर्वसवर्ण इति न दोष इति वाच्यम् ? चिताम पस्पर्तिषे बभूविथेत्यादौ विशिष्टस्य तत्ववारणाय परिभाषावश्यकत्त्वेनोदस्थादित्यस्योपलक्षणत्वात् । सूत्रे यस्मात्पदात् षष्ठ्युच्चार्य्यते तस्यैवादेशो भवति नतु तदन्तादेरित्यनुकार्य्यानुकरणयोरभेदपक्षेऽर्थः । भेदपक्षाश्रयणे तु यदनुकरणात्षष्ठ्युच्चारिता तस्यानुकार्य्यस्यादेशा भवन्ति । अत एव "पादऽपदिति" पद्भावो द्विपादित्यत्र स्यादि कृते "सर्वनाम्नस्स्मै" इतिस्मैभावो न । सूत्रमावर्त्तत इति—सूत्रकारमते षष्ठ्यास्स्थान(१)पदार्थानुयोगिकसम्बन्धोऽर्थस्तदर्थबोधनाय सूत्रमावश्यक-

---

(१) स्थानपदार्थस्तु—अवच्छेदकतानिरूपितावच्छेदकतानिरूपितोच्चारणत्वावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नविशेष्यतात्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या विशेष्यता तदवच्छेदकधर्मावच्छिन्ना या साधुत्वप्रकारकप्रमात्मकज्ञानीयविशेष्यतात्वावच्छिन्नविशेष्यतात्वनिष्ठावच्छेदकतानिरूपितावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या विशेष्यता तादृशविशेष्यतावच्छेदकतावच्छेदकतारूपः । यथा "इको यणचि" इत्यत्र इकस्स्थान इति निर्देशे वृत्तित्वं षष्ठ्यर्थः । तत्रेकपदार्थस्य षष्ठ्यर्थवृत्तित्वसम्बन्धेन स्थानपदार्थैकदेशावच्छेदकतायामन्वयः । स्थानपदार्थीयान्तावच्छेदकत्वस्य च स्वनिष्ठवृत्तित्वसम्बन्धावच्छिन्नाधारतानिरूपिताधेयतासम्बन्धेन यणपदार्थेऽन्वयः । तथाच इग्निरूपितवृत्तितावती या विशेष्यतावच्छेदकतावच्छेदकतेत्यादि । विकल्पविधायकस्थले "जराया जरसन्यतरस्याम्" इत्यादौ अन्यतरस्यामित्यादितत्तत्सूत्रोपात्तग्रहणसामर्थ्येन स्थान्यादेशयोरुभययोस्साधुत्वबोधनेन न क्षतिः । अभाव एव वेदृशस्थले स्थानश-

मित्यावृत्त्या द्वितीयार्थमाह आवर्त्तत इति । भाष्यमते तु राज्ञः पुरुष इत्यादौ पुरुषपदसान्निध्यात्षष्ठ्यास्स्वत्वार्थकत्त्वमिव "इको यणची"त्यादावपि यणादिपदसान्निध्यात्स्थानार्थकत्वलाभे "षष्ठी स्थानेयोगा" इति सूत्रन्निर्दिश्यमानपरिभाषार्थकमित्यावृत्तेर्नोपयोग इति । प्रमाणञ्च "कोऽन्यस्सम्बन्धो भवितुमर्हति ऋते स्थानादिति सूत्रमप्रयोजनमि"ति भाष्यमेव । तथाचात्र यतस्सेत्यध्याहारः यतः षष्ठी सा षष्ठीप्रकृतिः स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगिनीत्यर्थस्तत्फलितमाह षष्ठ्यन्तमिति । अन्तशब्दोऽत्र समीपवचनः षष्ठ्या अन्तं समीपं प्रकृतिरिति यावत् । ननु षष्ठीप्रकृतिस्तु सूत्र एवोच्चारिता तत्र च स्थानपदार्थानुयोगिकसम्बन्धप्रतियोगिताया असम्भव एवेत्याह सजातीयमेवेति । साजात्यञ्चात्र स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मेण न गृह्यतेऽन्यथा"हयवरडि"ति सूत्रे वृत्तस्तत्रेत्यत्र निर्दिश्यमानपरिभाषया वारणपरकभाष्यमसङ्गतं स्यात्किन्तु स्वजन्यप्राथमिकोपस्थितिविषयत्वेन समानानुपूर्वीकत्त्वेन वा अतिस्य इत्यत्रोपसर्गतकारस्य "तदोरि"ति सत्त्वमतियूयमित्यादौ सोपसर्गस्य यूयादेशापत्तिरित्यत आह अवयवरूपमेवेति । षष्ठीप्रकृतिसजातीयावयवरूपमिति यावत् । व्यपदेशिवद्भावेन केवलेऽपि त्यदादौ सत्वादिसिद्धिः । निर्दिश्यमानपदार्थे प्राथमिकत्त्वनिवेशम्विशदयति नतु प्रतीयमानमिति—न तु कथञ्चिदुपस्थितिविषय इति । तेनेदं सिद्धमिति—सूत्रस्येदृशार्थकरणेनार्थादेव निर्दिश्यमानपरिभाषा निस्सरति । षष्ठीप्रकृतिजन्यप्राथमिकोप-

---

ब्दार्थः । एवञ्च "इको यणचि" इत्यत्र स्वप्रयोज्यत्वप्रतियोगिकत्वं षष्ठ्यर्थः, अभावपदार्थस्य स्वाश्रयफलजनकत्वसम्बन्धेन विधेयांशेऽन्वयः, इकप्रयोज्यत्वप्रतियोगिकाभाववदिष्टफलजनको यण् भवतीत्यर्थः । विकल्पस्थले त्वभावस्यापि विधेयत्वेन पूर्वोक्तप्रकारवत् जरस् तदभावश्च जराप्रयोज्यत्वाभाववत्फलजनको भवतीत्यर्थेन जरसादेशाभावस्यापि पुण्यजनकत्वेन विभाषादिपदप्रमाणाददोषात ।

परेतु स्थीयतेऽस्मिन्नित्यधिकरणे ल्युटम्विधाय "जन्यानां जनकः कालो जगतामाश्रयो मतः" इत्युक्त्या सर्वाधारत्वेन काल एव स्थानपदार्थः तन्न ? तथासतीककर्मकोच्चारणकालवृत्त्युच्चारणकर्म यण् भवतीत्यर्थापत्तौ सुद्ध्युपास्य इत्यादौ द्विमात्रेकारोच्चारणस्थलेऽर्द्धमात्रिकयकाराद्युच्चारणासम्भवात् यणनापत्तेः । तस्माद् भावल्युडन्त एव व्युत्पद्यते ।

यदि तु व्यवहारबलादेककालावच्छेदेनापि इग्यणोरुच्चारणम् "इको यणचि" इत्यादिप्रामाण्यादित्युच्यते तदा लाघवादधिकरणल्युडन्तोऽपि निष्पादयितुं शक्यत इति सरयूपारीणाः ।

विशेषतस्तु शास्त्रार्थोऽस्मत्पितृरचितपरिष्कारदर्पणे "स्थानेऽन्तरतमः" इति सूत्रव्याख्यानेऽवगन्तव्यः ।

स्थितिविषयस्यादेशा भवन्तीति परिभाषातत्त्वम् । प्राथमिकोपस्थितित्वञ्च अन्यसहायशून्यत्वमत एवापिबदित्यत्र यदागमपरिभाषासहायविशिष्टत्वाद्-ड्विशिष्टस्य न पिबादेशः किन्तु केवलस्यैवेति ।

ननु उदस्थादित्यवतरणन्न युक्तमर्थवद्ग्रहणपरिभाषयाऽर्थवत्स्थाशब्दस्यैव पूर्वसवर्ण इत्यड्विशिष्टेऽर्थवत्त्वसत्त्वेऽपि उद्ःपरो योऽर्थवान् स्थाशब्दः तद्-वयवनिर्दिश्यमानावयवस्यादेरल इत्यर्थादुदस्थादित्यत्रार्थवान्स्थाशब्दः· अस्था इति तदवयवनिर्दिश्यमानस्थाशब्दस्तदवयवाद्यल् अकार एव तस्य पूर्वसवर्ण आपतत्येवेति चेन्न ? सप्तम्यन्तपञ्चम्यन्तयोस्साक्षान्निर्दिश्यमान एवान्वय इति भाष्यसिद्धान्तः । तथाच केवलशुद्धसूत्रोच्चारितषष्ठीप्रकृतिस्थाशब्द एवान्वये-नार्थवत्त्वविशिष्टास्थाशब्देऽन्वयाऽभावेन क्षतिविरहात् ।

अत्राऽभिनवविवेकप्रकाशः ।

ननु निर्दिश्यमानपरिभाषा यद्यर्थवद्ग्रहणपरिभाषाया बाधिका तदा राजे-ःपृथग्भ्राजिग्रहणम्व्यर्थं स्यात् वानरशब्दे "नृनरयोर्वृद्धिश्चे"ति वृद्ध्याऽप-त्तिश्च स्यात् इति चेन्न ? निर्दिश्यमानपरिभाषाऽर्थवद्ग्रहणपरिभाषान्नैव बाध-ते इति समाधानात् ।

नचाबाधकत्त्वसिद्धान्तेऽपिबदित्यादौ "लावस्थायामडि"ति पक्षे पिबादे-शःपाशब्दस्य न स्यात् "स्यसिच्सीयुडि"ति सूत्रभाष्यीय "सीयुडविशेषित-स्स्यादि"ति वचनसिद्धाऽगमसमभिव्याहारे तद्रहितस्याऽनर्थकत्त्ववर्णनात् इति वाच्यम् ? असिद्धवत्सूत्रप्रत्याख्यानकल्पे आयन्नित्यादिसिद्धिरेव लावस्थाया-मडितिपक्षफलम्परन्तु सुमनिष्ठ इत्यादौ "टेरि"ति लोपानन्तर"न्नस्तद्धित" इति टिलोपाऽभावायासिद्धवत्सूत्रस्यावश्यकत्त्वाल्लावस्थायामिति पक्षस्य दूषि-तप्रायत्वात् । निर्दिश्यमानपरिभाषाऽर्थवत्परिभाषाम्बाधत एवेत्यस्यैव सयुक्ति-कसमाधानस्य वक्ष्यमाणत्वाच्च ।

ननु धातुत्वम्प्रत्ययत्वञ्चागमसमभिव्याहारे आगमरहिते यदि गृह्यते तदा "स्यसि"च्सूत्रस्थभाष्यविरोधः । किञ्च "ग्रहोऽलिटि दीर्घ" इत्यत्रैकाच इत्यस्य अग्रहीष्टामित्यत्र शेखरोक्तदीर्घाभावाऽपादनासङ्गतिरट्रहितस्यैकाच्त्वात् । आगमविशिष्टेऽङ्गीक्रियते चेत्तर्हि "अजादीनामटा सिद्धं वृद्ध्यर्थमिति चेद-टः । अश्वपो हसतीत्यत्र धातौ वृद्धिमटस्स्मरेदि"ति वार्त्तिकविरोधः । लाव-स्थायामडितिसिद्धान्तेऽखादीदित्यादौ "अतो हलादेरि"ति वृद्ध्यनापत्तिः । तत्सूत्रन्तु माङ्योगे चरितार्थम् ।

किञ्च "आज्जसेरसुगि"त्यादौ पूर्वास इत्यत्राऽसुकि जसश्शीभावस्स्यादि-त्याशङ्क्य निर्दिश्यमानपरिभाषया परिहृत्य यस्तर्हि निर्दिश्यते इति पुनराश-ङ्कितन्तच्चोक्तपक्षेऽसङ्गतम् , निर्दिश्यमानजसोऽर्थवत्त्वाऽभावात् । एवमेव यदा

नचास्य च्वावित्यादौ दीर्घाणामादेशानापत्तिस्तेषां निर्दिश्यमानत्वाभावादिति वाच्यम् ? जातिपक्षे दोषाभावात् ।

किं च न भूसुधियोरिति निषेधेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्यबोधनान्न दोषः । इयङुवङोङित्त्वं त्विवर्णोवर्णान्तश्नुधातुभ्रुवा-

---

गमपरिभाषाया यदि वर्णग्रहणेऽप्रवृत्तिस्तर्हि नागेशमते मूलोक्ता आपत्तयो जाग्रति । वर्णप्रवृत्तौ तु "लण्" सूत्रस्थभाष्यविरोधस्तत्रहि चिकीर्षतीत्यादौ परेणाणग्रहणे दीर्घ रपरत्वे इत्त्वाऽप्राप्तिमाशङ्क्य "उपधायाश्चे"त्येवम्भविष्यतीत्युक्तम् । त्वद्रीत्या यदागमन्यायेन रपरत्वे ऋदन्तत्वानिर्दिश्यमानकारस्येत्वे रूपसिद्धौ शङ्काया असङ्गतिः । अल्त्वावर्णत्वयोरपि आगमसहित एव सत्त्वेन समाधानाऽसङ्गतिश्च । अनित्यत्वादुक्तन्यायाऽप्रवृत्तौ तु इष्टस्थले प्रवृत्तेराव-श्यकतया तत एव मातॄणामित्यादौ उपधायाश्चेतीत्त्ववारणे तदर्थं धातुग्रहणा-वश्यकत्वोक्त्यसङ्गतिः ।

किञ्च जहर्थत्यादौ गुणेऽप्यजन्तसन्निपातेना "चस्तास्वदि"तिसूत्रस्थं भाष्यञ्च विरुध्यते । एवमेव निर्दिश्यमानपरिभाषाया वर्णग्रहणेऽप्रवृत्तौ मूलोक्तन्दूषणम्, प्रवृत्तौ देवदत्तात्तेत्यादाविव पचमान इत्यत्रापि निर्दिश्यमानपरिभाषया मुको दीर्घोऽभावेऽपि विशिष्टस्य सवर्णदीर्घे तद्वैयर्थ्यमिति पूर्वग्रन्थाऽसङ्गतिरिति प्रश्नकाटिः । अथोत्तरम्, निर्दिश्यमानपरिभाषाऽर्थवत्परिभाषामपि बाधते इत्येव सिद्धान्तः । अयमाशयः, आगमप्रवृत्तेः पूर्वमागमिनो यथाऽर्थवत्त्वन्तत्तत्पदबोध्यत्वादिकन्तच्चागमे जातेऽपि तथैवेति वार्त्तिके धातुग्रहणं सामर्थ्यात् इष्टपरम् "हलादेरि"ति चातोर्विशेषणम् । यदागमन्यायस्तु वर्णग्रहणे न प्रवर्त्तते । स्यसिच्सूत्रे उपदेशग्रहणात् पदान्तत्वस्य वर्णमात्रवृत्तित्वाऽभावादेव न दोषः । गुणवृद्ध्यादिसंज्ञा तु रेफरहित एव । वर्णग्रहण उक्तन्यायाऽप्रवृत्त्या सरेफस्य गुणत्वाऽभावेऽपि रेफस्य वचनबाधितावयवत्यागे मानाऽभावेन अवयवद्वारकान्तस्येमादायारारावेवेति नियमापपत्तेः । एतेन "रदाभ्यामि"ति सूत्रस्थम्भाष्यमपि सुव्याख्यातम् । उत्सर्गसमानदेशा अपवादा इति न्यायेन निर्दिश्यमानपरिभाषापि अल्ग्रहणे न प्रवर्त्तते । अत एवानुमानिकस्थान्यादेशभावे ईवर्णान्तस्य तुग्विधीयमानो नेकारमात्रस्येत्युक्तिरित्यलम्

सिंहावलोकनन्यायेन पुनरपि मौलिको विचारः ।

साक्षात्परम्परया वा यत्र षष्ठीप्रकृत्यर्थः स्थानपदार्थान्वयी तत्रेयम्परिभाषा प्रवर्त्तत इति निष्कर्षः ।

ननु मालीभवति गङ्गीस्यादित्यादाव "स्यचे"तीत्वन्न स्याद् दीर्घस्याणुदित्सूत्रसहकारेणैवोपस्थितित्वेन निर्दिश्यमानत्वाऽभावात् । तदेवाह नचास्य च्वावेति ।

मित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय, दीङ्ङोर्ङित्वं तु स्पष्टार्थमेव ।

एतेनेदं ङित्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापक-मित्यपास्तम् । हयवरट्सूत्रस्थेनायोगवाहानामुपदेशेऽलोन्त्यविधिः प्र-

---

ननु व्यक्तिपक्षमादाय पूर्वपक्षे जातिपक्षेण समाधानमुचितं यथोद्देशादि-वत्तयोर्व्यवस्थापकत्वाऽभावादित्यरुचेराह किञ्च नभूसुधियोरिति । "एर-नेकाचः ओस्सुपी"त्यादौ निर्दिश्यमानपरिभाषया ह्रस्वस्यैव ग्रहणे तद्वैय-र्थ्याऽपत्तिरिति । तथाच ग्रहणकशास्त्रातिरिक्तत्वेन निर्दिश्यमानपरिभाषायां सङ्कोचः । उपलक्षणञ्चैतच्छास्त्रान्तरातिरिक्तत्वेन सङ्कोचस्यापि वक्ष्यमा-णत्वात् ।

नच आभवति आसन्ध्यायति यत्कुलन्तदाभु आसन्धि आ आभु आ-सन्धि यत्रेति आभुवौ आसन्धियावित्यादौ परादिवद्भावेन गतिपूर्वपदकत्वेन यणप्राप्तिनिषेधार्थञ्चरितार्थमिति वाच्यम् ? तावन्मात्रप्रयोजनकत्वे ह्रस्वनिर्देशे-नैव सिद्धौ दीर्घनिर्देशस्य ज्ञापकत्वात् ।

नच डुप्रत्ययान्तविभ्वादिशब्दे निषेधेन चरितार्थता शङ्क्या ? अवयव-प्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसीति न्यायेन डुप्रत्ययान्तस्य यौगिकत्वेनावयव-प्रसिद्धेस्तस्याऽग्रहणात् ।

नच "इको यणचो"तिप्राप्तयण्निषेधार्थन्तच्चरितार्थमिति वाच्यम् ? तत्परिभाषयैवोवङादेरप्यप्राप्तेः । तथात्वे "इको यणचो"त्यनन्तरम्पाठेन सिद्धे प्रकरणान्तरे पाठस्य ज्ञापकत्वे क्षतिविरहात् तत्रापि निर्दिश्यमानपरिभाषो-पस्थितेस्तत्र यणप्राप्तेः ।

केचित्तु सुधियोरितीयङ्निर्देशोऽत्र ज्ञापकोऽन्यथा इयङ्विधायके ह्रस्व-स्यैव निर्दिश्यमानत्वेन निर्देशाऽसङ्गतेः । निषेधेनेत्यस्य निर्देशेनेत्यर्थः । नच ध्यायति यत्तत् धि सुष्ठु धि यस्य स सुधीरित्यस्यानुकरणमस्त्विति वाच्यम् ? भूशब्दसाहचर्य्येण दीर्घस्यैवानुकरणात् ।

वस्तुतस्तु "न भूसुधियो"रितिनिषेधेनेत्यस्य "न भूसुधियोरि"तिनिषेधी-यविग्रहेण "वर्षाभ्वश्चे"तिज्ञापकन्तत्रोवङाद्यप्राप्त्या "इको यणचो"नेनैव सिद्धे व्यर्थं सदत्रज्ञापकमिति । नचभूशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वे वर्षायोगे पुंवद्भावपक्षे चरितार्थमिति वाच्यम् ? पुंवद्भावे दीर्घान्तबुद्ध्या "ओस्सुपी"त्यस्याऽप्राप्तेः । तत्त्वतस्तु "अतो लोप"इतिसूत्रे तपरकरणमेव ज्ञापकमन्यथा दीर्घाऽकारस्य निर्दिश्यमानत्वाभावेन तद्व्यावृत्त्यर्थन्तपरकरणं व्यर्थमेव स्यादिति सरयूपारीणशुक्लाः ।

अपास्तमिति—तत्र धातोरपि निर्दिश्यमानत्वादिति भावः । नन्वङ्गस्यापि

योजनम् । वृत्तस्तत्र । नैतदस्ति प्रयोजनं, निर्दिश्यमानस्येत्येव सिद्धमिति भाष्येण विरोधात् ।

---

निर्दिश्यमानत्वेन निर्जर इति समुदायस्यादेशत्ववारणाय यावन्निर्दिश्यमानस्यादेश इत्यर्थ आवश्यकः । एवञ्च जराशब्दस्य यावन्निर्दिश्यमानावयवत्वाद्ङस्य यावन्निर्दिश्यमानत्वाऽभावान्न दोषः । जराशब्दघटकाऽकारादेश्च नापत्तिः? वृत्तप्रचलनन्यायात् । एवञ्च यावन्निर्दिश्यमानावयवत्वमुकारेकारयोरेवेति न तु धातोरिति । तत्र ङित्त्वस्य वर्णग्रहणे एतत्परिभाषाऽनित्यत्वज्ञापने न कोऽपि दोष इत्यत आह हयवरडिति । शास्त्रान्तराऽसहकारेणोपस्थितिविषयत्वमित्यत्र संज्ञाशास्त्रातिरिक्तत्वेन संकोचः । अत्र "रि च लुट⁀प्रथमस्य डारौरस" इतिशास्त्रम्मानम् । अन्यथा प्रथमस्येति पदस्य "तिङस्त्रीणि त्रीणि" इतिशास्त्रसहकारेणैव तिबाद्युपस्थापकत्वेन डाद्यादेशानापत्त्या तत्तच्छास्त्रवैयर्थ्याऽपत्तेः । एवमेत ऐरित्यत्रापि फलम् । एवं स्थानिवत्सूत्रातिरिक्तत्वेनापि । अत एव परत्वात्तिस्त्रादेशे स्थानिवद्भावेन त्रिशब्दत्वात्त्रयादेशवारणं सकृद्गतिन्यायेन कृतम् भाष्ये । एवं "येनविधि"रित्यतिरिक्तत्वेनापि । निर्जरसाविति फलम् । एवं लिङ्गविशिष्टपरिभाषातिरिक्तत्वेनापि । अत एव महदात्त्वे लिङ्गविशिष्टपरिभाषाया अनित्यत्वमुक्तम्भाष्ये । अन्यथा निर्दिश्यमानत्वाभावेनैवात्रात्त्वाऽप्राप्त्या तद्विरोधस्स्यात् । अत एव देवीमञ्चतीति देवप्रत्यङिति सिद्धयति । एवन्तन्मध्यपतितन्यायातिरिक्तत्वेनापि । अत एव सक इति सिद्धयति । अत्रच "अनाऽप्यक" इतिसूत्रम्मानम् "नभूसुधियोः किमः क" इत्याद्यपि ।

लाघवानुरोधिनस्तु यत्पदघटितशास्त्राऽसहकारित्वे सति षष्ठीप्रकृतिजन्योपस्थितिविषयत्वन्निर्दिश्यमानत्वमिति लक्षणम् । परन्तु भाष्ये तदागमा अर्थवतामागमास्तद्ग्रहणेन गृह्यन्ते तन्मध्यपतित इत्येवम्पाठसत्त्वेन तद्ग्रहणन्न स्यादतो लाघवात्षष्ठीप्रकृतिशक्यत्वन्निर्दिश्यमानत्वम् । "येन विधिः यदागमा" इत्येनयोर्लक्षणाग्राहकत्वेनान्येषाञ्च शक्तिग्राहकत्वेन न क्षतिरित्यभिमन्वते । स्नात्वाकालकीकृत्येति तु प्रयोग एव न भवति ? "मयूरव्यंसकादयश्चे"तिचकारेण मयूरव्यंसकादेस्समासान्तरेऽप्रवेशबोधनात् ।

अत एव परमो मयूरव्यंसक इत्येव रूपमिति तन्न ? चक्षुर्मात्रग्राह्यः प्रत्ययमात्रग्रहण इत्यादिरूपाणामसिद्धयापत्तेः । "स्नात्वाकालकादीनाम्प्रतिषेधो वक्तव्य" इतिवार्तिकेन निषेधात् निपातनाल्ल्यबभाव इति केचित् । वक्ष्यमाणपरिष्कारेण वारणाच्च ।

ननु व्याघ्रस्येव पादावस्य स व्याघ्रपात्तस्येव पादावस्य व्याघ्रपात्पद इत्यत्र पूर्वपाच्छब्दस्यापि निर्दिश्यमानत्वे पदादेशापत्तिरिति चेत् ? षष्ठीप्रकृति-

विशिष्टत्वम् तत्त्वम्—वै०स्वजन्योपस्थितीयविषयताश्रयत्वस्वजन्योपस्थितीय-त्रिषयताश्रयावधिकपूर्ववर्णघटितत्वोभयसम्बन्धेन । एवञ्च व्याघ्रपात्पद् इत्यत्र स्वजन्योपस्थितीयविषयताश्रयोऽन्तिमपाच्छब्दः तदवधिकपूर्ववर्णो दकारादिः त-द्घटितत्वमेव पूर्वपाच्छब्दे इति नातिव्याप्तिः ।

नन्वेवमपि सजूःसजूर्भ्यामित्यत्र पूर्वसजूःशब्दस्य रुत्वानापत्तिः तादृशा-पूर्ववर्णसकारादिघटितत्वेन निर्दिश्यमानत्वाभावादिति चेत् ? द्वितीयसम्बन्ध-स्थाने स्वविशिष्टवर्णाघटितत्वरूपो देयः, स्वजन्योपस्थितीयविषयताश्रयाव्यव-हितपूर्वत्वस्वजन्यशाब्दबोधीयविषयतापर्य्याप्त्यनधिकरणत्वोभयसम्बन्धेन । ए-वञ्च स्वजन्यशाब्दबोधीयविषयतापर्य्याप्त्यनधिकरणत्वं पूर्वसजूःशब्दे नास्ति किन्तूदासीने इति तदवयववर्णघटितत्वं पूर्वसजूःशब्देऽपीति न दोषः । एवं व्याघ्रपात्पद् इत्यत्रापि अन्तिमपाच्छब्दे तत्पर्य्याप्त्यधिकरणत्वमिति । पूर्व-पाच्छब्दे तु न? पाच्छब्दान्तं यदङ्गम्भमित्यर्थात् । यादृशपाच्छब्दान्तं भं तादृ-शपाच्छब्दस्यैव तादृशविषयतापर्य्याप्त्यधिकरणत्वात्

ननु पुनरपि सजूःशब्दे दोषापत्तिः तादृशविषयतापर्य्याप्त्यनधिकरणं जस् इति तदवयववर्णः सकारादिः तदघटितत्वभानात । अपर्य्याप्तग्रहणे तु पूर्वपा-च्छब्दस्यापि निर्दिश्यमानत्वापत्तिरिति चेत् ? षष्ठीप्रकृतिविशिष्टत्वम् तत्त्वम् वै० स्वजन्योपस्थितीयविषयताश्रयत्वस्वविशिष्टवर्णाघटितत्वसम्बन्धेन । अत्र वै० स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वस्वजन्यशाब्दबोधीयविषयता-श्रयाधिकरणान्तोत्तरत्वोभयसम्बन्धेन । एवञ्च सजूःशब्दे सकारस्य तादृश-विषयतापर्य्याप्त्यधिकरणान्तत्वादुकारादौ चाद्यसम्बन्धाभावात्तद्विशिष्ट उदासी-नस्तद्घटकत्वञ्च तत्रेति न दोषः ।

नन्वेवमपि त्रितामाचष्टे त्रित् इति त्रितामित्यत्र निर्दिश्यमानत्वेन त्रया-देशे सत्यनिष्टापत्तिरिति चेन्न ? "नामी"तिसूत्रभाष्यप्रामाण्येन तस्यानभि-धानात् । यद्वा षष्ठीप्रकृतिवैशिष्ट्ये स्वजन्योपस्थितीयविषयताश्रयोद्देश्यका-गमघटितत्वरूपतृतीयसम्बन्धो देयः ।

नन्वेवमपि परिषिञ्चतीत्यत्र षत्वानापत्तिरितिचेत् ? स्वविशिष्टागमाघटित-त्वरूपतृतीयसम्बन्धो देयः । वै० स्वजन्योपस्थितीयविषताश्रयपर्य्याप्तोद्देश्यता-निरूपितविधेयताश्रयत्व स्वविशिष्टभिन्नत्वोभयसम्बन्धेन । अत्र वै० स्वजन्यो-पस्थितीयविषयताश्रयघटकावधिकपूर्वत्वस्वजन्योपस्थितीयविषयताश्रयावधिको-त्तरत्वसम्बन्धेन । एवञ्च परिषिञ्चतीत्यत्र स्वविशिष्टभिन्नत्वरूपद्वितीयसम्ब-न्धाभावेन स्वविशिष्टागम उदासीनस्तद्घटितत्वमस्तीति नाव्याप्तिः । त्रिता-मित्यत्र तु स्वजन्योपस्थितीयविषयताश्रयघटकपूर्वत्वाभावेन स्वविशिष्टभिन्न-त्वरूपद्वितीयसम्बन्धस्यापि सत्त्वेन स्वविशिष्टागमस्तुकृतकारस्तद्घटितत्वस्यैव

सत्त्वेन नातिव्याप्तिः ।

एवन्नव्यमतेऽजराणि इत्यत्रापि न निर्दिश्यमानत्वम् । नव्यमते हि विभक्तिसम्बन्धिकार्यं जरसादेशात्पूर्वविप्रतिषेधेन भवति यद्वा स्वजन्योपस्थितीयविषयताश्रयाव्यवहितागमाघटितत्वरूपसम्बन्धो देयः षष्ठीप्रकृतिवैशिष्ट्ये ।

ननु किंशब्दादकचि तस्य निर्दिश्यमानत्वं न स्यात् स्वजन्योपस्थितीयविषयताश्रयः किम् इति तदव्यवहितपूर्वत्वं क इत्यस्याकारे तादृशविषयतापर्याप्त्यधिकरणान्तोत्तरत्वमपि केत्यस्याकार इति उभयसम्बन्धेन स्वविशिष्टो वर्णोऽकारस्तद्घटितत्वस्यैव ककिमित्यत्र सत्त्वादिति चेन्न ? इष्टापत्तेः । यद्वा स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वमित्यस्य स्थाने स्वजन्योपस्थितीयप्रकारताख्यविषयताविशिष्टत्वम् देयम् । अत्रैव–स्वाश्रयानवयवत्वस्वाश्रयाव्यवहितपूर्वत्वोभयसम्बन्धेन । एवञ्च स्वाश्रयः ककिमिति तदवयवत्वस्यैव ककारे सत्त्वेन स्वविशिष्टवर्ण उदासीनस्तद्घटकत्वमस्तीति नाव्याप्तिः ।

नन्वेवमपि व्याघ्रपात्पद् इत्यत्र पूर्वपाच्छब्दे निर्दिश्यमानत्वापत्तिः, उपस्थितीयविषयतायाः पूर्वपाच्छब्दे सत्त्वेन स्वाश्रयावयवत्वस्यैव पूर्वपाच्छब्दघटकदकारे सत्त्वेन स्वविशिष्टवर्ण उदासीनस्तद्घटितत्वादिति चेन्न ? उपस्थितीय इत्यस्य स्थाने शाब्दबोधीयत्वदानेन शाब्दबोधीयविषयतायाः पूर्वपाच्छब्देऽभावेनादोषात् । नन्वेवमपि सजुषः सजूस्सजूस्सजूरिति अत्र सजूश्शब्दत्वावच्छिन्नशाब्दबोधीयप्रकारताख्यविषयतायाः प्रत्येकं सत्त्वेन स्वाश्रयो यः पूर्वसजूःशब्दस्तदनवयववर्णघटितत्वस्य समुदाये सत्त्वेन वृक्षप्रचलनन्यायेन समुदायान्तस्यैव रुत्वेन पर्वत्र रुत्वानापत्तिरिति चेन्न ? स्वविशिष्टाघटितत्वरूपचतुर्थसम्बन्धस्यापि तत्र दानात् । वै० स्वजन्यशाब्दबोधीयविषयताश्रयावधिकपूर्वत्व स्वजन्यशाब्दबोधीयविषयतापर्याप्त्यधिकरणत्वोभयसम्बन्धेन । एवञ्च स्वजन्यशाब्दबोधीयविषयताश्रयोऽन्तिमसजूःशब्दः तदवधिकपूर्वत्वस्य तादृशविषयतापर्याप्त्यधिकरणत्वस्य च पूर्वसजूःशब्दे सत्त्वेन समुदायस्य विशिष्टाघटितत्वाभावात् नात्र समुदायस्य निर्दिश्यमानत्वम् । एवं पदद्वित्वस्थलेऽपि जरामतिक्रान्तोअतिजरसावित्यत्रापि समुदायस्य निर्दिश्यमानत्वम् , तत्र शाब्दबोधीयप्रकारताख्यविषयतायाः समुदायेऽन्तिमे च सत्त्वात् । पूर्वस्तु पदद्वित्वस्थलेऽनर्थक एवेति न तत्र शाब्दबोधीयविषयता । एवञ्च स्वविशिष्टवर्णाघटितत्वरूपसम्बन्धस्यापि सत्त्वात् ।

ननु "पाद उपधाया ह्रस्व" इति वार्तिकविरोधः, वार्तिकसत्त्वे पदद्वित्वस्थले व्याघ्रपात्पद् इति रूपं, तत्प्रत्याख्याने व्याघ्रपाद् इति निर्दिश्यमानत्वात् स्यादिति विरोध इति चेन्न ? तद्वार्तिकस्य निर्दिश्यमानपरिभाषामबुद्ध्वा प्रवृत्तस्यैकदेश्युक्तत्वात् । अत एवाग्रे भाष्ये निर्दिश्यमानपरिभाषां स्वीकृत्य प्रत्याख्या-

तम्। अत एव "जराया असुङ्"न कृतः "ञेरयङ्"इति च न कृतम् पाणिनिना।

एवञ्च निर्दिश्यमानत्वं षष्ठीप्रकृतिविशिष्टत्वम् वै० स्वजन्योपस्थितीयविषयताश्रयत्वस्वविशिष्टवर्णाघटितत्वस्वविशिष्टागमाघटितत्वस्वविशिष्टाघटितत्वैतच्चतुष्टयसम्बन्धेन। आद्य वै० च स्वजन्यशाब्दबोधीयप्रकारत्वाख्यविषयताविशिष्टत्वस्वजन्यशाब्दबोधीयविषयतापर्य्याप्त्यधिकरणान्तेतरत्वोभयसम्बन्धेन। अत्र वै०स्वाश्रयाव्यवहितपूर्वत्वस्वाश्रयानवयवत्वोभयसम्बन्धेन। मध्यमे वै०स्वजन्योपस्थितीयविषयताश्रयपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वस्वविशिष्टभिन्नत्वोभयसम्बन्धेन। अत्र वै०स्वजन्योपस्थितीयविषयताश्रयघटकावधिकपूर्वत्वस्वजन्योपस्थितीयविषयताश्रयघटकावधिकोत्तरत्वोभयसम्बन्धेन। अन्ते वै० स्वजन्यशाब्दबोधीयविषयतापर्य्याप्त्यधिकरणत्वस्वजन्यशाब्दबोधीयविषताश्रयावधिकपूर्वत्वोभयसम्बन्धेनेति सर्वेष्टसिद्धिदायकम्। जराशब्दस्य रामशब्दे निर्दिश्यमानत्ववारणाय आद्यसम्बन्धोपादानम्।

अत्र केचित्—निर्दिश्यमानपरिभाषायाः असाधारणं प्रयोजनमस्त्येव "उदः स्था" इत्यत्र सकारं प्रश्लिष्योदःपरस्थास्तम्भावयवसकारस्येति न दोषः "जराया जरसि"त्यत्रापि "अङ्गस्ये"ति न दोषः। एवं "त्यदादीनाम" इत्यत्रापि अङ्गावयवो यस्त्यदादिःतदवयवयोस्तदोरिति अर्थेनातिस्य इत्यत्र न दोषः। व्याघ्रपात्पद इत्यत्रापि भेन यजादिप्रत्ययाक्षेपाद्यजाद्यव्यवहितपूर्ववर्ती योऽङ्गावयवपाच्छब्दः इत्यर्थे न दोषः।

नन्वेवमपि "विभाषा सपूर्वस्ये" त्यत्रापि प्रातिपदिकस्येत्यस्यावयवषष्ठ्यन्तत्वेन सपूर्वप्रातिपदिकावयवपतिशब्दस्येत्यर्थं पत्युः पतिः पतिपत्नीत्यत्र पूर्वस्यापि पतिशब्दस्य नत्वापत्तिरिति चेन्न? तत्रावयवषष्ठीत्वास्वीकारेण सपूर्वकं पतिशब्दान्तं यत्प्रातिपदिकान्तं तस्य नत्वमित्यर्थादलोऽन्त्यस्येति परिभाषयाऽन्त्यस्यैव नत्वमिति सकलेष्टसिद्धिरित्याहुः। तन्न युक्तमिति परे—तद्यथा पतिरिवाचरति या सा पतित् पत्युः पतित् इति विग्रहे युष्मन्मते तुकस्तकारस्य नत्वापत्तिः निर्दिश्यमानपरिभाषास्वीकारे तु पतिशब्दान्तं यत्प्रातिपदिकं तदवयवनिर्दिश्यमानावयवान्त्यस्य नत्वमित्यर्थेनेकारस्यैव नत्वमिति सा स्वीकर्तव्यैवेति(१)प्राहुः।

अत्र युक्तत्वं विचारणीयम्, साकच्कानपहारके आदेशे निर्दिश्यमानत्व-

(१) अत्र "पादः पत्" इतिसूत्रस्थभाष्यविरोधोऽपि समवगन्तव्यः। तत्र हि "अवश्यमेषा परिभाषा कर्त्तव्या निर्दिश्यमानस्यादेशा भवन्ती" त्युपक्रम्य "उदस्स्थात्" इत्यत्र पूर्वसवर्णादेशव्यावृत्तेः प्रदर्शनात।

यदि सकारस्य प्रश्लेषस्तदाऽदसाहित्यं यत्र तत्र प्राप्तेरभावेन भाष्यविरोधस्य स्पष्टत्वमेव।

अनया परिभाषया येन विधिरिति सूत्रबोधिततदन्तस्य स्थानित्वाभावबोधनं यदागमा इति लब्धस्य च । तेन सुपद उदस्थादित्यादिसिद्धिः ।
अनया च स्वस्वनिमित्तसंनिधापितानामल्लोन्त्यस्येत्यादीनां समावेश

---

मस्ति साकच्कापहारके तु नेति । अत एव "इम"इति वक्तव्ये "किमःक"इति सामर्थ्यात् अकज्विशिष्टस्यादेश इति संगच्छते । अन्यथा तत्र निर्दिश्यमानत्वसत्त्वेन शकैव नास्ति इति भिन्धकीत्यत्र तन्मध्यपतितत्वमेव नास्ति अकज्विशिष्टस्य ङित्वाभावाद् भाष्यं समीचीनं सङ्गच्छते । तत्त्वञ्च समुदायविशिष्टत्वम् वै० स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयत्वस्वावधिकपूर्वत्वस्वावधिकोत्तरत्वैतत्त्रितयसम्बन्धेन । एवञ्च अकज्विशिष्टस्य तिङन्तग्रहणेन ग्रहणेऽपि तिङ्ग्रहणेन ग्रहणं भवति तस्योद्देश्यत्वाभावात् "किमःक" इतिन्यासस्तु परमकिंशब्दादकचि परमक इत्यर्थम् ।

नन्वत्रोद्देश्यतापदेन उद्देश्यतादलीयविषयता सर्वापि गृह्यते उद्देश्यताख्या उद्देश्यतावच्छेदकाख्या उद्देश्यतावच्छेदकावच्छेदकाख्या चेति । अतएव धनवन्तावित्यत्र वत्वस्यासिद्धत्वात् पूर्वन्नुमि नुमःतन्मध्यपतितन्यायेन तद्विशिष्टस्य मतुब्ग्रहणेन वत्वसिद्धिः । उगित्त्वञ्चोद्देश्यतावच्छेदकत्वञ्च । एवम्भिन्धकीत्यत्र तिङ्ग्रहणेनाकज्विशिष्टस्य ग्रहणं भवति इति साकच्कापहारके निर्दिश्यमानत्वन्नास्ति इति तद्भाष्यप्रामाण्याद् वक्तव्यमेवेति चेन्न ? उद्देश्यतापदेन तादृशस्यावग्रहणे मानाभावात् । "अनाऽप्यक" इत्यत्राकग्रहणेन षष्ठ्यर्थावयवत्वमुपलक्षणमिति नतु विशेषणमित्यकज्विषयेऽनादेशप्राप्त्या तच्चारितार्थ्यसम्भवात् । एवञ्च निर्दिश्यमानपरिभाषाया अकज्विषये प्रवृत्त्या भिन्धकीतिभाष्यसङ्गत्या मनोरञ्जनमिति तत्त्वम् । धनवन्तावित्यत्र तु निर्दिश्यमानावयवत्वस्योपलक्षणत्वेन पूर्वन्निर्दिश्यमानावयवत्वसत्त्वान्न दोष इति ।

अथ मूले विचारणा ।

नन्ववतरणानुरोधेन तु यदागमा इति न्यायमात्रलब्धविशिष्टस्थानिताबाधकत्वमेव निर्दिश्यमानपरिभाषायाःफलति । तथाच सुपद इत्यादीनां सिद्धिर्न स्यात् । सामान्यरूपेण सर्वबाधकत्वन्तु"अस्य च्वावि"त्याद्युक्तरीत्या दुर्वचमत पर्य्यवसितम्भावमाह अनया परिभाषया येन विधिरिति ।

लब्धस्य चेति-विशिष्टादेस्तत्त्वाऽभावबोधनमित्यर्थः। अस्य तूपलक्षणत्वम् विशेषस्थलेऽलोन्त्यपरिभाषालब्धस्यापि तस्याभावबोधनमनेनैव क्रमेण तयोरुदाहरणे आह तेन सुपद इति । आदिपदेन विंशक इत्यादिग्रहणम् । कस्यचिदुक्तिं खण्डयितुमाह सिद्धान्तम् अनयाचेति । सहेति पदमध्याहार्य्यम् "त्यदादीनामः,एरनेकाच"इत्यादाविति भावः । आदिपदेन आदेरित्यस्य संग्रहः। बहुवचनेनानेकाल्शित्यस्य संग्रहः । समावेश एवेति-विरोधे हि बलीयसा दुर्बलो बा-

एव, न बाध्यबाधकभावो, विरोधाभावात् ।

नाप्येतयोरङ्गाङ्गिभाव उभयोरपि परार्थत्वेन तदयोगात् । अनेकाल्-शिदिति सूत्रे सर्वश्चैतत्परिभाषाबोधित एव गृह्यते ।

यत्त्वादेःपरस्यालोऽन्त्यस्येत्येतावेव तद्बाधकाविति, तन्न ? उद्-स्थादिति सूत्रविषयेऽस्याः "पादः पद्" ति सूत्रेभाष्ये संचारितत्वात् ।

नाप्येतयोरियं बाधिका? एतयोर्निर्विषयत्वप्रसङ्गादिति "तिविंशतेरि" तिसूत्रे कैयटः ।

अकज्विषये नायं न्यायः, स्थानिवद्भावेनेव तन्मध्यपतितन्यायेन त-द्बुद्ध्यैव कार्यजननात् ।

---

ध्यत इति न्यायात् । नन्वेवमङ्गाङ्गिभावापत्तिरत आह नापीति । गुणानाञ्च परा-र्थत्वादसम्बन्धस्समत्वात्स्यादितिन्यायात् । नन्वनेकाल्शितिसर्वपदेन "येनविधिःयदा-गमा" इत्युभयबोधितस्थानिनोग्रहणेन निर्दिश्यमानपरिभाषया सह तस्य विरोध-सम्भवेन बाध्यबाधकभावेन परत्वादनेकाल्शित्यस्य प्रवृत्तौ सुपद उदस्थादित्याद्य-सिद्धिरत आह अनेकाल्शिति।शब्दकौस्तुभोक्तिं खण्डयति यत्त्विति । उपलक्षण-म् "तिविंशतेरिति" भाष्येऽपि सञ्चार इत्यपि बोध्यम् । एवशब्देनोभयबोधितस्य व्यावर्तनम् । बाधिकेति–अन्तरङ्गपरिभाषाबलादिति भावः । निर्विषयत्वेति अनया परिभाषया क्वचिद्बाधः क्वचिदनिष्टापत्तिः क्वचिदन्त्याद्योरनिर्दिश्यमानवि-षयत्वाऽभाव इति निबन्धात् । तथाच एतद्विषयेऽलोन्त्यसूत्रप्रवृत्तावपि "राज्ञःकचे" त्यादौ न प्रवृत्तिः । एवं "समस्सुटि" "तासस्त्योर्लोप" इत्यादौ येनेतिविषये एतत्प्र-वृत्त्या तत्प्रवृत्तिर्युक्ता "सस्स्यार्द्धधातुक" इत्यतस्सीतिवत्स इत्यनुवृत्तिरप्यन्त्ये युक्तैव । तिविंशतेरिति–तत्र "यस्येति चे" त्यनेनैवान्त्यलोपे सिद्धे सूत्रारम्भसा-मर्थ्यात्समुदायस्य निर्दिष्टत्वात्प्राप्तादेशवारणाय तिग्रहणे कृतेऽपि अन्त्यस्य कुतो नेति प्रश्ने निर्दिश्यमानेतिवारणपरोत्तरभाष्यप्रतीकेनात्र परिभाषाप्रवृत्तिरिष्टा । नहि सा तयोर्बाधिका, उक्तहेतोस्तस्मात्तिग्रहणसामर्थ्यादलोऽन्त्यस्येत्यस्याऽप्रवृत्तौ सर्वस्यार्थाल्लोप इतिभाष्यतात्पर्य्यन्तेनोक्तम् । कैयट इत्यनेनारुचिस्सूचिता ।

वस्तुतस्तु निर्दिश्यमानपरिभाषा तयोर्विषय इव प्रकारान्तरेण बाधिता-ऽलोन्त्यपरिभाषाविषयेऽपि तत्त्वस्य बाधिकेति भाष्याभिप्रायः । तयोर्विषयत्व-प्रसक्तिस्तु न ? सामर्थ्यासहकारस्थल एव तथा स्वीकारात् । निर्दिश्यमानत्व-स्याक्तपरिमाणधर्मत्वे सङ्ख्यादिवन्न्यूनाधिकयोरभावेनाधिके तत्त्वव्यवच्छेदव-न्न्यूनेऽपि तत्सम्भवात् ।

ननु निर्दिश्यमानपरिभाषाया अकज्विषयेऽपि प्रवृत्तियोग्यता, एवञ्च पूर्व-मेव तन्मध्यपतितन्यायाल्लेखोऽपि योग्य इति साकच्कस्य कार्य्यन्न स्यादत आह अकज्विषये नायन्न्याय इति । अकज्विशिष्टस्य स्थानितानिषेधको नाय-

इयं चावयवषष्ठीविषयेऽपि । अत एव "त्यदोः सः सावि"ति सत्वम् अतिस्य इत्यत्रोपसर्गतकारस्य न । निर्दिश्यमानयुष्मदाद्यवयवमपर्यन्तस्यैव यूयादयो न त्वतियूयमित्यादौ सोपसर्गावयवमपर्यन्तस्येति बोध्यम्

"पादः पदिति" सूत्रे "षष्ठी स्थाने" इति सूत्रे च भाष्ये स्पष्टैषा॥१२॥

ननु चेतेत्यादौ ह्रस्वस्येकारस्य प्रमाणत आन्तर्यादकारोपि स्यादत आह—

यत्रानेकविधमान्तर्यं तत्र स्थानत आन्तर्यं बलीयः ॥१३॥

अनेकविधं स्थानार्थगुणप्रमाणकृतम् ।

न्याय: । एवञ्च निर्दिश्यमानत्वलक्षणे तन्मध्यपतितन्यायातिरिक्तत्वन्निवेशनीयमिति फलति । "अनाऽप्यक" सूत्रेऽकग्रहणमत्र ज्ञापकम् । अवयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाप्रवृत्तेर्वक्ष्यमाणत्वात् । अत एवाकच्सहितस्याऽप्ययमादेश इति "किमःक" इति व्याख्यानं सुगतम् ।

नचाकज्विशिष्टस्यादेशो न स्यान्निर्दिश्यमानत्वाभावादित्याशङ्क्य "किमः क" इतिसूत्रावृत्त्या विशिष्टादेश इति शेखरविरोध इति वाच्यम् ? कैयटमतेन तत्सत्त्वात् । नच भिन्धकीत्यत्राकचि निर्दिश्यमानत्वाभावाद्धित्वम् न स्यादिति प्रशङ्क्य अन्तरङ्गत्वाद्धित्वेऽकजिति भाष्यविरोध इति वाच्यम्? धर्मिग्राहकमानात्साकच्कानपहारक आदेशो नायन्न्याय इति कल्पनया धित्वकादेशयोस्साकच्कापहारकत्वेन निर्दिश्यमानपरिभाषाप्रवृत्तौ ग्रन्थाऽविरोधात् । अत एव तच्छब्दादकचि निर्दिश्यमानपरिभाषायाअप्रवृत्त्या अत्वसत्वयोस्सक इति सिद्धचति । सर्वशब्दादकचि निर्दिश्यमानत्वाभावेन "सर्वस्य सोऽन्यतरस्यामि" तिसादेशाभावेन सवकदेति च सिद्धयति ।

परिभाषा द्विविधा स्थानिनियामिका आदेशनियामिका च । तत्र स्थानिनियामकपरिभाषाम्प्रदर्श्यानन्तरवक्तव्यत्वरूपावसरसङ्गत्यादेशनियामकपरिभाषाम्वक्तुं भूमिकां रचयति ननु चेतेति । किञ्च "षष्ठी स्थानेयोगे"तिसूत्रज्ञापितनिर्दिश्यमानपरिभाषाम्प्रदर्श्य साम्प्रतन्तत एव स्थानेग्रहणेऽनुवर्त्तमाने "स्थानेऽन्तरतम" इतिस्थानेग्रहणज्ञापितपरिभाषाम्प्रदर्शयति ननु चेतेति । यत्रानेकविधमान्तर्य्यमादेशनियामकत्वेन (१)प्रसक्तन्तत्र स्थानकृतमेवान्तर्य्यम्बलीय

(१) यत्रानेकविधमान्तर्य्यमिति–उक्तपरिभाषा स्थानिप्रयुक्तमनिष्टम्वारयति इयन्त्वादेशकृतमिति तयोस्तापेक्षत्वेन परस्परमित्येनयोस्सङ्गतिस्तदाह ननु चेतेत्यादि । आदेशैस्स्वानुरूपास्स्थानिन आक्षिप्यन्ते विसदृशादेशनिरासायाह तत्समानार्थेति । तन्वर्थस्यैव व्यवस्थापकत्वे "पदङ्घ्रिश्चरणोऽस्त्रियामिति" कोशात्करणशब्दस्यापि पदादेशापत्तिः चरणानीतिवत् पन्थी त्यस्याऽप्यापत्तिः ।

अत्र मानं "षष्ठी स्थाने" इत्यत एकदेशानुवृत्त्या स्थानेग्रहणेऽनुवर्त्त-माने पुनः "स्थानेऽन्तरतम" इति सूत्रे स्थानेग्रहणमेव । तद्धि तृतीयया विपरिणस्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति संभवे स्थानत एवान्तरतमः इत्यर्थकम् ।

तमब्ग्रहणमेवानेकविधान्तर्यसत्तागमकम् । स्थानतः स्थानेनेत्यर्थः । तत्र स्थानत आन्तर्यमिकोयणचीत्यादौ प्रसिद्धमेव ।

---

इत्याशयः । प्रमाणतःकालकृतात् आन्तर्य्यात् सादृश्यात् । एवञ्च इकारस्य ता-लुस्थानजन्यत्वेन धर्मेण सादृश्यमेकारे तथा मात्राकालिकत्वधर्मेण मात्राद्वय-न्यूनकालिकत्वधर्मेण वा सादृश्यमकारेऽपीति विनिगमनाविरहेण पर्य्यायता स्यादिति तत्त्वम्भाति ।

वाक्यभेदेनेति–"स्थानेऽन्तरतम" इति सूत्रे "अन्तरतमः" इति योगः पूर्वम्पाठ्यः "स्थाने" इत्यपरो योगः पूर्वस्मिन्योगे प्रसङ्गार्थकस्थानशब्दोऽनुवर्त्तते प्रसङ्गे सति सदृशतमो भवतीति पूर्वयोगार्थः । द्वितीययोगे तु पूर्वसूत्रात्प्रसङ्गार्थ-कानुक्तं स्थाने इति अन्तरतम इति च पदद्वयमनुवर्त्तते । सूत्रस्वरूपं स्थान इति स्थानेनेति तृतीयान्तार्थकम् । एवञ्च प्रसङ्गे सति स्थानेन कोऽर्थस्स्थानघ-टितधर्मेण सदृशतमो भवतीति द्वितीययोगार्थः । पूर्वयोगेनैव स्थानघटितधर्मेण सादृश्यलाभे द्वितीययोगो व्यर्थस्सन् स्थानेनैव सदृशतमो भवतीति नियमार्थं सति सम्भव इति योगविभागसामर्थ्यादेतल्लाभः यत्रानेकेतिपरिभाषैतत्फलितैव।

ननु योगविभागेनानेकविधसादृश्याश्रयणे किम्बीजमित्यत आह तमब्ग्रह-णमेवेति । अनेकविधान्तर्य्यसत्ता आदेशनियामिकेत्यंशे गमकमिति फलितम् । नच तमब्ग्रहणमतिशयेन सदृश इति सादृश्येऽतिशयलाभार्थन्तमब्ग्रहणमत एव लाकृतिरित्यादौ "लृतुलसानान्दन्ताः" वकारस्य दन्तोष्ठम्" इतिनिश्चिते-ऽपि दन्तस्थानजन्यत्वेन धर्मेण सादृश्यमादाय वकारोऽपि पर्य्यायेण स्यात्तद्वा-

---

नच स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वमिति सिद्धान्तानुरोधेन नपुंसकत्वविशि-ष्टार्थाभिधानसामर्थ्याभावादेव न द्विलिङ्गस्य तादृशचरणशब्दस्यादेश इति वाच्यम् ? एवमपि रात्रिशब्दस्य निशादेशे तस्मिन् परे "रूपरात्रि" इतिवार्त्तिकेनाहन्शब्दस्य रु-त्वापत्तेः । नच रात्रेति समासान्तघटितस्यैव वार्त्तिके पाठ इति न तत्र दोष इति वा-च्यम् ? अम्भश्शब्दस्योदन्नादेशे "ओजस्सहोऽम्भस्तमसस्तृतीयाया" इत्यम्भसा कृत-मित्यत्रेव उदूना कृतमित्यत्रापि अलुगापत्तेः । अत आह तत्समानवर्णपादादीनामि-ति ।तत्त्वञ्च तदवयवीभूतवर्णजनकस्थानजन्यवर्णावयवकत्वम् ।

"तृज्वत्क्रोष्टुरि"ति इदं सूत्रं प्रयोगनियमार्थमिति सिद्धान्ते तु पुम्वद्भावविषये वातण्ड्ययुवतिः दारदवृन्दारिकाद्युदाहरणानि ।

अर्थतः पद्न्नित्यादौ स्थान्यर्थाभिधानसमर्थस्यैवादेशतेति सिद्धान्त.· यदर्थाभिधानसमर्थो यः स तस्यादेश इति तत्समानार्थतत्समानवर्णपा· दादीनां ते ।

---

रणाय दन्तमात्रस्थानजन्यत्त्वधर्मेण सादृश्यविलसनार्थं तमब्ग्रहणमिति वा· च्यम् ? समानं स्थानं यस्येत्यर्थक "सस्थानमि"तिन्यासेन सिद्धेऽन्तरग्रहणमे· वान्तरतम इत्यर्थकमिति तमपो ज्ञापकत्त्वसम्भवात् । ज्ञापिते च पूर्ववाक्यस्य प्रसङ्गे सति सदृशतम इत्यर्थेनार्थकृतगुणकृतप्रमाणकृतसदृशानाम्बिधानार्थ· मन्तरग्रहणस्य चारितार्थ्येन सामर्थ्यकल्पनाविरहेणातिशयरूपार्थोऽसिद्ध्या तमपश्चारितार्थ्यसत्त्वात् । स्थानकृतान्तर्य्यस्य सूत्राल्लाभः, अर्थकृतगुणकृतप्र· माणकृताश्च भाष्यप्रमाणाः । नच ह्रस्वत्वादीनामपि गुणग्रहणेन ग्रहणे सिद्धे पृथक् प्रमाणग्रहणं किमर्थमिति वाच्यम् ? ब्राह्मणवशिष्ठन्यायेन गोबलीबर्दन्या· येन वा तथाऽभिधानात् । अन्तरतमत्वं सदृशतमत्वन्तच्च सादृश्यानुयोगित्त्वेन विवक्षितविशिष्टधर्मसाधारणधर्मकत्त्वम् । वैशिष्टयञ्च स्ववृत्तित्त्वस्वघटितदलव· टकत्वेतराऽवृत्तित्त्वमित्युभयसम्बन्धेन । स्वघटितदलघटकत्त्वञ्च स्वनिष्ठविषय· ताप्रयोजकपदप्रयोज्यविषयताश्रयत्वम् । अन्तरतमत्वेन यदा वकारो विवक्षित· स्तदा सादृश्यानुयोगित्वेन स एव विवक्षाविषयो नहि तद्विशिष्टः कोऽपि धर्मः । लकारे प्रथमसम्बन्धसत्त्वेऽपि द्वितीयाऽभावान्न लकारः । यदा ळकारोऽन्तरतम· त्वेन विवक्षितस्तदा सादृश्यानुयोगी स एव तद्विशिष्टधर्मश्च दन्तमात्रस्थानज· न्यत्वरूपस्तत्र सम्बन्धद्वयसत्त्वेन ळकार एव न वकार इति सिद्धप्रकारः । "स्था· नेऽन्तरतमउरण्रपर"इति संहितापाठं सूत्रकृद्पाठीत् , तत्र सप्तम्यन्तपाठःप्रथ· मान्तपाठो वेति विचिकित्सायां सप्तम्यन्तपाठे अन्तरतमे स्थानिनि आदेश· इत्यर्थो दध्यानयेत्यत्रेकारस्य यण् चिकीर्षितस्सादृश्यानुयोगी स एव ह्रस्वेकार· स्तद्विशिष्टो धर्मो मात्राद्वयन्यूनकालिकत्वविशिष्टतालुस्थानजन्यत्वाख्यस्तत्रोक्त· सम्बन्धद्वयसत्त्वाद् यकारसदृशतमो ह्रस्वेकारस्तस्यैव यण् नतु दीर्घेकारस्य, तस्य द्विमात्रिकत्वेन तद्वैशिष्टयमर्द्धमात्रिकयकारे नास्ति, अर्द्धमात्रिकत्त्वद्विमा· त्रिकत्वयोःकथमपि सादृश्यन्नास्तीति प्रथमान्तपाठो ज्यायानेव । अस्मिन्पाठे तु यकारोऽन्तरतमत्वेन विवक्षितः यकारविशिष्टो धर्मस्तालुस्थानजन्यत्वन्तेन धर्मेण ईकारसदृशतमस्स एवेति ।

अर्थतः पद्न्नित्यादाविति—"पद्न्नो मासि"त्यस्य शसाद्यव्यवहितपूर्वत्व· विशिष्टस्य पदादय आदेशा इति सामान्यरूपेणार्थज्ञाने पदादेशस्स्वसदृशतम· स्य,ददादेशस्स्वसदृशतमस्येत्येवं सप्तम्यन्तपाठेऽर्थः। पदादेशसदृशतमत्वेन पद· शब्दा विवक्षितस्तदा पादविशिष्टो धर्मो भवति चरणवाचकत्वे सति पकारद· कारघटितत्वम्, ददादेशस्य सदृशतमो दन्तशब्द एव नतु रदनादिशब्द इति ।

तृज्वत्क्रोष्टुरिति च । गुणतो वाग्घरिरित्यादौ । प्रमाणतोऽदसोऽसेरित्यादौ । स्थानेऽन्तरतमसूत्रे भाष्ये स्पष्टैषा ॥ १३ ॥

ननु प्रोढवानित्यत्र प्रादूहोढेति वृद्धिः स्यादत आह--

**अर्थवद्ग्रहणे नानर्थकस्य ॥ १४ ॥**

आदेशस्सर्वविशिष्टनिष्ठस्थानितानिरूपकः आदेशत्वादित्यनुमानम्। वैशिष्ट्यञ्च स्ववृत्तिसादृश्यवन्निष्ठभेदप्रतियोगितानवच्छेदकानुपूर्वीमत्त्वसम्बन्धेन। तदेवाह तत्समानार्थवर्णपादादीनामिति । चरणवाचकत्वे सति पकारदकारघटितत्वं, हृदयवाचकत्वे सति हृकारदकारघटितत्वमित्येवम्प्रकारेण तत्तदर्थवाचकधर्मे तत्तदादेशघटकाद्यहल्द्वयघटितत्वेन तत्तदादेशस्य सादृश्यप्रयोजकत्वम् ।

नचैवमपि निशाशब्दस्य निशादेशः कथं रात्रिवाचकत्वे सति नकारसकारघटितत्वस्य निशीथिनीशब्देऽपि सत्त्वादिति वाच्यम् ? थकाराघटितत्वे सति रात्रिवाचकत्वे सति नकारसकारघटितत्वेन सादृश्याश्रयणात् । नासाशब्दस्य नसादेशस्त्विष्ट एव । परन्त्वेवं सप्तम्यन्तपाठेऽत्र निर्वाहेऽपि दीर्घेकारादौ दोषेण सिद्धान्तभूतप्रथमान्तपाठे फलमाह तृज्वत्क्रोष्टुरिति । शृगालवाचकत्वेनान्तरतमः क्रोष्टृशब्दो नतु पक्तृशब्द इति स्थानषष्ठ्यभावेन "स्थानेऽन्तरतम"इत्यस्याऽप्रवृत्तिर्न शङ्क्या, रूपातिदेशस्थलेऽपि अगत्या स्थानषष्ठ्यास्स्वीकारात् ।

गुणत इति-बाह्यप्रयत्नकृत इत्यर्थः। प्रमाणत इति कालकृत इति तत्त्वम् । "अदसोऽसेरि"त्यादौ मात्रिकत्वेन ह्रस्वव्यञ्जनयोर्ह्रस्वःद्विमात्रिकत्वेन दीर्घस्य दीर्घ इति फलति ।

यदागमपरिभाषाव्याख्यानावसरेऽर्थवद्दाशब्दस्य घुसंज्ञेत्यर्थोपक्रमादर्थकृतान्तरतम्यस्योपवर्णनेनार्थवत्परिभाषाऽप्युपस्थितेति प्रसङ्गाच्चाह(१) अर्थवद्ग्रहण इति । परिभाषायाम्प्रमाणमाह विशिष्टरूपेति । आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्विशिष्टरूपत्वम् । साक्षादवच्छिन्नत्वञ्च स्वावच्छिन्नत्वस्वावच्छिन्नाऽवच्छेदकतानिरूपितावच्छेद्यत्वाभाववत्त्वमित्युभयसम्बन्धेन स्वविशिष्टत्वम् । मुख्यविशेष्यत्वञ्च प्रकारत्वानवच्छिन्नत्वम्, तत्पदप्रयोज्यशाब्दबोधीयविशेष्यतानिरूपितप्रकारताऽसमानाधिकरणविशेष्यत्वम् वा । नच साक्षान्मुख्यत्वनिवेशे प्रमाणाऽभावः ? "अर्थव"त्सूत्रीयार्थवद्ग्रहणस्यैव प्रमा-

(१) अर्थवद्ग्रहणे नाऽनर्थकस्य-इत्थं स्थान्यादेशभावकृतस्यातिप्रसङ्गस्य वारणे निमित्तनिमित्तिभावकृतस्याऽप्यतिप्रसङ्गस्य वारणं क्रमप्राप्तमिति सूचयन्नवतारयति ननु प्रोढवानित्यादि ।

वृद्धिस्स्यादिति—गर्मुत्स्थानमित्यत्र "उदः स्थे" तिपूर्वसवर्णश्च स्यादित्यपि बोध्यम् ।

विशिष्टरूपोपादान उपस्थितार्थस्य शब्दं प्रति विशेषणतयान्वयसंभवे त्यागे मानाभावोऽस्या मूलम्।

---

णत्वात्। अन्यथाऽधातुपदस्य परम्परयाऽऽनुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन अर्थवत्परिभाषयैव सिद्धेस्तस्य वैयर्थ्यापत्तेः। अत एव यच्छतीति सिद्धयत्यन्यथा परिभाषाप्रवृत्त्या "छे चे"तितुगप्रवृत्तेरिति वाच्यम्? आनुपूर्व्या साक्षादवच्छिन्ना प्राथमिकोपस्थितीया या मुख्यविशेष्यता तत्प्रयोजकत्वम्विशिष्टरूपत्वमित्यभिसन्धानात् लक्षणाग्रहात्प्राक् तथात्वस्य सौष्ठवात्।

विशेषणतयाऽन्वयसम्भव इति-घटमुच्चारयति घटमानयेत्यादौ क्रमशः शब्दार्थयोः प्रतीत्याऽर्थेशक्तिः पदे लक्षणेति। नचार्थस्य वाचकतासम्बन्धेन वहनकर्मीभूतवाचकोढशब्दस्य सत्त्वेन प्रोढवानित्यत्र वृद्धिर्दुर्वारेति चेन्न? स्वविषयकबोधजनकत्वसम्बन्धेन शब्देऽर्थविशेषणत्वस्वीकारेणाऽदोषात्। नच जनकता स्वरूपयोग्यतारूपा यदि गृह्यते तर्हि प्रोढशब्देऽपि कामिनीजिज्ञासादिप्रतिबन्धके सत्युद्बुद्धसंस्काराद्यभावेन शाब्दबोधाऽभावः, एवञ्च वृद्धिर्नस्यादितिवाच्यम्? स्वविषयकबोधतात्पर्येणोच्चरितत्वसम्बन्धेनार्थस्य शब्दम्प्रति विशेषणत्वस्वीकारात्।

नच स्वविषयकबोधतात्पर्य्येणोढवत्पदोच्चारणेऽपि ऊढपदमवयवत्वेनोच्चारितमेवेति दोषस्तिष्ठतीति वाच्यम्? स्वविषयकबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्य्याप्त्यधिकरणत्वसम्बन्धेनार्थम्प्रति शब्दस्य विशेषणत्वात्।

नच "नह्यवयवाऽपर्य्याप्तस्य समुदाये पर्य्याप्तिरि"ति न्यायेन प्रत्येकमपर्य्याप्तस्य समुदाये पर्य्याप्त्यसम्भवस्समुदायस्य प्रत्येकानतिरेकादिति वाच्यम्? शाब्दिकमते समुदायस्य प्रत्येकापेक्षयाऽतिरिक्तत्वात्। अतएव समासे विशिष्टा शक्तिः। अतएव समुदायस्य सखिरूपत्वाभावेनेति ग्रन्थस्समासग्रहणं नियमार्थमिति च सङ्गच्छते इति युक्तिबलात्।

किञ्च अर्थविषयकबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्य्याप्तिप्रतियोगिकत्वमेव विशिष्टरूपत्वमिति स्वीकारेणोढवद्घटकोढगततद्व्यक्तित्वमन्यत्। तत्र तात्पर्य्यीयविशेष्यत्वाऽभावादिति समाधानाच्च।

अथावतरणाशयः "न सोऽस्ति प्रत्ययो लोके यश्शब्दानुगमादृते" इति जैमिनिसिद्धान्ताच्छब्देऽर्थे च शक्तिः, शब्दविशिष्टेऽर्थे अथविशिष्टे शब्दे चेत्येवं स्वीकारे शक्यतावच्छेदकगौरवमतश्शब्दानां स्ववृत्तिश्रूयमाणानुपूर्व्यवच्छिन्ने घटत्वादितत्तद्रूपावच्छिन्ने च खण्डशश्शक्तिः। आनयनादिकार्यस्य शाब्दबोधः। राज्ञो यदित्यादौ राजरूपार्थस्य प्रातिपदिकेनान्वयाऽनर्हत्वमिति शब्दस्य विशेषणतया शब्दे चार्थस्य विशेषणतया बोधस्तत्तदर्थविशिष्टे परे त-

**अत्रार्थः कल्पितान्वयव्यतिरेककल्पितः शास्त्रीयोऽपि गृह्यते इति संख्याया इति सूत्रे भाष्ये स्पष्टम् ।**

---

त्तत्कार्य्यमिति फलितेयमर्थवद्ग्रहण इति परिभाषा । अलैवानर्थके तदन्तविधिरितिभाष्यात् विशिष्टरूपोपादान एवेति वृद्धवाक्याच्च । अर्थवैशिष्ट्यञ्च स्वविषयकबोधजनकत्वेन तात्पर्य्यविषयत्वसम्बन्धेनेति पूर्वमुक्तम् । नन्वर्थे शब्दे च शक्तिरेका अथवा भिन्ना । न तावत्प्रथमपक्षः कचिदर्थस्य कचिच्छब्दस्येति नियमाऽसिद्धेः । यत्प्रकारकं यद्विशेष्यकं शक्तिज्ञानं तत्प्रकारकतद्विशेष्यकबोधस्य नियमेन पुनरुक्तदोषापातात् । नापि द्वितीयः ? एकशक्तिनिरूपकार्थविषयकशाब्दबोधम्प्रत्यपरशक्तिनिरूपकार्थविषयकतात्पर्य्यज्ञानस्य प्रतिबन्धकत्वादुभयार्थविषयकबोधाऽसिद्धेरिति चेन्न ? उभयांशे एका खण्डशश्शक्तिरिति स्वीकारात् । फलव्यापारयोर्द्धातुरिति सिद्धान्ते गच्छतीत्यादौ व्यापारविशेष्यकः गम्यत इत्यादौ कर्मणि प्रत्यये फलविशेष्यक इतिवत् । तत्र क खण्डशः क भिन्ना क विशिष्टा शक्तिरिति प्रश्ने यत्र बोधो भिन्नः तन्निरूपिता विषयता च भिन्ना तत्र भिन्नैव शक्तिः यथा हर्य्यादौ । यत्र च नानाधर्मावच्छिन्ना विषयता एका तत्र विशिष्टा शक्तिः यथा गोशब्दादौ । यत्र "प्रत्येकधर्मावच्छिन्ना विषयता नाना, बोधस्त्वेक एव तत्र खण्डशश्शक्तिरिति विवेकानुसृतो मार्गः ।

नचार्थबोधकत्वन्तु लोके प्रौढ इति समुदाये नतूढशब्द इति वाच्यम् ? "प्रादूहोढोढि" इति वार्त्तिकारम्भसामर्थ्यादूढशब्देऽपि तत्त्वस्वीकारात् । तदेवाह अत्रार्थ इति । कल्पितौ यावन्वयव्यतिरेकौ तत्कल्पित इत्यर्थः । ननु वाक्यस्फोटस्यैव मुख्यत्वाल्लौकिकार्थवत्त्वं वाक्यस्यैव नतूढादिशब्दानामिति कथमूढवच्छब्देऽतिप्रसङ्गवारणमत आह अत्रार्थः कल्पितेत्यप्याशयः । कल्पितेत्यस्य शास्त्रवासनयेति शेषः । शास्त्रीयोऽपीत्यपिना लौकिकस्य संग्रहः ।

ननु यत्रान्वयव्यतिरेकाभ्यामर्थज्ञानन्न भवति अत्यन्तस्वार्थिककप्रत्ययान्ते यावक इत्यादौ कथं प्रवृत्तिरित्यत आह शास्त्रीयोऽपीति । प्रत्यय इति महासंज्ञया शास्त्रप्रामाण्येन चागत्या सोऽपि गृह्यत इति भावः ।

**अत्र सरयूपारीणशङ्काः ।**

**अत्रार्थः कल्पितान्वयव्यतिरेककल्पितश्शास्त्रीयोऽपि गृह्यत इति सिद्धान्ते शास्त्रीयपदेन यदि पारमार्थिकत्वम्विवक्ष्यते तदा क्तप्रत्ययान्तोढशब्दस्यापि न पारमार्थिकत्वमित्यसम्भवः । अथ शास्त्रे प्रकृत्यादिकल्पनया कल्पितत्त्वं शास्त्रीयत्वमिति चेत्ताह तस्य पृथग्ग्रहणवैयर्थ्यापत्तिः, अन्वयव्यतिरेककल्पितार्थवत्त्वेनैव सर्वत्र परिभाषाप्रवृत्तिनिर्वाहाच्च । तथाचान्वयव्यतिरेककल्पित एवार्थो गृह्यते नतु शास्त्रीय इति वदन्ति ।**

इत्थं वर्णग्रहणेषु नेति लस्येत्यत्र भाष्ये स्पष्टम् । अत एवैषा विशिष्टरूपोपादानविषयेति वृद्धाः ।

एतन्मूलकमेव येनविधिरित्यत्र भाष्ये पठ्यतेऽलैवानर्थकेन तदन्तविधिरिति ।

किंच स्वंरूपमिति शास्त्रे स्वशब्देनात्मीयवाचिनार्थो गृह्यते रूपशब्देन स्वरूपमेवं च तदुभयं शब्दस्य संज्ञीति तदर्थः ।

---

वर्णग्रहणेषु नेति—वर्णग्रहणेषु अर्थरूपखण्डस्य मोषेण केवलं वर्णत्वावच्छिन्नमात्रबोध इति । लस्येत्यत्रेति—तत्र हि देवदत्तो लुनातीत्यत्र लस्य स्थाने तिबादिनिषेधाय धातोरित्यधिकाराद्धातोर्विहितस्य लस्येत्यर्थोऽङ्गीकृतः । वर्णग्रहणेऽर्थवत्परिभाषाप्रवृत्तावनयैव निर्वाहे तद्विरोधस्स्पष्ट एवेति भावः । अत एवेति—अर्थवद्ग्रहणपरिभाषाया वर्णग्रहणेऽप्रवृत्तिस्वीकारादेवेति । विशिष्टरूपोपादान एवेति—आनुपूर्व्या साक्षादवच्छिन्नमुख्यविशेष्यताप्रयोजकत्वम्विशिष्टरूपत्वमित्युक्तम्प्राक् । अलैवेति—एव शब्दोऽत्राप्यर्थे ।

ननु गोशब्दस्य "दिग्दृष्टिदीधितिस्वर्गवज्रवाग्बाणवारिषु । भूमौ पशौ च गोशब्दो विद्वद्भिर्दशसु स्मृत" इति कोशेन नानार्थकत्वम् । एवञ्च "गोतो णिदि"त्यादौ यावन्तो गोशब्दार्थास्तावदावृत्तिः कर्त्तव्या भवति भाष्यमते । एवं लृद्यार्थस्यानियतत्वेन यावल्लृद्यार्थावृत्तिः कर्त्तव्या । किञ्च "यञिञोश्च' केऽणः' अणिञोरि"त्यादौ प्रकृतिसमभिव्याहाररहिते प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वमिति नियमानुरोधेन प्रत्ययस्यार्थोपस्थापकत्वाभावेनानर्थककादिप्रत्ययग्रहणाऽपत्तौ राका यौष्माक इत्यादावपि ह्रस्वापत्तिरित्यत आह किञ्चेति । एवञ्च स्वंरूपमिति प्रत्याख्यानमेकदेशिन इति भावः । अयमाशयः, स्वंरूपमिति सूत्रसत्त्वे तेन शास्त्रेण शास्त्रघटकशब्देऽपूर्वस्संकेतो बोध्यते सचार्थत्वावच्छिन्ने स्ववृत्तिरूपावच्छिन्ने च । एवञ्च "गोतो णिदि"त्यादौ अर्थविशिष्टस्य गोशब्दस्येत्यर्थानुसन्धानेन सर्वत्रार्थे प्रयुज्यमानस्य गोशब्दस्यैकेनैव सूत्रेणाभीष्टसिद्धौ नावृत्त्याद्युपयोगः "केऽण" इत्यस्यापि अर्थविशिष्टे कशब्दे पर इत्येवार्थे नहि तत्र प्रकृतिसमभिव्याहारस्य कारणत्त्वं किन्तु कुत्सार्थबोध एवेति न विशेषकार्यकारणभावेन गौरवमतः प्रत्याख्यानपक्षो न युक्त इत्यादरः । अतः प्रत्याख्यानपक्षम्पूर्वमुपन्यस्यारम्भपक्षमन्ते प्रकाशयति किञ्चेति फलति । आत्मीयवाचिनेति—रूप्यते बोध्यत इति रूपमर्थ इति कैयटाभिमतेऽर्थे यत्पदं यदर्थविषयकबोधतात्पर्येणोच्चार्य्यते तस्य पदस्य सोऽर्थ आत्मीय इत्युच्यते । एवञ्च पूर्वोक्ततात्पर्य्यघटितसम्बन्धेन शब्दप्रत्ययार्थस्य विशेषणत्वञ्च सम्भवत्यतस्स पक्षो हेयः । स्वरूपमिति—गुणा अभेदका इति परिभाषयैकवाक्यत्वेन उदात्तत्वस्वरितत्वानुनासिकत्वनिरनुनासिकत्वातिरिक्त-

तत्रार्थो न विशेष्यस्तत्र शास्त्रीयकार्यासंभवात् किंतु शब्दविशेषणम्। एवंचार्थविशिष्टः शब्दः संज्ञीति फलितम्। तेनैषा परिभाषा सिद्धेति भाष्ये स्पष्टम् ॥ १४ ॥

श्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नमिति भावः। केवलानुपूर्वीति यावत्। संज्ञीति—बोध्यमिति भावः। एवञ्चार्थत्वेनैव समेषामर्थानां शब्दम्प्रति विशेषणत्वेन नैवावृत्तिप्रसरतेति गूढभावः।

असम्भवादिति—अर्थे अव्यवहितपूर्वत्वादीनामसम्भवादित्यर्थः। शब्दविशेषणमिति—स्वशब्देनात्मीयवाचिनाऽर्थस्य ग्रहणाद् यत्पदं यदर्थतात्पर्य्येणोच्चार्य्यते तस्य पदस्य तस्यैवार्थस्यात्मीयत्वेन स्वविषयकबोधजनकत्वप्रकारकतात्पर्य्यविशेष्यतापर्य्याप्त्यधिकरणत्वादिनिरुक्तसम्बन्धेन शब्दम्प्रति अर्थो विशेषणमित्याशयः।

अत्र शाब्दिकम्मन्याः।

"व्रश्च"दिसूत्रे राजेः पृथग् भ्राजिग्रहणमस्यां ज्ञापकम्। नचैवं स्वीकारे षत्वविधौ राजिसाहचर्य्यात्फणादेरेव ग्रहणन्नतु भ्राज् दीप्तावित्यस्य, तथाचैतदर्थं भ्राजिग्रहणमावश्यकमिति वाच्यम्? फणादौ टुभ्राज इति पाठ्यः एजृ भ्रेजृ इत्यत्र ऋभाज इति पाठ्यः। अत्र सूत्रे राजृ इति पाठ्यः, तथाच ऋभ्राज इत्यस्याग्रहणेनाभीष्टसिद्धिः। किञ्च ऋभ्राज इत्यपि न कार्य्यम् भ्राजेत्यकारोऽनुदात्त आत्मनेपदार्थः "भ्राजभासे"ति सूत्रेणोपधाह्रस्वविकल्पस्यावश्यकत्वेन "नाग्लोपी"ति ह्रस्वनिषेधस्य ऋदित्कार्य्यस्यात्राभावात्केवलात्मनेपदसिद्धिरनुदात्ताकारेणापीति पृथग्भ्राजिग्रहणस्य ज्ञापकत्वसौष्ठवात्।

नच "नाग्लोपी"तिसूत्रेण ह्रस्वनिषेधोऽपि भ्राजभासेत्युपधाह्रस्वविकल्पोऽपि कार्य्यद्वयमृदित्प्रयुक्तं कुतो नेति वाच्यम्? यत्कार्यसिद्धयर्थमाश्रितोऽनुबन्धस्तदतिरिक्तं कार्य्यन्न साधयतीति नियमः। यत्र कुत्रचित्कार्यद्वयसिद्धयर्थमाश्रितोऽनुबन्धः कार्यत्रयसिद्धयर्थम्वा तदतिरिक्तकार्य्यन्न साधयतीति तदभिप्रायः। अत एव महिङो ङकारस्तिङ्प्रत्याहारसिद्धयर्थ इति सम्पप्रच्छिमहे इत्यादौ "ग्रहिज्ये"तिङित्त्वनिमित्तकं सम्प्रसारणन्न साधयत्यत्र नियमे प्रमाणञ्च "तस्थस्थमिपान्तान्तंताम" इतिसूत्रे थमिपोरुपादानमेवान्यथा थसस्थकारमारभ्य मिपःपकारेण थप्प्रत्याहाराश्रयणेनैव सिद्धौ तयोर्वैयर्थ्यापत्तेः। तथाच "भ्राजभासे"तिह्रस्वविकल्पार्थमाश्रितोऽनुबन्धः कार्यान्तर "नाग्लोपीत्या"दिप्रवृत्तिन्न साधयतीति भ्राजिग्रहणं ज्ञापकमेवेति।

अत्रमान्याः।

भ्राजा नाम श्लोकास्तानाचष्टाणो भ्राट् अथवा भ्राजस्तेजस्तदाचष्टाणो भ्राट् अत्र षत्वार्थं भ्राजिग्रहणमावश्यकमिति प्रश्नः। नचानयोरव्युत्पन्नत्वा-

नन्वेवमपि महद्भूतश्चन्द्रमा इत्यत्रान्महत इत्यापत्तिरत आह—

गौणमुख्ययोर्मुख्ये कार्यसंप्रत्ययः ॥ १५ ॥

गुणादागतो गौणः । यथा गोशब्दस्य जाड्यादिगुणनिमित्तोऽर्थो वाहीकः ।

---

निरनुबन्धकत्वेनैतस्यैव ग्रहीतुमुचितत्वात्सानुबन्धकग्रहणार्थं राजेर्ग्रहणं पूर्वोक्तस्य ग्रहणार्थं भ्राजिग्रहणमिति द्वयोस्सार्थक्ये ज्ञापकत्वाऽसम्भव इति वाच्यम् ? द्विवारं राजिग्रहणेन सिद्धौ भ्राजिग्रहणस्य ज्ञापकत्वसम्भवात् । परिभाषायां सिद्धायान्तु राजानमाचष्टे राडित्यर्थवतो ग्रहणेन कृतार्थतया द्वितीयराजिग्रहणेनापि निरुक्तभ्राजन्तर्गतस्यानर्थकस्य ग्रहणन्न स्यादिति भ्राजिग्रहणसार्थक्यमपि सुवचमेव । तयोरभिधाने प्रमाणाऽभावस्तु न वाच्यः ? सूत्रकारानुगृहीतभ्राजिग्रहणस्यैव प्रमाणत्वात् ।

केचित्तु—परिभाषासिद्धेऽप्राक् राजिग्रहणेन भ्राजयतेः क्विपि भ्राक् व्राजयतेः क्विपि व्राक् इत्यादावपि षत्वस्य प्राप्ततया भ्राजिग्रहणस्य तत्र नियामकताया अपि सुवचत्वान्न ज्ञापकत्वसम्भवः । प्रतिपदोक्तत्वन्त्ववयवमात्रे न कुत्रापि प्रसिद्ध्यतीति वदन्ति ।

नन्वेवमिति—अर्थवद्ग्रहणपरिभाषायास्स्वीकार इत्याशयः । अर्थवद्ग्रहणपरिभाषोपस्थाप्यार्थस्य गौणमुख्यभेदेन द्वैविध्यमिति कस्य ग्रहणमित्याशयेनाह (१)नन्वेवमितीति । तत्र लौकिकशास्त्रीयार्थग्रहणेन परिभाषया सर्व-

---

(१) "कृभ्वस्तियोग" इत्यत्र सम्पद्यस्सम्पत्तिः भावे शप्रत्ययो निपातनात् । अन्यथा भवनमित्यर्थः । विकार इति सिद्धान्तः । आरोपित एवायम् । तदुक्तम् कात्यायनेन "अभूततद्भाव इति वक्तव्यम्" यो वस्तुतो येन रूपेणाऽभूतस्तस्य अयथार्थेन तेन भवनमभूततद्भावः, नतु वस्तुतस्तेन रूपेण भवनम् अन्यथा वस्तुभूतप्रकृतिविकृतिभावस्यैव पर्यवसन्नतया सम्पद्यकर्त्तरीति सौत्रेणैव तल्लाभोपपत्तौ "अभूततद्भाव" इतिवार्तिकस्यैव वैयर्थ्यापत्तेः । कर्तृपदमाश्रयपरम् । समभिव्याहृतकार्यर्थक्रियान्वये सति आरोपितविकारप्रकारकप्रवृत्तिविशेष्यकप्रतीतिजनकाद्विकृतिवाचकात् च्विरिति फलति ।

अत एव कारणीभूतो दण्डः कार्य्यीभूतो घट इत्यादयो न प्रयोगा इति वृद्धाः । कपिञ्जलाधिकरणन्यायेन प्राथमिकबुद्धिविषयमर्थमुपादाय शास्त्रार्थे निष्पन्ने पाश्चात्यबोधविषयाणां शब्दस्वरूपादीनां शास्त्राऽविषयत्वमेव युक्तमावृत्तौ मानाभावादिति न्यायसिद्धैषा । एवञ्च मुख्यत्वम् प्राथमिकबुद्धिविषयत्वम् । गौणत्वं पाश्चात्यबुद्धिविषयत्वम् । अर्थवत्परिभाषावद्रियमपि विशिष्टरूपोपादानविषयैव अपवादत्वात् । सोपसर्जनीभूतास्तु न सर्वादय इत्यत्र संज्ञाग्रहणमेतत्परिभाषानुवादकमेव । पदकार्यमात्र-

अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुध्यते । मुखमिव प्रधानत्वात् मुख्यः प्रथम इत्यर्थः । गौणे ह्यर्थे शब्दः प्रयुज्यमानो मुख्या-

थाऽनर्थकवारणेऽपीत्यर्थः । अनेन स चार्थः कीदृगित्याशङ्क्यैतदुक्तिरित्येवं पूर्वसङ्गतिसूचनमिति वा ।

"आन्महत"इत्यात्वापत्तिरिति—

ननु च्विप्रत्ययार्थो यथा आरोपस्तथा "आरोपितत्त्वन्नञ्द्योत्यन्नह्यसोऽप्यतिसर्ववदि"त्युक्त्या नञर्थोऽप्यारोपोऽत एव अनञ्समास इति सङ्गच्छते । अन्यथाऽसःशिव इत्यादौ गौणत्वादेव सिद्धौ तद्वैयर्थ्यमेव । तथाच अमहाब्राह्मण इत्यत्रात्त्वम्महद्भूतश्चन्द्रमा इत्यत्र नात्त्वन्तुल्यन्यायेन कथम्प्रक्रियाभेद इति चेन्न ? वैयाकरणास्सांख्ययोगानुयायिनो ज्ञानसामान्यम्प्रति विषयः कारणं स्वप्नाद्यनुरोधेन बौद्धपदार्थ आवश्यकः "अत्यन्ताऽसत्यपि ह्यर्थे ज्ञानं शब्दः करोति च" एष बन्ध्यासुतो याति खपुष्पकृतशेखरः । कूर्मक्षीरचये स्नातश्शशशृङ्गधनुर्द्धर" इति बौद्धपदार्थश्च बाह्यतदभाववत्त्येव भवति । एवञ्च बाह्यारोपश्च्विप्रत्ययार्थः, बौद्धारोपो नञर्थ इति भेदेन बाह्यारोपविशिष्टमहत्त्वविशिष्टो गौण इत्यवतरणसङ्गतिरिति । गौणमुख्ययोरर्थयोर्मध्ये मुख्ये एवार्थे कार्य्यसम्प्रत्ययो मुख्यार्थबोधकशब्द एव कार्यप्रवृत्तिरिति फलति । मुख्यइति "शाखादिभ्यो य"इतियप्रत्ययान्तः । गौण इति "तत आगत" इत्यणन्तो गौणशब्दः । गुणादितिहेतौ पञ्चमी आगत इति आङ्पूर्वकगम्धातोर्ज्ञानमर्थः । गुणहेतुकयथाकथञ्चिच्छब्दजन्यतादृशबोधविषय इत्यर्थः । ज्ञानमारोपात्मकं गुणपदं गुणज्ञानार्थकम्, विषयताश्रयः क्तार्थः, गुणप्रतिसन्धानप्रयोज्यारोपीयविषयताश्रय इति तत्त्वम् । स्वशक्यतावच्छेदकसमानाधिकरणगुणप्रतिसन्धानप्रयोज्यस्वशक्यतावच्छेदकप्रकारकारोपीयविशेष्यताश्रयोऽर्थस्स्वस्य गौणोऽर्थ इति फलितार्थः । गौर्वाहीक इत्यत्र गोत्वं गोपदशक्यतावच्छेदकन्तत्समानाधिकरणं जाड्यं मूर्खत्वं सदसद्विवेकराहित्यं तेषाम्वाहीके भारवाहके वृषभसदृशे पुरुषे ज्ञानाद् गोपदशक्यतावच्छेदकं गोत्वं तत्रारोप्यत इति वाहीकपुरुषो गोपदस्य गौणोऽर्थः । एवम्महद्भूतश्चन्द्रमा इत्यत्रापि समन्वयः ।

अप्रसिद्धश्च संज्ञादिरपीति—गौण इत्यर्थः । तत्र कारणमाह तद्गुणाऽऽरोपादेवेति । कश्चित् जातस्य पुत्रादे⌒कृष्ण इति राम इति नाम करोति । रामकृष्णयो⌒पित्राज्ञापालनपरोपकर्तृत्वाद्यारोपेणैव नान्यथा । एवञ्च राम-

---

विषयता तु न ? मानाभावात्, युष्मदस्मदोस्स्वरूपमात्राश्रयाणां त्वाहाद्यादेशानामुपसर्जनतायामिव संज्ञायामपि प्रवृत्त्यापत्तेश्च ।

अथवा "शूद्राचामहदि"तिवार्तिकीयजातिग्रहणवदिदमपि न्यायानित्यताज्ञापकम् । परन्त्वयंपक्षो न युक्तिसिद्ध इत्याह गुणादागत इति केचित् ।

र्थारोपेण प्रवर्त्तते। एवं चाप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम् । तेन प्रियत्रयाणामित्यादौ त्रयादेशो भवत्येव, तत्र त्रिशब्दांशस्येतरविशेषणत्वेऽप्युक्तरूपगौणत्वाभावात् । किं चायं न्यायो न प्रातिपदिककार्ये किंतूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य एव । परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वाहिक इत्यादौ गौणत्वप्रतीतिर्न तु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधायोगः प्रातिपदिककार्ये प्रवृत्त्यभावे बीजम् । श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यादावत इञःसिद्धये उपात्तमित्यादि ।

न च प्रादिपदिकपदं तादृशमिति वाच्यम् ? तेन हि प्रादिपदिकपदवत्त्वेनोपस्थितिरिति तस्य विशिष्यार्थोपस्थापकत्वाभावात् । निपातपदं तु चादित्वेनैव चादीनामुपस्थापकमिति तदुद्देश्यककार्यविधायके ओदित्यादावेतत्प्रवृत्त्याऽगाभवदित्यादौ दोषो न ।

---

कृष्णसादृश्याद् गौण इति रामकृष्णयोर्गुणप्रतिसन्धानं वास्तवमाधुनिके नाम्नि चारोपात्मकमिति व्यतिरेकः ।

ननु सञ्ज्ञाशब्देन शब्द एव सङ्केतितः गौणपदेन स्वर्थ इति संज्ञादिरपीत्ययुक्तमिति चेन्न ? सम्यग् ज्ञायते बोध्यत इति व्युत्पत्त्या संज्ञापदेनाऽर्थस्यैव ग्रहणात् । नन्वयम्प्रकारश्चतुष्टयीशब्दानां प्रवृत्तिरिति पक्षे परन्तु न सन्ति यदृच्छाशब्दास्त्रयी शब्दानाम्प्रवृत्तिरिति सिद्धान्तपक्षे संज्ञाशब्द एव नास्तीति कथं ग्रन्थसङ्गतिरिति चेन्न ? जातिशब्दा गुणशब्दाः क्रियाशब्दाश्चेति क्रियाशब्देषु संज्ञाशब्दानामारोपादिनाऽन्तर्भावादुक्तेः ।

गौणलाक्षणिकत्वञ्च गुणप्रयोज्यलक्षणाविषयत्वम्, लक्षणा च शक्यतावच्छेदकारोप एवेति भावः । किन्तूपात्तम्विशिष्यार्थोपस्थापकम्विशिष्टरूपं यत्र तादृशपदकार्य एवेति सूत्र उपात्तमित्यर्थः उच्चार्य्यमाणमिति यावत् । विशिष्य अर्थोपस्थापकं स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नबोधकमिति तदर्थः । विशिष्टरूपं कोऽर्थः आनुपूर्वीरूपस्ववृत्तिधर्मः । एवञ्च स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदस्य यत्रोपादानं तत्रैव परिभाषा प्रवर्त्तत इति भावः ।

नन्वोत्सूत्रे ओदन्तत्वावच्छिन्नविषयताप्रयोजकस्य ओत्पदस्य निपातपदस्य वा सत्त्वेन विशिष्टरूपोपादानमस्तीति गोऽभवदित्यादौ गौणमुख्यन्यायेन प्रगृह्यसंज्ञावारणपरभाष्यविरोध इत्यत आह चादित्वेनैवेति । ओत्सूत्रस्थभाष्यप्रामाण्येन निपातपदस्य स्वाश्रयनिरूपितसङ्केतवत्त्वसम्बन्धेन निपातस्वरूपानुपूर्वीविशिष्टे शक्तिः कल्प्यते । एवञ्च निपातपदप्रयोज्यमुख्यविशेष्यतानिरूपिता स्वाश्रयसङ्केतवत्त्वसम्बन्धावच्छिन्ना साक्षादवच्छेदकता निपातस्वरू-

अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेऽन्तरङ्गत्वादीत्वषत्वे भवत एव । सदृशलाक्षणिकाग्निसोमपदयोर्द्वन्द्वे तन्नामकावित्यर्थके च नेत्वषत्वे, आद्ये गौणलाक्षणिकत्वादन्त्येऽप्रसिद्धत्वात् । अत एवाग्निसोमौ माणवकावित्यत्र गौणमुख्यन्यायेन षत्ववारणपरमग्नेः स्तुत्स्तोमसोमा इति सूत्रस्थं भाष्यं संगच्छते ।

गां पाठयेत्यादौ मुख्यगोपदार्थस्य पाठनकर्मत्वासंभवेन विभक्त्युत्पत्तिवेलायां प्रयोक्तृभिर्गौणार्थत्वस्य प्रतीतावप्यपदस्याप्रयोगेण बोद्धृभिः सर्वत्र पदस्यैव गौणार्थकस्य ग्रहेणात्त्वं संपद्यते । अमहान् महान् भूतस्त्वद्भवतीत्यादिभाष्यप्रयोगे त्वाद्यादेशदीर्घादीनां करणेन चास्य न्यायस्य पदकार्यविषयत्वमेवोचितम् । अन्यथा वाक्यसंस्कारपक्षे तेषु तदनापत्तिः ।

---

पानुपूर्वीनिष्ठेति विशिष्टरूपोपादानत्त्वमक्षतम् । प्रातिपदिकपदे तु स्वनिरूपितसङ्केतवत्त्वसम्बन्धेन प्रातिपदिकपदविशिष्टे शक्तिरिति मुख्यविशेष्यता प्रातिपदिकपदेनैव साक्षादवच्छिन्ना नत्त्वानुपूर्व्येति ।

सिद्धान्तिनस्तु—ओत्सूत्रस्थभाष्यमेकदेश्युक्तिरेव "च्व्यन्तस्य प्रतिषेधो वक्तव्य"इतिवार्त्तिकन्तु कर्त्तव्यमेव, चादिगणे च्विरव्ययमित्यस्य पाठेन च्व्यन्तस्यानुपूर्व्यवच्छिन्नत्वाऽभावात् । गाम्पाठयेत्यत्रारोपेण वर्त्तमानादेव च्विप्रत्ययविधानेन तस्य गौणमुख्यार्थयोरसम्भवाच्चेति वदन्ति । अस्य न्यायस्य पदकार्यविषयत्त्वे "शूद्राचे"ति वार्त्तिके जातिग्रहणमपि लिङ्गम् ।

नन्वत्र पदकार्य्यत्त्वं किमिति प्रश्नः । यदि पदोद्देश्यकत्वन्तर्हि तद्धितविधावनुपस्थानाऽपत्तिः, तद्धितीयप्रत्ययानां सुबन्तोद्देश्यकत्वेऽपि वस्तुतः पदानुद्देश्यकत्वात् । नच वस्तुतः पदसम्बन्धित्वम्पदकार्य्यत्त्वमिति वाच्यम् ? "गोतो णिद्"त्यत्र णित्त्वस्यापि तथात्वात्, त्वद्भूत इत्यादौ त्वाद्यादेशानापत्तिसम्भवाच्च ।

न च प्रत्ययाऽनिमित्तकत्वन्तत्त्वमिति वाच्यम् ? "हरितादिभ्योऽञ्"इत्यस्यापि तथात्त्वेन तत्रैव तस्याऽप्रवृत्तौ गौणेभ्योऽपि तेभ्यः फगापत्तेः ।

अत्रकेचित्–अङ्गसंज्ञाऽनिमित्तकत्त्वे सति वस्तुतः पदसम्बन्धिकार्य्यत्त्वम्पदकार्य्यत्त्वम् । सुबनिमित्तकत्त्वे सति स्त्रीत्त्वाऽनिमित्तकत्त्वम्पदकार्य्यत्वमिति केचित् । सत्त्यन्तनिवेशफलन्तु प्रियत्रयाणामिति । अत्र "त्रेस्त्रय"इतिसूत्रस्य सुमनिमित्तकत्त्वेन गौणेऽपि प्रवृत्तिः । द्वितीयांशफलन्तु गौरइवाचरतीत्यर्थकगौरसादृश्यविशिष्टगौरशब्दात् "षिद्गौरादिभ्यश्चे"तिङीष् भवति । अत एव भूरिवाचचार बुभावेत्यत्रानेन न्यायेन वुगागमो न ।

परेतु विभक्त्यनिमित्तकत्वे सति स्त्रीत्वाऽनिमित्तकत्वं पदकार्य्यत्त्वम् ।

किञ्च शुक्लामित्युक्ते कर्म निर्दिष्टम्, कर्त्ता क्रिया चानिर्दिष्टे इत्या- द्युक्त्वेहेदानीं गामभ्याज कृष्णां देवदत्तेत्यादौ सर्वं निर्दिष्टं गामेव कर्म देवदत्त एव कर्त्ता अभ्याजैव क्रियेत्यर्थकेनार्थवत्सूत्रस्थभाष्येण कारका- दिमात्रप्रयोगे योग्यसर्वक्रियाध्याहारे प्रसक्ते नियमार्थः क्रियावाचका- दिप्रयोग इत्येतत्तात्पर्यकेण सामान्यतः क्रियाजन्यफलाश्रयत्वमात्रविवक्षा- यां द्वितीयादीनां साधुत्वान्वाख्यानमित्यर्थलाभेन पाठनक्रियान्वयकाले पदस्यैव गौणार्थत्वप्रतीतिः प्रयोक्तुरपि ।

एवमेतन्मूलको "अभिव्यक्तपदार्था ये" इति श्लोकोऽपि पदकार्य- विषयकः, ध्वनितं चेदं सर्वादीनीतिसूत्रे संज्ञाभूतानां प्रतिषेधमारभता वार्त्तिककृता पूर्वपरेति सूत्रेऽसंज्ञायामिति वदता सूत्रकृतान्वर्थसंज्ञया तत्प्रत्याख्यानं कुर्वता भाष्यकृता च ।

अर्थाश्रय एतदेवं भवति शब्दाश्रये च वृद्ध्यात्त्वे इति ओत्सूत्रस्थ- भाष्यस्य लौकिकार्थवत्त्वयोग्यपदाश्रय एष न्यायस्तद्रहितशब्दाश्रये च ते इत्यर्थः । गोत इति यथाश्रुतसूत्रे विशिष्टरूपोपादानसत्त्वेनोक्तरीत्यैव तस्य भाष्यस्य व्याख्येयत्वादित्यलम् ॥ १५ ॥

---

द्वितीयांशनिवेशे प्रमाणन्तु "जातेरस्त्रीविषयादि"त्यनेन नागीति सिद्धौ जान- पदकुण्डेतिसूत्रे नागग्रहणमेव । प्रथमांशनिवेशस्तु फलित एव । बुभावेति न रूपम् "भुवो वुगि"त्यस्य तिङ्विभक्तिनिमित्तकत्वेन न्यायाऽप्रवृत्त्या वुकि बभूवेत्येव रूपमिति वदन्ति ।

प्रयोक्तुरपीति—अयं ग्रन्थो युक्तिशून्यः अस्वं स्वं सम्पद्यते अमहान् महा- न्भूत इत्यादिभाष्यमेव पदकार्ये परिभाषेयमित्यत्र मूलम् ।

संज्ञाभूतानाम्प्रतिषेधमारभतेति—अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्य- मितिपरिभाषया शतृप्रत्ययः । परिभाषाभाष्यानुक्तेति मतेत्वारभमाणेनेति समुचितमिति ।

विशिष्टरूपोपादानसत्त्वेनेति—आ गोतोऽम्शसोरित्यभिप्रायेणेदं भाष्य- म्प्रवृत्तमित्याकूतम् ।

अथ मूलसंशोधनपूर्वकखण्डनप्रकारः ।

अप्रसिद्धश्च संज्ञादिरपि तद्गुणारोपादेव बुद्ध्यत इति अयं ग्रन्थो न युक्ततरो रामचन्द्र इति संज्ञाशब्दो रामचन्द्रगुणाऽरोपेणैव प्रवर्त्तत इति न व्यवहारो लोकसम्मत किन्तु रामचन्द्रसंज्ञकः कश्चिदित्येव तस्माद् बोधः । अत एव महद्भूतश्चन्द्रमा इत्यत्र अमहति गौणस्य महच्छब्दस्य "आन्महत" इत्यनेनात्वन्न भवति । अग्निसोमौ माणवकावित्यत्र संज्ञात्त्वादीत्त्वषत्वे न भवतः ईत्त्वषत्वानन्तरम्माणवकसम्बन्धे तु कृतकार्यं शास्त्रन्न निवर्त्तत इति

न्यायेन न तयोर्निवृत्तिः । इयम्परिभाषा पदकार्य्यविषयिणी न प्रातिपदिकका- र्य्यविषयिणीति कैयटमतम् । अप्रसिद्धसंज्ञादिरूपांशे प्रातिपदिककार्य्येऽपि प्रव- र्त्तत इति हरदत्तमतम् । किन्तूपात्तम्विशिष्यार्थोपस्थापकम्विशिष्टरूपमितिनि- यमो न युक्ततरः । विशिष्टरूपाऽभावेऽपि न्यायस्यैतस्यौत्सूत्रभाष्यकैयटयो- स्समुपन्यस्तत्वात् ।

नच निपातपदम्विशिष्यार्थप्रतीत्यौपयिकरूपेण समेषान्निपातानामुपस्था- पकमिति वाच्यम् ? यथा प्रातिपदिकमिति संज्ञापदं स्वप्रकारकबोधजनकन्त- द्वन्निपातपदमपि स्वप्रकारकबोधजनकमिति तदभिप्रायात् । नच यद्रूपावच्छि- न्नस्य संज्ञा क्रियते तद्रूपबोधकत्वं संज्ञापदानामिति तात्पर्य्यं स्यादिति वाच्यम् ? च्व्यन्ता निपाताः च्विरव्ययम्इत्युपदेशाभ्यां निपातस्य च्व्यन्तत्वेन च्व्यन्तो- पस्थापकत्वमेव नत्वर्थप्रतीत्यौपयिकरूपेणेतिगम्भीरभावानुगतेः । निपातपदन्तु चादित्वेनैव चादीनामुपस्थापकमिति ग्रन्थो न युक्तः । "आन्महत"इतिसूत्रे कैयटेन गोऽभवदित्यत्र शब्दविशेषानाश्रयेऽपि इतिग्रन्थेनौत्सूत्रे अर्थप्रतीत्यौ- पयिकशब्दविशेषानाश्रयणस्योक्तत्वात् । तथाच ओत्सूत्रे विशेषरूपाश्रयणमिति भावस्य सर्वथा निरर्थकत्वात् ।

अत्र विलक्षणाः ।

पदान्तरसम्बन्धसापेक्षत्वेन गौणत्वस्य पदकार्य्ये प्रवृत्तौ सिद्धायामपि संज्ञायाःपदान्तरसम्बन्धसत्तापेक्षणमन्तरेणाऽपि लोके प्रयोगः,लोके प्रयोक्यानां प्रतिपत्तिश्च । एवञ्च प्रयोगप्रतिपत्तिभ्यामिष्टसिद्धौ गौणमुख्यपरिभाषा प्राति- पदिककार्येऽपि प्रवर्त्ततान्निराबाधम् । अत एव "एकाच्च प्राचाम्" इति सौत्रे स्मादादेशो न "युष्मदस्मदोरनादेश" इत्यत्र सौत्रे न त्वमादेशः ।

नच संज्ञास्थले प्रातिपदिककार्य्येप्येतन्न्यायप्रवृत्तौ त्वद्भवतीत्यत्र त्वमाद्या- देशो न स्यादिति वाच्यम् ? अत्र च्विप्रत्ययमपेक्ष्य "प्रत्ययोत्तरपदयोश्च"ति- त्वाद्यादेशः । महद्भूतश्चन्द्रमा इत्यत्रैव गौणत्वानन्तरमेव च्विप्रत्ययोत्पत्त्या गौणपदविषयत्वन्त्वाद्यादेशस्य निर्विवादम् । तथाच पदकार्ये प्रवृत्तिस्वीकारेऽपि प्रकृते त्वाद्यादेशस्य पदकार्य्यत्वेन नागेशमतेऽपि दोषस्य जागरूकत्वात् ।

ननु युष्मदस्मदोरिति प्रातिपदिकोद्देश्येन विधीयमानत्वादस्य प्रातिपदिक- कार्य्यत्वमेवेति चेन्न ? तुल्यन्याये "नान्महत"इत्यात्वस्याऽपि प्रातिपदिकोद्देशे विधीयमानतया तथात्वापत्तेः । नच सर्वादिसूत्रस्थवार्त्तिकादिग्रन्थेऽस्य न्यायस्य पदकार्यविषयत्वं संज्ञायामपि समुक्तमिति ततो विरोध इति वाच्यम् ? अन- न्यथासिद्धं प्रयोजनं यदि लभ्येत तदैव तस्य प्रामाण्यम्परन्तूपायस्योपायान्तरा- ऽदूषकत्वेनादोषात् । अत एव "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुताः ।

अर्थवद्ग्रहणे इत्यस्यापवादमाह—

**अनिनस्मन्ग्रहणान्यर्थवता चानर्थकेन च तदन्तविधिं प्रयोजयन्ति ॥ १६ ॥**

येन विधिरित्यत्र भाष्ये वचनरूपेण पठितैषा । तेन साम्नेत्यादावल्लोपो, दण्डी वाग्मीत्यादाविन्हन्निति नियमः, सुपयाः सुस्रोता इत्यादौ अत्वसन्तस्येति दीर्घः, सुशर्म्मा सुप्रथिमेत्यादौ मन इति ङीब्निषेधश्च सिद्धः ।

---

शास्त्रार्थस्तेषु कर्त्तव्यश्शास्त्रेषु न तदुक्तिषु''त्यस्य पार्थक्येन पाठस्सुगतः । एवञ्च शुद्धगौणत्वे पदकार्य एवायन्न्याय इति सिद्धम् । संज्ञारूपत्वे तु प्रातिपदिककार्य्येऽपीति च व्याख्यानद्वयं सिद्धम् ।

इयम्परिभाषा स्वरूपानुपादानेऽपि प्रवर्तत इत्येव सिद्धान्तो नतु स्वरूपोपादानविषया । नच श्वशुरसदृशस्यापत्यमित्यर्थके श्वाशुरिरित्यत्र यथा''राजश्वशुराद्य''दितियत्प्रत्ययो न भवति तथा ''अत इञि''ति इञ् न स्यादिति वाच्यम् ? ''आनि लोडि''तिशास्त्रे लोड्ग्रहणं प्रवापानीत्यादौ णत्वव्यावृत्त्यर्थमेव, तत्रार्थवत्परिभाषयैव सिद्धे लोड्ग्रहणन्तदनित्यत्वज्ञापनार्थमर्थवत्परिभाषामूलकगौणमुख्यन्यायस्याऽप्यनित्यत्वेन श्वाशुरिरित्यादिसिद्धेः। स्वंरूपमितिसूत्रीयरूपग्रहणेन ज्ञापितार्थवत्परिभाषा विशिष्टरूपानुपादानेऽपि प्रवर्ततेऽत एव मूले विशिष्टरूपोपादानविषयेयमिति बृद्धा नतु सर्वे इत्यभिप्रीतिः। तथाचार्थवत्परिभाषामूलकत्वेन गौणमुख्यपरिभाषाऽपि स्वरूपानुपादानविषयिणीति॥ ततश्चौत्सूत्रभाष्याभिप्रीतिरप्यनुकूला । अतएव त्वद्भवतीति वाक्ये त्वाद्यादेशः महद्भूता ब्राह्मणीत्यत्र पुम्वद्भावश्च सिद्ध्यत इति किमितोऽधिकम् । अर्थवद्ग्रहणपरिभाषायां गौणमुख्यभेदेनार्थद्वैविध्यसत्त्वेऽपि मुख्यार्थस्यैव ग्रहणनिश्चायकगौणमुख्यन्यायं साङ्गोपाङ्गम्व्याचष्टे अनिनस्मन्निति । अन इन् अस् मिनां ग्रहणं यैस्तद्बोधकानीत्यर्थः । येन विधिरित्यत्रेति । अत एवैतद्बोधकानि अर्थवता अनर्थकेन च विशेषणेन तदन्तविधिम्प्रयोजयन्ति । अनिनस्मन्ग्रहणानां प्रयोजकत्वम् । अर्थवदनर्थकयोः प्रयोज्यकर्तृत्वम् । अत एव णिजर्थस्संघटते अन् इन् अस्मन्ग्रहणेषु एषु वर्णत्वातिदेशः । एवञ्चार्थवत्परिभाषाया विशिष्टरूपोपादानविषयिण्या अत्राऽप्रवृत्तिः । तथैव रीत्या अनिनस्मन्ग्रहणेषु लक्षणप्रतिपदोक्तप्रत्ययाऽप्रत्ययग्रहणवतेति तिसृणामप्यप्रवृत्तित एव यशस्वीत्यत्रेनिः । अन्यथा ग्रहणवतेति परिभाषया तद्दुर्लभत्वाऽपत्तेः । ''अस्मायामेधास्रजो विनिः'' इति सूत्रन्तु अस् धातोः क्विपि अस्वीत्यत्र चरितार्थम् । अत एव असकारः अन्कार इतिभाष्यप्रयोगा उपपद्यन्ते ।

अन्ये तु परिवेविषीध्वमित्यत्र ढत्वव्यावृत्तये क्रियमाणादिणः षीध्व-मित्यत्राङ्गग्रहणादर्थवत्परिभाषाऽनित्या तन्मूलकमिदमित्याहुः ।

विभाषेट इत्यत्रानर्थकस्यैव षीध्वमः संभवादत्रापि तस्यैव ग्रहण-मिति भ्रमवारणायाङ्गादिति परे ॥ १६ ॥

ननु उश्चेत्यत्र लिङ्सिचावित्यत आत्मनेपदेष्वित्स्येव संबध्यतामन-न्तरत्वादत आह—

**एकयोगनिर्दिष्टानां सह वा प्रवृत्तिः सह वा निवृत्तिः ॥ १७ ॥**

वाशब्द एवार्थे । परस्परान्वितार्थकपदानां सहैवानुवृत्तिनिवृत्ती इत्यर्थः । एककार्यनियुक्तानां बहूनां लोके तथैव दर्शनादिति भावः ।

यत्त्वत्र ज्ञापकं नेड्वशीत्यत इडित्यनुवर्त्तमाने आर्द्धधातुकस्येडित्यत्र पुनरिड्ग्रहणं, तद्धि नेत्यस्यासंबन्धार्थमिति, तन्न ? दीधीवेवीटामिति सूत्रे भाष्ये तत्रत्येड्ग्रहणप्रत्याख्यानायेड्ग्रहणेऽनुवर्तमाने पुनरिड्ग्रहणस्येटो गुणरूपविकाराभावार्थकत्वस्योक्तत्वेन तद्विरोधात् । नञो निवृत्तिस्तु क्वचिदेकदेशोऽप्यनुवर्त्तत इति न्यायेन सिद्धा ।

---

अर्थवताचानर्थकेनेति—प्रकृत्यादिभ्य उपसंख्यानमितिवार्त्तिकेनाभेदे तृ-तीया । अर्थवदनर्थकाऽभिन्नं यदिति । "अनि"तिप्रकृतिभावबाधक "कामस्ता-च्छील्य" इति सूत्र "न मपूर्वोऽपत्येऽवर्मण" इतिसूत्रेऽवर्मण इतिप्रतिषेधः "आह्नोऽजाताावि"ति टिलोपनिपातनम् "व्याख्यातव्यनाम्नः 'लोम्नः' स्थाम्न" इत्यादिनिर्देशाश्च प्रमाणम् ।

अर्थवद्ग्रहणपरिभाषाऽनित्या तत्प्रपञ्चभूतेयमिति केचित् । परन्तु सर्वा अपि परिभाषा ज्ञापकसिद्धा एवेति प्रतिज्ञानुरोधेन ज्ञापकत्वोपवर्णनमेव श्रेय-स्करमित्यास्तांविस्तरः ।

ननु स्थानेऽन्तरतम इति षष्ठी स्थानेयोगेत्यतस्स्थानेग्रहणानुवृत्तिरुक्ता, सा भवितुमर्हति नवेत्त्यनुवृत्तितदभावव्यवस्थापकपरिभाषाद्वयं सिंहावलोकन्याये-नावतारयति ननु उश्चेत्यत्रेति ।

अङ्गग्रहणस्योक्तपरिभाषाज्ञापकताभञ्जकानुवृत्तिविचारप्रस्ताव इह सङ्गति-रिति ध्वनयन्नवतारयति ननूश्चेत्यत्रेति ।

एकयोगनिर्दिष्टानामिति-एकस्मिन् योग एकयोगः योगस्सम्बन्धस्तेन नि-र्दिष्टानामेकान्वितानामिति तात्पर्य्यम् । यथा क्ङित्संज्ञायामन्वितानि लिङ्सि-जात्मनेपदानीति । परस्परान्वितार्थकपदानामिति—स्वप्रयोज्यविषयतया साक्षात्परम्परया वा निरूपिता या विषयता तत्प्रयोजकानामिति फलति। अस्या लोकसिद्धत्वमप्याह एककार्य्यनियुक्तानामिति ।

वस्तुतस्तु दीधीवेवीटामिति सूत्रस्थभाष्यमेकदेश्युक्तिः। आर्द्धधातुकस्येति सूत्रस्थेड्ग्रहणस्य नेड्वशीति सूत्रे भाष्ये प्रत्याख्यानात्तत्करणेन गुरुतरयत्नमाश्रित्यैतत्प्रत्याख्यानस्यायुक्तत्वात् ॥ १७ ॥

नन्वलुगधिकारः प्रागानङ उत्तरपदाधिकारः प्रागङ्गाधिकारादित्यनुपपन्नमेकयोगनिर्दिष्टत्वात्। तथा दामहायनान्ताच्चेत्यादौ संख्याऽव्ययादेरित्यतः संख्यादेरित्यनुवर्त्तते ऽव्ययादेरिति निवृत्तमिति चानुपपन्नमतआह—

क्वचिदेकदेशोऽप्यनुवर्त्तते ॥ १८ ॥

एकत्रार्थे योगः संबन्धस्तेन निर्दिष्टयोः समुदायाभिधायिद्वन्द्वनिर्दिष्टयोरित्यर्थं इति पत्त्यात्तिरिति सूत्रे कैयटः।

तावन्मात्रांशे स्वरितत्वप्रतिज्ञाबलाल्लभ्यमिदम्। स्पष्टा चेयं दामहायनान्ताच्चेति सूत्रे औतोऽम्शसोरिति सूत्रे च भाष्ये पूर्वा च ॥१८॥

---

अत्र ज्ञापकापेक्षायान्तु "अदसो मादि"त्यत्र माद्ग्रहणमन्यथा परिभाषाऽभावे इदूतोरेवानुवृत्त्या सर्वेष्टसिद्धावेकारानुवृत्त्यर्थं क्रियमाणं माद्ग्रहणव्यर्थं स्यात्परिभाषयान्त्वेकारस्यापीदूत्सूत्रे सन्नियोगशिष्टत्वात्तदनुवृत्तिनिरासार्थम्माद्ग्रहणं स्वांशे चरितार्थम्। किञ्च "लिङ्सिचा"वित्यतस्सिजनुवृत्त्यव सिद्धे "हनस्सिजि"तिसूत्रे सिज्ग्रहणमपि ज्ञापकम्। किञ्च "सुबामन्त्रिते पराङ्गवत्स्वर" इत्यतस्सुबित्यनुवर्तमाने "सुप्प्रतिना मात्रार्थ" इत्यत्र क्रियमाणं सुब्ग्रहणञ्चापि ज्ञापकम्।

प्रतिद्वन्द्विभाव इह सङ्गतिस्तदाह नन्वलुगित्यादि। एकवाक्यार्थसम्बन्धितया निर्दिष्टानां पदानां समासव्याससाधारण्येनैकदेशोऽप्यनुवर्त्तत इत्यभिव्यञ्जयति। एकयोगनिर्दिष्टानां क्वचिदेकदेशोऽप्यनुवर्त्तते। अत्र ज्ञापकन्तु "दामहायनान्ताच्चे"त्यत्र भाष्ये "संख्यादेरिति वक्तव्यमि"तिवार्तिकप्रत्याख्यानम्। "संख्याव्ययादे"रित्यत एकदेशस्यानुवृत्त्या प्रदर्शितम्। एतत्परिभाषाऽभावे द्वयोरनुवृत्त्या प्रत्याख्यानपरभाष्याऽसङ्गतिः।

कैयट इति—अनेनारुचिस्सूचिता "अलुगुत्तरपद" इत्यवतरणपरभाष्यविरोधात्। अचिनवम् असुनवमित्यादौ "औतोऽम्शसो" रित्यात्वाभावार्थं "वा सुपी"त्यतस्सुपीत्यनुवर्तते वेति निवृत्तमिति भाष्यविरोधाच्च नोभयत्र समास इति तात्पर्य्यम्। एकदेशे स्वरितत्वं व्यर्थं सदत्र (१)ज्ञापकम्। अत एव "षष्ठी-

---

(१) क्वचिदेकदेश इति- अत्र ज्ञापकान्तरमपि "तस्मादित्युत्तरस्ये"तिसूत्र इतिशब्दोपादानमन्यथा "तस्मिन्निति निर्दिष्टे" इति सूत्रान्निर्दिष्टग्रहणवत्सहैवेतिशब्दानुवृत्त्याऽभीष्टसिद्धौ किमर्थमितिकरणम्। यदि सहैव पदानामनुवृत्तिस्तर्हि निर्दिष्टग्रहणव-

स्थानेयोगे"त्यतस्स्थानेग्रहणेऽनुवर्त्तमाने इत्यादि भाष्यं सुगतम्। तत्तदनुवृत्तिप्रयोजकं तत्तद्विजातीयमेव स्वरितत्वमिति बोध्यम्।

अथ मूलखण्डनप्रकारः।

"आर्द्धधातुकस्ये"तिसूत्रे इड्ग्रहणं "नेड्वशि कृती"त्यत्र भाष्ये प्रत्याख्यातमिति ग्रन्थो न युक्ततरः "नेड्वशी"ति सूत्रभाष्ये यदि खल्वप्येषोऽभिप्रायः द्विरिड्ग्रहणन्न क्रियेतेति पुरस्तादपि प्रतिषेधे सति तन्न करिष्यते, कथम् इदमस्ति "नेड्वशिकृती"ति, ततो वक्ष्यामि आर्द्धधातुकस्य बलादेरिति, इड्ग्रहणमनुवर्त्तते नेति निवृत्तमिति वदन्भाष्यकार इड्विधानार्थन्तत्रेड्ग्रहणन्न कर्त्तव्यमित्याह नतु विकारान्तरनिवृत्त्यर्थमपि। अन्यथा "दीधीवेवीटामि"तिसूत्रभाष्यविरोधप्रसङ्गः। नचेदं भाष्यमेकत्रेड्ग्रहणेनैवोपपत्तौ इड्द्वयाङ्गीकारेण प्रवृत्तत्वाद् गौरवग्रस्तत्वादेकदेश्युक्तिरिति वाच्यम्? एवं सति इटो गुणापत्तेः। नच "क्ङिति चे"तिसूत्रानन्तरम् "इटश्चे"तिसूत्रकरणेन न दोष इति वाच्यम्? महागौरवापत्तेः।

किञ्च "एकयोगनिर्दिष्टानामि"ति न्यायविरोधेन इडिति वर्तते नेतिनिवृत्तमिति भाष्यस्यैवैकदेश्युक्तित्वकल्पनाया औचित्यबोधनाच्च क्वचिदेकदेशन्यायेन तत्समर्थनेऽपि विधेयसमर्पणार्थमिड्ग्रहणन्न कर्त्तव्यमिति ग्रन्थाशयो युक्तो नतु विकारान्तरनिवृत्त्यर्थमपीड्ग्रहणन्न कर्तव्यमिति, इड्ग्रहणन्न कर्त्तव्यमिति "दीधीवेवीटामि"तिसूत्रीयभाष्यविरोधात्। तथाच नागेशाऽभिप्रायोऽन्वेष्य इति सरयूपारीणशुक्लाः।

उदित्सवर्णं गृह्णाति न सवर्णमात्रमिति सीरदेवाचार्यः।

उदिद्वर्णोऽणुदित्सवर्णस्येति स्थानप्रयत्नाभ्यां विशिष्टमेव सवर्णं गृह्णाति न सवर्णमात्रन्तेन "चो॒कुरि"ति सवर्णग्रहणे हकारस्य ग्रहणन्न भवति। "न विभक्तौ तुस्मा" इत्यत्र तुग्रहणं कृत्वा सकारग्रहणम्। अयञ्च न्यायसिद्ध एवार्थस्सुखप्रतिपत्त्यर्थं ज्ञापकेनोक्तः। तथाहि स्थानप्रयत्नाभ्यां सदृशस्य सवर्णसंज्ञा विधीयमाना तकारसकारयोः स्पर्शोष्मणोः प्रयत्नभेदादेव सावर्ण्यन्नास्तीति तत्कुतो ज्ञापकम्। न्यूनाधिकगुणानां सावर्ण्यन्न भवति। अन्यथा "एङ॒पदान्तादती"त्यादौ एकारौकाराभ्यां सावर्ण्यादैकारौकारयोरपि ग्रहणं स्यात्।

स्वराणामूष्मणाञ्चैव विवृतं करणं स्मृतम्।
तेभ्यस्तु विवृतावेङौ ताभ्यामैचौ तथैव च॥ इति।

यात्रानेकविधमान्तर्य्यमिति व्याख्यानकाले स्थानतः आन्तर्य्यस्य प्राबल्य-

---

दितिशब्दोऽप्यनुवर्त्तिष्यते पूर्वसूत्रात्ताहि इतिकरणमनर्थकं स्यादिति यावत्। क्वचिदेकदेशानुमतिपरिभाषायान्तु केवलन्निर्दिष्टग्रहणमेवानुवर्त्तते नेति करणमितीतिकरणं स्वांशे चरितार्थमिति केचित्।

ननु "त्यदादीनाम" इत्यादिनेममित्यादावनुनासिकः स्यादत आह—

**भाव्यमानेन सवर्णानां ग्रहणं न ॥ १९ ॥**

अणुदित्सूत्रेऽप्रत्यय इत्यनेन सामर्थ्यात्सूत्रप्राप्तं जातिपक्षेण प्राप्तं गुणाभेदकत्वेन च प्राप्तं नेत्यर्थः। अत एवाणुदित्सूत्रे प्रत्ययादेशागमेषु सवर्णग्रहणाभावं प्रकारान्तरेणोक्त्वैवं तर्हि सिद्धे यदप्रत्यय इति प्रतिषेधं शास्ति, तज्ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणं नेति।

---

न्निगद्य "इको यणची"त्युदाहृतन्तत्र यण्पदेनानुनासिकस्य ग्रहणं कुतो नेति शङ्कानिरासाय भाव्यमानपरिभाषामवतारयति।

किञ्च "आर्द्धधातुकस्येट्" इति सूत्रस्थेड्ग्रहणस्य मूले यथागुणरूपविकाराऽभावार्थकत्वन्तथैव रीत्या विनिगमनावैकल्येन सवर्णग्रहणप्राप्तदीर्घाभावार्थकत्वमपि कुतो नोक्तम्भाष्ये। तथाच प्रत्याख्यानमप्यसङ्गतमिति चेन्न? भाव्यमानपरिभाषया निषेधात्। एवञ्च तत्तात्पर्य्यन्ध्वनयँस्तामेव तत्रत्याम्परिभाषाम्व्याख्यातुमुपक्रमते भाव्यमानेनेति—अष्टाध्याय्यां "कर्मणि द्वितीये" त्यस्यैव प्राथम्याद् द्वितीयान्तमवतरणमिममिति। इमावित्यत्रानुनासिकाऽकारे सत्यपि वृद्धया शुद्धौकारसम्भवात् इमे इत्यत्र परस्यैकारस्य द्विमात्रत्वेन तद्गुणकस्यैव गुणेन शुद्धैकारसत्त्वात् "अमोऽनुनासिका न ह्रावि"ति शिक्षावाक्येन ह्रावित्युपलक्षणमैचोऽपीति भाष्यसिद्धान्तेनैचोऽनुनासिकत्वाभावाच्च।

इयम्परिभाषा न ज्ञापकसाध्या(१)नाप्यपूर्वा वाचनिकी, किन्तु सूत्रीयाऽप्रत्ययपदबोध्यैवेत्याशयवानाह अणुदित्सूत्र इति।

नन्वप्रत्ययपदेन सवर्णग्राहकत्वाऽभावेऽपि आदेशादौ कथं सवर्णग्रहणाऽभावइत्याह सामर्थ्यादिति। इदञ्च व्यक्तिः पदार्थ इति पक्षे। जातिपक्षेऽप्याह जातिपक्ष इति। व्यक्तिपक्षे प्रकारान्तरेण प्राप्तं सवर्णग्रहणम्वारयति गुणाऽभेदकत्वेनेति प्रकारान्तरेणेति। प्रत्ययांशेऽनभिधानात् आगमांशे "वृतो वे"ति दीर्घविधानसामर्थ्यादादेशांशे "ईहल्यघोरि"ति दीर्घविधानात् सवर्णग्रहणाऽभावे सिद्धेऽप्रत्ययग्रहणसामर्थ्यादेकदेशानुमत्या स्थालीपुलाकन्यायेनेयम्परि-

---

(१) भाव्यमानेनेति—स्थानेऽन्तरतमपरिभाषाविषयकविशेषनिर्णायकत्वमत्रास्याः परिभाषाया निरूपणकारणम्। प्रसक्तानुप्रसक्त्या च मध्ये परिभाषान्तरनिरूपणम्, तद्ध्वनयन्नवतारयति ननु त्यदादीनामिति। परिभाषार्थस्तु विधेयबोधकतया साक्षात् प्रत्याहारद्वारा वा यो निर्दिष्टस्तज्जातीयानां तद्वृत्तिधर्मविरुद्धधर्माक्रान्तानां व्यक्तीनां कथमपि विधेयतया समर्पणन्नेत्यर्थः। अत एव शेखरे सवर्णपदेन स्वसमानजातीयो भिन्नधर्मा इष्यत इति।

किं च ज्याद ईयस इत्येवान्तर्यतो दीर्घे सिद्धे ज्यादादिति दीर्घोच्चारणमस्या ज्ञापकम् ।

अणुदित्सूत्रे ज्यादादितिसूत्रे च भाष्ये स्पष्टैषा ।

भाषा ज्ञाप्यते । ज्ञापकमिदं सामान्यापेक्षमतोऽस्याः परिभाषायास्सर्वप्रकारेण मात्रस्य सवर्णग्रहणस्य बाधकत्वम् । अस्यां ज्ञापकमप्याह किञ्चेति । अत एव भाष्ये "किमर्थं ज्यादादित्युच्यते न ज्याद् इत्येवोच्यताम् का रूपसिद्धिः आन्तर्यतो दीर्घस्य दीर्घो भविष्यति एवन्तर्हीदमेव ज्ञापयति भवत्येषा परिभाषा भाव्यमानेन सवर्णानां ग्रहणन्नेति" समुक्तम् ।

ननु ज्ञापितेऽपि ह्रस्वांशे चारितार्थ्यन्नास्ति ह्रस्वाऽकारविधानेनापि सवर्णदीर्घेण रूपसिद्धेः । पररूपन्तु न बाधकं लोपग्रहणमनुवर्त्यैकारस्य लोपविधाने रूपसिद्धावकारविधानसामर्थ्येन पररूपाऽप्रवृत्तेः एवञ्च दीर्घसिद्धिरिति चेन्न ? लोपे "अकृत्सार्वधातुकयोरि"ति दीर्घाऽपत्त्याऽकारविधानस्य पररूपे सत्यपि व्यर्थत्वाऽभावात् । अङ्गवृत्तपरिभाषया तु न दीर्घाऽभावस्तस्याः परिभाषाया लक्ष्यसंस्काराय भाष्यकृतानाश्रयात् ।

ननु धृष्णुयेत्यादौ दीर्घवारणायाक्ङितीत्यत्र क्ङितीत्यनुवृत्तेरावश्यकतया लोपे दीर्घाऽभाव इति चेदत्र विलक्षणविचारः । "ईहल्यघोरि"ति दीर्घोच्चारणस्य ज्ञापकत्वसम्भवात् ।

किञ्च अप्रत्ययग्रहणमपि ज्ञापकम् । ह्रस्वांशे चारितार्थ्यन्तु षष्ठ्यन्तपदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वमेव भाव्यमानत्वं भाष्यसिद्धम् । एवञ्च पञ्चम्यन्तपदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयस्य प्रत्ययस्य भाव्यमानत्वाऽभावेन युक्ततरमेवेति विलक्षणाः ।

भाव्यमानेनेति कर्तरि तृतीया, ग्रहणमित्यत्र भावे ल्युट् । ननु भाव्यमानपदेन विधेयीभूतलक्ष्यस्थग्रहणन्तत्र सवर्णग्रहणन्न प्राप्नोति सूत्र एवाणुदित्सूत्रप्रवृत्तिर्लक्ष्ये फलाभावाच्च निषेधो व्यर्थ इति चेन्न ? स एवायमिति तत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदाध्यवसायेन भाव्यमानपदेन विधेयताप्रयोजकपदस्य ग्रहणात् । हेतौ तृतीयाम्विधाय भाव्यमानेन विधेयभूतेन हेतुना सवर्णानां ग्रहणन्न भवतीति फलितार्थवर्णनाच्च । प्रतीयते विधीयत इति प्रत्ययो भाव्यमान इति यावत् ।

वस्तुतस्तु "ईहल्यघो"रिति ज्ञापकेन सिद्धा परिभाषैकदेशानुमत्याऽप्रत्ययग्रहणेन केवलम्बोध्यते । प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वमेवेति भाष्यबलेन ध्वन्यते । अणुदित्सूत्रेऽप्रत्यय इति किमर्थं "सनाशंसभिक्ष उः" अत्यल्पमिदमुच्यते अप्रत्ययादेशटित्किन्मित इति वक्तव्यम्" एतदुपक्रमभाष्ये प्रत्ययांशे प्रकारान्तरोपन्यासकाले प्रत्ययपदस्य योगार्थाऽप्रदर्शनेन कृत्रिमाकृत्रिमन्यायस्वा-

रस्येन च प्रत्ययपदस्य प्रत्ययसंज्ञकपरत्वमेवोचितमिति फलति । भाव्यमानेन को-ऽर्थो विधेयताप्रयोजकेन सवर्णानां कोऽर्थस्स्वावृत्तिश्रावणप्रत्यक्षविषयतावच्छे-दकधर्मवतां ग्रहणन्नेतिप्रथमप्रकारो द्वितीयप्रकारश्च ।

अथ परिभाषार्थः—भाव्यमानेन विधेयताप्रयोजकेन पदेन सवर्णानां को-ऽर्थस्स्वावृत्तिर्यस्स्वरत्वव्याप्यधर्मेतरः पाणिनिसङ्केतविषयतावच्छेदकधर्मस्तद्वतां ग्रहणन्नेत्यर्थः । तत्पुरुषीयत्वतत्कालिकत्वतद्व्यक्तित्वादिधर्माणाम्पाणिनीय-सङ्केतविषयतावच्छेदकत्वाऽभावान्न तानादाय दोषः । स्वरत्वव्याप्येतरत्वविशेष-णेन सर्वेभ्य इत्यादावनुदात्तत्वसिद्धिः । "मुखनासिके"तिसूत्रेणानुनासिकत्वस्य "ऊकालोज्झ्रस्वदीर्घ" इतिसूत्रेण दीर्घत्वादीनाञ्च पाणिनिसङ्केतविषयतावच्छे-दकत्वेन तद्वतां ग्रहणन्नेति भविवेत्यादौ च न दीर्घेकारः । तथैव यणादिपदेन वकारादीनां ग्रहणञ्च भवति वत्वादीनामपि तादृशधर्माऽभावात् ।

पूज्यचरणास्तु—

स्वविशिष्टाऽवृत्तिर्यस्तद्व्यक्तित्वतत्पुरुषीयत्वतत्कालिकत्वस्वरत्वव्याप्योदा-त्तत्वादिधर्मेतरश्रावणप्रत्यक्षविषयतावच्छेदको धर्मस्तद्वतां ग्रहणन्नेत्यर्थः । वैशिष्ट्यञ्च स्वतादात्म्य स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्वैतदन्य-तरसम्बन्धेन । अन्यतरसम्बन्धेन वैशिष्ट्यं यणाद्यर्थम् । स्वतादात्म्यमादाय य-णादावव्याप्तिवारणाय स्वविशिष्टनिरूपितवृत्तित्वसामान्याभाववतो धर्मस्य ग्र-हणमिति समूचुः ।

परमपूज्यास्तु—

स्वविशिष्टो यस्तद्विशिष्टस्य ग्राहकम्विधेयताप्रयोजमम्पदन्न भवतीत्यर्थः । वै० स्वतादात्म्य स्वनिष्ठशक्तिनिरूपकतावच्छेदकसमुदायघटकत्ववत्त्वैतदन्यतर-सम्बन्धेन । अन्त्यवैशिष्ट्यञ्च स्वसवर्णत्व स्वाऽवृत्तिधर्मवत्त्वोभयसम्बन्धेन । "त्यदादीनाम" इत्यत्र जातिपक्षे स्वबोध्यो दीर्घस्तद्विशिष्टो ह्रस्वस्तस्य ग्रहणन्न स्यादत प्रथमसम्बन्धनिवेशः । द्वितीयसम्बन्धनिवेशफलम् "इको यणची" ति । "त्यदादीनाम" इत्यादौ शुद्धह्रस्वाकारे स इत्यत्र स्यादेष इत्यत्र न स्यात् । एवञ्च तत्तद्व्यक्तौ दोषवारणायान्त्यवैशिष्ट्यम् । शुद्धह्रस्वाकारे-स्वावृत्तिधर्मवत्त्वन्नास्तीति न दोषः । "त्यदादीनाम" इत्यत्र स्वमेति तद्विशिष्ट-स्सानुनासिको दीर्घश्च नतु ह्रस्वाकारः तथा च दीर्घानुनासिकयोर्ग्रहणन्नेति सिद्धो मार्ग इति चकाशयाञ्चक्रुः ।

अत्र भाव्यमानपरिभाषाऽणुदित्सूत्रघटकाऽप्रत्ययशब्दार्थस्वरूपैव तथा च "यथालक्षणम्प्रयुक्त" इतिभाष्यवत्नेन विधीयमानशब्दो विधेयताप्रयोजक शब्दोऽण् सवर्णग्राहको न भवति । अण्प्रत्याहारस्तु परणकारानुगत इति लक्ष्यानुरोधेन सूत्रार्थविषयैव निर्वाहेऽलम्परिभाषया परिष्कारेण च ।

चोःकुरित्यादौ भाव्यमानेनापि सवर्णग्रहणं विधेये उदिदुच्चारणसामर्थ्यादेतदेवाभिप्रेत्य भाव्यमानोऽण् सवर्णान्न गृह्णातीति नव्याः पठन्ति ।

नन्वेवमदसोऽसेरित्यादिनामू इत्यादौ दीर्घविधानं न स्यादत आह–

भाव्यमानोऽप्युकारः सवर्णान् गृह्णाति ॥ २० ॥

---

एतदेवाभिप्रेत्येति—उदित्करणसामर्थ्यमूलकार्थमभिप्रत्येत्यर्थः । नव्या भट्टोजिदीक्षितादयः । अत्रारुचिबीजन्तु "पथिमथ्यृभुक्षामादि"तिविहिताऽकारस्यानण्त्वेनानुनासिकाकारव्यावृत्तये आकारप्रश्लेषकरणमेवेति दिक् ।

नन्वेवमिति—भाव्यमानपरिभाषा (१)स्वीकारे । अपवादसङ्गत्याऽऽह अमूइत्यादाविति । नच उऊशब्दयोस्समाहारद्वन्द्वे दीर्घे नपुंसकह्रस्वे आन्तरतम्याद्ध्रस्वस्य ह्रस्वो दीर्घस्य दीर्घ इति लक्ष्यसिद्धया नावतरणसङ्गतिरिति वाच्यम् ? समाहारद्वन्द्वे विसंज्ञकत्वाद्ध्रस्वस्य पूर्वनिपातेऽपरनिमित्तकत्वरूपान्तरङ्गत्वेन पूर्वन्नपुंसकह्रस्वे ततस्सवर्णदीर्घे उ इत्यभीष्टरूपाऽसिद्धेः । ऊकाल इतिनिर्देशोऽत्र प्रमाणम् । नच सवर्णदीर्घेऽपि पुनर्नपुंसकह्रस्वेन रूपासिद्धिरिति वाच्यम् ? लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाऽप्रवृत्तेः ।

नच"षत्वतुकोरसिद्ध"इति सूत्रीयतुग्ग्रहणेन अन्तरङ्गपरिभाषाऽनित्येति न पूर्वं ह्रस्वः । किञ्च"लक्षणहेत्वोः क्रियाया"इतिसूत्रनिर्देशेन पूर्वनिपातप्रकरणमनित्यमिति न ह्रस्वोकारस्य पूर्वं स्थितिरेवञ्च ह्रस्वदीर्घयोस्समाहारसमासानन्तरं सवर्णदीर्घे पश्चान्नपुंसकह्रस्वे पाणिनीयं रूपन्निर्बाधमिति वाच्यम् ? अननुगताऽनित्यत्वकल्पनापेक्षया नाजानन्तर्यं परिभाषारम्भस्यैव गरीयस्त्वेन प्रकृतेऽन्तरङ्गपरिभाषाऽनित्यत्वकल्पने प्रमाणाऽभावात् । नचान्तरङ्गपरिभाषा त्रिपाद्यान्न प्रवर्त्तते यथा तथैव भाव्यमानपरिभाषापि त्रिपाद्यान्न प्रवर्त्ततामेतावतैवामू इत्यादौ दीर्घविधानसिद्धौ न समाहारद्वन्द्वादीनामावश्यकतेति वाच्यम् ? "मय उञो वो वे"त्यत्र सानुनासिकवकारापत्तेः । "मादुपधायाश्च मतोर्वोऽयवादिभ्य"इत्येनेनार्थवदित्यादिप्रयोगे सानुनासिकवकारापत्तेश्च ।

नच"ह्रस्वो नपुंसके प्रातिपदिकस्ये"तिसूत्रे प्रातिपदिकग्रहणसामर्थ्यादेतद्विहितह्रस्वविषये लक्ष्ये लक्षणं सकृदेवेतिन्यायो न प्रवर्त्तत इति सवर्णदीर्घेऽपि पुनर्ह्रस्वेन सौत्रप्रयोगसिद्धिः । सौत्रत्वादीर्घे कृतेऽपि लक्ष्येलक्षणन्यायात्प्र-

---

(१) भाव्यमानोऽप्युकार इति–"ग्रास इदङ् हलोरि"तिसूत्रे तपरकरणं ज्ञापकमिति केचित् । उदित्सवर्णं गृह्णाति न सवर्णमात्रमित्यपि परिभाषा ।

अयम्भावः स्थानप्रयत्नाभ्याम्विशिष्टमेव सवर्णं गृह्णाति न सवर्णमात्रम् । अत एव "चोःकुरि"ति कुग्रहणे हकारस्य ग्रहणन्न भवति । अत्र ज्ञापकन्तु "न विभक्तौ तुस्मा" इत्यत्र तुग्रहणं कृत्वा सकारग्रहणम् ।

"दिव उत्' ऋत उदि"ति तपरकरणमस्यां ज्ञापकम् । तिरस्वरित-
मिति सूत्रे भाष्ये स्पष्टैषा ॥ २० ॥

---

वृत्त्या पुनर्ह्रस्वे उ इत्यभीष्टरूपसिद्धिश्च। एवञ्च समाहारद्वन्द्वो युक्तोऽत्र प्रमाण-
जिज्ञासायान्तु"अदसो मादि"तिसूत्रमेवप्रमाणम् । नचेकारे तत्सूत्रञ्चरितार्थ-
मिति वाच्यम् ? ऊकारसंग्राहकमादिति गुरुनिर्देशाऽसङ्गत्यापत्तेः । नच भाव्य-
मानोऽप्युकार इतिपरिभाषाऽभावे भाव्यमानेन सवर्णानां ग्रहणन्नेतिपरिभाषया
अमूइत्यादौ स्थान्यनुकूलोदात्तत्वादिविधानन्न स्यादिति चेत् ? स्वरत्वव्याप्य-
धमतरत्वनिवेशस्यानूक्तत्वादिति वाच्यम् ? अनेकवितण्डावादकल्पनापेक्षया
भाव्यमानोऽप्युकार इति परिभाषाश्रयणस्यैव गरीयस्त्वात् । नच"अदसोऽसे-
रि"त्यत्र दीर्घोकारस्य ह्रस्वे परेण ह्रस्वोकारेण सह तन्त्रेणोच्चारणेन द्वयोर्वि-
धानेनेष्टसिद्धौ न परिभाषायावश्यकतेति वाच्यम् ? प्रमाणाऽभावेन तन्त्राऽस्वी-
कारात् । नच पाणिनेस्तात्पर्यमेव तन्त्र आसीदिति तदेव स्फोट्यत इति वा-
च्यम् ? भाष्यकारापेक्षया पाणिनितात्पर्य्यवर्णनेऽन्येषां सामर्थ्यविरहात् ।
च्छ्वोःशूडिति सूत्रे क्वितीति नानुवर्त्तत इति पक्षाभिप्रायेणाह "दिव उदि"ति
तदनुवृत्तिपक्षेऽपि प्रमाणमाह ऋतउदिति—केचित् ।

दिव उदिति—अत्र सूत्रे तपरकरणन्दीर्घोकारव्यावृत्त्यर्थम् । दीर्घोकार-
व्यावृत्तिस्तु एतत्परिभाषाया अभावे भाव्यमानपरिभाषयैव भविष्यतीति तद्
व्यर्थं सत्परिभाषां ज्ञापयति । एतया परिभाषया दीर्घोकारस्स्यादिति तपरकरणं
स्वांशे चरितार्थम् ।

नच दिवु धातो क्विपि "च्छ्वोःशूडि"त्यूठि द्यूशब्दाद्भ्यामि दीर्घोकार-
स्यापि ह्रस्वोकारविधानार्थन्तपरकरणमिति नज्ञापकत्वमिति वाच्यम् ? पर-
नित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथ प्रसङ्गे परबलीयस्त्व-
मिति भाष्यवचनेन "दिव उदि"त्यस्य प्रतिपदविधित्वेन "च्छ्वोःशूडि"ति बा-
धित्वा ह्रस्वोकारविधानसिद्धेः । निरनुबन्धकग्रहणे न सानुबन्धकस्येति परिभाष-
या दिवुधातो क्विपि"दिव उदि"त्यस्याऽप्रवृत्तेश्च। नन्वत्र सवर्णग्रहणेऽपि व्यञ्ज-
नवकारस्थानेऽर्द्धमात्रिकत्वेन ह्रस्वस्यैव विधानमिति दिवउदितितपरस्य स्वांशे चा-
रितार्थ्यन्नास्तीतिकथं ज्ञापकत्वम्व्यञ्जनञ्चार्द्धमात्रकमितिसिद्धान्तादित्याशयेनाह
ऋतउदिति केषाञ्चिन्मतम् । ननु 'दिवेर्डिविरि"तिन्यासोहितौणादिकदिवशब्दो
दिवमिच्छतीत्यर्थे अव्युत्पन्नाद्दिवशब्दाद् वा क्यजन्तात्क्विप्यल्लोपयलोपयोः
"च्छ्वोःशूडि"तिसूत्रेणोठि दीर्घोकारान्तद्यूशब्दो निष्पन्नस्तस्माद्भ्यामि दीर्घो-
कारस्य ह्रस्वोकारविधानार्थन्तपरकरणमन्यथा दीर्घोकारस्थानिनो दीर्घोकारवि-
धानापत्तिरित्याशयेनाह ऋत उदिति वा । उक्तद्वये ऊव्यल्लोपस्य स्थानिवद्भाव-
वस्तु न भवति "क्वौ लुप्तन्न स्थानिवदिति" तन्निषेधात् । उत्वे क्रियमाणे स्थानि-

वद्भावेन पदान्तत्वाभावेनोत्वाभावस्तु न शङ्क्यः ? स्थानिभूतादचः पूर्वत्वेन दृष्टस्य कार्याभावादूकारस्य स्थाने कार्यं स च न स्थानिभूतादचः पूर्वत्वेन दृष्टः। स्थानिवत्सूत्रेणापि न स्थानिवद्भावः ? अशास्त्रीयत्वात् पूर्वत्वादिघटितस्यातिदेशाऽभावाच्च।

केचित्तु वाणोदाङ्गम्बलीय इतिपरिभाषया पूर्वमूठि द्युभ्यामित्यत्र ह्रस्वविधानार्थन्तच्चरितार्थन्तपरकरणाऽभावे सूत्रन्तु न व्यर्थम्विमलद्यु अहः इत्यत्र पूर्वं सुब्लुकि झल्परत्वाऽभावेनोठोऽप्राप्त्या तत्र चरितार्थ्यादिति वदन्ति।

वस्तुतस्तु—

एवम्विधद्युभ्यामित्यस्याऽनभिधानेन चारितार्थ्यन्दुर्वचमेवेति। तथा च द्विर्बद्धं सुबद्धम्भवतीति न्यायेन तपरद्वयम्प्रमाणमिति फलति। ऋकाराकारयोस्स्थाने आन्तरतम्यात्प्राप्तदीर्घनिषेधार्थन्तपरकरणं चरितार्थमिति तत्त्वम्।

नच पुत्रसत्त्वे पितूराज्यमाक्रोशनीयमिति "षष्ठ्या आक्रोशे" इतिषष्ठ्याः अलुकि पितूराज्यमित्यत्र "ढ्लोपे" इति दीर्घबाधनार्थन्तपरकरणञ्चरितार्थमिति वाच्यम् ? सपत्रवाजितावाणास्सवितूरस्मयो यथा "उरण्रपर" सूत्रे ऊरपर इति रामायणमहाभाष्यप्रयोगविरोधात् बहिरङ्गत्वेन "ढ्लोपे" इति दीर्घस्याऽसिद्धत्वाच्च।

ननु भाव्यमानोऽप्युकारस्सवर्णान्गृह्णातीति परिभाषास्वीकारे "ऊदुपधाया गुहः" इति न्यासेऽपि परिभाषाबलेन दीर्घविधानलाभे दीर्घोच्चारणम्विकृतगोह इति निर्देशश्च व्यर्थ इति चेन्न ? गुहधातोर्हेतुमण्ण्यन्ताच्चङि द्वित्वबाधको ह्रस्वः द्वित्वादुपधाकार्य्यम्प्रबलन्मोणेऋदित्करणात्तस्माद्धस्वादप्यन्तरङ्गत्वेन गुणे उत्वे च "णौ चङ्यु"पधाया ह्रस्वनिवृत्त्या दीर्घोच्चारणस्य चारितार्थ्यात्। एवमभिप्रायेणैव "ऊदुपधाया" इतिसूत्रे, उ ऊ इतिप्रश्लेषेण 'गोह' इति विकृतनिर्देशो भाष्ये प्रत्याख्यातः। अजुगूहदित्यर्थं प्रश्लेषस्यावश्यकत्वात्। ननूत्वदृष्ट्या "णौ चङ्यु"पधाया ह्रस्वस्य बहिरङ्गत्वेनाऽसिद्धत्वान्न क्वापि रूपसिद्धौ बाधेति चेन्न ? ऊदिति दीर्घोच्चारणसामर्थ्येनोक्तभाष्यबलेन बहिरङ्गस्याऽप्युपधात्वनिमित्तकह्रस्वस्य बाधकल्पनसौष्ठवात्। विकृतगोह इति निर्देशाऽभावे तक्रकौण्डिन्यन्यायेन गुणोत्तरं चारितार्थ्येन उत्त्वेन गुणम्बाधित्वा उकारादेशे गूहतीत्यादिरूपाऽसिद्धेः। उकारादेशस्य जुगुहतुरित्यादौ "क्ङिति च" इतिनिषेधेन गुणाऽप्राप्तियोग्यस्थले चारितार्थ्यात्। तक्रकौण्डिन्यन्यायविषयाभावस्तु न शङ्क्यः ? फलाभावेन तदर्थमनारम्भात् निषेधेनापि तत्प्राप्तियोग्यताऽनपायात्। अत एव सम्बुद्धौ नलोप इतिनिषेधेन दत्वस्य चारितार्थ्येऽपि अपवादो दत्वं लोपम्बाधिष्यत इति भाष्यं सङ्गच्छते।

नच वैयर्थ्यं शङ्क्यम् ? गुणबाधेन सार्थकत्वात्। ननु तावति प्रयोजने

ननु गवे हितं गोहितमित्यादौ प्रत्ययलक्षणेनावाद्यादेशापत्तिरत आह–

"दीधीवेवी"इत्यस्यानन्तरम्पाठेनैव सिद्धाविह पाठकरणम्व्यर्थमेवेति चेन्न ? अशोकवनिकान्यायेन पाठस्यावश्यकत्वात् लाघवाऽभावाच्च। अपितु गोह्य-मित्यादौ हलादावपि गुणनिषेधाऽपत्तेश्च।

अत्र शङ्का–ननु भाव्यमानोऽप्युकार इति परिभाषास्वीकारे"सनाशंसभिक्ष उः'तनादिकृञ्भ्य उः"इत्यादावपि सवर्णदीर्घोकारादिग्रहणापत्तावनिष्टं रूपमापद्येतेति चेन्न ? धर्मिग्राहकमानाद् भाष्यप्रमाणाच्चेयम्परिभाषाऽदेशविषयणीति क्षतिविरहात्।

"तित्स्वरितमि"तिसूत्रे भाष्ये स्पष्टैषेति। तत्र हि "तितिप्रत्ययग्रहणं कर्त्तव्यम् इह माभूत् ऋतइद्धातोः न कर्त्तव्यम् नैष तकारः किन्तर्हि दकारःएवन्तर्हि दीर्घस्य ऋकारस्य सवर्णग्रहणेनान्तरतम्याद्दीर्घस्स्यादित्याशङ्क्य "भाव्यमानेन सवर्णानांग्रहणन्नेति" समाधाय यद्येषा परिभाषा स्वीक्रियते तदा अमू अमूभ्यामित्यादौ दीर्घो न प्राप्नोति। "अदसोऽसेरि"त्यनेनोकारस्य भाव्यमानत्वादित्याशङ्क्य संज्ञापिकया भाव्यमानोऽप्युकार इतिपरिभाषया समाहितम्।

अत्र मतान्तरम्—

कश्चिद् भाव्यमानोऽप्यणसवर्णान् गृह्णातीति। अत्र प्रमाणन्तु "ष्ठ्याध्वोरिच्चे"ति सूत्रभाष्ये इच्च कस्य तकारेत्त्वं दीर्घो माभूदिति वार्तिकग्रन्थोपपत्तिरेव। अत एव भाव्यमानोऽप्यणसवर्णान् गृह्णातीत्येष परिहारोऽनित्यत्वान्नोक्त इति तत्र कैयट इति दिक्।

वर्णस्यज्ञापकत्वप्रसङ्गाज् जिज्ञासानिवृत्तिरूपावसरसङ्गत्या वर्णविषये प्रवृत्तियोग्यामन्यामपि परिभाषाम्व्याख्यातुमुपक्रमते ननु गवेहितमिति। गवेहितमिति वाक्य इव गोहितमिति समासेऽप्यवादेशःकुतो नेति भावः।

ननु अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति परिभाषयेत्संज्ञालोपयोः प्रागेव लुकि प्रत्ययलक्षणेऽपि ङेबुद्धिरेव नत्वेबुद्धिः। एवञ्चाच्परत्वाऽभावेनावादेशप्राप्तिरेव नास्तीति कथमवतरणमिति प्रश्नः। नचेत्संज्ञालोपयोस्सूत्र एव विधानमनुबन्धविनिर्मुक्त एव पदार्थोपस्थितिरनुबन्धरहित एव लक्ष्यस्थ इति लुक्यपि प्रत्ययलक्षणन्यायेनाच्परत्वादेचोऽयवायाव इत्यस्य प्रवृत्तिरस्त्येवेति वाच्यम् ? गोमत्प्रिय इत्यादौ समासस्य पदान्तरसापेक्षत्वेऽपि समासात्पूर्वमपि गोमत्प्रकृतिकसुप्रत्ययस्य हल्ङ्याब्भ्य इत्यनेन लुक्प्रयोजकसमाससम्भावनायां लोपो न भवति यथा तथैव लुक्प्रयोजकसमासादीनामपि तेन न्यायेन प्राबल्यबोधनादित्संज्ञालोपयोर्लुक्प्रयोजकसमाससम्भावनायां पूर्वमप्रवृत्तेः।

इकोऽचि व्यञ्जने माभूदस्तु लोपस्स्वरः कथम्।
स्वरो वै श्रूयमाणोऽपि लुप्ते किन्न भविष्यति॥

रायास्त्वन्तिसृभावश्च व्यवधानान्नुमा अपि।
नुड् वाच्य उत्तरार्थन्तु इह किञ्चित्त्रपो इति॥

इति भाष्यप्रामाण्येन "लुमति प्रतिषेधे एकपदस्वरस्योपसंख्यानमिति" वार्त्तिकप्रामाण्येन "क्विलुगुपधे"ति लुकि स्थानिवद्भावनिषेधेन चान्तरङ्गानपीति न्याये इत्संज्ञालोपातिरिक्तत्वेन सङ्कोचाश्रयणात्। अन्यथा त्रपु सु इत्यवस्थायां सम्बुद्धिसंज्ञायाः प्रागेवानेनन्यायेन लुकि गर्गा विदा इत्यादावित्संज्ञातः प्रागेव "यञञोश्चे"ति लुकि पञ्चेन्द्र इत्यादौ इत्संज्ञालोपाभ्याम्प्रागेव "लुक्तद्धिते"ति लुकि अङ्गलादेशत्वेन स्थानिवद्भावाऽप्राप्त्या तत्तदसङ्गतं स्यात् इति सगुत्तरम्।

ननु हे त्रपो इति प्रमाण्यात्केवलसम्बुद्धिसंज्ञाया एव पूर्वप्रवृत्तिप्राबल्यमायाति नत्वित्संज्ञालोपयोरयमेव सङ्कोचभाव इति चेन्न? धर्मिग्राहकमानेन लाघवेन हे त्रपो इति भाष्यप्रामाण्येन च साधुत्वविधायकशास्त्रापेक्षयैवान्तरङ्गानपीति परिभाषया लुकः प्राबल्यम्। एवञ्च "लशक्वतद्धिते' तस्य लोप" इत्यनेन लक्ष्यसाधुत्वाऽबोधनात् इत्संज्ञालोपयोः पूर्वप्रवृत्तौ क्षतिविरहात्।

किञ्च प्रत्यय इति महासंज्ञाकरणं बोधके प्रत्ययत्वसम्पादनार्थं बोधकता च लोके ङकाररहिते एकारे तस्यैव प्रत्ययसंज्ञा नतु ङकारघटितङे इति समुदायस्य। तथा च प्रत्ययाऽदर्शनं लुक्पदार्थः, प्रत्ययलक्षणन्यायेनाच्त्वाद्वादेशो निर्बाध इति साध्ववतरणमिति कल्पनानुधावनाच्च।

वस्तुतस्तु—

गवे हितमिति असमस्तप्रयोगवत् गोहितमित्यादौ गावौ हितौ यस्य तद्गोहितमिति समासे औकारस्य प्रत्ययलक्षणेनानयनादच्त्वेनावादेशापत्तिरिति(१) निर्विवादमवतरणम् गावौ हितौ यस्येत्यस्याऽप्युपलक्षणत्वाद्वा।

अथ नलुमताङ्गस्येत्यस्यार्थविचारः।

नव गवे हितमित्यत्र न प्रत्ययलक्षणं लुप्तप्रत्ययनिमित्तकं कार्य्यमङ्गस्य न भवतीत्यर्थक "नलुमताङ्गस्ये"त्यनेन निषेधादच्त्वाभावेनावादेशाऽप्रवृत्त्या कथमवतरणमिति वाच्यम्? अङ्गस्येत्यत्रोद्देश्यत्वं षष्ठ्यर्थः लुप्तप्रत्ययनिमित्तकमङ्गत्वावच्छिन्नोद्देश्यताककार्य्यंन्न भवतीति "न लुमते"ति सूत्रार्थेनावादेशस्याङ्गत्वावच्छिन्नोद्देश्यताकत्वाऽभावात्।

नचान्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति न्यायेन "क्रमः परस्मैपदेष्वि"तिदीर्घम्बाधित्वा "अतो हेरि"ति हेर्लुकि प्रत्ययलक्षणेन परस्मैपद-

(१) ननु गोहितमित्यत्र लुको विधानं नतु लोपस्य तथा च प्रत्ययलोपाऽभावान्न प्रत्ययलक्षणप्रसङ्ग इति किम्परिभाषयेति चेन्न? "न लुमताऽङ्गस्ये" ति सूत्रारम्भसामर्थ्याल्लुक्यपि प्रत्ययलक्षणम्भवतीति कल्प्यते, लोपस्याऽदर्शनार्थत्वात्। एवञ्च लुक्लोपायदर्शनसाधारण्येन प्रत्ययलक्षणविधानेनाक्षतेः।

परकशित्परकत्वेन दीर्घः । "नलुमते"तिनिषेधस्तु न शङ्क्यः ? अङ्गपर्य्याप्तो-द्देश्यताककार्य्य लुप्तप्रत्ययनिमित्तकन्न भवतीति तदर्थाश्रयात् । प्रकृते "क्रम परस्मैपदेष्वि"त्यस्य परस्मैपदपरकशित्परकक्रमेरचो दीर्घ इत्येवार्थोऽन्यथा पर्य्याप्तिनिवेशाभावेऽपवर्ग्याप्त्याऽच्त्वावच्छिन्नोद्देश्यताया अङ्गनिष्ठत्वेन निषेधाऽपत्तिरतः पर्य्याप्तिनिवेश आवश्यकः । एवञ्च गोहितमित्यत्रावादेशीयोद्देश्यताया अङ्गपर्याप्तत्वाऽभावान्निषेधो न प्रवर्त्तेत पूर्वोक्ताङ्गत्वावच्छिन्नोद्देश्यताककार्य्यन्नेत्यर्थे फलप्रमाणाभावात् । तथाचावतरणं युक्तमिति वाच्यम् ? सिद्धे शब्दार्थसम्बन्ध इतिभाष्यवार्त्तिकेन शब्दानान्नित्यत्वन्तथाच शब्दाऽनित्यत्ववारणाय "एचोऽयवायाव" इत्यस्याजव्यवहितपूर्वत्वविशिष्टेच्विशिष्टसमुदायोच्चारणप्रसङ्गेऽयादिघटितसमुदायस्यैव साधुत्वबोधनंनैजघटितसमुदायो गो इति तस्यैवाङ्गत्वेनोद्देश्यतायास्तत्र पर्य्याप्तत्वान्निषेधप्रवृत्तिसौकर्य्यात् ।

नन्वेवं रीत्याऽनित्यत्ववारणे इग्घटितस्य यण्घटितस्साधुरित्यर्थोऽपत्तौ "अचः परस्मिन्नि"ति सूत्रे परनिमित्तकत्वरूपार्थाऽसंघटनेनेकारबुद्धिप्रसंगे यकारबुद्धिः। एवञ्च प्रकृतेऽपि अजव्यवहितपूर्वत्वविशिष्टो य एच् तद्घटितस्योच्चारणप्रसङ्गेऽयादिघटितस्साधुरित्यर्थेनैचोऽजव्यवहितपूर्वत्वाऽभावेन निषेधाऽप्रवृत्त्यावतरणसङ्गतेः। दधि मधु इत्यादौ लुप्तप्रत्ययनिमित्तकत्वेनाङ्गपर्याप्तोद्देश्यताकत्वेन च "सुप्तिङन्तम्पदमि"ति विहितपदसंज्ञाया अपि निषेधाऽपत्त्या निरुक्तार्थपरित्यागेन लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नाङ्गपर्य्याप्तोद्देश्यताककार्य्यन्न भवतीत्यर्थस्य गरीयस्त्वेन प्रकृते एच्घटितगोसमुदायनिष्ठाया अङ्गपर्याप्तोद्देश्यताया लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वाऽभावादेज्निष्ठाया यद्यपि लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वन्तथाप्येच्निष्ठाया अङ्गपर्य्याप्तत्वाऽभावादिति निष्कर्ष इत्यवतरणं युक्तम् ।

नच लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वं साक्षात्परम्परया वा गृह्यते विनिगमनावैकल्येनोभयविधलुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वं ग्राह्यमेव । एवञ्चैच्घटितसमुदायनिष्ठाया उद्देश्यताया अपि परम्परया लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वेन निषेधो दुर्वार इति वाच्यम ? परम्परयापि लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वग्रहणे उत्क्रामेत्वादावपि क्रमत्वावच्छिन्नाङ्गपर्य्याप्तोद्देश्यताया अपि परम्परया लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वेन निषेधाऽपत्तौ दीर्घो न स्यादतो लुप्तप्रत्याऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना या अङ्गपर्य्याप्तोद्देश्यता तादृशोद्देश्यताककार्य्यन्न भवतीत्यर्थेन परस्मैपदन्न साक्षादङ्गेऽन्वेत्यपितु शित्प्रत्ययेऽन्वेतीति निषेधाऽप्रवृत्त्या प्रत्ययलक्षणेन दीर्घसिद्धेः । एवञ्च गोहितमित्यत्रापि "एचोऽयवायाव" इतिसूत्रे लुप्तप्रत्यय "ए" इति तदव्यवहितपूर्वत्वेन साक्षादवच्छिन्नाङ्गपर्य्याप्तोद्देश्यताया अभावान्निषेधाऽव-

तरणस्य निश्शङ्कत्वात् ।

ननु साक्षादवच्छिन्नाङ्गपर्य्याप्ताद्देश्यताया निवेशेऽपि परमत्रिगुरुरित्यादौ "त्रेस्त्रय" इत्यनेन त्रयादेशाऽपत्तिस्त्रयादेशविधायके शास्त्रे निर्दिश्यमानपरिभाषोपस्थित्या आमीत्यस्य आमव्यवहितपूर्वत्वविशिष्टनिर्दिश्यमानत्रिशब्दस्य त्रयादेश इत्यर्थेऽङ्गेऽन्वयाऽभावेन निषेधशास्त्राऽप्रवृत्त्या प्रत्ययलक्षणेनाऽपत्तिरिति वाच्यम् ? लुप्तप्रत्ययाऽव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपिताऽङ्गपर्य्याप्तधर्मावच्छिन्नधर्मितासमानाधिकरणोद्देश्यताके कार्य्ये कर्त्तव्ये प्रत्ययलक्षणन्न भवतीत्यर्थः । अत्राङ्गपर्य्याप्तधर्मावच्छिन्नत्वञ्च साक्षात्परम्परासाधारणम् । तथाच आम्निष्ठप्रकारतानिरूपिता निर्दिश्यमाननिष्ठा धर्मिता भवति परम्परयाऽङ्गपर्य्याप्तधर्मावच्छिन्ना तत्समानाधिकरणोद्देश्यताके त्रयादेशे प्रत्ययलक्षणनिषेधः। उत्क्रामेत्यत्र शित्निष्ठा धर्मिता नैवाङ्गपर्य्याप्तधर्मावच्छिन्ना तत्र शित्पदार्थेऽङ्गे विशेषणन्तत्वङ्गपदार्थशित्पदार्थे विशेषणम्। "एचोऽयवायाव" इत्यत्राचीति एचि विशेषणन्तत्वेजन्तेऽन्यथा देवायेत्यत्रापि तदापत्तेः । एवञ्च लुप्तप्रत्ययाऽव्यवहितपूर्वत्वनिष्ठप्रकारतानिरूपिताङ्गवृत्त्युद्देश्यता नास्त्येवेति सर्वमनवद्यम् । अचोत्यस्य एजन्तेऽन्वये तु "गोरग्वचनं स्वरसिद्ध्यर्थमि"ति भाष्यविरोधः एजन्तस्यार्थवतो ग्रहणेन गो इत्यस्यागमसमभिव्याहारे आगमविशिष्टस्यैवार्थवत्त्वेन प्रकृते तदभावेनावादेशाऽप्राप्तेश्चेति ।

अस्मदाचार्य्यचरणास्तु—

निर्जरपुत्र इत्यादौ साक्षादवच्छिन्नत्वनिवेशे "जराया जरसि"त्यनेन जरसादेशाऽपत्तिः । अजादिप्रत्ययाऽव्यवहितपूर्वस्य जराशब्दान्तं यदङ्गन्तदवयवस्य जरापदीयनिर्दिश्यमानस्येत्यर्थात् अङ्गपर्य्याप्तोद्देश्यताया लुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वाऽभावा "न्न लुमते"त्यस्याऽप्रवृत्तेः। एवञ्च अङ्गपर्याप्तधर्मेण साक्षात्परम्परया वाऽवच्छिन्ना या लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्नोद्देश्यता तन्निरूपककार्य्यन्नेत्यर्थः । एवञ्च निर्दिश्यमानत्वावच्छिन्नोद्देश्यताया परम्परयाऽङ्गपर्य्याप्तधर्मावच्छिन्नत्वं साक्षाल्लुप्तप्रत्ययाऽव्यवहितपूर्वत्वावच्छिन्नत्वञ्चेति निर्जरपुत्रः परमत्रिगुरुरित्यादौ न जरसादेशत्रयादेशौ, "न लुमते"ति निषेधात् ।

किञ्च लुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना याऽङ्गवृत्तिषष्ठ्यन्तपदप्रयोज्या विषयता तन्निरूपकं कार्य्यन्नेत्यप्यर्थः । उत्क्रामेत्यादौ च न निषेधप्रवृत्तिः । परस्मैपदेन लुप्तप्रत्ययेन हिना साक्षादवच्छिन्नसप्तम्यन्तशित्पदप्रयोज्यविषयताया एव सत्त्वेन षष्ठ्यन्तपदप्रयोज्यविषयत्वाऽभावात् नैव निषेधप्रवृत्तिः ।

गवे हितमित्यत्रापि "एचोऽयवायाव"इतिसूत्रीयैचपदप्रयोज्यविषयतायां

वर्णाश्रये नास्ति प्रत्ययलक्षणम् ॥ २१ ॥

वर्णप्राधान्यविषयमेतत् ।

---

तु षष्ठ्यन्तपदप्रयोज्यविषयत्वलुप्तप्रत्ययाऽव्यवहितपूर्वत्वेन साक्षादवच्छिन्नत्वयोश्च सत्त्वेन निषेधप्रवृत्त्या नावतरणम्मूलोक्तमिति विचारे चित्रायां जाता चित्रेत्येवावतरणन्तत्र हि प्रत्ययलक्षणेन "टिड्ढाऽणञि"तिङीम्नेति ।

वर्णाश्रये नास्तीति—वर्णाश्रयो निमित्तं यस्येति बहुव्रीहिः, विधौ कर्त्तव्य इति शेषः । वर्णनिमित्तके विधौ कर्त्तव्ये प्रत्ययलक्षणन्नेति फलति ।

नन्वेवमर्थे वेधा इत्यादौ "ससजुषोरि"तिरुत्वे कर्तव्ये प्रत्ययलक्षणनिषेधात्पदत्वाभावेन रुत्वन्न स्यात्तस्यापि वर्णाश्रयत्वादिति चेन्न ? प्रत्यासत्तिन्यायेन लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना या निमित्तता तादृशनिमित्तताके विधौ कर्त्तव्ये प्रत्ययलक्षणन्न भवतीति तदर्थात् ।

नन्वेवमपि अतृणेट् मित्रशीरित्यादावपि प्रत्ययलक्षणन्न स्या"त्तृणह इमि"तीमादेशस्य "शास इदङ्हलोरि"तीदादेशस्य च वर्णत्वव्याप्यहल्त्वघटितहलादित्वावच्छिन्ननिमित्तताकत्वादिति चेन्न ? वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना या प्रकारत्वाऽसमानाधिकरणा निमित्तता तादृशनिमित्तताके विधौ कर्त्तव्ये प्रत्ययलक्षणन्नेति परिभाषार्थः । अतृणेडित्यत्र च तृह इमागमस्याहलादौ पित्सार्वधातुके इत्यर्थस्याभीष्टत्वेन पित्सार्वधातुकनिष्ठविशेष्यतानिरूपितप्रकारत्वसमानाधिकरणताया हलादौ सत्त्वेन "शास इदङ्हलोरि"त्यत्र च ङित्प्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारत्वसामानाधिकरण्यस्यैव हलादित्वावच्छिन्ननिमित्ततायां सत्त्वेन निषेधाऽप्रवृत्त्या प्रत्ययलक्षणेनाऽभीष्टसिद्धेः ।

नन्वेवन्निवेशेऽपि चित्रायां जाता चित्रेत्यादौ "सन्धिवेलाद्यृतुनक्षत्रेभ्योऽणि"ति जातार्थेण् तस्य "चित्रारेवतीरोहिणीभ्यस्त्रियामुपसंख्यानमि"तिवार्त्तिकेन लुक् टिड्ढाणञितिसूत्रीयवर्णत्वव्याप्याऽत्वघटितादन्तत्वावच्छिन्ननिमित्ततायाम्प्रातिपदिकनिष्ठविशेष्यतानिरूपितप्रकारत्वसामानाधिकरण्यस्यैव सत्त्वेन प्रत्ययलक्षणेन ङीबापत्तिरिति चेन्न ? प्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणेतिनिवेशः । वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना या प्रत्ययनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणा निमित्तता तादृशनिमित्तताके विधौ कर्त्तव्ये प्रत्ययलक्षणन्नेत्यर्थः । प्रकृते प्रातिपदिकनिष्ठविशेष्यतायास्सत्त्वेन प्रत्ययनिष्ठविशेष्यताया अभावेन निषेधप्रवृत्त्या दोषाऽभावात् ।

नन्वेवमपि गवे हितं गोहितमित्यवतरणम्मूलोक्तन्न समीचीनं स्यात् । तथाहि व्युत्पन्नपक्षे गोशब्दस्य "गमेर्डोसि" त्यौणादिकसूत्रेण सिद्धिस्तत्र गोशब्दस्य डोप्रत्ययान्तत्वेन आनुमानिकस्थान्यादेशभावपक्षे अजव्यवहितपू-

तत्त्वं च प्रत्ययलोपे इति सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्षणग्रहणं प्रत्ययस्येतराविशेषणत्वरूपं (१)यत्र प्राधान्यं तत्रैव प्रवृत्त्यर्थमित्येतत्सिद्धम्।

---

र्वत्वविशिष्टो य एच् तद्घटितस्यायादिघटितस्साधुरिति वाक्यार्थे। प्रत्ययैत्विनिष्ठविशेष्यतानिरूपितप्रकारतासामानाधिकरण्यस्यैवात्त्वावच्छिन्ननिमित्ततायां सत्त्वात्प्रत्ययलक्षणेनावादेशो दुर्वार एव स्यादिति चेन्न? लुप्तप्रत्ययवृत्तिवर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना या प्रत्ययनिष्ठविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारत्वाऽसमानाधिकरणा निमित्ता तादृशनिमित्ततके विधौ कर्त्तव्ये प्रत्ययलक्षणन्न भवतीत्यर्थेन क्षतिविरहात्।

वस्तुतस्तु—

वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्नेति निवेशे गौरवात् लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्यधर्मावच्छिन्नविषयिता तन्निरूपके कार्य्ये कर्त्तव्ये प्रत्ययलक्षणन्न भवतीत्येवार्थ एतावतैव सर्वत्र निर्वाह इति बोध्यम्।

प्रत्ययस्येतराऽविशेषणत्वरूपमिति—अवयवत्वसम्बन्धावच्छिन्नप्रकारताभिन्नप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताश्रयत्वन्तत्त्वन्तेन गोहितं चित्रायाञ्जाता चित्रेत्यादौ नापत्तिः।

अणो। योऽकारस्तदन्तात्प्रातिपदिकान्ङीबित्यर्थात् चित्रेत्यादौ तादृशप्रकारताभिन्नविषयता नास्ति, गोहितमित्यादौ एकारनिष्ठविषयतायाः प्रत्ययत्वव्याप्यधर्मावच्छिन्नत्वाऽभाव इति।

तत्त्वञ्चेति—परिभाषासारांशस्त्वित्यर्थः। अन्यपरिभाषायां किञ्चिज्ज्ञापकं स्वांशे चारितार्थ्यादिविडम्बना च। प्रकृते तु तत्तत्पदार्थस्वारस्येन प्रत्ययलोपसूत्रे तल्लक्षणमित्येव सिद्धे प्रत्ययग्रहणसामर्थ्येनैव प्रत्ययलोपसूत्रं वर्णाश्रये विधौ न प्रवर्तत इति फलितार्थभूतेयम्परिभाषेति तत्त्वम्। प्रत्ययस्येतराविशेषणत्वमिति—अवयवनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वन्तेनवारीत्यादौ सुबन्तसमुदाये सुपो विशेषणत्वेऽपि स्वावयवेऽविशेषणत्वेनोक्तप्राधान्यात्प्रत्ययलक्षणम्। एतत्सिद्धमिति—प्रत्ययलक्षणग्रहणसामर्थ्यात्प्रत्ययलोपसूत्रस्य प्रत्ययमात्रवृत्तिर्या स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणा निमित्तता तादृशनिमित्ततके कार्ये कर्त्तव्ये प्रत्ययलक्षणमिति सूत्रार्थेनैषा सिद्धेति फलति।

"एचोऽयवायाव"इतिसूत्रीयनिमित्ततायां प्रत्ययमात्रवृत्तित्वाभावेन न

---

(१) निषेधप्रकरणमपेक्ष्यसङ्गतिः। इतराऽविशेषणत्वमित्यस्य अभेदसंसर्गावच्छिन्नान्यनिरूपितविशेषणताराहित्यमित्यर्थः।

वर्णप्राधान्यं च वर्णस्येतराविशेषणत्वरूपं प्रत्ययनिरूपितविशेष्यतारूपं च, तेन गोहितमित्यादाववादि न, चित्रायां जाता चित्रेत्यादावणोऽकारस्तदन्तान् ङाबिति ङीप् च न ।

इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्ये ॥ २१ ॥

---

गोहितमित्यादौ प्रत्ययलक्षणेनावादेशः । एवञ्चित्रायाञ्जाता चित्रेत्यादावपि । मित्रशीः अतृणेडित्यादौ च हलि ङ्कितोति पदप्रयोज्यनिमित्ततायां पित्सार्वधातुकप्रयोज्यनिमित्ततायाञ्च प्रत्ययमात्रवृत्तित्वस्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वाऽसमानाधिकरणत्वयोश्च विद्यमानत्वेन प्रत्ययलक्षणेनाभीष्टसिद्धिरित्याशयः ।

ननु यत्र वर्णस्य प्राधान्यं तत्रैव वर्णाश्रये इति परिभाषाप्रवृत्तिस्वीकारेण गोहितमित्यादाववादेशवारणेऽपि चित्रेत्यत्र प्रत्ययलक्षणं स्यान्नहि ङीब्विधौ वर्णस्यात इत्यस्य प्राधान्यन्तस्य प्रातिपदिकविशेषणत्वादत आह वर्णप्राधान्यञ्चेति । चस्त्वर्थे । इतराऽविशेषणत्वमिति—इदञ्च गोहितं रैकुलमित्यादाववादेशात्वनिषेधार्थम् । प्रत्ययनिरूपितेत्यादि—इदञ्च चित्रायाञ्जाता चित्रेत्यादौ टापो व्यावृत्त्यर्थम् ।

ननु किन्तावद्वर्णप्राधान्यमिति प्रश्नः । प्रत्ययत्वव्याप्यधर्मावच्छिन्नविशेष्यतानिरूपितप्रकारतानाश्रयत्वम् । अत एव मित्रशीरतृणेडित्यादौ न क्षतिः ।

उभयानुगतवर्णप्राधान्यञ्च स्वावयवनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वमिति केचित् । "तृणह इम्' शास इदङ्हलोरि"त्यादौ स्वावयवनिष्ठप्रकारतानिरूपितविशेष्यताप्रयोजकत्वमस्त्येवेति अतृणेट् मित्रशीरित्यादि सिद्ध्यति ।

वर्णस्येतरेति—इतरपदेनावयवी गृह्यते । अवयविनिष्ठविशेष्यतानिरूपितप्रकारतानाश्रयत्वमितराविशेषणत्वम् । रैकुलं गोहितमित्यादावच्पदार्थस्य चि विशेषणत्वेऽपि न प्राधान्यक्षतिः । चित्रेत्यादौ अवयवी प्रातिपदिकं तन्निष्ठविशेष्यतानिरूपितप्रकारताश्रयत्वस्यैवाकारे सत्त्वेन प्राधान्यन्न स्यादतो हि प्रत्ययनिरूपितेत्युक्तम् ।

प्रत्ययत्वव्याप्यधर्मावच्छिन्नेति पूर्वोक्तप्रकारेण सूत्रार्थे तु उभयत्र प्राधान्यसिद्धौ प्रत्ययनिरूपितेति लक्षणान्तरस्य नोपयोगः ।

ननु भाष्यकारमते स्थानिवत्सूत्रेणैव सिद्धे"प्रत्ययलोप"इति सूत्रन्नियमार्थन्तेन वर्णाश्रये प्रत्ययलोप इति सूत्रस्य प्राप्तिरेव नेतीयम्परिभाषा व्यर्थेत्यत आह इयमल्विधाविति । अल्विधाविति विशेष्यतया विशेषणतया(१)वा

---

(१) अनुबन्धकार्येऽनल्विधाविति निषेधो नेति—

अतएव रमायामित्यत्र परत्वाद् ङेरामि स्थानिवत्त्वेन ङित्वाद् याट् । अत्र सर-

यत्राऽल्त्राश्रयणं तत्राऽनल्विधावित्यस्य प्रवृत्तेः । एवञ्च यन्मते "प्रत्ययलोप" इ-ति सूत्रम्विधायकन्तन्मतेऽस्याः परिभाषायाः प्रयोजनम्विध्यर्थत्वञ्च वार्त्ति-कमत इति वार्त्तिककाराऽभिमतेयम्परिभाषेति सिद्धम् ।

ननु "प्रत्ययलोपे तल्लक्षणमि" त्येव सिद्धे प्रत्ययग्रहणात्प्रत्ययत्वव्याप्यध-र्माश्रयमेव कार्य्यं प्रत्ययलोपे सति भवतीत्येव वार्त्तिकमते सूत्रार्थः । एवञ्च "शा-स इदङ्हलोरि" त्यादावीत्वे प्रत्ययत्वव्याप्यत्वस्यानाश्रयणान्मित्रशीरित्यादौ कथम्प्रत्ययलक्षणमिति चेन्न ? प्रत्ययत्वव्याप्यविषयताप्रयोजकपदप्रतिपाद्यता-वच्छेदकधर्माश्रयं कार्य्यमेव प्रत्ययलोपे सति भवतीत्यर्थस्य तन्मते सत्त्वात् । मित्रशीरित्यादौ हलादित्वस्य तथात्वेनापत्तिविरहादित्युक्तम्प्राक् । परन्तु सुदृष-त्प्रासाद इत्यादावत्त्वस्य तथाभूतत्वाऽभावेनैतत्सूत्राऽप्राप्तावपि स्थानिवत्सूत्रप्रा-प्तिसत्त्वात् । अत एव भाष्यकृता सुदृषत्प्रासादः सुदृषन्नगरीत्यादि विष-यफलमुक्तम् । वार्त्तिकमतेऽपि दूषणोद्धारश्शब्दरत्ने विस्पष्टतरो विस्तरभ-यान्न लिख्यतेऽनुपयुक्तत्वाच्च ।

अथ विलक्षणकोट्यनुसन्धानपूर्वकखण्डनप्रकारः ।

"प्रत्यलक्षण" सूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे इतिशेखरो न युक्तः । लोपेऽप्यादेशत्वस्य सत्त्वेनानुवृत्तिम्विनाऽपि स्थानिवद्भावस्य सुवचत्वात् । कि-ञ्च अष्टाध्याय्यां पूर्वं स्थानिवदादेश इति १-१।५६ अचः परस्मिन्निति १-१।५७ नपदान्त सू० १-१।५८ अदर्शनं लोपः १।१।६० इति, प्रत्यलोपइति

सूपारीणशुक्लाशास्त्रार्थकलाकाराः–"समासेऽनञ् पूर्वे क्त्वो ल्यबि" त्यस्य स्थाने ल्यपक् इति न्यासः क्त्वो ल्यप् किच्चेति वा न्यासः । एवञ्च कित्वस्य साक्षाल्ल्यपि सत्त्वेनेत्त्वं प्राप्नोतीति "नल्यपी" तिचरितार्थम् । रमायामिति फलमपि न "ङेराम्नद्या-म्नीभ्य" इत्यस्य स्थाने "ङ्र्याम्नद्याम्नीभ्य" इति न्यस्यङे ङीं'मादेश इति'ङित्वाद् याट्स्यादेवेति ।

किञ्च अष्टाध्याय्यां पूर्वं ङेरामित्यस्य पाठस्तदनन्तरं "याडाप" इत्यस्येति पर-त्वाद् याटि पश्चादामादेशः ।

किञ्च अनुदात्तात् अशब्दात्तिङन्ताद् घञ्प्रत्यये "अतो लोप" इतिप्रकृत्यकार-लोपे अः इति रूपम् । तत्र घञ्वृत्तिहलन्तत्वमादाय हल्ङ्यादिलोपप्रवृत्तेर्दुर्वारत्वात् । नचानुबन्धकार्ये इत्यस्यानुबन्धत्वव्याप्यालमात्रवृत्तिधर्मघटितधर्मानयनेऽनल्विधाविति न प्रवर्तत इत्यर्थ इति वाच्यम् ? घञ्वृत्तिहलत्वस्य हलन्तत्वस्य घञ्वृत्तित्वस्य वाऽनेतुं शक्यत्वात्, प्रश्लेषपरकभाष्यवैयर्थ्यापाताच्च । रमेत्यादौ हलन्तत्वप्रयुक्त-कार्यन्तु न भवति ? "एङ्ह्रस्वात्सम्बुद्धेः" इति "सोऽचि लोपे चेत्" इतिसू-त्रारम्भसामर्थ्याद् हलन्तत्वप्रयुक्तकार्यं नाकारान्त इति ज्ञाप्यवचनानुकल्पनाच्चेति ब्रुवन्ति ।

नन्वतः कृकमीत्यत्र कमिग्रहणेन सिद्धे कंसग्रहणं व्यर्थमत आह—

**उणादयोऽव्युत्पन्नानि प्रातिपदिकानि ॥ २२ ॥**

इदमेवास्या ज्ञापकमिति कैयटादयः । कंसेस्तु न कंसोऽनभिधानात्।

१।१।६२ सू० तथाचा "दर्शनं लोप" इत्यत्र विच्छिन्नं स्थानिवत्पदम्प्रत्यय-लोपसूत्रे नानुवर्त्तेत ।

नच "गङ्गास्रोतश्च मण्डूक—काकगोलकसंज्ञकः । सिंहावलोकनञ्चैवमनु-वृत्तिश्चतुर्विधे"तिप्रमाणेन प्रकृते मण्डूकप्लुत्या स्थानिवत्पदानुवृत्तिरिति वा-च्यम् ? मण्डूकानुवृत्तौ प्रमाणाऽभावात् ।

भाष्यग्रन्थस्य तु कैयटरीत्यैवोपपन्नत्वन्तथाहि वर्णाश्रये नास्ति प्रत्ययलक्ष-णमिति वचनन्तु "प्रत्ययलोप" सूत्रीयद्वितोयप्रत्ययग्रहणार्थतयैव व्याख्येयम् । "प्रत्ययलोपे तल्लक्षणमि"त्युच्यमानेऽपि सर्वनाम्नो बुद्धिस्थमात्रपरामर्शकत्व-श्चतु प्रधानाऽप्रधाननियम इति सिद्धान्तेन प्रत्ययस्वरूपाश्रयेण तद्घटकवर्ण-रूपाश्रयेण वा प्रत्ययस्य कार्यं यत्र निमित्तभावस्तत्सर्वं स्यात्प्रत्ययग्रहणसत्त्वे तु तत्सामर्थ्यात्प्रत्ययतानिमित्तमेककार्यं प्रत्ययलोपे सति भवति नतु वर्णता-निमित्तमिति व्याख्यानेनैव परिभाषाया गतार्थत्वात् । प्रत्ययग्रहणसामर्थ्यात्प्र-त्ययतानिमित्तमेव कार्यन्नतु वर्णतानिमित्तमिति कैयटग्रन्थाशयः । विवरणेऽप्ये-तत्पक्ष आभासत इति ।

वर्णप्राधान्यञ्च वर्णस्येतराऽविशेषणत्वरूपम्प्रत्ययनिरूपितविशेष्यतारूपञ्चे-ति,शेखराऽपि न युक्तः । वर्णस्य प्रत्ययनिरूपितविशेष्यतासत्त्वे इतराऽविशेषण-त्वेनाऽप्यभीष्टसिद्धौ पार्थक्येन प्रत्ययनिरूपितविशेष्यताया उपादानवैयर्थ्यापत्तेः ।

नच विधेयमीबादिकम्प्रति तस्य विशेषणत्वादितराऽविशेषणत्वमसिद्ध-मिति वाच्यम् ? एवं कल्पन "एचोऽयवायाव" इतिसूत्रेऽपि अचीत्यस्य विधे-यमायादिकम्प्रति विशेषणत्वेनेतराऽविशेषणत्वप्रत्ययनिरूपितविशेष्यत्वान्यतरा-ऽभावेन वर्णप्राधान्याऽसिद्ध्यापत्तेः ।

अत्रविलक्षणम्—सामानाधिकरण्यसम्बन्धेनेतराऽविशेषणत्वमेव वर्णस्य प्राधान्यमित्यलम् ।

पूर्वपरिभाषायाम्प्रत्ययपदार्थोपस्थित्या सामान्यरूपेण प्रत्ययविषयिणी-म्परिभाषाम्व्याख्यातुमारभते नन्वतइति । किञ्च पूर्वपरिभाषावतरणे गोहित-मित्युक्तन्तत्र "गमेर्डोसि"त्यौणादिकसूत्रस्मरणमित्युणादिसामान्यस्याऽप्युप-स्थितत्वात्तद्विषये विशेषम्वक्तमवतारयतीत्याशयो (१)वा ।

---

(१) प्रत्ययत्वज्ञानसहकृतज्ञानसम्पादकतासाम्येन प्रत्ययग्रहणपरिभाषायाः स्मृतिविषयत्वेऽपि सूचीकटाहन्यायेनास्याः परिभाषायाः प्रथमतो निरूपणम् ।

प्रत्ययस्य लुगित्यादौ भाष्ये स्पष्टा । ण्वुल्तृचावित्यादौ भाष्ये व्युत्पन्नानीत्यपि । इदं शाकटायनरीत्या । पाणिनेस्त्वव्युत्पत्तिपक्ष एवेति शब्देन्दुशेखरे निरूपितम् । आयनेयीति सूत्रे भाष्ये स्फुटमेतत् ॥ २२ ॥

---

उणादयोऽव्युत्पन्नानीति—उणादय इति प्रत्ययाऽभिप्रायेण पुंस्त्वम् । उणादिप्रत्ययान्तानि प्रातिपदिकानि अव्युत्पन्नवद्भवन्ति, व्युत्पत्तिकार्यन्न लभन्त इति, अर्थात्प्रकृतिप्रत्ययविभागज्ञानप्रयोज्यकार्य्याभाववन्तीत्यर्थः । प्रकृतिप्रत्ययविभागप्रयोज्यपाणिनिसूत्रप्रवृत्त्यनर्हाणीति निष्कर्षः । यथोदाहरणम् "जीर्यतेः क्रिन रश्च व" इतिक्रिन्प्रत्यये रेफस्य वकारे धातुत्वाभावात् "र्वोरुपधाया" इतिदीर्घाभावे जिर्विरिति ।

कमिग्रहणेन सिद्ध इति—"विष्वग्देवयोश्च"तिसूत्रीयाऽप्रत्ययग्रहणेन धातुग्रहणेऽपि कचित्तदादिविधिसिद्धान्तात्कमादावुत्तरपदे परे सत्वमित्यर्थेनायस्कंस इत्यादिरूपे सिद्ध इत्याकूतम् ।

इदमेवेति—कमेस्सः कंस इति भाष्यवचनात् कंसग्रहणमेवेत्यर्थः । अस्या इति—अत एव शमेः खः शंखः शमेर्ढश्शंढ इत्यादौ "आयनेयी" तीनादयो न भवन्ति । नचैतत्परिभाषास्वीकारे सर्पश्शब्दयजुश्शब्दयोरव्युत्पन्नत्वाऽपत्तौ प्रत्ययावयवसकाराभावेन सर्पिषा यजुषेत्यादौ आदेशप्रत्ययोरिति षत्वन्न स्यादिति वाच्यम् ? "उणादयो बहुलमि"तिपाणिनीयसूत्रे बहुलग्रहणस्य बहूनर्थान् लातीत्यर्थकत्वेनोणाद्यन्तत्वेन पराभिमतानि बहुलं साधूनीत्याशयवर्णनेन षत्वोपपत्तेः ।

प्रत्ययस्य लुगिति—तत्र भाष्ये प्रत्ययग्रहणाऽभावे "कंसीयपरशव्ययोरि"तिसूत्रे प्रकृतिनिवृत्त्यर्थमवश्यं छयतोरिति वक्तव्यम् , अन्यथा कंसावयवस्य परशव्यावयवोकारस्य लुक् स्यादित्याशङ्कयानया परिभाषया समाहितम् । इत्यादावित्यादिशब्देना "यनेयी"तिसूत्रपरिग्रहः ।

वस्तुतस्तु—

कमिप्रकृतिकाऽजन्ताऽनभिधाने प्रमाणाऽभावेन कमिग्रहणेन नैषा ज्ञाप्यतेऽपि तु वाचनिकी भाष्यपठितैवेति युक्तियुक्तम् ।

एवं ण्वुल्तृचाविति—तत्र हि तृचश्चकाराऽभावे मात्रादिशब्दे दीर्घाऽपादनं कृत्वा तत्प्रसंगेन व्युत्पत्तिर्दर्शिता । तथा च व्युत्पन्नानीत्यपि पक्षः । तृचश्चकारोऽप्तृन्नित्यत्रविशेषणार्थः । तदभावे मातरावित्यत्रापि दीर्घः प्राप्नोतीत्युक्त्वा नप्त्रादिग्रहणं नियमार्थमित्युक्त्या दोषाऽभावः । यद्यव्युत्पन्नानीत्यपि पक्षस्तर्हि नप्त्रादीनामव्युत्पन्नत्वेन तृ इति चकाररहितपाठेऽपि दीर्घो न स्यान्नियमार्थत्वकथनम्भाष्योक्तमनुपपन्नं स्यादिति तात्पर्य्यम् । परन्तु नायम्भाष्यसिद्धान्त इति तात्पर्य्येणाह इदमिति । शाकटायनादीत्यादिना नैरुक्तसंग्रहः ।

ननु देवदत्तश्चिकीर्षतीत्यादौ देवादेः सन्नन्तत्वप्रयुक्तधातुत्वाद्याप-त्तिरत आह—

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम् ॥२३॥

शब्देन्दुशेखर इति । "उणादयो बहुलमिति सूत्र इत्यर्थः । अव्युत्पन्नानीति पक्षे पाणिनीयसिद्धान्तभूते उणादय इति सूत्रस्य व्याकरणान्तरे ये उणादिप्र-त्ययान्ता व्युत्पादितास्ते बहुलं वर्त्तमाने भूते च साधवो भवन्ति ।

स्फुटमेतदिति—एतत् उणादीनामव्युत्पन्नत्वम् । तत्र शंखः कण्ठ इत्या-दावीनाद्यादेशमाशङ्क्य प्रातिपदिकविज्ञानाच्च भगवतः पाणिनेस्सिद्धमित्युक्तम्। प्रातिपदिकविज्ञानादिति भाष्यस्य प्रकृतिप्रत्ययविभागज्ञानशून्यत्वादित्यर्थः ।

प्रत्ययप्रकरणानुरोधेन सप्रसङ्गसङ्गत्याऽऽह ननु देवदत्तश्चिकीर्षतीति । धातुसंज्ञायान्तु "सुपो धातुप्रातिपदिकयोरि"तिसुपो लुगापत्तिस्तत एव लका-राद्युत्पत्त्या विशिष्टस्याऽडि "हलन्यङ्गोरि"ति द्वित्वाऽपत्तिश्चेतिभावः ।

नच "सुपोऽङ्गस्ये"तिन्यासेन न प्रथमे लुकः प्राप्तिरिति वाच्यम् ? परमस-र्वेषामित्यादौ परमजस् सर्वजस् इत्यादौ समुदायस्याङ्गत्वाऽभावेन लुगभावा-त्तत आमि आमश्च जसन्ताद्विहितत्वेन सर्वनाम्नो विहितत्वाऽभावा"दामि स-र्वनाम्न" इति सुडनापत्तः परमगार्ग्याविति रूपाऽसिद्धेश्च ।

नच लुग्विधायकशास्त्रे प्रातिपदिकावयवसुप्साहचर्य्येण धात्ववयवस्सुबपि संज्ञाप्रयोजक एव गृह्यतेऽस्य सुपस्तु धातुसंज्ञाप्रयोजकत्वाऽभावान्न लुगिति वाच्यम् ? पदसंज्ञाप्रयोजकत्वरूपधर्मस्योभयत्र विद्यमानत्वेन संज्ञाप्रयोजकत्वेन साहचर्य्याश्रयणे प्रमाणाऽभावात् ।

नच कृत्तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्च वृत्तय एवञ्च वृत्तिप्रयोज-कत्वेन साहचर्य्यं देवदत्तशब्दोत्तरसुपस्तु वृत्तिप्रयोजकत्वाऽभावेन लुङ् न प्रा-प्नोतीति वाच्यम् ? एतत्परिभाषाऽङ्गीकारपक्षे देवदत्तो गार्ग्यति समुदायस्य तद्धितान्तत्वेन प्रातिपदिकत्वात्तदवयवसुपो वृत्तिप्रयोजकत्वाभावेन तेन धर्मेण साहचर्य्यानाश्रयणात् । एवञ्चावतरणे देवदत्तघटकदेवादेर्द्वित्वाऽपत्तिदोषः ।

नच तत्रापि "लिटिधातोरनभ्यासस्ये"तिसूत्रादनभ्यासस्येत्यनुवृत्त्या न अभ्यासो यस्मिन्निति बहुव्रीहिणा सन्नन्तविशेषणत्वेन न द्वित्वप्राप्तिरिति वाच्यम् ? वाक्यसंस्कारपक्षे पूर्वमेव देवादेर्द्वत्वाऽपत्तेः । नच पदसंस्कारपक्षे नैव द्वित्वप्राप्तिर्देवादेरिति वाच्यम् ? "एकतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानमनुचितमि"ति भाष्येण तदाश्रयणस्याऽशक्यत्वात् । कटंचिकीर्षुरि-त्यत्र विशिष्टस्य धातुत्वाऽभावेन कटशब्दात्प्राक् लकादावडागमद्वित्वे च न भवत इत्यपि ।

ननु मक्षितेऽपि लशुने न शान्तो व्याधिरिति न्यायेन सन्पदस्य प्रत्यय-

मात्रबोधकत्वाऽभावेन ज्ञापितेऽपि परिभाषावचने "सनाद्यन्ता धातव"इति सूत्रे परिभाषाया अप्रवृत्तिस्तथाहि "उगितश्चे"तिसूत्रे।भाष्यबलेन प्रत्ययमात्रग्रहणेन प्रत्ययाऽप्रत्ययग्रहणे, तेन निर्यवमतीत्यादौ ङीप्सिद्ध्यति । भवतु इति प्रातिपदिकस्याऽपि उगितस्सम्भवात् । एवञ्च प्रतीषिषतीत्यादौ "अज्झनगमां सनी" तिदीर्घः कुतो नेति विचिकित्सायां पूर्वखण्ड एव प्रत्ययत्वमुत्तरखण्डस्य द्वित्वनिष्पन्नत्वेनागन्तुकत्वेनाऽप्रत्ययत्वम् । एवञ्च सन्प्रत्ययाऽव्यवहितपूर्वत्वविशिष्टाऽजन्ताङ्गाभावेन दीर्घोनेति शेखरस्तद्रीत्या "सनाद्यन्ता" इत्यत्र नैत्र परिभाषा प्रवर्त्ततेति चेन्न ? परनित्यान्तरङ्गप्रतिपदविध्ययो विरोधिसान्निपाते तेषाम्मिथ॒प्रसंगे परबलीयस्त्वमिति भाष्यवाक्येन ह्रस्वापेक्षया प्रतिपदोक्तत्वात्पूर्वं दीर्घे ततो ह्रस्वे रूपसिद्धौ बाधकाऽभावात् ।

नचाभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषया न पूर्वन्दीर्घं इति वाच्यम् ? उभयोरभ्यासत्वावच्छिन्नोद्देश्यताकत्वे एव तत्परिभाषाप्रवृत्तेर्भाष्यादौ स्पष्टत्वात् । हन्गम्साहचर्य्यणाभ्यासाऽनवयवस्यैव दीर्घविधानेन हनसाहचर्य्येण धातुपाठपठितस्याजन्तस्य ग्रहणेन च शेखरस्य निर्मूलत्वाच्च । तथा च प्रत्ययत्वव्याप्यधर्मावच्छिन्नपदप्रयोज्यप्रत्ययमात्रवृत्तिबोधोपस्थितोया या विषयता तदाश्रयं शास्त्रं तदादितदन्तस्य बोधजनकम्भवतीति प्राचोनाभिमतिः।

प्रत्ययत्वविशिष्टधर्मावच्छिन्नविषयताप्रयोजकपदघटितशास्त्रे तदादितदन्तस्य ग्रहणमिति प्रत्ययमात्रग्रहण इत्यस्यार्थः । वैशिष्टयञ्च स्वविशिष्टवृत्तित्वस्वसमानाधिकरणत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्टयञ्च स्वाऽभाववत्त्वस्वाश्रयनिष्ठोद्देश्तानिरूपितविधेययताश्रयभिन्नत्वोभयसम्बन्धेनेति प्रतीषिषतीत्यादिसर्वदूषणोद्धार इति केचित् ।

किञ्च प्रत्ययमात्रग्रहणत्वन्नाम प्रत्ययमात्रवृत्तिविषयताप्रयोजकत्वे सति प्रत्ययेतरद्धात्ववयवेतरद् यत्तद्वृत्तिविषयताप्रयोजकत्वमिह धात्ववयवत्वेनाक्षतेः ।

किञ्च--प्रत्ययमात्रवृत्तिविषयताप्रयाजकत्वमित्यत्र विषयतायाम्प्रत्ययमात्रवृत्तित्वन्नाम प्रत्ययवृत्तित्वे सति "प्रत्ययप्रत्ययनिष्ठोद्देश्यतानिरूपितविधेयताश्रय" एतदन्यतरेतराऽ त्तित्वम् । एवञ्चोत्तरस्मिन् प्रत्ययनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वस्याऽभावेन क्षतिविरहात् ।

वस्तुतस्तु--अभ्यासोऽनर्थकोऽर्थावृत्त्यभावादिति भाष्यबलेन प्रत्ययस्याऽप्यर्थबोधकत्वेनार्थवत्त्वादुत्तरखण्ड एव प्रत्ययत्वमर्थवत्त्वञ्चेति प्रतीषिषतीत्यादौ दीर्घः प्राप्नोतीति निरुक्तप्रकारेण वारणीय इति ।

मान्यास्तु--प्रत्ययमात्रग्रहण इत्यत्र मात्रपदेन केवलस्य प्रातिपदिकस्यैव निरासः । प्रत्ययबोधकत्वे सति प्रातिपदिकाऽबोधकत्वम्प्रत्ययमात्रग्रहणत्वम् । अप्रत्ययरूपोत्तरखण्डबोधकत्वेऽपि क्षतिविरह इति ब्रुवन्ति ।

यस्मात्प्रत्ययविधिरितिसूत्रे यस्मात्प्रत्ययविधिस्तदादि प्रत्ययइति योगो विभज्यते । गृह्यमाण उपतिष्ठत इति शेषः । तेन तदाद्यन्तांशः सिद्धः ।

तदन्तांशस्तु येन विधिरित्यनेन सिद्धः स च शब्दरूपं विशेष्यमादाय विशेष्यान्तरासत्त्वे ।

---

अस्मदाचार्य्यचरणास्तु--प्रत्ययमात्रग्रहण इत्यस्य प्रत्ययविशिष्ट इत्यर्थः । वैशिष्ट्यञ्च स्वबोधकत्वस्वविशिष्टाऽबोधकत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्टयञ्च स्वेतरत्वस्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयेतरत्वोभयसम्बन्धेन । एवञ्च प्रतीषिषतीत्यत्रोत्तरखण्डस्याञ्जनेतिसूत्रशेखररीत्या प्रत्ययत्वाऽभावेऽपि प्रत्ययमात्रग्रहणत्वेन परिभाषाप्रवृत्त्या दोषाऽभावादित्यूचुः ।

तदादीति । स आदिर्यस्येति बहुव्रीहिसमासः । प्रत्ययविधानावध्यादिरित्यर्थः । प्रत्ययनिष्ठविधेयतानिरूपितोद्देश्यताऽश्रयनिष्ठाद्यवयवतानिरूपकमिति निष्कर्षः । तदन्तांशस्त्विति–प्रत्ययग्रहणे स्वविशिष्टग्रहणम्भवति । वैशिष्टयञ्च स्वनिष्ठचरमावयवतानिरूपकत्व–स्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाद्यवयवतानिरूपकत्वोभयसम्बन्धेन । यत्रान्तपदन्तत्र तदाद्यंशोपस्थितिर्यथा "सनाद्यन्ता धातव" इति । सन् आदिर्यस्माद्विहितस्तदादिर्यस्सनाद्यन्त इत्येवं रीत्या बोधः । यत्रान्तपदमेव नास्ति यथा "ङ्याप्प्रातिपदिकादि"त्यत्र तत्र तदादीत्यस्याभेदसम्बन्धेन ङ्याब्भ्यां विशेषणा "येन विधिरि"ति तदन्तविधिना ङ्याबन्ततदादेरित्यर्थस्तत्तात्पर्येणाह तदन्तांशस्त्विति ।

अत्र केचित् ।

प्रतीषिषतीत्यत्र अञ्जनेतिदीर्घवारणोपाय उत्तरखण्डे प्रत्ययत्वाऽभावरूपो न युक्तः प्रत्ययमात्रग्रहण इत्यस्य प्रत्ययधातूभयसाधारणरूप इत्यर्थेन परीहारात् । किंच सन्त्वस्य प्रत्ययाऽप्रत्ययसाधारण्येऽपि सनाद्यन्ता इति सूत्रे प्रत्ययाधिकारस्थस्यैव ग्रहणेनान्ततः । प्रत्ययाधिकारस्थत्वाऽभावे उत्तरखण्डस्य धातुत्वमपि भ्वादित्वाभावेन न स्यात् । किंच द्वित्वे कृते सन्प्रत्ययादित्वन्तदन्यच्च समुदायेन तूत्तरखण्डे । तथा च सन्त्वन्तु केवलं प्रत्ययमात्रवृत्ति निर्विवादमत एव "सुविनिर्दुर्भ्य"इति सूत्रे विषुषुपतुरिति प्रयोगे समुदाये एव सुप्त्वन्नत्ववयव इति कैयटेनाभाणि । किञ्च दयतेर्दिगीतिसूत्रे भाष्ये सागमके यथा निर्दिश्यमानत्वन्नास्ति तथा साभ्यासस्य निर्दिश्यमानत्वाऽभावेनोत्तरखण्डस्यैव निर्दिश्यमानत्वेन सोपपत्तिकं व्याख्यानं सङ्गच्छते । अतएवभ्रस्जोरिति सूत्रभाष्ये बरीभज्ज्यते इत्यत्र टीको रेफस्य लोपमाशङ्क्य उपदेश इत्यनुवृत्त्या समाहितम् । किंचोत्तरखण्डे धातुत्वादेव ऊर्णुनुवतुरित्यत्राचिश्नुधात्वित्यनेनोवङ् अनुषस्यन्देत्यत्रानुविपर्य्यभिनिभ्य इति षत्वम् । धत्ते धध्वेइत्यादौ दधस्तथोरितिसूत्रेण भष्भावः प्रतीषिषतीत्यत्राभ्यासस्य दीर्घाभावश्च । न चोत्तरखण्डस्य प्रत्ययत्वाद्यनङ्गीकारे प्रती-

पिषतीत्यत्र सन्प्रत्ययत्वाभावेन सन्यत इतीत्त्वमेव न स्यादित्येव दूषणं कुतो नोक्तमिति वाच्यम् ? सन्यत इत्यत्र सनात्यस्य निमित्तसप्तमीत्वेन सन्निमित्ताभ्यासस्येत्यर्थेनाऽदोषात् । आटिटदित्यादौ णिलोपस्तु ण्यन्ताङ्गस्यान्त्यस्यात इत्यर्थेन सप्रमाणः । तथा च पूर्वन्धातुस्साधनेनेति सिद्धान्ते द्वित्वोत्तरं नेर्विश इति सूत्रप्रवृत्तिस्सङ्गच्छत इत्यूचुः ।

स च शब्दस्वरूपमिति—तदादिरूपशब्दस्वरूपमित्यर्थः । शब्दशास्त्रप्रस्तावाच्छब्दस्वरूपम्विशेष्यमादाय तस्य विशेष्यत्वेन तदन्तविधिरिति केचित् ।

विशेष्यान्तराऽसत्त्व इति । यस्मिन्सूत्रे प्रत्ययस्य विशेष्यन्नोपात्तं यथा "ङ्याप्प्रातिपदिकादि"ति तत्र चोपस्थिततदादिशब्दस्वरूपविशेषणेनैव तदन्तविधानम् । यत्र हि विशेष्यान्तरं सूत्रोपात्तं यथा "यञिञोश्चे"त्यत्र प्रातिपदिकादिति तत्र प्रातिपदिकमेव विशेष्यीकृत्य प्रत्ययेन तदन्तविधानम् । एतत्तात्पर्येणाह विशेष्यान्तराऽसत्त्व इति । अदृष्टदहनन्यायेन तदादित्वरूपन्धर्ममात्रन्तत्र तत्रोपतिष्ठते । एतत्तात्पर्यवर्णनादेवा "ञिञोश्चे"त्यादौ अञिञन्ततदाद्यन्तप्रातिपदिकादिति नैवार्थः । "अणो द्व्यचः" इत्यादावणन्तं यत्तत्प्रातिपदिकमिति च नार्थः ।

ननु विशेष्यान्तरासत्त्व इत्यस्यैवन्तात्पर्ये "वनो र चे"त्यस्य वन्नन्ततदाद्यन्तप्रातिपदिकादित्यर्थो न स्यादेवञ्चातिधीवरीति न सिद्ध्येदिति चेन्न ? "नित्यं समासेऽनुत्तरपदस्थस्ये"ति सूत्रेऽनुत्तरपदस्थग्रहणसामर्थ्येन लक्ष्यानुरोधेन च क्वचिद्विशेष्यान्तरसत्त्वेऽपि तदादिरूपविशेष्यमादाय प्रत्ययेन तदन्तविधिः । पुनर्विशेष्यान्तरमादाय प्रत्ययान्ततदादिना तदन्तविधिः, अनुत्तरपदग्रहणन्तु परमसर्पिः कुण्डिकेत्यादौ षत्वनिवारणार्थमेव । समासेन पूर्वपदाध्याहारस्तदेव विशेष्यान्तरमादाय इसुस्प्रत्ययौ तदन्तबोधकौ ताभ्यामागतं तदादित्वसम्पन्नन्तस्य षत्वमिति । ज्ञापिते तु इसुसन्ततदाद्यन्तपूर्वपदस्य षत्वमित्यर्थे परमसर्पिः कुण्डिकेत्यादौ षत्वम्प्राप्नोतीति तत्त्वांशे चरितार्थम् ।

न च शेखरे सर्पिरादिकमव्युत्पन्नं प्रातिपदिकमितीसुसोःप्रत्ययत्वाभावेन कथन्तदादीत्युपस्थितिरेव च विशेष्यान्तरसत्त्वेऽपि क्वचित्तदादीत्युपतिष्ठत इत्यंशे किम्प्रमाणमिति वाच्यम् ? अतिधीवरीत्यादिलक्ष्यानुरोधेन भाष्यप्रामाण्येन च तथा कल्पनात् । अत एव देवदत्तश्चिकीर्षतीत्यादौ देवदत्तश्चिकीर्षेत्यस्य धातुत्वाऽभावार्थमेतस्याः परिभाषायास्सत्त्वेऽपि सनाद्यन्तं धातुसंज्ञकमित्यर्थे विशिष्टसमुदायस्य धातुसंज्ञा दुर्वारैव स्यादिति निष्कर्षः ।

शब्दस्वरूपमिति—केषाञ्चिन्मते तदादेरित्यंशस्य विशेष्यत्वेन तदन्तविधिरिति वदन्ति ।

यत्तु प्रत्ययेन स्वप्रकृत्यवयवकसमुदायाक्षेपात्तद्विशेषणत्वेन तदन्त-विधिरिति।

तन्न ? इयानित्यादौ तस्य तादृशसमुदाये व्यभिचारेणाक्षेपासंभ-वात्।

यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदादीत्यन्तांशमात्रोपस्थिति-

---

यत्तु प्रत्ययेनेति—प्रत्ययस्स्वप्रकृत्यवयवकसमुदायविशिष्टः प्रत्ययत्वात् राम इत्यादिघटकसुप्रत्ययवत् इत्यनुमितिरूपादित्याद्याक्षेपेणोपस्थितस्य स्वप्र-कृत्यवयवकसमुदायस्य प्रत्ययेन विशेषणात्तदन्तविधौ प्रत्ययान्तस्स्वप्रकृत्यवय-वकसमुदाय इत्येवार्थे सिद्धे प्रत्ययग्रहणपरिभाषा निरर्थिकेति ग्रन्थाशयः।

नन्वेवमनुमितौ प्रकृतावतरणभङ्गाऽपत्तिर्दैवदत्तश्चिकीर्षत्यस्य प्रत्ययान्त-त्वात्स्वप्रकृत्यवयवकत्वाच्च धातुत्वे पूर्वोक्तद्वित्वादिदोष इति वाच्यम् ? स्वप्र-त्ययाद्यवयवकसमुदायस्य साध्यत्वेन विवक्षणात्। नच "विभाषा सुपो बहुच् पुरस्तात्तु" इतिविहितबहुच्प्रत्यये तादृशसाध्यत्वाऽसंघटनेन व्यभिचार इति वाच्यम् ? प्रत्ययस्स्वप्रकृत्याद्यवयवकसमुदायविशिष्टः परत्वावच्छिन्नविधेयता-श्रयरूपप्रत्ययत्वात् इति हेत्वाकारेण बहुच्प्रत्यये परत्वावच्छिन्नविधेयत्वरूपप्र-त्ययत्वादिति हेत्वभावेन नापत्तिरित्यभिसन्धानात्। ननु रुणद्धीत्यादौ स्वप्रकृती रुधेति तदाद्यवयवकत्वस्य रुन्ध्समुदायेऽभावेन तत्र व्यभिचारः। व्यभिचारश्च स्वाऽभाववद्वृत्तित्वरूपः, अभावे स्वप्रतियोगिकत्वसम्बन्धेनान्वयः, स्वनिष्ठप्रति-योगिताकाऽभाववद्वृत्तित्वरूप इति फलितार्थः। अनुमितौ प्रकृतित्वे पर्याप्ति-निवेशो नास्तीति रुन्ध्समुदायघटकरुमात्रस्याऽप्यपर्याप्त्या प्रकृतित्वेन नानुमितौ व्यभिचार इत्यपि निश्चीयते चेत्तर्हि दोषान्तरमाह इयानिति। अत्र परत्वाव-च्छिन्नविधेयताश्रयत्वेऽपि तादृशसमुदायाऽभावेन व्यभिचार इति प्रश्नाशयः। उच्चारितश्शब्द एवार्थप्रत्यायको भवति नानुच्चारितः शब्दब्रह्मण एव मुख्य-त्वात् "प्राचांष्फस्तद्धित"इति सूत्रे। ननूच्चारितशब्दस्यैव प्रत्यायकत्वे"ल्यब्लोपे कर्मण्यधिकरणे च"तिवार्त्तिके "ल्यबर्थो दृश्यते यत्र ल्यबन्तन्नैव दृश्यते। तदे-व ल्यब्लोपित्वं ज्ञातव्यं हि सदा बुधैरि"त्यनुशासनेन प्रासादात्प्रेक्षते प्रासाद-मारुह्येति व्याख्यानस्य शिष्टसम्मतत्वेन कथमयन्नियम इति चेन्न ? तत्र तत्त-द्वार्त्तिकारम्भसामर्थ्यादनुच्चारितस्यापि शाब्दबोधविषयत्वाभ्युपगमात्। आक्षि-प्तस्य शाब्दबोधे भानन्न भवति शाब्दबोधे पदनिष्ठवृत्तिज्ञानाधीनोपस्थितेः का-रणत्वात्। अनुमित्योपस्थितस्य शाब्दबोधे भानन्न भवति। अत एव "प्रत्य-क्षानुमानोपमानशब्दाः प्रमाणानि"ति गौतमसूत्रे शब्दप्रमाणस्य पार्थक्येनो-पादानम्। तथा च परिभाषेयं कर्त्तव्यैवेति फलितम्।

यत्र प्रत्ययो निमित्तत्वेनाश्रीयत इति—यथा "स्यतासी लृलुटोरि"ति

दिति अङ्गस्येति सूत्रे भाष्यकैयटयोः ।

एवं यत्रापि पंचम्यन्तात्परः प्रत्यय आश्रीयते तत्रापि तदादीत्यन्तांशोपस्थितिः परन्तु तत्र पंचम्यन्तता ।

अत एवेङ्ह्रस्वादितिसूत्रे एङन्तादित्यर्थलाभः। अस्याः परिभाषायाः प्रयोजनान्तरं येनविधिरित्यत्र भाष्य उक्तं परमगार्ग्यायण इति । परम-

---

त्यादौ । अत्र न तदन्तांशोपस्थितिरन्यथा लुङन्ततदादौ सुबन्ततदादावित्यर्थापत्तौ धात्वन्तरात्प्रत्ययौ स्यातामू, अङ्गान्तरे दीर्घश्चापतेदिति तत्त्वम् । तदन्तानुपस्थितौ अधिकृतधातोरित्यस्य पञ्चम्यन्तत्वेन तदादेःपञ्चम्यन्तत्वमिति रूपसिद्धिः । एवन्तदन्तानुपस्थितेःफलमतिमहाजातीय इति । अन्यथा जातीयर्प्रत्ययेनोपस्थिततदादिम्बिशेष्यीकृत्य महच्छब्देन तदन्तविध्यभावापत्तावात्वानापत्तेस्तावश्यात् ।

किञ्च लेखग्रहणेन सामान्यत एव सप्तम्यन्ततयोपात्ते प्रत्यये तदन्तविध्यभावकल्पनात् । अत एव "सुपि चे"त्यादौ न तदन्तविधिः ।तत्र तदाद्यंशोपस्थितिफलन्तु सुपूद् देवदत्ताभ्यामित्यादौ "सात्पदाद्योरि"तिनिषेधाभाव इति केचित् ।

एवमिति—"प्रत्ययग्रहणे चे"तिनिषेधस्तु तदन्तांशमात्रस्येति तत्त्वम् । अव्यवहितोत्तरत्वसम्बन्धावच्छिन्नपञ्चम्यन्तपदप्रयोज्यप्रकारतानिरूपितविशेष्यताप्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयताप्रयोजकम्पदन्तत्तदादिशब्दस्वरूपम्विशेष्यमादाय स्वनिष्ठचरमावयवतानिरूपकसमुदायवृत्तिविषयताप्रयोजकन्न भवतीत्यर्थस्य वक्ष्यमाणत्वात् । अत एव "केऽणः" ह्रस्वनद्याप"इत्यत्रामादिपदे तदन्तविध्यभावः ।

केचित्तु–अवध्यंशे नित्यसाकाङ्क्षं यद्रूपं तन्निष्ठा या विषयता साक्षात्परम्परया वा तादृशविषयतानिरूपिता या प्रत्ययमात्रवृत्तिविषयता तादृशवृत्तिविषयताप्रयोजकं तदादिविशेष्यकतदन्तविधिप्रयोजकन्न भवतीत्यर्थः । यथा "केऽण"इति ।

पञ्चम्यन्तात्पर इति— साक्षात्परम्परया वा पञ्चम्यन्तपदप्रयोज्यविषयतानिरूपिता या प्रत्ययमात्रवृत्तिविषयता तत्प्रयोजक इत्याशयः ।

एङन्तादिति—अत्राङ्गाक्षेपेण तदन्तविधेस्सर्वानभिमतत्वादित्यन्यत्रोक्तमिति भावः । ननु हेकतरदित्यादौ तदादित्वस्य प्रत्ययावयवाकारान्तेऽपि सत्त्वाद्वृत्तिप्रसङ्ग इति चेन्न ? एङ्साहचर्य्येणाङ्गानवयवभिन्नस्यैव ह्रस्वस्य ग्रहणेनाऽदोषात् । अङ्गावयवस्य ह्रस्वस्य ग्रहणमिति यावत् ।

त्रिपथगाकारास्तु सम्बुद्धचवयवाऽघटितत्वेन साहचर्य्यमुक्तवन्तस्ते च हे कुलेत्यत्रापि लोपानापत्तिभिया निराकृता इव ।

गार्ग्यस्यापत्यमिति विग्रहेऽपि गार्ग्यशब्दादेव प्रत्ययो, न विशिष्टात् ।
निष्कृष्य तावन्मात्रेणैकार्थीभावाभावेपि वृत्तिर्भवत्येव । अत्र चेदं भाष्यमेव मानमित्यन्यत्र विस्तरः ।

---

परमगार्ग्यायण इति—एवमेव शिवभागवत इत्यपि बोध्यम् । न विशिष्टादिति—परमगार्ग्यशब्दान्नेत्याशयः । विशिष्टस्य हि अर्थवत्सूत्रेण प्रातिपदिकत्वम्, समासग्रहणनियमेन वारणन्तु न भवति ? राजपुरुषाविति समुदायघटकपुरुषादेरिवावयवगार्ग्यायणस्यार्थवदन्तर्भावाऽभावात् । नियमस्य सजातीयापेक्षत्वेन परस्परसमानाधिकरणवृत्तिद्वयाश्रयाऽघटित एव प्रवृत्तेः । राज्ञः कुमारीं श्रित इति युगपत् वृत्तिद्वयकल्पनया समुदायस्य प्रातिपदिकत्वम् । अत्र समासत्वप्रयुक्तत्वमवयवस्य यद्यपि "कृत्तद्धिते"त्यनेनापि प्रातिपदिकत्वन्तथापि सुबुत्पत्तिस्समुदायादेवैकाजुद्विर्वचनन्यायात् इति त्रिपथगा । अत्रांशे "येन विधिरिति"सूत्रभाष्यमेव प्रमाणम् । अयमाशयः, राजपुरुषस्याऽपत्यमिति विग्रहे "अत इञि"तीञ्वारणाय स्वार्थान्वयितावच्छेदकधर्मावच्छिन्नवाचकतापर्याप्त्यधिकरणात्तद्धितीयः प्रत्ययो भवतीति नियमः । तथा च परमगार्ग्येति समुदायस्य वाचकतापर्याप्त्यधिकरणत्वेन यञन्ततदादित्वन्नास्ति यस्य गार्ग्येति समुदायावयवस्य प्रत्ययान्ततदादित्वन्न ततः प्रत्यय इत्यभिप्रायेणाह निष्कृष्यैकेति ।

नच निष्कृष्यैकार्थीभावम्बिनाऽपि भाष्यप्रामाण्याद्यदि प्रत्ययस्तर्हि सूत्रनाडायनः पुरुषनिष्ठमेकार्थीभावमपर्याप्त्यापि गृहीत्वा राजपौरुषिरिति स्यादेवेति वाच्यम् ? एतद्भाष्यप्रामाण्यात्प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकप्रत्ययो निष्कृष्यैकार्थीभावाऽभावेऽपि भवतीति कल्पनेनाऽदोषात् । न च शिवस्य भगवतोऽपत्यं शिवभागवतमित्यत्र भगवच्छब्दात्प्रत्ययो न स्यादण्प्रत्ययस्य प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकत्वाऽभावादिति वाच्यम् ? तत्र समासवत् तद्धितीयप्रत्ययस्यापि भाष्यप्रयोगादेव सिद्धेः ।

नच पूर्वोक्तराजपौरुषिरिति प्रयोगे इञ्प्रत्यय इष्ट एवेति कथं युक्तिप्रवाहसिद्धकल्पनमिति वाच्यम् ? "समासप्रत्ययविधौ प्रतिषेध" इतिवार्त्तिकस्य सौत्रनाडिरिति फलदानपरभाष्यस्याऽपर्याप्त्यैकार्थीभावमादाय दोषसत्त्वेन विरोधतादवस्थ्यात् ।

नच भाष्यप्रयोगोऽयमिति नास्ति दोष इति वाच्यम् ? अनुपसर्जनाधिकारीयकुम्भकारेयोऽप्यापद्येतेति भाष्याऽसङ्गत्यापत्तेः । ननु यत्र प्रत्ययान्तत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकः प्रत्ययो भवति तत्राऽपर्याप्त्यैकार्थीभावमाश्रित्य वृत्तिर्भवतीति तत्त्वस्य पूर्वोक्तस्यास्वीकारे राजपुरुषघटकपुरुषशब्दात्फक्प्रत्यय आपद्येतेति । प्रत्ययतत्त्वव्याप्येत्यत्र प्रत्ययस्य प्रातिपदिकपर्यायानुपूर्व्यवच्छिन्नोद्देश्यताकस्य ग्रहणन्तु न शक्यम् ? कुम्भकारेयोऽप्यापद्येतेति भाष्याऽसङ्गतेरिति

प्रत्ययमात्रग्रहणे एषा न तु प्रत्ययाप्रत्ययग्रहण इत्युगितश्चेति सूत्रे भाष्ये स्पष्टा ॥ २३ ॥

येन विधिरिति सूत्रे भाष्य एतद्घटकतदन्तांशस्यापवादः पठ्यते—

**प्रत्ययग्रहणे चापञ्चम्याः ॥ २४ ॥**

यत्र पञ्चम्यन्तात्परः प्रत्ययः कार्यान्तरविधानाय परिगृह्यते तत्र तदन्तविधिर्नेत्यर्थः । यथा रदाभ्यां निष्ठातो न इत्यत्र । तेन दृषत्तीर्णमित्यादौ धातुतकारस्य न नत्वम् । तदन्तेत्यंशानुपस्थितौ रेफान्तात्परस्य निष्ठात-

---

चेन्न ? आनुपूर्व्यवच्छिन्नोद्देश्यताकप्रत्ययवृत्तिप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताकप्रत्ययविधिविषये भाष्यप्रामाण्येन नियमाङ्गीकारात् इति निष्कर्षः ।

ननु प्रत्ययस्य प्रत्ययत्वव्याप्यधर्मावच्छिन्नग्रहणेऽपि सन्त्वस्य धातोरपि सत्त्वेन प्रत्ययत्वव्याप्यत्वाऽभावेन दोषो दुर्वार इत्याशयेनाह प्रत्ययमात्रग्रहणइति ।

अत्र केचिन्मान्याः—विशेष्यान्तराऽसत्त्वे शब्दरूपम्विशेष्यमादाय "येन विधिरि"तिसूत्रेण तदन्तविधिरिति मूलन्न युक्तियुतम् ? "इको यणची"तिशास्त्रीयतदन्तविधिप्रतिक्षेपपर "येन विधिरि"तिसूत्रस्थभाष्यविरोधात् । यत्र प्रत्ययो निमित्तत्वेनाश्रीयते तत्र तदाद्यंशमात्रोपस्थितिरिति "अङ्गस्ये"ति सूत्रे भाष्यकैयटयोः ।

अपवादसङ्गत्याऽऽह "येनविधिरि"ति सूत्रे भाष्य इति । प्रत्ययग्रहणपरिभाषोपस्थाप्यतदादिविशेष्यकतदन्तविधेरपवाद इत्यर्थः । अत एव "षाषन्तश्च"इत्यत्र प्रातिपदिकंविशिष्य तदन्तविधौ यञन्तादित्यर्थः । "प्रत्ययग्रहणे चाऽपञ्चम्या"इति "असमानोऽना प्रतिषेध"इति कोशेन अ इति निषेधार्थकमव्ययम्पृथक् पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकं पदन्तदन्तबोधकन्न भवतीति सामान्यपरिभाषार्थः ।

यत्र पञ्चम्यन्तात्पर इति—शास्त्र इत्यर्थः । ननु "रदाभ्यामि"ति शास्त्रे निष्ठायां प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयता नास्ति, निष्ठातकारस्य नत्वमित्यर्थेन तकारविशेषणत्वान्निष्ठाया इति परिभाषाप्रवृत्तिर्न स्यादिति चेन्न ? "प्रत्ययलोप"इति सूत्रीयप्रत्ययग्रहणेन प्रत्ययावयवे प्रत्ययत्वव्यवहार इति सिद्धान्तेन निष्ठावयवतकारेऽपि प्रत्ययत्वव्यवहारेण प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वस्य सौष्ठवात् ।

नन्वेवमपि प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकन्न तपदमपितु निष्ठापदमिति पुनरपि परिभाषाप्रवृत्तिर्न स्यादिति चेन्न? प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदघटकमिति परिभाषार्थवर्णनेनाक्षतेः ।

स्येत्यर्थ इति न दोषस्तदंशानुपस्थितौ मानाभावात् । तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति तृषस्तीर्ण इत्यादौ दोषः स्यादेव ।

---

ननु प्रत्ययावयवे प्रत्ययत्वव्यवहारे राममित्यादौ "सुपि चे"ति सूत्रेण दीर्घापत्तिरिति । नच प्रत्ययावयवे प्रत्ययत्वव्यवहारसत्त्वेऽपि सुप्त्वव्यवहाराऽभावान्न दीर्घप्राप्तिरिति वाच्यम् ? मकारभागे सुप्त्वव्यवहारस्यानिवार्य्यत्वात् सामान्यातिदेशे विशेषानतिदेश इति परिभाषया प्रत्ययत्वावच्छिन्ना विषयता यत्र तत्रैव प्रत्ययावयवे प्रत्ययत्वव्यवहारः । अतिदिश्यमानधर्मसमनियतधर्मनिमित्तकं कार्य्यन्नेति सर्वप्रसिद्धिरिति सुप्त्वावच्छिन्नविषयताया आनेतुमशक्यत्वात् ।

नच आखनिकबक इत्यादौ "खनेर्डडरेकेकवका वाच्या" इतिकृदन्तप्रकरणीयवार्त्तिकेन प्रत्यये प्रत्ययावयवे प्रत्ययत्वव्यवहारेण ककारस्य "लशकतद्धित"इतिइत्त्वापत्तिः । नच फलाभावः?"गमहने"त्युपधालोपस्य फलस्य विद्यमानत्वादिति वाच्यम् ? अवयवत्वन्यूनवृत्तिधर्मावच्छिन्नविषयत्वाऽनिरूपिता प्रत्ययत्वावच्छिन्ना विषयता प्रत्ययावयवे गच्छतीति कल्पनात् । अत्र अवयवत्वन्यूनवृत्त्यादित्वधर्मावच्छिन्नविषयतानिरूपितत्वेन "लशकतद्धित"इत्यस्याऽप्रवृत्तेः ।

वस्तुतस्तु—ज्ञापकस्य सजातीयापेक्षत्वात् सूत्रघटकप्रत्ययपदप्रयोज्यविषयतायाः एव अवयवे आरोप इति "अचि श्नुधात्वि"ति सूत्रेऽङ्गाक्षिप्तप्रत्ययपदप्रयोज्यविषयतायास्सत्त्वान्न तत्रत्यभाष्यविरोध इति ।

कार्य्यान्तरविधानायेति—नतु स्वस्यैव विधानायेति यावत् । यत्र हि प्रत्ययानाम्विधानायैव प्रत्ययग्रहणं यथा "ऋन्नेभ्यो ङीबि"ति तत्र ह्येतद्वाक्यार्थबोधात्प्राक् प्रत्ययग्रहणपरिभाषाप्रवृत्तिकाले ङीपः प्रत्ययत्वमेव नास्तीति प्रत्ययग्रहणत्वाभावान्नेयम्परिभाषोपतिष्ठत इतितात्पर्य्यकमेव कार्यान्तरविधानायेति मूलमिति भावो गूढः । तथाच परिभाषायां विधेयताख्यविषयता भिन्नैवेति फलति । एवञ्च पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नोद्देश्यताप्रयोजकम्पदमिति तत्त्वम् ।

तदन्तविधिर्न्नेति—प्रत्यासत्तिन्यायेन तादृशप्रत्ययबोधकं पदन्तदन्तबोधकन्नेत्यर्थः । उदाहरणन्तु "अतो भिस ऐस्" ह्रस्वनद्याप"इति । रदाभ्यामितिपरिभाषायाअसत्त्वेऽत्र सूत्रे निष्ठापदेन तदादितदन्तोपस्थितौ सत्यां निष्ठान्ततदाद्यवयवो यो रेफदकाराभ्याम्परस्तकारस्तस्य नत्वमित्यर्थापत्तौ तृधातोःक्तप्रत्यये निष्ठान्ततदाद्यवयवतकारस्य धात्ववयवत्वेन प्रत्ययावयववत् ऋकारात्परत्वेन नत्वमापद्येत । परिभाषायान्तु तदन्तविध्यभावेन निष्ठापदोपस्थाप्यतदादिशब्दस्वरूपम्विशेष्यमादाय "रदाभ्यामि"त्यनेन तदन्तविधौ रेफान्तदान्तनि-

स्यतासीलृलुटोरित्यादौ लृलुटोःपरयोरित्यर्थनियमेनावधिसाकाङ्क्षत्वेनोपस्थितधातोरित्यस्यावधित्वेनान्वयान्न तदन्तविधिः, ङ्याब्भ्यः इत्यादौ तु न दोषस्तत्र कस्मादिति नियतावध्याकाङ्क्षाया अभावेन पंचम्यन्तस्य प्रत्ययविशेषणत्वाभावात् ।

---

ष्ठाप्रत्ययो यस्माद् विहितस्तदादिस्तदुत्तरनिष्ठावयवतकारस्य नत्वमित्यर्थे सति न धातुतकारस्य नत्वमिति परिभाषा सफला ।

नचान्त्यबाधेऽन्त्यसदेशस्येति परिभाषया धातुतकारस्य न नत्वमिति वाच्यम् ? दृषत्तीर्णवानित्यत्रान्त्यसदेशत्वाऽभावेन परिभाषाया अप्रवृत्त्या प्रत्ययग्रहणपरिभाषाया मुख्यफलत्वात् ।

किञ्च अन् प्राणन इतिधातोः क्विपि स्त्रीत्वविवक्षायां "डाबुभाभ्यामन्यतरस्यामि"ति डापि टिलोपे "सुप्पितावनुदात्तावि"त्यनुदात्तत्वे आःशब्दादाचारक्विबन्तात्कर्त्तरि क्विपि नपुंसकह्रस्वे अम् इति तस्मादाचारक्विबन्तात् क्तप्रत्यये "एकाच उपदेश" इतीण्निषेधे "अतो लोप" इत्यल्लोपे त इति, दृषच्छब्दसम्बन्धे दृषत्त इत्यादौ नत्वापत्तिरूपदोषसत्त्वेन परिभाषाफलस्य निर्विवादत्वात् । एकाज्भ्यआचारक्विन्नेतिमत एतस्याऽनभिधाने तु "आमि सर्वनाम्नःसुट्" ह्रस्वनद्यापो नुडि"ति फलम् ।

ननु रदाभ्यामित्यत्र निष्ठायास्तो निष्ठात इति न षष्ठीतत्पुरुषोऽपितु निष्ठायान्तो निष्ठात इति सप्तमीतत्पुरुष एवञ्च दृषत्तीर्ण इत्यादौ नैव दोषः, षष्ठ्यन्तत्वाभावेन निर्दिश्यमानपरिभाषायाअप्रवृत्त्येति चेन्न?सप्तमीतत्पुरुषसमासविधायकाऽभावात् ।

नच "सप्तमीशौण्डैरि"त्यत्र सप्तमीतियोगविभागेन समासः ? योगविभागस्य भाष्येऽदर्शनात् । "सह सुपे"त्यत्र सुपेति योगविभागस्तु न समाससाधकः? तस्याऽप्यगतिकगतित्वात् ।

निष्ठात इति सौत्रं पदमतो न समासे शङ्का । सौत्रत्वात्समास इति न तदपि फलमिति सरयूपारीणशङ्काः ।

उभयोरिति—तदादितदन्तांशयोरिति भावः । न तदन्तविधिरिति—ननु "तस्मिन्निितिनिर्दिष्टे पूर्वस्ये"ति परिभाषयाऽव्यवहितपूर्वत्वोपस्थित्या लृलुटोःपरयोरित्यर्थाऽभावेन कथं ग्रन्थसङ्गतिरिति चेन्न ? औपश्लेषिकाधिकरणबोधकसप्तम्यन्तार्थोपश्लिष्टं यत्कार्य्यन्तद्व्यवहितपूर्वस्य यथास्यात्तथा कर्त्तव्यमिति सूत्रार्थेन परयोरित्यध्याहारेण लृलुटोरव्यवहितपरयोरित्यर्थे जातेऽपि अव्यवहितपूर्वस्य कार्य्यम्भवतीत्यर्थस्यापि सयुक्तिकत्वेन ग्रन्थसङ्गतौ बाधकाऽभावात् । अत एव परनिमित्तकाच⁀परस्मिन्नित्यादि सङ्गच्छतेऽन्यथा परनिमित्तकाजादेशस्यैवाभावेन तदसङ्गतिस्स्पष्टैव । अतश्च "मनोरौवे"त्यादीनामपि

अङ्गसंज्ञासूत्रे तु तदादेः प्रत्यये पर इत्यर्थे पंचम्यन्तस्य विशेषणत्वं स्पष्टमेव । अत एवोक्तमैकाभ्यामित्यादिनिर्देशाः संगच्छन्ते ॥ २४ ॥

नन्वेवं कुमारी ब्राह्मणिरूपेत्यादौ घरूपेतिह्रस्वापत्तिरत आह—

**उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् ॥ २४ ॥**

---

न परनिमित्तकत्वम् ।

ननु प्रत्ययस्य यत्र निमित्तत्वेनोपादानन्तत्र तदाद्यंशोपस्थितौ किम्फलमिति वाच्यम् ? हे देवदत्तअम् हे भानो अम् इत्यादौ "अमि पूर्वः' औतोऽम्शसो- रि"त्येनयोरप्रवृत्त्यर्थं तदाद्यंशोपस्थितेरावश्यकत्वात् ।

केचित्तु अवध्यंशे नित्यसाकाङ्क्षं यद्रूपन्तन्निष्ठा या विषयता साक्षात्पर- म्परया वा तन्निरूपिता या प्रत्ययमात्रवृत्तिविषयता तत्प्रयोजकम्पदन्तदादिवि- शेष्यकतदन्तविधेऽप्रयोजकन्न भवतीत्यर्थेन सिद्धिरित्याहुः ।

इयम्परिभाषा प्रत्यासत्तिन्यायेन स्वविशेषणकत्वोपस्थापिततदादिविशेष्यक- तदन्तविधेरेव निषेधिका, अत एव "ह्रल्ङ्याब्भ्य"इति ङ्याबुपस्थापिततदादि- विशेष्यकतदन्तविध्यभावेऽपि सुतिसिप्रत्ययोपस्थापिततदादिविशेष्यकङ्याबवि- शेषणकतदन्तविधिसत्त्वेन सूत्रार्थस्सङ्गच्छते ।

किञ्च "एङ्ह्रस्वात्सम्बुद्धेरि"तिसूत्रेऽपि केवलतदाद्यंशोपस्थितिरेव सर्व- सम्मता ।

अत एवेति—सप्तम्यन्तप्रत्ययग्रहणस्थले परिभाषाप्रवृत्तिस्वीकारादेवेत्य- र्थः । सप्तम्यन्ते प्रत्ययग्रहणे तदन्तग्रहणमितिस्वरूपिका परिभाषा तु नास्त्ये- वेति फलति ।

धर्मिग्राहकमानादेवाक्षिप्तपञ्चम्यन्तार्थावधिकपरत्वमादायाऽपीयम्परिभाषा प्रवर्त्तत इति युक्तियुक्त इत्याह उक्तमैकाभ्यामिति । अयम्भावः, "सुपिचे"- त्यादावपि तदन्ततदादिसमुपस्थितौ सुबन्ततदादौ परे पूर्वस्य दीर्घः इत्यर्थे सौत्रप्रयोगाऽसङ्गतिरिति भावः ।

वस्तुतस्तु एवम्प्रकारेणैव "घरूपे"तिसूत्रेऽपि तदन्तविध्यभावसिद्धौ वक्ष्य- माणोत्तरपदाधिकार इति परिभाषाया वैयर्थ्याऽऽपत्तिः कुमारीब्राह्मणिरूपेत्यादौ तदन्तविध्यभावेनैव ह्रस्वाऽप्राप्तेः । तथाच नायं ग्रन्थो युक्त इति सरयूपारीण शुक्लाः ।

नन्वेवं "प्रत्ययग्रहणे चापञ्चम्या"इत्येतया परिभाषया तदादिविशेष्यकत- दन्तविधिनिषेधे कृतेऽप्युत्तरपदविशेष्यकतदन्तविधौ तु न काचिद्बाधा, तथा च "घरूपे"तिसूत्रस्य घाद्यन्त उत्तरपदे परे ह्रस्व इत्यर्थो दुर्वार एव स्यादित्याश- येनाह नन्वेवं कुमारीत्यादीति । अस्मिन्नवतरणवाक्ये कुमारीब्राह्मणिरूपा

हृदयस्य हृल्लेखयदण्लासेष्विवत्यत्र लेखग्रहणात् । तत्र लेखेति न घञन्तमनभिधानात् । इयं च हृदयस्येति सूत्र एव भाष्ये स्पष्टा ॥ २१ ॥

यस्यामगर्थ्यां सा कुमारीब्राह्मणिरूपेति बहुव्रीहिसमासः ।

न च रूपवद्भार्य्य इत्यादिवत् पुम्वद्भावेन कुमारब्राह्मणिरूपेति रूपसिद्धौ नावतरणसङ्गतिरिति वाच्यम् ? "जातेश्चे"ति सूत्रेण पुंवद्भावनिषेधात् पुम्वद्भावम्बाधित्वा परत्वाद्ध्रस्वापत्तेश्च । न च कुमारत्वस्यावस्थाविशेषत्वेन वयोवाचित्वाज्जातिलक्षणाऽसङ्घटनेन कथं "जातेश्चे"त्यनेन पुम्वद्भावनिषेध इति वाच्यम् ? कुमाराभार्य्य इति भाष्योदाहरणेन वयोवाचकस्यापि जातित्वेन निषेधप्रवृत्तिसौष्ठवात् ।

न च कुमारिब्राह्मणितरेत्यादौ घांशे "सुपि चे"त्यत्रेव पूर्वपरिभाषयैव तदन्तार्थनिषेध इति तदेवावतरणं स्यादिति वाच्यम् ? रात्रेः कृतिविभाषेतिसूत्रे तदादिविशेष्यकतदन्तविधेर्निषेधेऽपि मादाय तदन्तविधिनिषेधाऽभाववत् इहापि तदन्तरूपमादाय प्राप्ततदन्तविधेरेव तया निषेधविधानात् ।

नन्वन्यत्रापि तदन्तविधिनिषेधस्स्यादिति चेन्न ? धर्मिग्राहकमानेन स्ववृत्तिश्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजके एवैतस्याःप्रवृत्तिस्वीकारात् ॥

नच घांशेऽपि तद्विशेष्यकतदन्तविधिस्स्यादिति वाच्यम्?संज्ञाविधाविति निषेधात् स्वप्रदेशे निषेधसामर्थ्येन विधिप्रदेशेऽपि निषेधसम्भवात् ।

न तदन्तग्रहणमिति—उत्तरपदविशेष्यकप्रत्ययविशेषणकतदन्तविधिर्नेत्याशयः । लेखग्रहणादिति—नच तदन्तविधौ लेखान्ते उत्तरपदे पर इत्यर्थे हृत्परमलेख इत्यादौ हृदादेशार्थन्तदिति वाच्यम्? ज्ञापकपरभाष्यप्रामाण्येन तस्याऽनभिधानात् । "गिले गिलस्ये"त्यत्र गिलान्ते उत्तरपद इत्यर्थे तिमिङ्गिलगिल इत्यादिसिद्धौ "गिलगिले चे"ति वार्त्तिकारम्भसामर्थ्यात् उत्तरपदाधिकारे प्रातिपदिकग्रहणे न तदन्तग्रहणमिति परिभाषान्तरस्यावश्यकतया तयैव सिद्धेश्च ।

केचित्तु लेखग्रहणसामर्थ्यात्पदविशेष्यकस्तदन्तविधिनत्येव ज्ञाप्यांशम् । अन्यथा दग्धपादोपहत इति भाष्येदाहृते "पादस्य पदाज्ये"तिसूत्रे पादान्तपूर्वपदस्येत्यर्थे पदादेशाऽपत्तेः ।

नचैवमपि पक्केष्टकचितमित्यादा "विष्टकेशी"त्यादिना ह्रस्वा न स्यादिति वाच्यम्?केवलशब्दस्वरूपस्यैवाद्ध्याहारेण पूर्वपदाऽनध्याहारात् ज्ञाप्यांशस्यानित्यत्वाद् वा । त्रिपथगाकारास्तु-लेखग्रहणेन सप्तम्यन्ततया प्रत्ययग्रहणेन तदन्तग्रहणमित्येव ज्ञाप्यम् । उत्तरपदाधिकार इति विशेषणं नोपादेयम् । तेन "सुपिचे"त्यादौ न दोषः । "रात्रेःकृति" "उपसर्गस्यघञ्य"त्यादावार-

नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रैवातिकारीषगन्ध्यापुत्र इत्यत्र व्यम्भसामर्थ्यात्तदन्तविधिरिति तन्न ? अनुदात्तात्अशब्दादाचारक्विबन्तादएवुलि अके रात्रिमक इत्यादावशुद्धकृत्स्वरूपे तस्य चारितार्थ्यात् ।

मान्यास्तु–प्रत्ययग्रहणेनेति परिभाषायां यद्युत्तरपदाधिकार इतिच्छेदेन तदन्तग्रहणन्नेत्यर्थस्तदा "घरूप"इतिसूत्रे प्रत्ययग्रहणेन तदन्तस्य ग्रहणन्न स्यात् । इको ह्रस्वोऽङ्यो गालवस्य, ङ्यापोस्संज्ञाछन्दसोर्बहुलम्" खित्यनव्ययस्ये"त्यादावपि निषेधापत्तिरिति चेन्न ? ज्ञापकस्य सजातीयाऽपेक्षत्वेन निमित्तत्वेनाभिप्रेतस्य प्रत्ययस्य यत्र ग्रहणं तत्रोपात्तस्य प्रत्ययस्य उत्तरपदविशेषणत्वमेव न भवतीति कल्पनात् । उपात्तत्वस्य प्रत्ययपदशक्यतावच्छेदकं यद्रूपं तेन रूपेण गृहीतत्वरूपाश्रयणाच्च ङ्यपोरित्यस्य षष्ठ्यन्तत्वेन निमित्तत्वाऽभावात् । खित्यनव्ययस्येति सूत्रे तु खितीति यद्यपि सप्तम्यन्तन्तथापि ख इत् यस्य उत्पत्त्या बहुव्रीहिबोध्यमिति न तत्र दोषः । उत्तरपदविशेषणत्वस्य सामर्थ्येन कल्पनात् । केचित्तु तत्र सामर्थ्यात्तदन्तविधिः । "एकतद्धित" इति करणसामर्थ्यादुत्तरपदस्य पृथङ्निमित्ततया तदभावकल्पनेन तदन्तविध्यभावाच्च । ननु सप्तम्यन्तपदबोध्येषु "रात्रेःकृति" विष्वग्देवयोः, श्येनतिलस्य पाते ञे "उपसर्गस्य घञ्यमनुष्ये" तन्निषु कौ" इत्यादिषु न दोष इत्यूचुः ।

वस्तुतस्तु साक्षादानुपूर्व्यवच्छिन्नविषयताप्रयोजकम्पदं सप्तम्यन्तम्विशेष्यमादाय तदन्तग्राहकन्न भवतीत्येव कल्प्यते । अत एव "समूलाऽकृती"त्यादौ नापत्तिः । "अग्रान्त"इत्यत्र शुद्धादौ पूर्वपदविशेष्यकतदन्तविध्यभावायान्तग्रहणम् ।

किञ्च लाघवाच्छ्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकं पदमुत्तरपदम्विशेष्यीकृत्य तदन्तग्राहकन्न भवतीति परिभाषाद्वयस्थाने पठनीयमिति न कुत्राऽपि दोषः ।

अनभिधानादिति–यथोत्तरम्मुनीनाम्प्रामाण्यमित्यत्रेदमेव लेखग्रहणं ज्ञापकं व्याख्यानत इति परिभाषायान्निरूपितम् ।

अत्रकेचिद्विलक्षणाः—"एकतद्धिते चे"त्येतदर्थं कृद्भिन्नविषयताप्रयोजकपदघटिते शास्त्रे तदन्तविधिर्नेत्येवार्थस्तेन "सुपि चे"त्यादावपि तदन्तविधिनिषेधोऽप्येतेनैव सिद्ध इति "प्रत्ययग्रहणे चाऽपञ्चम्या"इति परिभाषा न विधेया ।

ननु "स्यातासी लृलुटोरि"त्यत्र कृदन्तत्वेन निषेधो न स्यात् इति चेन्न ? "कृदतिङि"त्यस्य तिङ्स्थानितावच्छेदकधर्मवद्भिन्नाः कृत्संज्ञका इत्यर्थकरणेन लृलुटोःकृत्संज्ञाया अभावात् । दृषत्तीर्ण इत्यत्र तु निष्ठान्ततदावयवत्वस्य निष्ठातकारस्य नत्वमित्यथ कृतेऽपि न क्षतिरित्याहुः ।

प्रत्ययप्रसङ्गादपवादसङ्गत्याऽऽह नन्वेवम् परमकारीषगन्धीति—'इव-

ङः संप्रसारणं पुत्रपत्योरिति स्यादत आह—

## स्त्रीप्रत्यये चानुपसर्जने न ॥ २६ ॥

शब्दोऽत्र भिन्नक्रमः । एवञ्चोऽर्थः प्रत्ययग्रहण इति परिभाषास्वीकारे । स्वाभाववत्त्वसम्बन्धेन मूर्खपुत्रे मूर्खपितृवदयं पण्डितः मरुवदुशीनरे जलमिति कथने यथा तत्र न तथाऽत्रापि नेति यावत् । अतिकारीषगन्ध्यापुत्र इत्यत्रेवात्रापि स्यादर्थान्न स्यादिति ग्रन्थाशयः ।

किञ्च नैवकारो भिन्नक्रमोऽपि तु यथाश्रुतमेव मूलन्तथाहि ष्यङ इत्यस्य प्रत्ययत्वेन शब्दस्वरूपम्विशेष्यमादाय तदन्तविधौ उत्तरपदाक्षिप्तस्य पूर्वपदस्याऽपि विशेष्यत्वेन ष्यङन्तान्त इत्यर्थस्य परमकारीषगन्धीपुत्रइत्याद्यर्थमावश्यकत्वेन तद्वदतिकारीषगन्ध्यापुत्र इत्यत्रापि सम्प्रसारणं स्यादित्यर्थः ।

वस्तुतस्तु—"इवेन सह नित्यसमासो विभक्त्यलोपश्चे"ति वार्त्तिकबलेनैव विभिन्नक्रमसम्भवाऽभावेन यस्मात्प्रत्ययविधिरितिसूत्रे "नेयङुवङ्स्थानावस्त्री"ति सूत्रादस्त्रीत्यनुवर्त्य स्त्रीप्रत्ययभिन्ने प्रत्ययग्रहणे तदादेरुपस्थितिरिति तात्पर्य्यमुपवर्ण्य यथाश्रुतमेवावतरणम्प्रवर्ण्यानुपसर्जनविषयकस्त्रीप्रत्ययबोधकपदघटिते शास्त्रे तदादेरुपस्थितिर्न भवतीति परिभाषार्थात् ।

अत्रेदमाकूतम् "ष्यङस्सम्प्रसारणमि"ति सूत्रमावर्त्तते । तत्र प्रथमसूत्रार्थेऽनुपसर्जनविषयिका स्वरितत्वप्रतिज्ञा, द्वितीये च उपसर्जनविषयिका प्रतिज्ञा । तत्र चैनया परिभाषया प्रथमसूत्रे तदादिविधिनिषेधः । एवञ्च परमकारीषगन्धीपुत्र इत्यत्र सम्प्रसारणं भवति । अतिकारीषगन्ध्यापुत्रइत्यत्र तूपसर्जनत्वेन प्रथमस्याऽप्राप्तिः । एवन्द्वितीयस्याऽप न प्राप्तिः ? तदादेरुपस्थित्या ष्यङन्ततदादित्वाऽभावात् । द्वितीयसूत्रार्थफलन्तु कन्लुबन्तकारीषगन्ध्याशब्दस्य पुत्रशब्देन समासे सम्प्रसारणाऽभावरूपम्बोध्यमिति ग्रन्थाशयः ।

किञ्च आवृत्त्याश्रयणे गौरवेण स्त्रीप्रत्ययबोधकपदघटिते शास्त्रेऽनुपसर्जनेनेत्यस्योपस्थितिरित्यर्थः । अनुपसर्जनेनेति तृतीयाऽभेदार्थिका, अनुपसर्जनष्यङन्तपूर्वपदस्य सम्प्रसारणमित्यर्थः । ननु तदादेरुपस्थितिरिति परिभाषार्थः । परमकारीषेत्यत्रानुपसर्जनत्वेन सम्प्रसारणमतिकारीषगन्ध्यापुत्र इत्यत्रोपसर्जनत्वेन न सम्प्रसारणम् ।

उपसर्जनत्वञ्च स्वान्ततदाद्यव्यवहितपूर्वपदप्रयोज्यविशेष्यतानिरूपितप्रकारतावच्छेदकताप्रयोजकत्वम् । परमकारीषेत्यत्र ष्यङन्ततदाद्यवधिकपूर्वपदं परमपदम् । तत्प्रयोज्यप्रकारतायास्सत्त्वेन विशेष्यताया असत्वेनोभयथा विशेषणाऽभावप्रयुक्तविशिष्टाभावादनुपसर्जनत्वेन सम्प्रसारणम् । उपसर्जनत्वादतिकारीषेत्यादौ न सम्प्रसारणम् ।

विषयसप्तमीयम् । यः स्त्रीप्रत्ययः स्त्रियं प्राधान्येनाह तत्र तदादिनियमो न, यस्त्वप्राधान्येनाह तत्र तदादिनियमोऽस्त्येवेत्यर्थः ।

---

नन्वेवमुपसर्जनत्वे "अर्द्धनपुंसकमि"ति एकदेशिसमासविधायकशास्त्रप्रत्याख्यानपरभाष्येण विरोधस्तथाहि, सूत्रारम्भपक्षे पिप्पल्या अर्द्धमिति विग्रहेऽर्द्धस्य पूर्वपदार्थस्यैव विशेष्यत्वम् । तत्र स्वान्तसमुदायोऽर्द्धपिप्पली तत्पर्याप्तशक्तिनिरूपकोऽर्थः पिप्पल्यर्द्धरूपस्तन्निष्ठविशेष्यतानिरूपितप्रकारता पिप्पलीनिष्ठा तदवच्छेदकता स्त्रीत्वे तत्प्रयोजकत्वं ङीषि । तथा चोपसर्जनत्वेनानुपसर्जनौ यौ ङ्याप्पौ तदन्तो यस्सुतिसीत्येतत्सम्बन्धितदादिस्ततः परस्य लोप इत्यर्थक"हल्ङ्याद्दि"सूत्रेण सुलोपो न स्यात् । अर्द्धश्चासौ पिप्पलीति कर्मधारयसमासेन प्रत्याख्यानकल्पे तु परमकारीष इतिवदनुपसर्जनत्वेन सुलोपः प्राप्नोतीति फलभेद इति । तथा गोवष्कयणीति वाक्येऽपि सुलोपो न स्यादिति चेन्न ? उपसर्जनत्वलक्षणेऽवयवावयविभावसम्बन्धातिरिक्तसम्बन्धावच्छिन्नायाः प्रकारताया ग्रहणेनार्द्धपिप्पलीत्यादौ अवयवावयविभावसम्बन्धावच्छिन्नप्रकारताया एव सत्वेनोपसर्जनत्वाभावात् । गोवष्कयणीत्यादौ च अभेदस्य शाब्दिकमते सम्बन्धत्वाभावेन सम्बन्धावच्छिन्नत्वं नास्तीति अनुपसर्जनत्वेन क्षतिविरहात् ।

अत्रास्मद्गुरवः-नन्वेवमुपसर्जनत्वेऽपि परमकारीषगन्धीपुत्र इत्यत्राप्युपसर्जनत्वेन सम्प्रसारणन्न स्यात्तथाहि, समास एकार्थीभावरूपशक्तिपर्याप्तत्वम् , पुत्रत्वावच्छिन्नविशेष्यताप्रयोजकसमुदायपर्याप्तत्वम्विनिगमनाविरहात् । तथैव परमरूपपूर्वपदेऽपि पर्याप्ता । एवञ्च स्वान्ततदाद्यवधिकपूर्वपदं परमपदन्तन्निष्ठप्रयोजकतानिरूपितप्रयोज्यतावती विशेष्यता पुत्रत्वावच्छिन्ना तन्निरूपितप्रकारता कारीषगन्ध्यानिष्ठा तदवच्छेदकत्वं स्त्रीत्वे तत्प्रयोजकत्वरूपोपसर्जनत्वं ष्यङ इतिसम्प्रसारणन्न स्यादिति चेन्न ? स्वविशिष्टविशेष्यताया निवेशात् । वैशिष्ट्यञ्च स्वान्ततदाद्यवधिकपूर्वपदप्रयोज्यत्वस्वोत्तरपदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यत्वाऽभाववत्त्वोभयसम्बन्धेन । पुत्रत्वावच्छिन्ना विशेष्यता तु स्वोत्तरपुत्रपदपर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावत्येवेतिद्वितीयसम्बन्धाऽभावादुपसर्जनत्वाऽभावेन सम्प्रसारणसिद्धौ बाधकाऽभावात् इत्युक्तवन्तः ।

विषयसप्तमीति-सत्सप्तमीत्यर्थः । स्त्रियम्प्राधान्येनेति-पूर्वोक्तप्रकारतावच्छेदकतया स्त्रीत्वन्नाहेत्यर्थः । अप्राधान्येन कोऽर्थस्तादृशप्रकारतावच्छेदकतयेति यावत् ।

नन्वेमपि अतिराजकुमारिरित्यत्र कुमारीपदार्थोऽपेक्षयाऽतिक्रमणकर्तृप्रयोज्यविशेष्यतायास्सत्वेनोपसर्जनत्वात्कथं ह्रस्वोऽत आह प्रत्यासत्त्येति । स्वान्ततदाद्यवधिकपूर्वो यस्य स्त्रीप्रत्ययान्तत्वमानेयं तद्घटक एव गृह्यते, तादृशञ्च

प्रत्यासत्त्या यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थं प्रत्यनु-पसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् । तेनातिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थं प्रत्युपसर्जनत्वे ऽपि तदर्थं प्रत्यनुपस-र्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः ।

अत एवात्र परिभाषायां न शास्त्रीयमुपसर्जनत्वमसम्भवात् । अस्याः प्रत्ययग्रहण इत्यस्यापवादत्वात्तदेकवाक्यतापन्नत्वाच्चात्रापि ग्रहणपद-संबन्धेन स्त्रीप्रत्ययसामान्यग्रहणे तद्विशेषग्रहणे च प्रवृत्तिर्न तु स्त्रीप्रत्य-यास्त्रीप्रत्ययग्रहणे ।

ज्ञापितं चेदमर्थवत्सूत्रे भाष्ये । इयं वाचनिक्येव ष्यङ इति सूत्रे भाष्ये स्पष्टा ॥ २६ ॥

नन्वेवं "तरप्तमपौ घ" इत्यादिना तरबन्तादेः संज्ञा स्यादत आह—

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणं नास्ति ॥ २७ ॥

---

राजेति नतु कुमारीति, तत्पर्याप्तप्रयोजकतानिरूपितप्रयोज्यतावद्विशेष्यताया अभावेन नोपसर्जनत्वम् ।

न शास्त्रीयमिति-प्रत्ययमात्रे तस्याऽसम्भवात् । स्त्री ईः या निर्गता निरिरित्यत्र प्रत्ययमात्रे तत्सम्भव इति वाच्यम् ? अतिकारीषगन्ध्यापुत्र इत्यत्र प्रत्ययमात्रस्य तदसम्भवादित्यर्थात् ।

स्त्रीप्रत्ययसामान्यग्रहणे इति-स्त्रीप्रत्ययत्वावच्छिन्नबोधक इत्यर्थः । उ-दाहरणं "गोस्त्रियोरुपसर्जनस्ये"ति । विशेषग्रहण इति-स्त्रीप्रत्ययत्वव्याप्यधर्मा-वच्छिन्नविषयताप्रयोजकपद इत्यर्थः । उदाहरणं "ष्यङः सम्प्रसारणमि"ति ।

वाचनिक्येवेति-भाष्यकृता ज्ञापकन्नोक्तमेतावता ज्ञापकन्नास्तीति न भ्रमि-तव्यम् ? अङ्गसंज्ञासूत्रे "यस्मात्प्रत्यय" इत्यत्र योगम्विभज्य "नेयङुवङ्" तिसूत्रा-दस्त्रीत्यनुवर्त्य प्रधानाऽप्रधानन्यायेन प्राधान्येन स्त्रीत्वबोधकप्रत्ययातिरिक्तप्र-त्यये गृह्यमाणे तदादीत्युपतिष्ठते तेनेयं सिद्धेति अङ्गसंज्ञासूत्रमेव ज्ञापकम्फलति । एतच्च पूर्वमेवोक्तम् ।

नन्वेवमिति—प्रत्ययप्रसङ्गादपवादसङ्गत्या प्रत्ययग्रहणपरिभाषायास्स्वीकार इत्यर्थः । तरबन्त इत्यर्थोऽपत्तौ गौरी ब्राह्मणितरेत्यादौ "घरूपकल्पे" तिसूत्रेण ह्रस्वोऽनिष्ट आपतेद् ब्राह्मणितरेत्यत्र च न स्यादिष्टोऽपि ह्रस्व इत्याशयः ।

नचैवं सति उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणमिति वचनस्य वैयर्थ्यमिति वाच्यम् ? रूपकल्पग्रहणेन तदन्तस्याऽग्रहणस्य बोधनेन चारिता-र्थ्यसम्भवात् ।

ननु परिभाषयैनया तरबन्तसमुदायस्य घसंज्ञाविधानाऽभावेऽपि "घरूप"-

इतिसूत्रे संज्ञानुवादेन विधानात्तत्र तदन्तग्रहणं दुर्वारं स्यादिति चेन्न ? परिभाषारम्भसामर्थ्यात् प्रदेशेष्वपि तदन्तविध्यभावकल्पनाश्रयणात् ।

नन्वत्र सामर्थ्यस्य न हेतुत्वकल्पनंश्रेयः पूर्वोक्तेनोत्तरपदाधिकार इति वाक्येनैव तत्र तदन्तविध्यभावसिद्धेरितिवाच्यम् ? तादृशज्ञापकस्य सजातीयाऽपेक्षत्वेन श्रावणप्रत्ययत्वविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकप्रत्ययबोधकम्पदं यत्र तत्रैव निषेधविधानात् । "ह्वद्यस्ये"तिलेखग्रहणेन तादृशश्रावणप्रत्ययत्वविषयतावच्छेदकानुपूर्व्यवच्छिन्नस्य यत्रोपादानन्तत्र न तदन्तविधिः किन्तूत्तरपदाधिकार इत्यस्यार्थस्याश्रयणाच्च ।

परिभाषार्थस्तु–संज्ञाविधौ संज्ञानिष्ठविधेयतानिरूपितसाक्षादुद्देश्यताप्रयोजकं यत्प्रत्ययमात्रवृत्तिविषयिताप्रयोजकं तत्तदादिविशेष्यकतदन्तविधेःप्रयोजकन्न भवतीति साक्षादुद्देश्यताया निवेशेनार्थवत्सूत्रे प्रत्ययपदेन तदन्तग्रहणम् ।

न चैतत्परिभाषाप्रवृत्तौ सत्यामेव प्रत्ययवृत्तिविषयताप्रयोजकपदस्य साक्षादुद्देश्यताप्रयोजकत्वं यदाच साक्षादुद्देश्यताप्रयोजकत्वन्तदा तत्परिभाषाप्रवृत्तिरित्यन्योन्याश्रय इति वाच्यम् ? प्रत्ययग्रहणपरिभाषाप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्र संज्ञानिष्ठविधेयतानिरूपितप्रत्ययमात्रवृत्तिसाक्षादुद्देश्यताप्रयोजकत्वप्रकारकसम्भावना तत्र तदन्तविधिर्न्न भवतीत्यर्थाङ्गीकारेणाक्षतेः ।

अथवा संज्ञानिष्ठविधेयतया साक्षान्निरूपिता प्रत्ययत्वव्याप्यधर्मेण साक्षादवच्छिन्ना या उद्देश्यता तत्प्रयोजकशास्त्रघटकं प्रत्ययबोधकम्पदन्तदन्तबोधकन्न भवतीति विधेयतया साक्षान्निरूपतायाः प्रत्ययत्वेन साक्षादवच्छिन्नत्वाभावादर्थवत्सूत्रे न तदन्तविधिनिषेधः "कृदतिङि"त्यादौ च निषेधः ।

किञ्च संज्ञानिष्ठविधेयतया साक्षान्निरूपितप्रत्ययत्वव्याधर्मावच्छिन्नोद्देश्यताप्रयोजकं पदन्तदन्तबोधकन्न भवतीत्यप्यर्थः । प्रातिपदिकसंज्ञानिष्ठविधेयतया साक्षान्निरूपितत्वन्नास्ति प्रत्ययत्वावच्छिन्नोद्देश्यताया इति निषेधाऽप्रवृत्त्या तदन्तविधानम् ।

वस्तुतस्तु "प्रयोजनं सर्वनामाव्ययसंज्ञायामि"ति भाष्यवार्त्तिकबलेन शब्दस्वरूपम्बिशेष्यमादाय तदन्तविधिरिति सरयूपारीणशुक्लाः । "कृदतिङि" त्यादौ त्वतिङ्ग्रहणसामर्थ्यात्तदन्तविध्यभावकल्पनात् ।

किञ्च "कृदतिङि"त्यत्र तिङन्ततदादिभिन्न इत्यर्थापत्तौ प्रत्ययमात्रस्य कृत्संज्ञायाम् "अकृत्सार्वधातुकयोरि"त्यत्र कृद्ग्रहणेनैव सिद्धौ सार्वधातुकग्रहणसामर्थ्यात्तदन्तविध्यभावकल्पनाच्च ।

नन्वेवमर्थे "षःप्रत्ययस्ये"तिसूत्रेऽपि तदन्तविध्यापत्तिः प्रत्ययान्ततदाद्यादेःष इत्यर्थादेव च षणामित्यादौ प्रकृतिषकारस्येत्त्वं स्यात् "प्राचां ष्फस्तद्धि

सुप्तिङन्तमित्यन्तग्रहणमस्यां ज्ञापकम् । न च प्रत्ययये।ःपदसंज्ञाया-

त''इत्यादौ नेत्त्वं स्यादिति चेन्न ?तत्र प्रत्ययपदस्य प्रत्ययबोधकसूत्रस्थष्फादिबोध-कत्वेन प्रत्ययबोधकत्वाऽभावेन क्षतिविरहात् ।''प्रत्ययलक्षण''सूत्रबलेन प्रत्यया-वयवे प्रत्ययत्वव्यवहार इति सिद्धान्तेनेत्संज्ञानिष्ठाविधेयतया साक्षान्निरूपितायाआ-दिषत्वावच्छिन्नविषयताया अपि प्रत्ययत्वव्याप्यधर्मावच्छिन्नेन तत्प्रयोजकं ''षः प्रत्ययस्ये''तिसूत्रन्तद्घटकप्रत्ययपदस्य साक्षादुद्देश्यताभावेनाक्षतेश्च । कृत्तद्धित-समासाश्चेत्यत्र तु ''कृत्तद्धितान्तश्चैवार्थवदि''तिभाष्येण सात्पदाद्योरित्यत्र साद्-ग्रहणेन''युजेरसमास''इतिसूत्रे तदन्तविधिः ''घकालतनेषु कालनाम्नः''तद्धितांशे तदन्तविधिःअर्थवद्ग्रहणानुवृत्तिसामर्थ्यात्तदन्तविधिरिति वा ।''तद्धितश्चासर्वंवि-भक्तिरि''त्यत्र तु असर्वविभक्तिम्बिशेष्यमादाय तदन्तविधिरेनया तु तदादिवि-शेष्यकतदन्तविधेरेव निषेधविधानात् । अत्युच्चैसावित्यादौ लुग्वारणाय''अ-व्ययादाप्सुप''इत्यत्र विहितविशेषणस्यावश्यकत्वेन केवलाऽव्ययमात्रस्याव्ययसं-ज्ञायाम्फलाभावाच्च । डतरडतमवतुडतिप्रत्ययानान्तु ''प्रत्ययः परश्च''तिसूत्र-भाष्ये ''न केवला प्रकृतिः प्रयोक्तव्या नापि केवलः प्रत्यय''इतिन्यायेन सर्वना-मसंज्ञा । केवलप्रत्ययमात्रेणाऽमन्त्रणाऽसम्भवादामन्त्रितेति महासंज्ञाबलेनाम-न्त्रणं येन भवति तस्यैवामन्त्रितसंज्ञेति व्याख्यानसामर्थ्येन तदन्तविधिः । समा-ससंज्ञायान्तु समर्थपरिभाषया तदन्तविधिः, ''सुपिस्थ'' इत्यादौ सुब्ग्रहणे तद-न्तस्योपपदसंज्ञार्थो यत्नः कर्त्तव्यः ''कृन्मेजन्त''इत्यत्र तु अव्ययेतिमहासंज्ञया तदन्तविधिः ।

केचित्तु-तत्तद्विधिप्रदेशेष्वेव तरप्तमपोऽपाठेन ह्रस्वादिसिद्धौ नेयम्प-रिभाषेत्यूचुः ।

मान्यास्तु-प्रत्ययग्रहणपरिभाषया तदादीतिप्रातिपदिकमात्रोपस्थितिस्तस्य यथा''एङ्ह्रस्वात्सम्बुद्धेरि''तिसूत्रेऽन्वयानुरोधेन पञ्चम्यन्तता तथा यत्र यत्रास्या-ऽप्रवृत्तिरिष्टा तत्र तत्र सर्वत्र पञ्चम्यन्तता । एवञ्च तदन्तविधेऽप्राप्तिरेव ना-स्तीति । तदादेऽपञ्चम्यन्तत्वकल्पने लाघवमिति नेयम्परिभाषा कार्येति क-ल्पितवन्तः ।

केचित्तु-''परौ तरप्तमपौ घ''इतिन्यासः कस्मात्परावित्याकाङ्क्षया प्रकृते-ऽपरौ ।तथाच पञ्चम्यन्तत्वेन ''प्रत्ययग्रहणे चाऽपञ्चम्या''इतिनिषेधान्न तद-न्तविधिः ।

किञ्च यत्र घस्तत्र तरप्तमपावुपतिष्ठेते इति परिभाषास्वरूपमेव नतु संज्ञा-स्वरूपमिति तावतापि निर्वाह इत्यूचुः ।

अन्तग्रहणमस्या ज्ञापकमिति—एतत्परिभाषाया अभावे तदादिरूपवि-शेष्यमादाय तदन्तविधिना सुबन्ततिङन्ततदादीत्यर्थस्यान्तग्रहणाऽभावेऽपि

मपि प्रत्ययग्रहणपरिभाषया तदन्तग्रहणसंभवात् ज्ञापितेऽपि फला-भाव इति वाच्यम्?

पदसंज्ञायाः स्वादिष्ववितिविषये प्रकृतिनिष्ठतया पदग्रहणस्य प्रत्यय-मात्रग्रहणत्वाभावात्। सुप्तिङन्तमिति सूत्रे भाष्ये स्पष्टा॥ २७॥

नन्ववतप्ते नकुलस्थितमित्यादौ नकुलस्थितशब्दस्य क्तान्तत्वाभावा-त्समासो न स्यादत आह—

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्॥ २८॥

---

लाभसम्भवादिति मौक्तिकतत्त्वम्।

न च सुबन्ततदाद्यन्तं पदसंज्ञकमित्यर्थविधानार्थमन्तग्रहणम्फलन्तु रामः कृष्ण इति विशिष्टसमुदायस्य पदसंज्ञायां "सर्वस्यद्वे"नित्यवीप्सयोरि"तिद्वि-त्वसिद्धिरेवेति न पदसंज्ञाया नैरर्थक्यमिति वाच्यम्? "यस्मात्प्रत्ययविधिरि"ति सूत्रात्तदादीत्यनुवर्त्यसुबन्ततदाद्यन्ततदादेरित्यर्थेन समुदायस्य पदसंज्ञाऽप्राप्त्या-ऽन्तग्रहणचारिताथ्योभावात्।

किञ्च अदृग्धदहनन्यायेन प्रत्ययग्रहणपरिभाषया तदादीत्यंशमात्रोपस्थि-तिरिति व्याख्याकरणेन मूलसङ्गतेश्च।

"सुप्तिङन्तमि" तिसूत्रे भाष्ये स्पष्टैवेति—एतद्भाष्यप्रामाण्यादेव पूर्व-सूत्रात्तदादीत्यन्तानुवृत्तिरस्वरितत्वान्नाभिमतेति सूच्यते। नन्वेवं पूर्वसूत्रभा-ष्यविरोधःतत्र धात्वादिसंज्ञावत्परिभाषाफलत्वेनानन्तरपदसंज्ञाया अनुल्लेख-नेन तदनुवृत्तेरेव तदभिमतत्वलाभ इति चेन्न?तथा सिद्धिसम्भावनया तस्या नासाधारणफलत्वमिति तात्पर्य्येण तत्त्यागात्। समासस्य फलत्वकथनेन तुल्य-तया तस्या अप्युक्तप्रायत्वात्। "अनुनासिकात्पर"इत्यनेनेव "परश्चे"त्यनेन प्रत्ययानां प्रकृत्यवयवत्वबोधनेन चरमावयवत्वेन बोधकान्तशब्देन बहुव्रीहिणा सुबाद्यवयवकावयविरूपसमुदायस्यैव तेन ग्रहणेन न्यूनाधिकव्यावृत्तिसिद्ध्या तदनुवृत्तेर्न फलमित्यभिधानाच्च।

नन्वेवमन्तग्रहणसाफल्ये"सुप्तिङि"ति सूत्रभाष्याऽसङ्गतिरिति चेन्न? तस्य तत्र तावन्मात्रफलस्यान्यार्थमावश्यकोक्तपरिभाषयैव सिद्ध्याऽन्तग्रहणव्यर्थ-मिति तात्पर्य्यपरत्वात्। "सनाद्यन्ता धातव"इत्यत्रान्तशब्दः परसमीपबो-धक इति न धातुसंज्ञाफलपरभाष्यविरोधः। तथाच पूर्वसूत्रात्तदादीत्यस्यान-नुवृत्तिरेव फलाभावादस्वरितत्वाच्चेति केषाञ्चिद्विचारः।

नन्ववतप्ते नकुलस्थितमिति–नन्वित्यस्यैवमपीति शेषः। क्तान्तत्वा-भावादिति–प्रत्ययग्रहणपरिभाषयेतिभावः। "क्षेपे"इतिसूत्रे प्रत्ययग्रहणपरिभा-षया क्तान्ततदादिप्रकृतिकसुबन्तेन सह सप्तम्यन्तं समस्यत इति फलितार्थे स्थित-

अस्याश्च कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके "गतिरनन्तर" इति सूत्रेऽनन्तरग्रहणं ज्ञापकम् ।

तद्ध्यभ्युद्धृतमित्यादावतिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद् व्यर्थं सदस्या ज्ञापकम् ।

नचाभ्युद्धृतमित्यादौ परत्वाद् गतिर्गतावित्यनेनाभेर्निघात एवेति वाच्यम् ? पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः ।

अनन्तरग्रहणे कृते तु तत्सामर्थ्याद्व्याक्षिप्तधातुनिरूपितमेवान्तर्यं गृह्यते इति न दोषः ।

न चाभ्युद्धृतमित्यादावभिना समासेऽनन्तरस्योदः पूर्वपदत्वाभावेऽपि स्वरार्थं तदिति वाच्यम् ? कारकाद्दत्तेति सूत्रे कारकादिति योगं विभज्य तत्र गतिग्रहणमनुवर्त्य कारकादेव परं गतिपूर्वपदं क्तान्तमन्तोदात्तमितिनियमेन थाथादिस्वराप्राप्त्या कृत्स्वरेणोद उदात्तत्वसिद्धेः, तस्मादनन्तरग्रहणं व्यवहितनिवृत्त्यर्थमेवेति ज्ञापकमेव ।

यत्र गतिकारकसमभिव्याहृतं कृदन्तं तत्र कृद्ग्रहणे तद्विशिष्टस्यैव

---

शब्दस्यैव क्तान्ततदादिप्रकृतिकत्वेन नकुलस्थितशब्दस्य क्तान्ततदादित्वाभावात्समासो न स्यादिति तात्पर्यम् । अस्याश्चेत्यस्य ज्ञापकमित्यत्रान्वयः । कर्मणि यः क्तस्तदन्त इत्यर्थः । तत्त्वमुपपादयति तद्धीति । अनन्तरग्रहणं हीत्यर्थः । वारणार्थमित्यस्य क्रियत इति शेषः । उद्धृतस्य तच्छब्दस्य वा प्राप्तौ—अभेस्स्वराऽप्राप्तौ ।

अत्र परिभाषार्थश्च—लक्षणाशक्तिसम्पन्नः । नच वैयाकरणैर्लक्षणाख्यशक्तिरखण्डितेति वाच्यम् ? तावताऽपि तत्राऽप्रसिद्धाख्यशक्तेरेव संग्रहणात् । एवञ्च कृन्मात्रनिष्ठविषयताप्रयोजकम्पदं कृद्विशिष्टे लाक्षणिकम् । वैशिष्ट्यञ्च स्वनिष्ठचरमावयवतानिरूपकत्व—स्वविशिष्टाऽघटितत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वेतरत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाऽव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन । समन्वयश्च स्वं कृदिति तन्निष्ठेत्याद्यूह्यः । किञ्च कृद्विशिष्टे कृदन्ततदादित्वाऽऽरोपः वैशब्द्यानि पूर्वोक्तान्येवेति ।

अत्र किञ्चिद् विलक्षणम् ।

पदात्परत्वाभावेन चेति—शेखरोऽनुपपन्नः—"कुत्सने च सुपी"त्यतः प्रागेव पदादित्यस्य निवृत्तेः "गतिर्गतावि"त्यस्य ततः परत्वात् ।

अभिना समास इति—धृतशब्दस्य उच्छब्देन गतिसमासे पुरोहितमितिवद् गतिस्वरेणाऽऽद्युदात्तोद्धृतशब्दस्येति भावः ।

ग्रहणमपिशब्दात्तदसमभिव्याहृतस्य केवलस्यापीति तदर्थः । अन्यथा-नया कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहणपरिभाषाया बाध एव स्या-दित्यपिग्रहणम् । अत एव सांकौटिनमिति गतिकारकोपपदानामिति कृद्ग्रहण इति च परिभाषाभ्यां कृदन्तेन समासे कृते विशिष्टादेवाणि सिद्ध्यति न तु सङ्कौटिनमितीति पुंयोगादिति सूत्रे भाष्योक्तं सङ्गच्छते । अन्यथा तत्र केवलकुटिनित्येतस्यापीनुणन्तत्वात्ततोऽपि पाक्षिकदोषो दुर्वार एव स्यात् ।

स्पष्टं चेदं सर्वं समासे ऽनञ्पूर्वेति सूत्रे भाष्यकैयटयोः । गतिरनन्तर इत्यत्र तु गतेः पूर्वपदस्य क्तान्त उत्तरपदे परे कार्यविधानात्तत्समवधा-नेऽपि केवलस्य क्तान्तत्वेन ग्रहणं बोध्यम् ।

इयं च कृद्विशेषग्रहणे, कृत्सामान्यग्रहणे च न कृद्ग्रहण इति, अनु-पसर्जनादिति सूत्रे भाष्ये स्पष्टम् ॥ २८ ॥

पदङ्गाधिकारे तस्य च तदन्तस्य च ॥ २९ ॥

पदमङ्गं च विशेष्यं विशेषणेन च तदन्तविधिः । येनविधिरित्य-स्यायं प्रपञ्चः । तेनेष्टकचितं पक्वेष्टकचितमित्यादावेिष्टकेषीकामालानां चितेति ह्रस्वो महान् परममहान् परमातिमहानित्यादौ सान्तमहत इति दीर्घश्च सिद्धः । अतएव तदुत्तरपदस्येति पाठो ऽयुक्त इति भाष्ये स्पष्टम् ।

अत्र पदशब्देनोत्तरपदाधिकारः केवलपदाधिकारश्च । पादस्य पदाज्यातीत्यत्र न तदन्तग्रहणं लक्ष्यानुरोधादिति सर्वं येन विधिरि-त्यत्र भाष्ये स्पष्टम् ॥ २९ ॥

---

अपिशब्दात्तदसमभिव्याहृतस्येति–ननु ब्राह्मणमानय शूद्रमप्यानये-त्युक्तौ लोके ब्राह्मणसत्त्वेऽपि शूद्रानयनम्व्यवहारसिद्धम् ननु तदसत्त्व एवैवञ्च तदसमभिव्याहृतेति कथमिति चेन्न ? अग्रिमवक्ष्यमाणभाष्यात्तदसमभिव्या-हृतेत्यस्य लाभात् । अन्यथा—अपिशब्दाऽभावे । परत्वादित्यस्याऽपवाद-त्वादित्यर्थः । मूलार्थस्तु नान्यत्रास्याश्चारिताथ्योऽभावात् ।

ननु गतिसमभिव्याहारे केवलकृदन्तस्य ग्रहणाऽभावे उद्धृतम्पुरोहितमि-त्यादौ "गतिरनन्तर" इति न स्यादत आह गतिरनन्तर इत्यत्रेति ।

कृद्विशेषग्रहणे क्षेप इत्यादौ–सामान्यग्रहणे "कर्त्तृकरणे कृता बहु-लमि"त्यादौ ।

ननु कृद्ग्रहण इति—अत एव कौम्भकारेय इत्यादीनां सिद्धिर्द्वितीयत-दन्तविधेः फलं "टिड्ढे"तिसूत्रभाष्ये ।

तदन्तविधिप्रसङ्गाऽजराया इत्यादौ तदन्तविधिबोधिताम्परिभाषामाह पदा-ङ्गाधिकार इति । तदन्तग्रहणमिति–अत एव दृषपादोपहत इत्यादौ न पदादेशः।

नन्वेवमस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादत आह-

**व्यपदेशिवदेकस्मिन् ॥ ३० ॥**

निमित्तसद्भावाद्विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्य-

---

नन्वेवमिति--पदाङ्गाधिकारे सर्वत्र तदन्तविधौ एभिरित्यादावदन्तत्वा-भावादैत्वं न स्यादतो(१) व्यपदेशिवदेकस्मिन्निति परिभाषामवतारयति नन्वे-वमित्यादिनेति ।

पदाङ्गाधिकार इति परिभाषाघटकस्येत्येतदुपपादकत्त्वादुपोद्घातसङ्गत्याऽह नन्वेवमिति तात्पर्यं केचिद्विवृण्वते ।

नन्वस्याऽपत्यमिरित्यादौ(२) न दोषो"येन विधिरि"तिसूत्रे "स्वंरूपं शब्दस्ये"तिसूत्रात्स्वमित्यस्यानुवृत्त्या षष्ठ्यन्तत्वेन विपरिणामात्स्वस्य च संज्ञेति द्वितीयसूत्रार्थात् । नच "स्वंरूपमि"तिसूत्रम्भाष्ये प्रत्याख्यातमेवञ्च कथन्तद-नुवृत्त्या खण्डनयज्ञसिद्धिरिति वाच्यम् ? प्रत्याख्यानपक्षे "स्वस्य चे"ति पा-ठ्यमिति भाष्यादिति चेन्न ? व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषयाऽप्रा-प्तव्यपदेशिवद्भावस्य सिद्धये एव "स्वस्य चे"त्यस्य पाठाभिधानात् । अत एव तदपवादत्वेनोत्सर्गसमानदेशा अपवादा इति न्यायेन "उगिद्वर्णग्रहणवर्ज-मि"तिसिद्धान्तसङ्गत्या प्रकृते तदप्राप्तेः ।

---

( १ ) व्यपदेशिवदेकस्मिन्निति—यद्धर्मावच्छिन्नेऽतिदेशश्चिकीर्षितस्तद्धर्मावच्छि-न्ननिरूपितधर्मस्यैवातिदेशः, पूर्वोक्तधर्मिग्राहकलोकदृष्टान्तसाजात्यात् । तेन रामशब्दे न सर्वशब्दातिदेशः, तस्य तन्निरूपितत्वाभावात् । दधिमध्वित्यादावजव्यवहितपूर्व-त्वातिदेशेन यणादिप्रसङ्गस्तु न भवति ? "इको यणची"तिसूत्रेऽचीति ग्रहणसामर्थ्ये-न अनतिदिष्टाच्परत्वस्यैव यणादिप्रवर्त्तकत्वाभ्युपगमेनाक्षतेः ।

वस्तुतस्तु परिभाषायामेकग्रहणं संख्यापरमेव परस्परनिरूप्यनिरूपकभावापन्न-योर्विभिन्नाधिष्ठानावस्थितिस्वभावयोर्द्धर्मयोरेकस्मिन्धर्मिण्यारोपेणावस्थानमनया प-रिभाषया बोध्यते । सामान्ये पक्षपाताल्लोकन्यायेनाप्येतावानर्थ आश्रयणीयो नत्व-सहायपरत्वमतिदेशस्य ।

तथाच स्वस्यैव स्वनिरूपितमवयवित्वमवयवत्वञ्चात इयाय आभ्यामित्यादि सिद्ध्यति । अस्यां कल्पनायाम्प्रमाणन्तु "निजौ चत्वार एकाच" इति भाष्यमत एवै-कशब्दस्याऽसहायार्थकत्वाभावादेव च प्रयोजनविचारो भाष्यकृता न कृत इत्यलम् ।

( २ ) इरियानित्यादौ अदन्तप्रातिपदिकेति-अयंग्रन्थो न युक्ततरः । आनु-मानिकस्थानिवद्भावेन यथोद्देशे प्राक्प्रवृत्तसंज्ञाया आरोपेण निर्वाहः । नहि व्यवस्थि-तपक्षयोरन्यतरेण लक्ष्यसिद्धौ पक्षान्तरेणाऽनिष्टापादनं युक्तम् । तथाच नैतत्फलमि-ति मान्थाः ।

पदेशी। यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्तते कार्यं प्रतीत्येकस्मिन्नसहायेऽपि तत्कार्यं कर्तव्यमित्यर्थः। तेनाकारस्याप्यदन्तत्वान्न क्षतिः।

---

अयं ग्रन्थाशयः—सूत्रकारमते स्वघटकाव्यवहितोत्तरत्व-स्वघटकाऽव्यवहितपूर्वत्वाऽभाववत्त्व-स्वघटकत्वैतत्त्रितयसम्बन्धेन यत्किञ्चित्समुदायविशिष्टत्वमन्तत्वम्। स्वविशिष्टत्वमादित्वम्, वैशिष्ट्यञ्च स्वघटकाऽव्यवहितपूर्वत्वस्वघटकाऽव्यवहितोत्तरत्वाऽभाववत्त्वस्वघटकत्वैतत्त्रितयसम्बन्धेनान्तत्वादित्वयोऽपरिष्कारः। अत एवा"द्यन्तवदेकस्मिन्नि"ति पाणिनिस्सूत्रयाञ्चकार। तथाच स्वस्मिन् स्वघटकत्वस्वघटितत्वे वर्त्तेते किन्तु स्वस्मिन् स्वादित्वस्वान्तत्वे न स्तः। अत एव धुक् इयायेत्यादौ भष्भावद्विर्वचनसिद्धये "व्यपदेशिवदेकस्मिन्नि"ति परिभाषातिरिक्तमुपायान्तरन्नोक्तम्भगवता भाष्यकृतेति।

आद्यन्तवदेकस्मिन्निति—सूत्रभाष्ये वार्त्तिककारस्तु "अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोरसिद्धमि"ति वार्त्तिकयाञ्चकार। तन्मते स्वविशिष्टत्वमन्तत्वम्, वैशिष्ट्यञ्च स्वघटकत्वस्वघटकाऽव्यवहितपूर्वत्वाऽभाववत्त्वैतदुभयसम्बन्धेन। स्वविशिष्टत्वमादित्वम् वैशिष्ट्यञ्च स्वघटकत्व-स्वघटकाऽव्यवहितोत्तरत्वाभाववत्त्वैतदुभयसम्बन्धेन। तथाचैतन्मते आभ्याम् एभिरित्यादावेत्वादिसिद्धौ "आद्यन्तवदेकस्मिन्नि"ति सूत्रन्नादर्त्तव्यमिति स्वस्मिन्नप्याद्यन्तत्वयोस्स्वघटितत्वस्वघटकत्वयोरसत्त्वात्। वार्त्तिके आद्यन्तयोरित्यस्यादित्वान्तत्वलक्षणयोरित्यर्थः। अपूर्वानुत्तरलक्षणत्वादित्यस्य वार्त्तिकावयवस्यादित्वान्तत्वलक्षणयोरित्यर्थः स्वघटकावधिकपूर्वत्वस्वघटकावधिकोत्तरत्वस्य चाऽनिवेशादित्यर्थः इति सयुक्तिकम्वार्त्तिककारमतम्।

भाष्यकारमते तु—स्वविशिष्टत्वमन्तत्वम् वैशिष्ट्यञ्च स्वघटकत्व-स्वघटकवर्णध्वंसानधिकरणक्षणवृत्तित्वैतदुभयसम्बन्धेन। स्वविशिष्टत्वमादित्वम्। वैशिष्ट्यञ्च स्वघटकत्व-स्वघटकवर्णप्रागभावानधिकरणक्षणवृत्तित्वैतदुभयसम्बन्धेन। अत्र घटकत्वञ्च स्वविशिष्टत्वम्, वैशिष्ट्यञ्च स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्यापकतावत्त्व-स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्याप्यत्वाभाववत्त्वैतदुभयसम्बन्धेन। एवं स्वविशिष्टत्वं घटितत्वम्। वैशिष्ट्यञ्च स्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकतानिरूपितविषयित्वसम्बन्धावच्छिन्नव्याप्यतावत्त्वस्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्याप्यतानिरूपितस्वनिष्ठविषयित्वसम्बन्धावच्छिन्नव्यापकत्वाभाववत्त्वैतदुभयसम्बन्धेन। एवञ्च स्वस्मिन् स्वघटकत्वं स्वघटितत्वञ्च नैवास्तीति "व्यपदेशिवदेकस्मिन्नि"ति परिभाषारम्भो भाष्यमत इति भाष्यकाराऽभिप्रायः।

एकस्मिन्नित्युक्तेः सभासन्नयने आकारस्य नादित्वं दरिद्राधाता-

अत्रैव स्पष्टार्थम्प्रकारान्तरम् । तद्विषयताव्यापकविषयतावत्त्वं घटक-त्वम् । विषयताविशिष्टविषयतावत्त्वं घटकत्वम् इति फलितार्थः । वैशिष्ट्यञ्च स्वभिन्नत्वस्वव्यापकत्वमित्युभयसम्बन्धेन । यथा वह्न्यभावज्ञानीयविषयता-व्यापकत्वस्य बह्निविषयतायां सत्त्वेन बह्नेर्वह्न्यभावघटकत्वम् ।

केचित्तु अवच्छेदकत्वनाम्ना घटकत्वम्वदन्ति । तथाहि, साध्याभावाधिक-रणत्वञ्च साध्यवत्ताग्रहविरोधिताघटकसम्बन्धेन विवक्षणीयम् । साध्याभाव-प्रतियोगित्वञ्च साध्यताघटकसम्बन्धेन विवक्षणीयम् इत्यादौ घटकत्वम् ।

तन्त्रशास्त्रिणस्तु—योजकत्वं घटकत्वमिति नाम्नाऽभिदधति, तद्भेदाश्च ।

धावको भावकश्चैव योजकश्चांशकस्तथा ।
दूषकस्तावकश्चैव षडेते घटकास्स्मृताः ॥ इति ।

घटितत्वञ्च—तद्विषयताव्याप्यविषयतावत्त्वम् । विषयताविशिष्टविषय-तावत्त्वमिति फलितार्थः । वै० स्वव्याप्यत्वस्वव्यापकत्वाऽभाववत्त्वमित्युभयस-म्बन्धेन यथा वह्न्यभावविषयताया बह्निविषयताव्याप्यत्वेन वह्न्यभावस्य वह्नि-घटितत्वम्, यथा वा सामान्यनिरुक्तौ विशिष्टान्तराऽघटितत्वं प्रतियोगिवैयधि-करण्यघटितत्वमित्यादौ घटितत्वम् । रेफघटितो रामशब्दः रामशब्दघटको रेफः। यत्र यत्र रामशब्दस्तत्र तत्र रेफः । पकारादौ रामशब्दादिघटकत्ववारणाय घटकत्वलक्षणे व्यापकत्वनिवेशः । स्वस्मिन् स्वघटकत्ववारणाय व्याप्यत्वाभाव-निवेशः । एवं घटितत्वेऽपि बोध्यम् । प्रकृतेऽस्यापत्यमिरित्यादौ अद्विशिष्टत्वरू-पमदन्तत्वमकारे नास्ति, द्वितीयसम्बन्धसत्वेऽपि स्वघटकत्वरूपसम्बन्धाऽभावात् ।

एवञ्चादन्तप्रातिपदिकनिमित्तकेञ् न स्यादत—परिभाषेति मूलावतरणाशयः।

सभासन्नयनेत्यादिव्यावर्त्यत्रयप्रदर्शनेन रामादिशब्दे जराशब्दान्तत्ववि-शिष्टे जराशब्दान्तत्वातिदेशवारणाय च स्वविशिष्टे स्वस्यातिदेश इति भावः। वैशिष्ट्यञ्च स्वाश्रयाऽघटकत्वस्वाश्रयाऽसमभिव्याहृतत्वस्वाश्रयाऽघटितत्वस्वमु-खप्रविष्टधर्मवत्त्वमिति चतुष्टयसम्बन्धेन । एक(१)स्मिन्नित्यस्याऽसहाय इत्यर्थः। सभाऽकारेऽतिदिश्यमानसभासन्नयननिरूपितादित्वधर्मवत्सभसमभिव्याहृतत्वेन द्वितीयसम्बन्धाऽभावादसहायत्वाऽभावेन न तन्निरूपितादित्वम् । तृतीयसम्ब-न्धाऽभावेनाऽसहायत्वाभावेन सभासन्नयनशब्दे न वृद्धत्वातिदेशः । अतिदिश्य-मानवृद्धत्वधर्मवद्भासन्नयनघटितत्वात् । आसन्नयनशब्देन प्रातिपदिकत्वा-रोपः । प्रथमसम्बन्धाऽसंघटनात् अतिदिश्यमानप्रातिपदिकत्ववत्सभासन्नयन-घटकत्वात् । एवं रामशब्दे न जराशब्दत्वातिदेशः चतुर्थसम्बन्धाऽसंघटनात् । स्वञ्जराशब्दान्तत्वं तन्मुखप्रविष्टं जरात्वं तद्वत्ता रामशब्दे नास्तीत्यसहायत्वा-भावेन न रामशब्दस्य जरसादेशः ।

विकारस्य नान्तत्वम् । अन्यथा सभासन्नयने भव इत्यर्थे वृद्धाच्छः दरिद्रातेरिवर्णान्तलक्षणोऽस्य स्यात् ।

---

मुखप्रविष्टत्वञ्च स्वघटकनिष्ठा याऽवयवत्वव्याप्यधर्मावच्छिन्ना विशेष्यता तन्निरूपितप्रकारतावच्छेदकत्वम् । अदन्तत्वमुखप्रविष्टमत्वं जराशब्दान्तत्वमुखप्रविष्टं जरात्वम् । धातौ तु धातुभिन्नत्वन्नानयाऽतिदेष्टुं शक्यते ? अवयवत्वव्याप्यत्वाऽभावात् । तथैव भेदघटितधर्माणामतिदेशो न भवति । एवं दरिद्राशब्दे दरिद्राशब्दघटकैकारे दरिद्रानिरूपितान्तत्वन्नायाति । तथैव दरिशब्दे धातुत्वन्नायाति, तथैव दरिद्राशब्दे नेवर्णान्तत्वातिदेश इति त्रयाणां सम्बन्धानाम्फलमिदमपि ।

अनया परिभाषया हरिषु भानुष्वित्यादौ सो॰पदत्वातिदेशेन "सात्पदाद्योरि"तिषत्वनिषेधस्तु न ? पदत्ववद्घटकत्वेनाऽसहायत्वाऽभावात् । ननु स्वमुखप्रविष्टधर्मत्त्वावनिवेशे तण्डुलम्पचतीत्यादौ स्तोकम्पचतीत्यादौ फलस्यापि व्यपदेशिवद्भावेन फलसम्बन्धित्वात्फलाश्रयत्वमिति शेखराशय॰कथमिति चेन्न ? तादात्म्यसम्बन्धस्याऽपि फलतावच्छेदकसम्बन्धत्वस्वीकारात् ।

अत्र मान्यास्तु—अस्मिन्कल्पे सभासन्नयने वृद्धप्रातिपदिकत्वस्य दरिद्राधाताविवर्णान्तधातुत्वातिदेशस्य दुर्वारत्वा"न्निजौ चत्वार एकाच" इति भाष्याऽसङ्गत्या च पूर्वोक्तप्रकारो न व्यायानिति प्रकारान्तरमनया परिभाषया स्वस्मिन् स्वघटकत्वस्वघटितत्वयोरेवातिदेशो भाष्यसम्मतः । परिभाषार्थस्तु एकस्मिन्—घटकत्वघटकव्यापकत्वसम्बन्धे । घटितत्वघटकव्याप्यत्वसम्बन्धे च सति व्यपदेशिवत्कोऽर्थ॰पूर्वोक्तसम्बन्धद्वयविशिष्टवत्कार्य्यम्भवति । तत्र यथा घटकत्वघटितत्वप्रयुक्तं कार्य्यन्तथा एकस्मिन्नपि सम्बन्धे सति भवतीति फलितार्थः ।

तथाच अन्तत्वम् आदित्वम् एकाच्त्वम् धात्ववयवत्वम् इत्यादिव्यवहारा अतिदेश्या भवन्ति । अस्मिन्कल्पे "निजौ चत्वार एकाच" इति भाष्यमपि सङ्गच्छतेऽसहायत्वनिवेशाऽसत्वात् ।

अत्र किञ्चिद्विलक्षणम्—नन्वनया परिभाषया पदप्रतिपाद्यधर्मस्यैवातिदेशो भवतीति कल्पना नतु वृद्धप्रातिपदिकत्वादेरतिदेश इति कथमयम्प्रकारइति चेन्न ? एवं कल्पने रामशब्दादावपि जराशब्दान्तत्वातिदेशाऽपत्तेर्दुर्वारत्वात् ।

नच यत्र विशेषणीभूतो धर्मोऽतिदेशमन्तरा सिद्धस्तत्र तद्घटितधर्मस्यैवाऽनयाऽतिदेश इति न तत्र दोष इति वाच्यम् ? जराशब्दादाचारक्विबन्तात्कर्तरि क्विपि नपुंसकह्रस्वे स्थानिवद्भावमन्तरा जराशब्दत्वस्य स्वतस्सिद्धत्वाभावेन ततो जसि जरांसीत्यादौ जरसादेशानापत्तेः । दधीत्यत्राच्त्वस्य स्वतस्सिद्धत्वेन तद्घटिताजव्यवहितपूर्वत्वस्यातिदेशेन यणाद्यापत्तेश्च ।

अत एव हरिष्वित्यादौ सोः पदत्वं न । लोकेऽपि बहुपुत्रसत्त्वे नैकस्मिन् ज्येष्ठकनिष्ठत्वादिव्यवहारोऽयं मे ज्येष्ठः कनिष्ठो मध्यम इति किं त्वेकपुत्रसत्त्व एव ।

अनेन चाशास्त्रीयस्याप्यतिदेशः । अत एव इयायेत्यादावेकाच्त्व-निबन्धनद्वित्वसिद्धिः । अत एव भवतीत्यादौ भू इत्यस्याङ्गत्वम्, इयानित्यादौ कार्यकालपक्षे तद्धितान्तनिबन्धनप्रातिपदिकत्वं च सिध्यति । अन्यथा यस्माद्विहितस्तदादित्वाभावान्न स्यात् ।

यत्तु यो ऽर्थवांस्तत्रार्थस्य त्यागोपादानाभ्यामेकाज्व्यपदेशो यथे-

ननु व्यपवर्गधर्मस्यानया नातिदेश इति कल्पनयैव न दोष इति चेन्न ? एवं कल्पनेऽपि रामेणेत्यादौ रामेत्यत्र पूर्वत्वस्य स्वतस्सिद्धत्वेन पूर्वपदत्वस्यानेनातिदेशे "प्रातिपदिकान्तनुम्विभक्तिषु चे"ति णत्वविकल्पाऽपत्तेः । स्तोकादागतस्स्तौक इत्यत्रापि चरमावयवत्वस्य स्वतस्सिद्धत्वेन समासचरमावयवत्वरूपोत्तरपदत्वस्यानयाऽतिदेशे "पञ्चम्यास्स्तोकादिभ्य" इति सूत्रेणालुगापत्तेश्च ।

नच व्यतिसे इः इयानित्यादौ पूर्वं घटितत्वघटकत्वयोरेवानयाऽतिदेशेन तिङन्ततदादित्वतद्धितान्ततदादित्वादेरभावेन कथम्पदत्वमिति वाच्यम् ? यथोद्देशपक्षे जातां संज्ञामादाय क्षतिविरहात् । नच कार्यकालपक्षे दोषः ? अन्यतरपक्षेण लक्ष्यसिद्धौ पक्षान्तरेण दोषदानस्यानौचित्यात् । कार्यकालपक्षेऽपि इः इयान् व्यतिसे इत्यादौ तद्धितान्ततदादित्वतिङन्ततदादित्वादीनां स्थानिवत्सूत्रेणाप्यानयनस्य कर्त्तुं शक्यत्वाच्च ।

वस्तुतस्तु अत्र किञ्चिद्विलक्षणमित्यारभ्य स्थानिवत्सूत्रेणाऽप्यानयनस्य कर्त्तुं शक्यत्वाच्चेति ग्रन्थसाधारणविचारपरः । सिद्धान्तस्तु स्वस्मिन् घटकत्वघटितत्वयोरेवानयातिदेशो भाष्यसम्मतः परिभाषार्थस्त्विति पूर्वोक्तप्रकार एवेति विचारशैली युक्ततमा ।

अत एवेति—असहाय एव व्यपदेशिवद्भावस्वीकारादेवेत्यर्थः । इयञ्च लोकन्यायसिद्धेति सिद्धान्तसिद्ध्यर्थमाह लोकेऽपीति ।

अनेन चाशास्त्रीयस्याऽप्यतिदेश इति—शास्त्रीयत्वञ्च शास्त्रसङ्केतितावच्छेदकधर्मत्वम् । अन्तत्वम् आदित्वञ्च "येन विधिस्तदन्तस्य "यस्मिन्विधिरि"ति शास्त्रसङ्केतितावच्छेदकत्वेन यद्यपि शास्त्रीयं तथाप्येकाच्त्वस्य तत्वाभावेऽप्यतिदेश इति तदाशयः ।

कैयटोक्तं खण्डयति यत्त्विति—बोधकत्वसम्बन्धेन फलव्यापारविशिष्टशब्दो धातुस्स एवान्यपदार्थः । एकाजितिबहुव्रीहौ एकोऽच् शब्दमात्रं यस्मिन् फलव्यापारविशिष्टशब्दरूपे धातावित्येकाच्त्वमुपपन्नम् इण्धाताविति ।

नचैवमर्थविशिष्टशब्द एव धातुस्तदवयव केवलइशब्दः स कथमेकाच्

यायेत्यादावर्थवतो धातोरर्थं वर्णरूप एकोऽजिति कैयटः।

तन्न ? तस्यैकपदा ऋगित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात्। एकपदा ऋगित्यत्रार्थेन युक्तो व्यपदेश इति भाष्ये उक्तम्। ऋक्कादेरर्थंशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेको ऽवयव इत्यर्थो इति तदाशयः।

तस्मादेकस्मिंस्तत्तद्धर्मारोपेण युगपद्यथा ज्येष्ठत्वादिव्यवहारो यथा च शिलापुत्रकस्य शरीरमित्यादावेकस्मिन्नारोपितानेकावयवाभिः समुदायरूपत्वाद्यारोपेणैतस्य शरीरमित्यादिव्यवहारस्तथात्रैकाच्त्वादिव्यवहारोपपत्तिरिति लोकन्यायसिद्धेयम्।

न चासहाय एवैतत्प्रवृत्तौ भवतीत्यत्र भू इत्यस्याङ्गत्वानापत्तिः ससहायत्वादिति वाच्यम् ? शपमादायाङ्गत्वे कार्ये यस्माद्विहितस्तदादित्वे तस्य ससहायत्वाभावाल्लोके विजातीयकन्यादिसत्त्वे ऽप्येकपुत्रस्य तस्मिन्नेवायमेव ज्येष्ठ इत्यादिव्यवहारवत्।

न चैवं निजौ चत्वार एकाच इति भाष्यासङ्गतिरिकारस्यासहायत्वाभावेन तत्रैकाच्त्वानुपपादनादिति वाच्यम् ? एकस्मिन्नित्यस्यापर्यालोचनया तत्प्रवृत्तेः। अर्थवता व्यपदेशिवद्भाव इत्यत्रार्थवत्पदेनाव्यसहायत्वमुपलक्ष्यते। अर्थबोधकेन शब्देन व्यपदेशिसदृशो भावः कार्यं लभ्यत इति तदर्थः। प्रायो ऽसहाय एवार्थवत्त्वात्।

कुरुते इत्यादौ तशब्दाकारो ऽचामन्त्य इति व्यवहारे स आदिर्य-

---

तत्रान्यपदार्थासंघटनात् इति वाच्यम् ? फलव्यापारविशिष्टश्शब्दो धातुस्तदवयवः फलविशिष्टश्शब्दस्स एकोऽच् शब्दमात्रं यस्मिन् फलविशिष्टे इश्शब्द इति सिद्धो धात्ववयव एकाच् इ इति।

त्यागोपादानाभ्यामिति–वर्त्तिपदार्थविवक्षायामर्थस्य त्यागः, शब्दमात्रस्य ग्रहणम्, अन्यपदार्थविवक्षायामेव अर्थस्योपादानमित्यन्यपदार्थेऽज्घटितत्वं युक्ततरम्। तन्नेति–एवम्प्रकारेणैकाच्त्वोपपादने एकपदा ऋगिति भाष्योपनिबन्धप्रकारेण मुख्यव्यवहार एवेति व्यपदेशिवदेकस्मिन्निति परिभाषोदाहरणत्वासङ्गत्या कैयटकथनन्न युक्तमिति मूलाशयः।

निजौ चत्वार इति–निज १, नि २, इ ३, इज्, इत्येवञ्चत्वारः। ससहायत्वादिति—मुख्यधर्मवन्निज्घटकत्वादित्यर्थः। ननु इकारस्यानर्थकत्वेन व्यपदेशिवद्भावस्य च ढौकत इत्यत्र व्यपदेशिवद्भावेनजन्ततयाऽप्राप्तिमाशङ्क्यार्थवत्येव व्यपदेशिवद्भावप्रवृत्तेर्भाष्ये निर्द्धारितत्वेनात्र कथम्व्यपदेशिवद्भावप्रवृत्तिरत आह अर्थवत्पदेनेत्यादि। तत्फलमाह कुरुते इत्यादिना।

वस्तुतस्त्वेतत्सर्वन्निरर्थकमेव व्याख्यानमिति पूर्वोक्तन्न विस्मर्त्तव्य-मित्यलम्।

अथ मूलखण्डनप्रकारः।

अर्थस्य त्यागोपादानाभ्यां गौण एकाच्व्यपदेश इति कैयटोक्तमयुक्तं? तस्य एकपदा ऋगित्यत्र पदन्नामार्थ इति भाष्योक्तरीत्या मुख्यत्वादिति कैयट-खण्डनाभिप्रायपरश्शेखरो न युक्ततरः। लोके शास्त्रे वा नहि पदादिशब्दा अर्थविशिष्टशब्दस्य वाचकाः किन्तु केवलशब्दमात्रस्य। अत एवार्थे न व्यपदेश इति भाष्यम्। अभेदोपचारादर्थ एव पदादिशब्दैरभिधीयत इति युक्तियुक्तकैयटोऽपि भाष्यस्य तस्य व्यपदेशस्य गौणत्वं भाष्यस्यैकदेशयुक्तित्वञ्च प्रभासयति।

किञ्च "अणुदि"त्सूत्रे "ह्रस्वसम्प्रत्ययादि"ति वार्त्तिकव्याख्यानावसरद-शायां भाष्यकृतैवोक्तम्, ऋगित्युक्ते सम्पाठमात्रं गम्यते नाप्यार्थो गम्यत इति विस्पष्टमेवोक्तमेव। एवञ्च कैयटग्रन्थ एव युक्तियुक्त इति।

यच्च श्यानित्यत्र व्यपदेशिवद्भावात्तद्धितान्तत्वात्कार्यकालपक्षेऽपि प्राति-पदिकसंज्ञा सिद्ध्यति इति शेखरोक्तम्प्रयोजनान्तरपरन्तदपि न श्रेयस्करम्? व्यपदेशिवद्भावेन तस्य केवलं तदन्तत्वम्भवति हि नतु यस्मात्स विहितस्तदा-दित्वविशिष्टतदन्तत्वमपि प्रमाणाऽभावात्।

नच तत्र प्रातिपदिकत्वाभावश्शङ्क्यः? "स्थानिवत्" सूत्रे "एकदेशविकृ-तस्योपसंख्यानमि"ति आदेशग्रहणादयमर्थस्सिद्ध इति हि भाष्यम् भाष्यकृतोक्तम्। एवञ्च इःइयानित्यादौ "स्थानिव" त्सूत्रेणाऽपि प्रातिपदिकत्वसिद्धिसौष्ठवात्।

कार्यकालपक्षे इ इयदित्यस्य प्रयोजनाऽभावात्प्रातिपदिकत्वाऽप्रवृत्त्या स्थानिन्यविद्यमानत्वेन स्थानिवद्भावेनाऽपि न मनोरथसिद्धिरित्यपि न वाच्यम्? "न पदान्त" सूत्रे वरेग्रहणं सम्भावितादेशेऽपि स्थानिवद्भाव इत्यंशे प्रमाणम्। एवञ्च स्थानिनि सम्भावितस्याऽपि स्थानिवद्भावेनातिदेशो दुरुद्धरः। अतिदेश-रूपप्रयोजनायैव प्रातिपदिकसंज्ञाप्रवृत्तिविधानम्। सम्भावना च यदि इकारो न लुप्येत तर्हि इइयदित्यस्य यस्मात्तद्धितविधिस्तदादितदन्तत्वस्य सत्त्वेन प्राति-पदिकसंज्ञा लभ्येतेति स्थानिनि सम्भावितस्याऽपि अतिदेशेन सुलभत्वम्। इशब्दाद् वतुप्रत्ययाभावोऽपि न शङ्क्यः? स्थानिवद्भावेन तत्र इदमशब्दत्व-सिद्धिसम्भवात्।

यच्च शेखरकृतोक्त "त्रिजौ चत्वार एकाच" इतिभाष्यमेकस्मिन्नित्यनपेक्ष्य प्रवृत्तमित्युक्तन्तदपि न सोढव्यन्तथाहि, विशिष्टस्यैकाज्व्यपदेशे कर्त्तव्ये सस-हायत्वेऽपि इकारमात्रस्यैकाज्व्यपदेशे कर्त्तव्येऽसहायसत्त्वे बाधकाऽभावात्। अत एव हि कुरुते इत्यत्र तकारेण ससहायस्याऽप्यकारत्वे अकारादिव्यपदेशे

स्येति व्यवहारे चासहाय एवेति तत्र व्यपदेशिवद्भावेन टिसंज्ञासिद्धि-
रित्यन्यत्र विस्तरः ॥ ३० ॥

ननु गर्गादिभ्यो विहितो यञ्तदन्तविधिना परमगर्गादिभ्योऽपि स्या-
दत आह—

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति ॥ ३१ ॥

इयं च समासप्रत्ययविधौ प्रतिषेध उगिद्वर्णग्रहणवर्जमिति वार्तिक-
स्थप्रत्ययांशानुवादः ।

---

कर्त्तव्ये असहायत्वमिति शेखरकृतैवोक्तमिति विचार्यताम् । समासन्नयनशब्दे
तु आकारस्य विशिष्टप्रत्ययेवादित्वव्यपदेशे कर्त्तव्ये ससहायत्वान्न वृद्धसंज्ञा-
विशिष्टस्येति तात्पर्य्यमवगम्यतान्तथा च शेखराशयो विमृग्य इति सरयूपारी-
णशुक्लाः ।

तदन्तविधिप्रस्तावाद् ग्रहणवतेति परिभाषाम्वक्तुमारभते नन्विति ।
ननु "पदाङ्गाधिकार" इतिपरिभाषा "येन विधिरि"ति सूत्रप्रपञ्चभूता तदप-
वादकत्वेन तदनन्तरमेव ग्रहणवतेति परिभाषा वक्तुं योग्या नतु "व्यपदेशिवदे-
कस्मिन्नि"ति परिभाषेति । तथाचेह लिखनमयुक्तमिति चेन्न ? "पदाङ्गाधिकार"
इतिपरिभाषायां "तस्यचे" त्यंशे श्रुते तदन्यत्र तत्रैव प्राग्दोषोपस्थितिर्नतु
मूलभूतत्वेनोपास्थतसूत्रे इति तस्याः पूर्वोपादानात् ।

नन्वेवमपि तदग्रे तदतिव्याप्तिनिवारकाग्रिमपरिभाषाया एव वक्तुं शक्य-
त्वन्नैतस्या इति चेन्न ? तदनन्तरन्तत्सूत्रातिव्याप्तिरूपदोषस्यैव पूर्वोपस्थितिर्न
तदतिव्याप्तिदोषस्येत्येतदुत्तरमेव तदुक्तिसौष्ठवादित्यभिप्रेत्याह ननु गर्गादिभ्यो
विहितो यञिति । अधिकृतप्रातिपदिकादित्यस्य विशेष्यत्वेन गर्गादीनाम्वि-
शेषणत्वेन येनविधिरिति तदन्तविधिरिति भावः । अपिशब्दस्समुच्चायकः
केवलस्यापि ? न च व्यपदेशिवद्भावोऽप्रातिपदिकेनेति व्यपदेशिवद्भावनिषेधाद्
"येन विधिरि"ति सूत्रेऽपि तस्येत्यंशाऽभावात्केवलस्य कथं ग्रहणमिति वाच्यम्?
तत्प्रतिषेधस्य सूत्रगृहीतान्तादिशब्दमात्रविषयकत्वेनाऽविरोधात् । तत्रव्यपदेशि-
वद्भावो वोद्धव्यः ग्रहणवतेत्यस्य विशिष्य तत्तद्रूपेणोच्चारणवतेत्यर्थः इदंसमास-
प्रत्ययविधाविति च भिन्नम्वचनद्वयमितिशङ्कानिवारणार्थमिह दर्शयति अनुवाद
इति । प्रयोज्यत्वन्ततृतीयार्थः, ग्रहणवत्प्रातिपदिकप्रयोज्यन्तदन्तकर्मकम्विधानन्न
भवतीति परिभाषार्थः ।

अत्र केचित् "संख्याया अतिशदन्तायाःकनि" त्यत्र संख्यात्वं इह प्रत्य-
याऽप्रत्ययसाधारणमतस्तदन्तविधिवारणाय प्रत्ययपदं प्रत्ययमात्रपरमेवं कल्प-
नाभावे "बहुगणवतुडतिसंख्ये" त्यत्र "संज्ञाविधावि"ति।निषेधेन डतिप्रत्ययमा-

त्रेत्य संख्यासंज्ञायामपि "संख्याया अतिशदन्तायाःकनि"त्यादौ प्रातिपदिक-विशेषणत्वेन तदन्तविधौ संख्यान्तादित्यर्थोपत्तौ पञ्चक इतिवत् प्रियपञ्चक इत्यपि कन्विशिष्टं रूपं स्यात् । मात्रपदप्रवेशे हि "ग्रहणवते"ति निषेधात्तदन्त-विध्यभावान्न क्षतिः । अधुना केवलस्य संज्ञाया वैयर्थ्या "त्संज्ञाविधावि"ति प्रबाध्य तदन्तस्य संज्ञेत्यन्यदेतत् । अतएव स्त्रीप्रत्ययेषु ग्रहणवतेति निषेधाप्रवृत्तौ "अनुपसर्जनादि"ति "शूद्राचामहत्पूर्वा जातिरि"ति ज्ञापकत्वोपवर्णनं सङ्ग-तम् । अन्यथा "टिड्ढे"ति सूत्रेऽपि टित्वस्य प्रत्ययाऽप्रत्ययसाधारणत्वेनैत-न्निषेधाऽप्रवृत्तौ तदन्तविधौ बहुकुरुचरेत्यादौ ङीब्वारणार्थमनुपसर्जनादित्य-स्यावश्यकत्वेन भाष्योक्तं ज्ञापकत्वोपवर्णनमसंगतं स्यात् ।

"अस्मायामेधास्रज" इतिसूत्रेऽसन्तादित्यर्थस्तु वर्णत्वारोपेण "अनि-नस्मन्नि"तिपरिभाषाबलात् । तथा च वर्णग्रहणे तन्निषेधाऽयोगात् । अत एव अस्कारः अन्कार इत्यादौ वर्णत्वारोपेण "वर्णात्कार" इति कारप्रत्ययः ।

नन्वेवमपि "अल्लोपोऽन" इत्यादौ तपरकरणम्व्यर्थं स्यादिति चेन्न ? अन् प्राणन इतिधातोःक्विपि "अनुनासिकस्य क्विझलोरि"तिदीर्घ आनित्यादौ वर्ण-त्वातिदेशेऽपिअल्त्वस्यानतिदेशादनल्विधाविति निषेधाऽप्रवृत्त्या स्थानिवद्भावेन प्राप्ताल्लोपनिवारणार्थं तपरकरणस्यावश्यकत्वादित्यलम् । ननु ग्रहणवत्त्वन्नाम किमिति प्रश्नः ? तत्तदानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वं ग्रहणवत्त्वमर्थो गृह्यतेऽनेनेति ग्रहणन्तदस्त्यस्मिन्विशेषणत्वेनेति ग्रहणवत् तेन ग्रहणवता प्रातिपदिकेनेति फलितार्थः । एवञ्च ग्रहणवत्प्रातिपदिकं "गर्गादिभ्य" इत्यत्र गर्गेति तत्र तदन्तविधिनिषेधात्परमगर्गशब्दे न दोष इत्यवतरणाशयः ।

नचैवं लक्षणे "वृद्धाच्छ" इति सूत्रे वृद्धपदस्य "वृद्धि र्यस्याचामि"ति सूत्रेण संज्ञाबोधकत्वेनानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वाऽभावेन निषेधाऽप्रवृ-त्त्या तदन्तविधौ मालीय इतिवत् परममालीय इति प्रयोगापत्तिरिति वाच्यम् ? प्रातिपदिकत्वव्याप्यविषयताप्रयोजकत्वं ग्रहणवत्त्वमेवञ्च प्रातिपदिकत्वावच्छि-न्नविशेष्यतानिरूपताभेदसम्बन्धावच्छिन्नायाःप्रकारताया वृद्धत्वावच्छिन्नत्वेन प्रातिपदिकत्वव्याप्यत्वेन निषेधप्रवृत्त्या दोषाभावात् ।

ननु "अव इन्" उगितश्च"त्यत्रापि प्रातिपदिकाधिकारेण अत्वावच्छिन्न-विषयताया उगित्त्वावच्छिन्नविषयतायाश्च प्रातिपदिकत्वव्याप्यत्वेन निषेधाऽ-पत्तिः, पूर्वोक्तानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वरूपेणापि न वारणमुगित्पदस्यो-क्तरूपानुपूर्व्यवच्छिन्नविषयताप्रयोजकत्वेन निषेधापत्तिः "वनो र चे"त्यत्रापि-दोषापत्तिरिति चेन्न ? वर्णत्वव्याप्यधर्मावच्छिन्नविषयत्वाऽप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाऽप्रयोजकत्वे सति प्रातिपदिकवृत्तिविषय-ताप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वमिति लक्षणात् ।

अत एवायं प्रत्ययविधिविषय एव। अत एव येनविधिरिति सूत्र-भाष्ये प्रत्ययविधिभिन्ने ऽप्तृन्नित्यादौ गृह्यमाणप्रातिपदिकेनापि तदन्त-विधिप्रतिपादनं स्वसा परमस्वसेत्याद्युदाहरणं च सङ्गच्छते।

अत एव च तदन्तविधिसूत्रे भाष्ये समासेत्यादिनिषेधस्य कथन-वदस्य न कथनम्। सो ऽपि निषेधो विशिष्य तत्तद्रूपेण गृहीतप्राति-पदिकसूत्र एव। ध्वनितं चेदमसमासे निष्कादिभ्य इति सूत्रे भाष्ये।

अत्र च ज्ञापकं सपूर्वाच्चेति सूत्रम्। अन्यथा पूर्वादिनिरित्यत्र तद-न्तविधिनैव सिद्धे किन्तेन॥ ३१॥

---

नचैवमपि "नौद्व्यच" इत्यत्र द्व्यच्पदस्यापि वर्णत्वव्याप्याच्त्वावच्छिन्न-विषयतायास्सत्त्वेन निषेधो न स्यादिति वाच्यम्? धर्मितानवच्छेदकवर्णत्वव्या-प्यधर्मस्यैव लक्षणे ग्रहणेन तत्र द्वित्वावच्छिन्नप्रकारतानिरूपितविशेष्यताव-च्छेदकस्यैवाच्त्वस्य सत्त्वेन क्षतिविरहात्।

नन्वेवमपि "अस्मायामेधास्रजो विनिरि" त्यादौ अस्पदस्यापि ग्रहणव-त्प्रातिपदिकत्वेनासन्तेत्यर्थानापत्तौ यशस्वीत्यत्र विनिप्रत्ययो न स्यात्। सूत्रा-रम्भसामर्थ्यात्तदन्तविधिरिति तु न वाच्यम्? असु क्षेपण इति धातोः क्विपि सूत्रचारितार्थ्यसम्भवादिति चेन्न? "असमासे निष्कादिभ्य" इति सूत्रीयाऽ-समासग्रहणेन ग्रहणवत्प्रातिपदिकेनेति परिभाषाया अनित्यत्वेन दोषपरीहारात्।

अत एव "रोणी"तिसूत्रे तदन्तविधौ आजकरोणः "मेघर्त्तिभयेषु कृञ" इत्यत्र च तदन्तविधौ अभयङ्कर इति च सिद्ध्यतः। नचैवमपि "अनुदात्तादेरञि" त्यादौ अनुदात्तत्वादेर्वर्णत्वव्याप्यत्वेनानुदात्तादिपदस्य वर्णत्वव्याप्यत्वधर्मा-वच्छिन्नविषयताप्रयोजकत्वाभावान्निषेधाऽप्रवृत्त्या तदन्तविधिरापतेदिति वा-च्यम्? वर्णत्वव्याप्यधर्मेण साक्षादवच्छिन्नमुख्यविशेष्यत्वाऽप्रयोजकत्वे सति प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयत्वाऽप्रयोजकत्वे सति उगित्त्वावच्छिन्नविषय-त्वाऽप्रयोजकत्वं ग्रहणवत्प्रातिपदिकत्वम्।

एवञ्च न तत्रापि दोषः। एवं यत्र कुत्रापि दोष आपतेत्तत्र सर्वत्राऽपि तद्भिन्नत्वे सतीति निवेशेन वारणम्पूर्वोक्तरीत्याऽनित्यत्वेन च।

प्रत्ययविधिविषय एवेति—अपूर्वत्वाऽभावादेवेत्यर्थः। नन्वत्र प्रत्य-यविषयत्वं किमिति प्रश्नः। नच प्रत्ययाधिकारपठितत्वम्वाच्यम्? अप्रान्ते-त्यत्र दोषापत्तेः। नचापि प्रत्ययनिष्ठविधेयताप्रयोजकत्वम्? "नान्तादसंख्या-देरि" त्यत्रामिमपरिभाषाऽप्रवृत्तेः। किन्तूभयत्रापि प्रत्ययविशिष्टनिष्ठविधेयता-प्रयोजकत्वे सति प्रत्ययाधिकारपठितत्वम्। वैशिष्ट्यञ्च स्वतादात्म्यत्वनिष्ठो-द्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेनेति दिक्।

नन्वेवं "सूत्रान्ताट्ठक्, दशान्ताड्ड, एकगोपूर्वादि"त्यादेः केवलसूत्रशब्ददशन्शब्दैकशब्दादिष्वपि प्रवृत्तिर्व्यपदेशिवद्भावात्स्यादत आह-

व्यपदेशिवद्भावोऽप्रातिपदिकेन ॥ ३२ ॥

पूर्वात्सपूर्वादिनिरित्येकयोग एव कर्त्तव्ये पृथग्योगकरणमस्या ज्ञापकम् । न चेष्टादिभ्य इति सूत्रेऽनुवृत्त्यर्थं तथा पाठोऽत एवानिष्टीत्यादिसिद्धिरिति वाच्यम् ? ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात् । एकयोगेऽपि तावत उत्तरत्रानुवृत्तौ बाधकाभावाच्च ।

अत एव नान्तादसङ्ख्यादेरिति चरितार्थम् । अन्यथा पञ्चम इत्यादावपि व्यपदेशिवद्भावेन सङ्ख्यादित्वाच्चद्वैयर्थ्यं स्पष्टमेव ।

इयं च प्रातिपदिकग्रहणे एव न तु प्रातिपदिकाप्रातिपदिकग्रहणे, तेनोगितश्चेत्यत्र न दोष इति तत्रैव भाष्ये स्पष्टम् । इयं ग्रहणवतेति च परिभाषा प्रत्ययविधिविषयैवेत्यसमासे निष्कादिभ्य इति सूत्रे भाष्यकैयटयोः । तेन अहन्नित्यादेः परमाहन्शब्दे केवलाहन्शब्दे च प्रवृत्तिरित्यन्यत्र विस्तरः ॥ ३२ ॥

ननु वान्तो यीत्यादौ यादौ प्रत्यय इत्यर्थः कथमत आह—

यस्मिन्विधिस्तदादावल्ग्रहणे ॥ ३३ ॥

तदन्तविधेरपवाद इयम् । वाचनिक्येषा येनविधिरित्यत्र भाष्ये पठिता । अस्याश्च स्वरूपसती सप्तमी निमित्तम् । अत एव नेड् वशि कृतीत्यादौ वशादेः कृत इत्याद्यर्थलाभः ।

इयं चार्द्धधातुकस्येडिति सूत्रे वलादेरित्यादिग्रहणसामर्थ्याद्विशेष्यविशेषणयोरुभयोः(१) सप्तम्यन्तत्व एव प्रवर्तते । तेन ङःसिधुडित्यादौ

---

व्यपदेशिवद्भावोऽप्रातिपदिकेनेति—एकयोग एवेति फलितार्थे विचारः। एकयोगे कर्त्तव्ये स्वातिरिक्तावयवकत्वस्य व्यपदेशिवद्भावेनानेतुमशक्यत्वात्केवलपूर्वशब्दादिनिप्रत्ययो न स्यादिति तु न शङ्क्यम् ? "पूर्वादिनिस्सपूर्वाच्चे" तिसूत्रयोस्स्थाने "पूर्वान्तादिनिः इष्टादिभ्यश्चे" तिइष्टाद्यन्तेभ्य इत्येव कार्य्यं पृथग्योगद्वयकरणमस्यां ज्ञापकम् । पदलाघवाभावेऽपि एकसूत्रकरणलाघवसत्त्वात् ।

धर्मिग्राहकमानेन सूत्रोपात्तान्तादिशब्दविषयकत्वमेव तस्यामिति सिद्धमत "उगितश्च रोणी" त्यादीनां केवलेऽपि प्रवृत्ति "स्तस्य चे"ति पाठाश्रयणे तु गौरवापत्तेरिति ।

तदन्तविधेरपवादभूतामवसरसङ्गत्या यस्मिन्विधिरितिपरिभाषामवतारयितुमुपक्रमते नन्विति ।

---

(१) विशेषणविशेष्ययोरुभयोस्सप्तम्यन्तत्व इति-एवं स्वीकारे 'इकोऽसवर्णे' इति

त्यादेः पदस्येति नार्थः । "तीषसह, लोभिचो"त्यादौ यथा तादेरित्याद्य-
र्थलाभस्तथा शब्देन्दुशेखरे निरूपितम् ॥ ३३ ॥

---

यत्तच्छब्दयोर्नित्यापेक्षेति नियमः । तेन यदुक्तन्तदनुवाद्यमित्यादौ यथा
प्रक्रम्यमाणप्रक्रान्तप्रसिद्धानुभूतार्थकभेदात्तच्छब्दश्चतुरर्थकः । तमानय य इहा-
स्ति, घट इहास्ति तमानय, तदन्वये शुद्धिमतीति, कळा च सा कान्तिमती
कलावतस्त्वमस्य लोकस्य च नेत्रकौमुदी, सा कोऽर्थः प्रसिद्धा । ते लोचने प्रति-
दिशम्विधुरे क्षिपन्ती, ते कोऽर्थः अनुभूते लोचने इत्यर्थः ।

ननु तत्तत्पदनिवेशे लक्षणाननुगमः, तस्य सामान्यार्थकत्वेऽन्यस्मिन्काले
या बुद्धिरन्यस्मिन्काले यो विषयस्तस्यापि बाधप्रसङ्गः । किञ्च अन्यपुरुषबुद्धौ
विषयः अन्यपुरुषस्य शाब्दबोधस्स्यादिति स्वोच्चारणानुकूलयत्तत्पदनिवेशे
तत्तत्पदस्य तत्तद्व्यक्तिपरतया सर्वथाऽननुगम इति चेन्न ? तत्पदवि-
शिष्टो बोधो भवतु इत्येवम्बोधविशेष्यकस्सङ्केतस्स्वीकार्यः । वैशिष्ट्यञ्च
स्वोचारणानुकूलबुद्धिविषयतावच्छेदकावच्छिन्नविषयकत्व-स्वजन्यत्वमित्युभ-
यसम्बन्धेन । तत्तत्पदत्वादिरूपा या तकारोत्तरतकारत्वरूपा पदानुपूर्वी तादृशा-
नुपूर्वीविशेषेणैव तदादिपदानां सङ्केतविषयता सा चानुपूर्वी सर्वेषु तदादिपदे-
ष्वनुगतरूपैवेति न पदव्यक्तिभेदेन शक्तिभेद इत्यलमप्रासङ्गिकेन ।

यस्मिन्निति यत्पदेन सप्तम्यन्त परामृश्यते "यस्य च भावेन भावलक्ष-

---

सूत्रस्थभाष्यविरोधः । तत्र हि "घसिभसोर्हलि च" तिसूत्रादनुवृत्तस्य हलीत्यस्य
सप्तम्यन्तस्य हेरिति षष्ठ्यन्तविशेषणतामादायानया तदादिविधिरुक्तः । यदि च विशे-
ष्यवाचकपदसमभिव्याहृतस्याऽप्यत्वबोधकसप्तम्यन्तस्य विशेषणमात्रबोधकत्वनियम-
मपहाय हलीत्यस्य परसप्तम्यन्ततामाश्रित्य हल्परकाज्झलन्तात्परस्य हेरिति सम्बन्धे
हलादेर्हेरिति सूत्रार्थो भाष्योपवर्णितः तर्हि "र्द्धधातुकस्येडि" त्यत्र वलीत्युक्तावपि
परसप्तम्यन्तत्वाङ्गविशेषणत्वाभ्यां विनैवादिग्रहणमिष्टसिद्धेस्त्वांशे चरिताभ्याऽभावात् ।
विशेषणविशेष्ययोस्सप्तम्यन्तता नियमज्ञाने विरोधस्तथा चायुक्तोऽयं ग्रन्थो नियमश्च ।

अत्र विलक्षणप्रकारः—"कारनाम्नि च प्राचांहलादौ हस्वात्तादौ तद्धिते" तादौ
च निति कृत्यतौ, एकहलादौ पूरयितव्येऽन्यतरस्याम्" इत्यादिष्वादिग्रहणेन अल्बोध-
कसप्तम्यन्तस्य समभिव्याहृतसमानाधिकरणभावो न सार्वत्रिक इति कल्प्यते ज्ञाप्यते
वा । तेन "इसि घुढि"त्यादौ वैयधिकरण्यलाभः ।

आर्द्धधातुकस्येडित्यत्रादिग्रहणन्तु वलीत्यस्य परसप्तम्यन्ततादशायां श्रुतसम्ब-
न्धस्य बलीयस्त्वादार्द्धधातुकविशेषणत्वेन प्राप्तानिष्टवारणार्थत्वेन स्पष्टार्थम् । अनयव
कल्पनया "अमि पूर्वः" इत्यादावपि सामानाधिकरण्यानित्यत्वेन ज्ञापितेन निर्वाह इति
परिभाषाखण्डनमपि वक्ष्यमाणं सङ्गच्छत इत्यलम् ।

णमि"तिसूत्रेण यस्मिन्निति सति सप्तमी नत्वधिकरणे अधिकरणसप्तम्या "मिको यणचो"तिवदव्यवहितपूर्वत्वांशोपस्थित्या "वान्तोयी" त्यादावव्यवहितपूर्वत्वांशासम्भवेऽपि वशादेᳵकृत इण् न स्यादित्यर्थक "नेड् वशि कृती" त्यादौ सर्वथा तदसम्भवात् ।

अल्ग्रहण(१) इत्यत्राल् गृह्यते बोध्यतेऽस्मिन्नित्यधिकरणल्युटा अल उच्चारण इति नार्थः ? "वान्तो यी" इत्यादौ तत्सम्भवेऽपि प्रत्याहारग्रहणे "तस्मान्नुडची"त्यादौ "इकोऽचि व्यञ्जने माभूत्" इति भाष्ये व्यञ्जनादावित्यादौ च सर्वथा तदसम्भवादेवञ्च बाहुलकात्करणे ल्युट् अल्प्रतिपादकशब्दे सतीत्यर्थः । सप्तम्यन्तम्बिशेषणम्बर्णरूपन्तदादेस्संज्ञेति फलितार्थः ।

अल्ग्रहण इत्यस्याल्बोधक इत्यर्थः । विधीयते यस्स विधिरिति कर्मव्युत्पत्त्या विधिपदेन कार्यमुच्यते । "येन विधिरि"तिसूत्रापवादत्वादु "त्सर्गसमानदेशा अपवादा" इति न्यायेनाभेदेन विशेषणमिति लभ्यते । अल्बोधके सप्तम्यन्ते पदेऽभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजके सति यत्कार्य्यन्तत्तदादौ बोध्यम् । अर्थात्त्वविधायकशास्त्रघटकाभेदसम्बन्धावच्छिन्नप्रकारताप्रयोजकसप्तम्यन्तपदबोध्याकादौ भवतीति यावत् । अल्ग्रहण इत्यत्र विशेषणस्याऽपि ग्रहणपदस्य पूर्वनिपातस्तु न भवति "लक्षणहेत्वोᳵक्रियायाः समुद्राभ्रात्ख" इति निर्देशेन पूर्वनिपातप्रकरणस्यानित्यत्वात् । परिभाषायां यस्मिन्निति विशेषणानुपादाने विशेष्यविशेषणभाववत्सु सर्वेषु तदादितदन्तविध्योः पर्यायेण प्रवृत्तिस्स्यादल्ग्रहण इत्यनुपादाने "ष्यङस्सम्प्रसारणम्पुत्रपत्योस्तत्पुरुष" इत्यादौ पुत्राद्युत्तरपदयोरित्यर्थापत्तौ बहुदोषापत्तेः ।

यथा "वान्तो यि प्रत्यय" इत्यादौ यिपदं सप्तम्यन्तमल्बोधकभेदेन विशेषणन्तच्च यकारादिबोधकमेवञ्च अभेदसम्बन्धावच्छिन्ना यकारादित्वावच्छिन्ना यकारादिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या प्रत्ययत्वावच्छिन्ना प्रत्ययनिष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या अव्यवहितपूर्वत्वसम्बन्धावच्छिन्ना प्रत्ययत्वावच्छिन्ना प्रत्ययनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या ओदौत्त्वावच्छिन्ना ओदौन्निष्ठा विशेष्यता तादृशविशेष्यतानिरूपिता या उद्देश्यविधेयभावसम्बन्धावच्छिन्ना ओदौत्वावच्छिन्ना ओदौत्निष्ठा प्रकारता तादृशप्रकारतानिरूपिता या अव्आव्त्वावच्छिन्ना अव्आवनिष्ठा विशेष्यता तादृश-

---

(१) यस्मिन्विधिस्तदादावल्ग्रहणे—अल्ग्रहण इत्यत्र करणल्युडन्तेन षष्ठीतत्पुरुषः । यच्छब्दो बुद्धिस्थपरामर्शकतया सप्तम्यन्तबोधकः तत्रैव तात्पर्य्यग्राहिका सप्तमी । "इद्वृद्धा" वित्यादाविव मत्वर्थलक्षणया यकारवति प्रत्यय इति फलितार्थः । गोकाम्याञ्चकारेति प्रयोगे दोषवारणाय परिभाषेयम् । अल्ग्रहण इति विशेषणन्तु "प्रियवशे वदᳵखजि"त्यादौ प्रियादीनामुपपदविशेषणानां तदादिविधिवारणार्थमेव ।

विशेष्यतानिरूपिता या अभेदसम्बन्धावच्छिन्ना अव्आव्त्वावच्छिन्ना अवाव्-निष्ठा प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वाव-च्छिन्ना एकत्वत्वनिष्ठप्रकारतानिरूपिता च या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा वि-शेष्यता तादृशविशेष्यतानिरूपिता या वृत्तित्वसम्बन्धावच्छिन्ना कर्तृत्वाव-च्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता च या क्रियात्वावच्छि-न्नक्रियानिष्ठा विशेष्यता तादृशविशेष्यताशाली शाब्दबोधः । वृत्तिज्ञानीया तात्पर्यज्ञानीया शाब्दबोधीया प्रकारतादिकल्पनापि । त्रितलावच्छेदकतापि । अभेद-यकारादि-अव्यवहितपूर्वत्वओदौत्-उद्देश्यविधेयभाव–अव्आव्–अभेद-समवायसम्बन्धावच्छिन्नैकत्व-कर्तृत्ववृत्तित्व-परिच्छिन्नत्व-वर्तमानकालक्रिया-दि । इति पदार्थप्रकारः ।

ननु "उत्सर्गसमानदेशा अपवादा"इति न्यायेन विशेष्यविशेषणभावो लब्ध इत्युक्तम्परन्तु न्यायेऽस्मिन्किम्प्रमाणमिति प्रश्नः? "वर्णादनुदात्तात्तोपधात्तो न" इति सूत्रे "छन्दसि क्रमेक" इति वार्त्तिकं पलिक्नीति फलमिति केचित् ।

परन्तु सूत्राद्वार्त्तिके तकारानुवृत्तिरिति नैव फलमिति सरयूपारीण-शुक्लाः ।

न्याये प्रमाणन्तु "असिद्धव" त्सूत्रे भाष्ये "एत्त्वं लोपापवादो विज्ञास्यते नच सकारस्य लोपः प्राप्नोती"ति वचनमेव ।

सिद्धान्तफलन्तु "स्पृशमृशकृषतृपदृपां च्लेस्सिज्वा वाच्य" इति वार्त्तिके तृप्पदेन पौषादिकस्यैव तृपेर्ग्रहणन्न तौदादिकस्याङपवादत्त्वादुत्सर्गसमानदेशा अपवादा इति न्यायात् । तेन तुदादौ नित्यं सिचि अतर्पीदिति रूपम् नतु रूप-द्वयमिति विशिष्टं फलमित्यलम् ।

ननु यस्मिन्विधिरिति परिभाषास्वीकारे "ह्रस्वात्तादौ तद्धिते, एकहलादौ पूरयितव्येऽन्यतरस्यामि"त्यादौ हलि-तीति करणेन परिभाषयैवादित्वलाभे तद् व्यर्थं स्यादतो नेयम्परिभाषेति चेन्न? तदादिग्रहणेन परिभाषाया अनित्य-त्वबोधनात् फलाभाव आदिग्रहणस्य स्पष्टार्थत्वाच्च । विशेष्यविशेषणभावे कामचारानुज्ञेति एकत्र द्वयमितिरीत्या ओदौतोस्स्वातन्त्र्येणान्वये यकाराव्यव-हितपूर्वो यःप्रत्ययाव्यवहितपूर्व औकारादिस्तस्य वान्तादेश इत्यर्थस्तु न वाच्यः? गोयानमित्यादौ यकाराव्यवहितपूर्वत्वस्य स्वतो विद्यमानत्वेन प्रत्ययलक्षणेन प्रत्ययाऽव्यवहितपूर्वत्वस्यानयने वान्तादेशाऽपत्तेः ।

ननु लोके शाखायाम्वृक्ष इत्येव सयुक्तिकः प्रयोगःपरन्तु वृक्षे शाखा इत्य-पि अवयवावयविभावसप्तम्यर्थमादाय केचित्प्रयुञ्जते । शास्त्रेऽपि "अमि पूर्व" इत्यत्राधेयेऽप्याधारत्वारोपेण सप्तमीविधानं शिष्टसम्मतमेवञ्च "वान्तो यी" त्यत्रापि प्रत्यय इत्याधेये पदार्थे आधारत्वारोपेण पदे सप्तमीमाश्रित्य प्रत्यये

यो यकारोऽर्थात् प्रत्ययावयवो यो यकारस्तद्व्यवहितपूर्वयोरोदौतोर्वान्तादेश इत्येवार्थोऽस्त्वेवञ्च नावतरणं सुगतमिति चेन्न? द्वावुष्ट्रावुष्ट्रगोयुगमिति वाक्ये "द्वित्वे गोयुगजि"ति वार्त्तिकेन गोयुगच्प्रत्यये वान्तादेशाऽपत्तेः।

नच औकारसाहचर्य्येण यकारघटितप्रत्ययाऽघटकस्यैव ओकारस्य ग्रहणमिति गोयुगचो यकारघटितत्वेन न दोष इति वाच्यम्? "द्वित्रिश्चतुरि"ति सूत्रे कृत्वोऽर्थग्रहणेन सहचरितपरिभाषायाअनित्यत्त्वात्। परिभाषावैयर्थ्यभीत्या नित्यत्वे तु गव्युगचि कर्त्तव्येओकारोच्चारणसामर्थ्येन तत्र वान्तादेशाऽप्रवृत्तेः। नचोष्ट्रगोयुगशब्दात्पुनःपुनर्णिलोपटिलोपाभ्यां यकारादेर्लोपे उष्ट्रगोरित्यत्र ओकारश्रवणार्थमोकारोच्चारणमिति वाच्यम्! लोपात्प्रागेवोपदेशावस्थायामवादेशप्राप्त्या ओकारश्रवणाऽसम्भवात्। तथा चावतरणं युक्तमेवेति मूलाशयः।

नच वान्तसूत्रे तदन्तविधौ यान्तप्रत्ययाऽसम्भवात्सूत्रवैयर्थ्यभीत्या न तदन्तविधिरिति वाच्यम्? "गोश्च पुरीष" इति सूत्रेण गोशब्दान्मयटि गोमयमत्तीति गोमयात् तमाचष्टे गोमययतीत्यादौ टिलोपानन्तरं यान्तप्रत्ययसम्भवेन सूत्रसार्थक्यसम्भवात्। "अचः परस्मिन्" इति न स्थानिवद्भावः? अज्झलादेशत्वात्। "स्थानिवत्" सूत्रेण तु न स्थानिवद्भावः? शास्त्रस्थपदसङ्केतविषयतावच्छेदकधर्मस्यैव तेनातिदेशबोधनात्। अन्तरङ्गपरिभाषयापि नासिद्धत्वम्? नाजानन्तर्येतिनिषेधात्।

नच "अपो भिरि"त्यस्य ज्ञापकत्वम्? वृक्ष शाखेतिवदवयवावयविभावसम्बन्धमादाय निषेधात् प्रत्ययावयवे भकारे पर इत्यर्थेन चारितार्थ्यात्। एवम् "धिचे"त्यादावपि प्रत्ययावयवे धकार इत्यर्थः। नच "कोः कत्तत्पुरुषेऽची"ति सूत्रेऽजन्त इत्यर्थापत्तौ "रथवदयोश्च"त्यस्य ज्ञापकत्वम्? रथमाचष्टे रथयतिइति रत् कद्रत् इत्यादौ सार्थक्यात्। नच तावन्मात्रप्रयोजनकत्वे रद्वदयोरित्यस्य कर्तुं शक्यत्वम इति वाच्यम्? रमधातोः क्विपि अनुदात्तोपदेशे मलोपे कुशब्देन समासे तत्रानिष्टापत्तेः। व्याख्यानतो निर्णये कस्य ग्रहणमिति मूलाभावात्।

वस्तुतस्तु ज्ञापकद्वयम्वदयते "नल्यपी"तिसूत्रं ज्ञापकमन्यथा "घुमास्थे"तिसूत्रे हलन्त इत्यर्थापत्तौ प्रदाय इत्यत्र हलन्तत्वाभावेनाप्राप्त्या तस्य वैयर्थ्यात्। नच "घुमास्थे"तिसूत्रारम्भसामर्थ्यान्न तदन्तविधिरिति वाच्यम्? पाधातोः क्वनिपि पीवेत्यत्र हलन्तत्वेन सार्थक्यात्। नच प्रदायच्छत्रमित्यादौ वाक्यसंस्कारपक्षे "छे च"तितुकि तिहलन्तत्वसम्भवेनेत्वप्राप्तौ निषेधार्थं "नल्यपी"ति सूत्रम्।

नचेत्वे तुको बहिरङ्गासिद्धित्वम् नाजानन्तर्येति निषेधादिति वाच्यम्? परिभाषाऽभावे "आतो लोप इटि चे"त्यस्याजन्त इत्यर्थापत्तौ अजन्तत्वेन प्राप्तिसत्त्वात्तुकः पूर्वमातो लोप ईत्वप्राप्त्यभावेन "नल्यपी"त्यस्य ज्ञापकत्वसौष्ठ-

वात् । किञ्च "गुणोऽपृक्त" इतिसूत्रेऽपृक्तग्रहणं ज्ञापकम् । तच्च और्णौदित्यत्र "ऊर्णोतेर्विभाषे"तिसूत्रेण विकल्पबाधनार्थम् । परिभाषाभावे तु "उतो वृद्धिरि"त्यतो हलीत्यनुवृत्त्या "ऊर्णोतेर्विभाषे"तिवृद्धिविकल्पस्य हलन्तपित्सार्वधातुके लङुत्तमैकवचने और्णवमित्यादौ चरितार्थत्वेन गुणेन और्णौदित्यत्र बाधसम्भवेन अपृक्तग्रहणवैयर्थ्यात् । ज्ञापितायाम्परिभाषायान्तु तदादिविधौ हलादावेव विकल्पविधानेन अज्विषयेऽचरितार्थत्वादुभयोरेकविषयत्वप्राप्तौ मुख्यहलादौ तु विकल्पः व्यपदेशिवद्भावेन हलादावपृक्ते तु नित्यं गुण इति अपृक्तग्रहणं सार्थकम् इति द्वितीयम् ।

परिभाषाया‿प्रधानफलङ्किमिति प्रश्नः ? अत्र सरयूपारीणशुक्लाः "औङ आप" इति सूत्रस्थभाष्यमेव औङित्यौकारविभक्तेस्संज्ञा । "याडाप" इति याडागमस्तु न भवति उच्चारणार्थानाम्वर्णानामपि इत्संज्ञालोपाभ्यामेव निवृत्तिः । ङकारस्योच्चारणार्थत्वेऽपि याडागमो न भवतीति प्रश्नः ? ङ् इत् यस्य स ङिदिति न समासः किन्तु ङकार इत् ङिदिति वर्णमात्रनिर्देशात् । वर्णग्रहणे च "यस्मिन्विधिरि"तितदादिविधिः अङ्गाक्षिप्तप्रत्ययश्च विशेष्यः "नेड् वशि कृती"तिवत् । तथाच "याडाप" इत्यस्य आप‿परस्य ङकारादिप्रत्ययस्य याडागम इत्यर्थ इति प्रथमाद्विवचनादौ न याडागम इति मुख्यम्फलम् । अत एवैतत्सूत्रभाष्ये "औकारोयं शीविधौ ङिद् गृहीतो ङिच्चास्माकं नास्तिकोऽयम्प्रकारः । सामान्यार्थस्तस्य चाऽसञ्जनेऽस्मिन् ङित्कार्यन्ते स्यात्प्रशक्तं स दोष" इति । "को‿कत्तत्पुरुषेऽचो"तिसूत्रे तु न फलम्, उत्तरपदावयवेऽचीत्यर्थाश्रयणात् । "गोत्रेऽलुगची" त्यादौ तदादिविध्यभावे प्राग्दीव्यतीयप्रत्ययस्याचो विषय इत्यर्थापत्तौ गार्ग्यरूप्यमित्यादौ हलादावप्युत्पत्ति प्रत्यये विवक्षितेऽलुगापत्तिस्तु न भवति, प्राग्दीव्यतीयप्रत्ययघटकाजव्यवहितपूर्वत्वविवक्षायामित्यर्थकरणेन गार्ग्यरूप्यमित्यादौ दोषाऽभावात्, "पाघ्राध्मे"तिसूत्रेऽपि इत्संज्ञकशकारपरत्वसम्भावनायामित्यर्थेन पिबतीत्यादौ न दोषः । यदीत्संज्ञालोपौ स्यातान्तर्हि इत्संज्ञकशकारपरत्वं स्यादिति सम्भावनाया गरीयस्त्वात् । अतृणेडित्यादावपि न फलम्परिभाषायाः परत्वात् प्रतिपदोक्तत्वादिमागमस्यैव "तृहण इमि"तिविहितस्य पूर्वम्प्रवृत्तश्च । भाष्यमते "नाभ्यस्तस्याची"त्यतोऽचि नेत्यनुवृत्त्या हल्ग्रहणाकरणाच्च । नच परिभाषाया अभावे "ङमो ह्रस्वादची"त्यत्र ह्रस्वात्परो यो ङम् तदन्तं यत्पदं तत‿परस्य पदावयवस्याचो ङमुडित्यर्थापत्तौ नवीनमते कार्यित्वनिवेशेनोत्तरपदत्वे चेत्यस्याऽप्रवृत्त्या प्रत्ययलक्षणेन दण्डिनित्यस्य पदत्वे द्विवचनान्तपदमादाय आकारस्य पदावयवाच्त्वेन ङमुट् स्यादिति वाच्यम् ? अच्परको यो ह्रस्वात्परो ङम् तदन्तं यत्पदं तत‿परस्य पदस्येत्यर्थाश्रयणात् । ह्रस्वात्परो यो ङम् तदन्तं यत्पदं पदपरकं तत‿परस्याच इत्य-

घटपटं घटपटावित्यादिसिद्धय आह—

सर्वो द्वन्द्वो विभाषयैकवद्भवति ॥ ३४ ॥

द्वन्द्वश्च प्राणीत्यादिप्रकरणाविषयः सर्वो द्वन्द्व इत्यर्थः।

---

र्थाश्रयणात्तत्र परिभाषाफलाभावाच्चेति दिक्।

परिभाषायाश्शाब्दबोधप्रकारः। यच्छब्दस्सप्तम्यन्तमात्रपरामर्शकः, अ-लृगृह्यते बोध्यतेऽनेनेत्यल्ग्रहणं कोऽर्थोऽल्बोधकम्। विधीयते यस्य इति कर्म-व्युत्पत्त्या विधिपदेन कार्यमुच्यते "येन विधि"रित्यपवादत्वादुत्सर्गसमानदेशा इति न्यायेन अभेदेन विशेषणमिति लभ्यते। अभेदसम्बन्धावच्छिन्नाऽल्बोध-कत्वावच्छिन्नाऽल्बोधकनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या सप्तम्य-न्तत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धाव-च्छिन्ना याप्रकारता तादृशप्रकारतानिरूपिता या विधिपदवाच्यकार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या तच्छब्दवाच्यत्वे सति विधिशब्दवाच्यकार्यत्वाव-च्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वप्रयोजकत्वसम्बन्धावच्छि-न्ना या प्रकारता तादृशप्रकारतानिरूपिता या तदादित्वावच्छिन्ना विशेष्यता तादृ-शविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकार-तानिरूपिता या बोध्यत्वावच्छिन्ना विशेष्यता तादृविशेष्यताविशिष्टो बोधः।

शास्त्रत्वसम्पादकप्रकरणावसाने तच्छेषभूतास्सङ्गतिरहिता अपि परिभाषा व्याख्यातुमुपक्रमते घटपटं घटपटावित्यादिसिद्धय इति। सर्वो द्वन्द्वो वि-भाषयैकवद्भवति—अत्र विभाषेति प्रथमान्तपाठोऽपि। अशेषद्वन्द्वत्वावच्छिन्ना द्वन्द्वनिष्ठा याऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृ-त्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वस-म्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता सती विभाषात्वावच्छिन्नप्र-कारतानिरूपिता सती एकवत्त्वावच्छिन्नप्रकारतानिरूपिता च सती भूधात्वर्थक्रि-यात्वावच्छिन्ना क्रियानिष्ठा या विशेष्यता तादृशविशेष्यताविशिष्टो बोधः। ननु उद्भूतावयवभेदविवक्षया इतरेतरयोगः तिरोहितावयवभेदविवक्षया समाहार इति। तथाच विवक्षयैव द्वन्द्वमात्रे रूपद्वयसिद्धौ किमर्थमियमिति चेन्न? शब्दो द्वि-विधः उद्भूतावयवभेदसमुदायबोधकः यथा वृक्षशब्दो बहुवचनान्तो वृक्षा इति। ति-रोहितावयवभेदकसमुदायबोधकोऽन्यो यथा वनशब्द एकवचनान्तः। वनम् इति एवञ्च द्वन्द्वीभूतोऽपि घटपटादिशब्द एकविधसमुदायबोधक एव स्यादित्येकस्मिन् घटपटादिरूपद्वन्द्वीभूतशब्द उभयविवक्षाया अभावेनैकवचनद्विवचनान्तत्वयोर-सिद्ध्यापत्तेः परिभाषारम्भात्। सर्वो लोकः सर्वे लोकाः "जात्याख्यायामि"ति

चार्थे द्वन्द्व इतिसूत्रेण समाहारेतरेतरयोगयोरविशेषेण द्वन्द्वविधानान्न्यायसिद्धेयम् ।

"तिष्यपुनर्वस्वोरिति" सूत्रस्थं बहुवचनस्येतिग्रहणमस्या ज्ञापकम् । तद्धीदं तिष्यपुनर्वस्वित्यत्र तद्व्यावृत्त्यर्थम् । न चैवमप्यत्र जातिरप्राणिनाम् इति नित्यैकवद्भावेन बहुवचनाभावादिदं सूत्रं व्यर्थमिति वाच्यम् । तद्वैकल्पिकत्वस्याप्यनेन ज्ञापनात् । न चैते प्राणिन इति वाच्यम् ? आपोमयः प्राण इति श्रुतेरद्भिर्विना ग्लायमानप्राणानामेव प्राणित्वात् । स्पष्टं चेदं तिष्यपुनर्वस्वोरिति सूत्रे भाष्ये ।

अत एव द्वन्द्वश्च प्राणीत्यादेः प्राण्यङ्गादीनामेव समाहार इति विपरीतनियमो न ॥ ३४ ॥

## सर्वे विधयश्छन्दसि विकल्प्यन्ते ॥ ३५ ॥

व्यत्ययो बहुलमिति सूत्रे भाष्ये बहुलमिति योगविभागेन षष्ठीयुक्तश्छ-

जात्येकत्वविवक्षया (१)क्वचिदेकवचनम् ।

ननु पाणिपादमित्यादावेकवद्भावस्यैव दर्शनात्सर्वो द्वन्द्व इत्ययुक्तमत आह द्वन्द्वश्च प्राणीत्यादीति । "चार्थे द्वन्द्व" इत्येतत्सूत्रविषय इति फलितार्थः । बहुवचनस्येति ग्रहणमस्या ज्ञापकमिति—तच्च उदितन्तिष्यपुनर्वसू इत्यत्र एकवचनस्य द्विवचनवारणाय । यद्यत्र समाहारद्वन्द्वो न स्यात्तर्हि तदनर्थकमेव । नचात्र "जातिरप्राणिनामि"त्यनेनैकवद्भावप्रसङ्गः ? तदनित्यत्वस्याऽप्यनेन ज्ञापनात् ।

सर्वे विधय इति—छन्दसि विधीयमानानि सर्वाणि कार्याणि बहुलं भवन्तीत्यर्थः। "वे"तियोगविभागस्याऽप्ययमेवार्थ इति सिद्ध्यति सर्वे विधय इति।

---

( १ ) सर्वो द्वन्दो विभाषयैकवद्भवतीति—नन्वत्र द्वन्द्व इत्येकवचनमनुपपन्नं द्वन्द्वसमासानामनेकत्वात् । नच "जात्याख्यायामि" तिसूत्रबलेन गौरनुबन्ध्य इति दृष्टान्तबलेन च जातिपरतया निर्देश इति वाच्यम् ? सर्वपदानन्वयप्रसङ्गात् ।

न च द्वन्द्वविधायकशास्त्रत्वावच्छिन्नपरत्वाश्रयणान्नैकवचनमनुपपन्नमिति वाच्यम् ? "चार्थे द्वन्द्व" इति द्वन्द्वविधायकस्यैकत्वात् । द्वन्द्वशब्द इह तत्समाससमूहपरः । सर्वशब्दस्त्ववयवकात्स्न्र्ये वर्त्तते । सर्वः पटो दग्ध इतिवत् ।

तथाचैवं परिभाषार्थः-सर्वावयवावच्छिन्नो द्वन्द्वसमाससमूह इत्येवंबोधः । एकशब्दस्त्वेकत्वसंख्याविशिष्टबोधकपरः । तद्वत्कार्यं लभत इत्यर्थेनैनया परिभाषया विकल्पेनैकवचनमतिदिश्यत इति तत्त्वम् । सर्वशब्दमहिम्ना प्राण्यङ्गादिद्वन्द्वानान्न ग्रहणं "द्विगुरेकवचनमि"तिसाहचर्यण "द्वन्द्वश्च प्राणितूर्ये"त्यादिषु समाहारद्वन्द्वस्यैव ग्रहीतुं शक्यत्वात् इति ।

न्दसीति सूत्रे चेति योगविभागेन चैषा साधिता । तेन प्रतीपमन्य ऊर्मि-र्युध्यतीत्यादि सिद्धम् । युध्यतइति प्राप्नोति ॥ ३५ ॥

ननु क्षिय इत्यादावियङ्कथमत आह—

प्रकृतिवदनुकरणं भवति ॥ ३६ ॥

क्षिय इतीयङ्निर्देशो ऽस्या ज्ञापकः । तत्रैव प्रातिपदिकत्वनिबन्धन-विभक्तिकरणादनित्या चेयमिति क्षियोदीर्घादिति सूत्रे भाष्ये स्पष्टम् ॥३६॥

---

सर्वे विधयश्छन्दसि विकल्प्यन्ते—स्वनिष्ठाधारतानिरूपकत्वसम्बन्धा-वच्छिन्ना छन्दस्त्वावच्छिन्ना छन्दोनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या सर्वविधित्वावच्छिन्ना विशेष्यता आचार्यनिष्ठकर्तृतानिरूपकविकल्पत्वाव-च्छिन्नप्रकारतानिरूपितेति फलमुख्यविशेष्यकशाब्दबोधः ।

नच युध्यतीति रूपन्तु अनुदात्तत्वलक्षणमात्मनेपदमनित्यमिति परिभाष-यैव सिद्धं किमनयेति चेन्न ? एतदुदाहरणपरभाष्यप्रामाण्येन तस्याः परिभा-षाया अनावश्यकत्वध्वननस्य वक्ष्यमाणत्वात् ।

क्षिय इत्यादावियङ् कथमिति—"क्षियो दीर्घादि"ति सूत्रे क्षीत्यस्य लक्ष्यस्थक्षिधातोरनुकरणत्वेन धातुत्वाभावेन धातुत्वनिबन्धन इयङ् न स्यादिति तत्त्वम् । प्रकृतिवदनुकरणमिति—अनुकरणत्वञ्च स्ववृत्त्यानुपूर्व्यवच्छिन्नवि-षयताप्रयोजकत्वम् प्रकृतिरनुकार्य्यम् तद्वद् भवति तद्वृत्तिधर्मवदिति यावत् ।

ननु धातुत्वातिदेशेऽधातुरिति पर्य्युदासेन प्रातिपदिकसंज्ञा न स्यादिति ता-त्पर्य्येणाह अनित्या चेयमिति । क्वचिल्लक्ष्येऽनुकार्यधर्मारोपेण कार्य्यम् क्वचि-न्नेत्याशयः ।

ननु कृतदीर्घस्यानुकरणं ह्रस्वान्तानुकरणम्वा? आद्ये दीर्घग्रहणवैयर्थ्यापत्तिः, अन्त्ये ह्रस्वेकारान्तस्य "शेषो घ्यसखी"ति घिसंज्ञया गुणाऽपत्तिः। अत्र विल-क्षणप्रकारः दीर्घान्तस्यैवानुकरणमित्यंशे दीर्घग्रहणस्य तात्पर्याऽभिधानात् ।

परिभाषायाश्शाब्दबोधः—प्रकृतिप्रतियोगिकसादृश्यवदनुकरणं भवती-त्यर्थः । स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकृतित्वावच्छिन्नप्र-कारतानिरूपिता या सादृश्यावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधि-करणस्वरूपसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता याऽनुकरणत्वा-वच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रका-रता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यता समानाधिकरणवृत्तित्वसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता परि-च्छिन्नत्वसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नप्रकारतानिरूपिता या भूधा-त्वर्थक्रियात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

ननु रामावित्यादौ वृद्धौ कृतायां कार्यकालपक्षे कथं पदत्वमुभयत आश्रयणेऽन्तादिवत्त्वाभावाद्यस्माद्विहितस्तदादितदन्तत्वाभावादत आह-

एकदेशविकृतमनन्यवत् ॥ ३७ ॥

---

ननु रामावित्यादौ वृद्धौ कृतायामिति—राम आविति स्थिते वृद्धिरूपैकादेशेन सुपस्तदादेश्चापहृतौ सुबन्ततदादित्वाऽभावाद् यदा कार्य्यन्तदा संज्ञेत्यर्थककार्यकालपक्षे "सुप्तिङ"ति पदत्वाऽसिद्धिरिति तत्त्वम् ।

ननु वृद्धौ कृतायामपि "अन्तादिवच्चे"इत्यनेन पूर्वान्तवद्भावात्तदादित्वेन सुबन्ततदादित्वात्पदत्वं स्यादेवेत्यत आह उभयत (१)आश्रयण इति । न च का-

---

(१) एकदेशविकृतमनन्यवत्—अन्तादिवत्त्वाभावादिति–अयं ग्रन्थः प्राचीनमते । शेखरकारमते तु उभयत आश्रयणेऽपि "अन्तादिवच्चे"तिसूत्रप्रवृत्तिः । परन्तु पौर्वापर्य्यलक्षणो व्यपवर्गस्तेन दुर्लभः । प्रकारेणैवमाभीयादित्यादावेर्लिङीति न ह्रस्वः । ग्लायत इत्यादौ व्यपवर्गधर्माश्रयणन्तु स्थानिवद्भावेनातो लत्वम् ।

तथाच रामाविति नावतरणमपितु वाच्यस्तवः मासपूर्व इति । आद्ये सुबलुगुत्तरं विशिष्टसमासत्वसम्पत्तिरनया परिभाषया अजहत्स्वार्थायां वृत्तौ प्रत्येकमप्यर्थवत्त्वेनानुमानिकस्थानिवद्भावेन समुदाये तदनिर्देशस्य दौर्लभ्यात् ।

एवञ्चैनया समासत्वातिदेशेन न समास इति वार्त्तिकप्रवृत्त्या शाकलप्रतिषेधः । द्वितीये तु समुदाये मासपूर्व इति समासत्वातिदेशेन तृतीयासमास इति सर्वनामसंज्ञाप्रतिषेधः । अन्यवन्नेत्यर्थ इति–अन्येन तुल्यमन्यवत् न अन्यवत् अनन्यवदिति वत्यन्तेन नञ्समासः । नहि नञ्समासाद्वतिः । ननु नञ्समासाद्वतिरेवास्तु नञ् पदं पर्य्युदासार्थकम्प्रसज्याश्रयणे तु प्रासवाधपरार्थकल्पनात्स्वार्थत्यागासमर्थसमासाश्रयणादिगौरवञ्च । अनन्यशब्दोऽविकृतपरः । अन्यत्वस्य अविकृतप्रतियोगिकत्वेन विवक्षितत्वात् । एकदेशविकृतशब्दो हि विकृतवाची तृतीयातत्पुरुषसमासः । अविकृतवद्विकृतकार्य्यं लभत इति फलितार्थ इति चेन्न ? पर्य्युदासे हि स्वीक्रियमाणे अन्यत्वस्य यावत्प्रतियोगिकस्याऽप्रसिद्धत्वेऽपि यत्किञ्चित्प्रतियोगिकस्य प्रसिद्धत्वेन सामान्यरूपेण तादृशान्यत्वस्यैव ग्रहणाऽपत्तौ कप्रत्ययान्तदामलिहशब्दोत्तरपदकप्रादिसमासादाचक्षाणण्यन्तात्क्विपि सुदामलिडित्यत्र स्वभिन्नाऽव्ययीभावभिन्नबहुव्रीहित्वातिदेशेन "नञ्सुभ्यामि"तिस्वराऽपत्तेः ।

एवञ्च प्रसज्यप्रतिषेध एवाश्रयणीयस्तथाच यत्किञ्चिदन्यत्वस्य केवलान्वयितया तदवच्छिन्नप्रतियोगिताकसादृश्यस्य भेदघटितस्याऽप्रसिद्धत्वात्तद्भिन्नप्रतियोगिताकसादृश्यग्रहणे तस्याः केवलान्वयित्वेन निषेधाऽप्रसिद्धेस्सादृश्यस्य भेदघटितत्वाभावेऽपि यत्किञ्चिदन्यत्वविशिष्टस्वनिरूपितसादृश्यस्य स्वस्मिन् दुर्वारत्वेन निषेधाऽनु-

र्थकालपक्ष एवं सत्त्वेऽपि यथोद्देशपक्षे जातां संज्ञामादायैवेष्टसिद्धौ कथं ग्रन्थसङ्गतिरिति वाच्यम्? प्राचीनमताभिप्रायेणैतद्ग्रन्थसङ्गतेः। तिङन्तीयाभीयादित्यत्र ह्रस्वविचारप्रकरणे उभयत आश्रयणेऽप्यन्तादिवद्भावस्य स्वमत इष्टत्वाच्च।

न च यथोद्देशपक्षमाश्रित्य जातपदसंज्ञाया राम औ इत्यस्योच्चारणप्रसङ्गे रामावित्यादेश इत्यानुमानिकस्थान्यादेशभावमनुसृत्य स्थानिवद्भावेनापि सिद्धिसम्भवः। न च पदसंज्ञावृद्ध्यादेशयोः प्राप्तौ कृताकृतप्रसङ्गित्वेन नित्यत्वात्पदसंज्ञापेक्षया वृद्ध्यादेशे यथोद्देशपक्षेऽपि पदत्वाभावः अपरनिमित्तकत्वेनान्तरङ्गत्वात्पूर्वं पदसंज्ञाया एव प्रवृत्तेरिति वाच्यम्? चकारेत्यत्र द्वित्वे पूर्वस्याऽभ्यासत्वे उरदत्वे रपरत्वे करित्यस्याभ्यासत्वाभावेन "हलादिश्शेषो" न स्यात्।

न च स्थानिवद्भावः? अभ्यासस्यानर्थकत्वेनार्थवत्त्वनिबन्धनस्थानिवद्भावाऽप्रसक्तेः। एकदेशविकृतन्यायाश्रयणे तु कृगतमभ्यासत्वं करित्यत्रानीय न दोष इति फलानुसन्धानात्। नन्वर्द्धविकारेऽर्द्धाधिकयविकारेऽक्तपरिमाणे संज्ञायाश्चैकदेशविकृतन्यायो न प्रवर्तत इति सिद्धान्तादर्द्धाधिक "ऋकार"स्य विकृतत्वेन परिभाषाया न प्रवृत्तिरिति नैतत्फलमिति वाच्यम्? द्वित्वशास्त्रविशिष्टस्याभ्याससंज्ञेति "पूर्वोऽभ्यास" इत्यस्यार्थवर्णनात्। वैशिष्ट्यञ्च स्वीयविधेयताश्रयावधिकपूर्वत्वस्वीयोद्देश्यताश्रयसमभिव्याहृतवर्णाऽघटितत्वोभयसम्बन्धेन। करिति समुदायस्य विधेयताश्रयोत्तरखण्डपूर्वत्वमस्त्येव उद्देश्यताश्रयः कृ इति तत्समभिव्याहृतो द्वित्वपूर्वकालिको वर्ण उपसर्गावयवादिस्तदघटितत्वञ्च करित्यस्येति व्याख्यानेनात्र फलन्नैतत्परिभाषाया इति प्रकृष्टो राः यस्मिन् कुले तत्प्ररि प्रराभ्यामित्यत्र "रायो हली"त्यात्वसिद्धिरपि न फलम्। रैशब्दस्य रीत्यादेश इति आनुमानिकस्थान्यादेशभावेन सिद्धेः। गुणोदकमित्यत्र गुणादेशोऽनया उदकशब्दत्वमाश्रित्य स्वरसिद्धि "रुदके केवल" इत्यनेनेति फलमित्यपि न? पूर्वोत्तरपदनिमित्तकार्य्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेति परिभाषया स्वरस्यैव पूर्वम्प्रवृत्त्यभिधानात्। अत एव स्थानिवत्सूत्रे भाष्ये स्थानिवद्भावेनानुमानिकस्थान्यादेशभावेन सिद्धिरेव न परिभाषाप्रयोजनमिति कथनं सुगतम्।

विकृतमिति भावक्तान्तः विकार इत्यर्थः। एकदेशस्य विकृतं कोऽर्थो विकारो यस्मिन् इति व्यधिकरणबहुव्रीहिः। किञ्च एकदेशो विकृतो विकारप्रतियोगी यस्मिन्निति वा? एकदेशविकृतं कोऽर्थ एकदेशावच्छेदेन विकृतिमानित्यर्थः। तृतीयातत्पुरुषसमासः, तृतीयार्थोऽवच्छेदकत्वम्, स्वावयवविकारविशिष्टं स्ववद्भवतीति परिभाषार्थः। वैशिष्ट्यञ्च स्वघटकमात्रप्रतियोगिकविकारवत्व-स्व-

पपत्तेश्च। गत्यन्तराऽभावेन तत्तद्विकारोपादानकारणीभूताऽविकृतप्रतियोगिकस्यैवान्यत्वस्य ग्रहीतुं शक्यत्वेन न प्रागुक्तदोषा इति मूलग्रन्थतत्त्वम्।

अनन्यवदित्यस्यान्यवन्नेत्यर्थः। तत्रान्यसादृश्यनिषेधे ऽन्यत्वाभावः सुतराम्। अत एव तादृशादर्थबोधः। अन्यथा शक्ततावच्छेदकानुपूर्व्यं ज्ञानात्ततो बोधो न स्यात्।

---

विशिष्टाऽघटितत्वैतदुभयसम्बन्धेन। सम्बन्धघटकवैशिष्ट्यञ्च स्वाऽघटकत्वस्व-घटकमात्रोद्देश्यकविकारेतरत्वोभयसम्बन्धेन। निर्जरशब्दे निरित्यस्य जरेतिस-मुदायघटकत्वेन स्वघटकमात्रोद्देश्यकविकारो ह्रस्वरूपस्तदितरत्वेन स्वविशिष्ट-त्वं निर्जरेतिसमुदायस्य तद्घटितत्वेनैकदेशविकृतत्वाऽभावः। स्वघटकमात्रे-तिद्वितीयसम्बन्धनिवेशान्न रामा इति समुदायस्य एकदेशविकृतत्वम्। अत्र मात्रपदनिवेशादेव काण्डे कुड्य रमते ब्राह्मणकुलमिति "ह्रस्वो नपुंसक" इति सूत्रभाष्यप्रयोगे एतन्न्यायेन प्रातिपदिकत्वातिदेशो नात एवोपायान्तरेण ह्रस्ववारणपरभाष्यविरोधाऽभावः।

नन्वेतस्याः परिभाषायास्सत्त्वेऽपि कथन्तादृशादर्थबोधः शक्ततावच्छेदका-नुपूर्वीरूपधर्मस्य विकृतावयवघटितत्वेनातिदेशाऽसम्भवादिति चेन्न? एकदेश-विकृतमनन्यवद् यथा भवेत्तथा करणीयमिति परिभाषार्थस्वीकारेण मान्तवृ-त्त्यानुपूर्व्यामेव तत्तच्छक्ततावच्छेदकत्वाऽरोपेण मान्तभागेऽपि तादृशशक्त्य-नुमानात्ततो बोधस्य निरञ्जनत्वात्, रामशब्दस्याऽखण्डत्वाद्विकृतावयवनिब-न्धनकार्यत्वाभावेन परिभाषाप्रवृत्तेस्सुलभत्वाच्च।

अथ परिभाषायाश्शाब्दबोधप्रकारो द्रष्टव्यः।

एकदेशविकृतमनन्यवत्—अन्यप्रतियोगिकसादृश्याश्रयप्रतियोगिकभेदव-देकदेशविकृतमित्यर्थः। यदेकदेशविकृतं यद् भवति तत्ततोऽन्यन्न भवती-ति फलति।

यत्किञ्चित्समुदायत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नैकदेशत्वावच्छिन्नप्र-कारतानिरूपितविकृतत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वनिष्ठप्रतियोगितानिरूप-कत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या अन्यत्वावच्छिन्ना विशेष्यता तादृश-विशेष्यत्वावच्छिन्नसादृश्याश्रयत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वप्रतियोगिकत्व-सम्बन्धावच्छिन्नप्रकारतानिरूपितभेदवत्त्वावच्छिन्नविशेष्यतासमानाधिकरणस्व-रूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या भूधात्वर्थक्रियात्वावच्छिन्ना विशे-ष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

अत एवेति—मान्तरामशब्देऽदन्तरामशब्दाऽभेदस्यैनया परिभाषया बोधितत्वादेवेत्यर्थः। स्वाऽभेदबोधने जाते स्ववृत्तिदाशरथिनिरूपितशक्तिमत्त्व-मर्थतस्सिद्धम्। नन्वेवमतिदेशेऽदन्तत्वादिधर्मवत्त्वमपि अतिदेश्यं स्यादिति चेन्न? विकृतावयवनिबन्धनत्वेन तदतिदेशाऽसम्भवात्।

एवं च रामिति मान्तस्य यस्माद्विहितस्तस्त्वमौ इत्यस्य परादिवत्त्वे- न सुप्त्वमिति तदादितदन्तत्वमार्थसमाजग्रस्तम् ।

छिन्नपुच्छे शुनि श्वत्वव्यवहारवन्मान्ते तत्त्वं लोकन्यायसिद्धम् । अत एव प्राग्दीव्यत इति सूत्रे भाष्ये दीव्यतिशब्दैकदेशदीव्यच्छब्दानु- करणमिदमित्युक्त्वा किमर्थं विकृतनिर्देश एतदेव ज्ञापयत्याचार्यो भव- त्येषा परिभाषैकदेशविकृतमनन्यवदित्युक्तम् ।

एतेनायं न्यायः शास्त्रीयकार्य एव शास्त्रीयविकार एवेत्यपास्तम् । विकृतावयवनिबन्धनकार्ये तु नायं, छिन्नपुच्छवत्त्वव्यवहारवद्विकृताव- यवव्यवहारस्य दुरुपपादत्वात् ।

एवमक्तपरिमाणग्रहणेपि नायम्, उक्तयुक्तेः । एतत् "येन विधिरि"- त्यत्र भाष्यकैयटयोर्ध्वनितम् ।

---

एवञ्चेति—परिभाषास्वीकारे चेत्यर्थः । आर्थसमाजग्रस्तमिति—अर्थ- स्यायमार्थः "तस्येदमि"त्यण् समाजस्समुदायः आर्थश्चासौ समाज इति आर्थ- समाजस्तेन ग्रस्तम्व्याप्यमिति यावत् । अत्रार्थपदेन सुप्त्वन्तदादित्वञ्च विवक्षि- तम् । परिभाषाया लोकसिद्धत्वेऽपि शास्त्रेऽपि तदाश्रयणे प्रमाणमाह अत एव प्राग्दीव्यत इति । परिभाषास्वीकारादेवेत्यर्थः । दीव्यतिशब्दैकदेशो दीव्यच्छ- ब्दानुकरणमित्यर्थः ।

किमर्थमिति—ननु लाघवात्तान्तस्यैवावधित्वे तस्यैवेदमनुकरणं न विशि- ष्टस्येति वाच्यमिति चेन्न ? "अत इञ्" इत्यत्राणिञोः पर्यायेण विधानव्यावृ- त्त्यर्थमर्थावधिमत्त्वस्येष्टत्वेनावध्यवधिमतोस्साजात्यस्येष्टत्वेन नियमेनार्थावधित्व- स्यैवाभीष्टत्वात्तान्तस्य निरर्थकत्वेन तत्त्वाऽसम्भवात् । तथाचैकदेशविकृतोऽप्य- र्थबोधकः । अन्यथा न्यायेन शब्दस्वरूपाऽभेदप्रतिभाषणेऽपि उक्तरीत्याऽर्थाऽ- बोधकत्वेनार्थस्यावधित्वन्नैव स्यादिति तात्पर्य्यम् । ज्ञापयतीति—स्वांशे चारि- तार्थ्याऽभावाद्बोधयतीत्यर्थः । नन्वेवमपि कतरदित्यत्र विकृतावयवहस्वत्वनिब- न्धनकार्य्यं स्यादत आह विकृतावयवेति । अक्तपरिमाणेति—परिच्छिन्नप- रिमाणग्रहण इत्यर्थः । उक्तयुक्तेरिति—लोके यथा छिन्नपुच्छे शुनि पुच्छवन्नि- ष्ठस्य सेटकपरिमितत्वादेर्व्यवहाराऽभावादित्यर्थः ।

अक्तपरिमाणत्वञ्च संख्यात्वपरिमाणत्वव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धि- निष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् । वैशि- ष्ट्यञ्च स्वघटितत्वस्वसमनियतत्वान्यतरसम्बन्धेन । द्व्यक्तत्वस्य हि एकत्वप्रति- बन्धकीभूतद्वित्वघटितत्वात् । त्रित्वप्रतिबन्धकीभूतचतुष्ट्वसमनियतत्वाज्जरात्वा- देः परिच्छिन्नपरिमाणत्वेनादेशासिद्धिः ।

ननु गुडोदकमित्यत्र दकशब्दे उदकशब्दत्वातिदेशपरकभाष्येण सह विरो-

यत्र त्वर्द्धं तदधिकं वा विकृतं तत्र जातिव्यञ्जकभूयोवयवदर्शनाभावेन तत्त्वाप्रतीतौ कार्यसिद्ध्यर्थं विकृतानलूरूपावयवत्वप्रतीत्यर्थं च स्थानिवत्सूत्रम् ।

क्वचित्तु लक्ष्यानुरोधान्न्यायानाश्रयणम् । तेनाभीयादित्यादिसिद्धिः । स्पष्टं च क्वचिन्न्यायाप्रवृत्तिः प्रथमयोः पूर्वसवर्ण इत्यत्र कैय-

---

ध इति चेन्न ? पूर्वोत्तरपदनिमित्तकार्य्यात्पूर्वमन्तरङ्गोऽप्येकादेशो नेति परिभाषया पूर्वं स्वरप्रवृत्तिं पश्चाद् गुण इति कल्पनया तत्र न दोष इति तत्रत्यभाष्यस्यैकदेशयुक्तित्वध्वननात् । दीव्यतिशब्दत्वस्याप्यनेनातिदेशाऽभावस्तु न वाच्यः ? दीव्यतिशब्दनिष्ठबोधजनकत्वस्यैव दीव्यतृशब्देऽतिदेशादिष्टसिद्धेः ।

अत्र केचिद्विलक्षणाः, समनियतधर्मस्थानयाऽतिदेशो न भवति "उदके केवल" इतिसूत्रस्थभाष्यविरोधात् । अभीयादित्यत्र तु ह्रस्वो न भवति "एतेर्लिङी"तिसूत्रस्थभाष्यप्रामाण्येन न्यायस्याऽनित्यत्वबोधनात् । अत एवाभीयात्पतञ्जलिरित्यत्र जश्त्वन्न भवतीत्याहुः ।

अत्र पूज्यचरणाः—संख्यात्वपरिमाणत्वान्यतरव्याप्ययत्किञ्चिज्जातिव्यापकाऽभावप्रतियोगित्वमक्तपरिमाणत्वम् । स्वाधिकरणवृत्त्यत्यन्ताऽभावप्रतियोगिताऽनवच्छेदकधर्मवत्त्वम्व्यापकत्वमत्र लक्षणेऽधिकरणता च स्वाश्रयाश्रयत्वसम्बन्धावच्छिन्ना । यथा संख्यात्वसामान्यव्याप्या जातिं पञ्चत्वत्वम्, तदधिकरणं स्वाश्रयाश्रयत्वसम्बन्धेन पञ्चाक्षरावयवकसमुदाय एव, तद्वृत्त्यत्यन्ताभावो घटत्वाद्यभावो नतु जरात्वाभावाभावोऽपि, तदीयप्रतियोगितावच्छेदकं घटत्वत्वमनवच्छेदकं जरात्वाभावत्वन्तद्वत्त्वरूपंव्यापकत्वं जरात्वाभावस्य, तत्प्रतियोगित्वं जरात्वस्येति लक्षणसङ्गतिः ।

संख्यात्वव्याप्यजातिम्प्रति व्यापकत्वाऽभावादङ्गत्वधातुत्वपदत्वादीनां नाक्तपरिमाणत्वम् तिङ्त्वोपसर्गत्वप्रत्ययत्वाद्यभावा पञ्चत्वत्वादिजातिव्यापका इति तदानयनेऽक्तपरिमाणत्वमिष्टं सिद्ध्यति । येषान्धर्माणाम्परिगणिताक्षरारम्भकसमुदायात्मकव्यक्तिवृत्तित्वन्तेषामेवाक्तपरिमाणत्वमिति फलति । अङ्गत्वधातुत्वपदत्वानान्तु तत्त्वाभावेन नाक्तपरिमाणत्वमित्यूचुः ।

नन्वनेनैव न्यायेन सर्वत्र सिद्धौ स्थानिवत्सूत्रम्व्यर्थमित्यत आह यत्र त्वित्यादिजातिव्यञ्जकेत्यादि । उदाहरणं रामायेति । तत्र सुप्त्वातिदेशार्थमित्यर्थः । तत्त्वाऽप्रतीताविति—अनन्यत्वाऽप्रतीताविति तात्पर्य्यम् । लोके छिन्नाधिकावयवकेश्वादौश्वत्वाद्यप्रतीतिरिवितत्त्वम् । विकृतानलूरूपेति – चर्मन्शब्दादाचक्षाणे णिचि टिलोपे चर्म् इत्यत्रानेन न्यायेनानन्तत्वातिदेशो न भवति ? अनन्तत्वातिदेशस्य विकृतावयवनिबन्धनत्वात् । नन्वनेन न्यायेन अभीयादित्यत्र भान्ते पदत्वाज्जश्त्वन्दुर्वारमित्यत आह क्वचिदित्यादि ।

टेन दर्शितेत्यन्यत्र विस्तरः ॥ ३७ ॥

इति शास्त्रत्वसम्पादकम् प्रथमन्तन्त्रम् ।

अथ मूलखण्डनप्रकारः, अनन्यवदित्यस्यान्यवन्नेत्यर्थ इति तु न युक्तम॰ नन्यपदेन "द्वौ नञौ च समाख्यातौ पर्य्युदासप्रसज्यकौ। पर्य्युदासस्सदृग्ग्राही प्रसज्यस्तु निषेधकृदि"तिन्यायेन स एव पदार्थोऽवगम्यते जातविकारस्तदन्योऽपि तद्वत्कार्य्यं लभत इत्यर्थात् । येन नाऽव्यवधानमनन्यगतिरित्यादिषु तादृशार्थस्यैव प्रतीतेः । अन्यवन्नेति कथने नञ् क्रियान्वयेऽसमर्थसमासादिकल्पने गौरवञ्चेति ।

किञ्च तत्रान्यसादृश्यनिषेधे सुतरामन्यत्वनिषेध इति तु कथमपि न युक्तम् ? अन्यसादृश्यनिषेधेऽप्यन्यनिषेधे प्रमाणाऽभावात् । अन्यथा शक्ततावच्छेदकानुपूर्व्यज्ञानात्ततो बोधो न स्यादिति तु अत्यन्तमयुक्तम् ? "पदे न वर्णा विद्यन्ते वर्णेष्ववयवा न च । वाक्यात्पदानामत्यन्तम्प्रविवेको न कश्चने"तिप्रमाणेन पदस्फोटवादिवैयाकरणानां शक्ततावच्छेदकानुपूर्वीज्ञानाऽभावो महान् गुणः नैयायिकानान्तु स्थानिनाम्वाचकत्वमिति न विवादः ।

णमिति मान्तस्य यस्माद्विहित प्रत्ययस्तत्त्वमार्थसमाजग्रस्तमिति मूलं शेखरस्थमयुक्तम्—प्रातिपदिकसंज्ञा राम इत्यस्य औप्रत्ययश्चादन्तरामशब्दादेव नहि रामिति हलन्तो रामशब्दः । अत एव "येन विधिरि"तिसूत्रे तदेकदेशविज्ञानाद्वा सिद्धमिति वार्तिकीयव्याख्यावसरे सर्वके भिनत्तीत्यादौ अनेका नदी गङ्गां यमुनां च प्रविष्टा गङ्गायमुनाग्रहणेन गृह्यते, देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते इति लौकिकन्यायमुपन्यस्य विषम उपन्यास इत्युपक्रम्य सर्वनामाव्ययधातुसंज्ञा अकपरिमाणस्य कृतास्ता केनाधिकस्य स्युरित्युक्तं देवदत्तो मुण्ड्यपि जट्यपि शिख्यपि स्वमाख्यां न जहातीति वृद्धिसंज्ञासूत्रभाष्यात्। शेखरप्रकारस्वीकारे एष्वेकदेशविकृतन्यायेनैव सिद्धौ उक्तभाष्यमसङ्गतं स्यात्। श्वाकर्णे पुच्छे वा छिन्ने श्वैव नाश्वो न गर्दभ इति लोकन्यायस्य व्याकरणेऽनाश्रयणं स्थानिवत्सूत्रेण सिद्धेरिति तदागमपरिभाषायान्निरूपितम्। सर्वे सर्वपदादेशा इति न्याये पदशब्देन कार्य्य प्रति यत्पद्यमानं प्रतीयमानं प्रकृतिप्रत्ययादि तत्सर्वं गृह्यत इति वदता कैयटेन स्थानिवद्भाव एव समर्थितो न न्यायः । प्राग्दीव्यतोऽणिति सूत्रभाष्ये उक्तपरिभाषां ज्ञापयित्वा किमेतस्य ज्ञापने प्रयोजनमिति परिचोद्य एकदेशविकृतस्योपसंख्यानं चोदितम् , तन्न वक्तव्यम्भवति इति स्थानिवद्भाव एवोपपादितः ।

अकपरिमाणस्थले नायन्न्यायोऽर्थादकपरिमाणस्थलेऽयन्न्यायो न प्रवर्तते इति तु सर्वथाऽयुक्ततरम् ? "सुप्तिङन्तमि" त्यत्र यस्माच्छब्दात्प्रत्ययविधिस्तस्य शब्दस्य स एव शब्दस्वरूपमिति वचनात् संज्ञा । सा च अकपरिमाण॰

स्य कृतेति कथङ्कारं रामिति मान्ते प्रवर्त्तेत यत्रार्द्धन्तदधिकं वा विकृतं तदर्थस्या-निवद्धावस्यावश्यकत्वाच्च, अभीयादित्यत्र "एतेर्लिङी"ति ह्रस्वापत्तेश्च । अस्मन्मते हि "उभयत आश्रयणे नान्तादिवदि"तिनिषेधान्न ह्रस्वः । धात्वादिसंज्ञावदुपसर्गसंज्ञाया अपि अक्तपरिमाणे कृतत्वेन त्वन्मतेऽप्यत्र न्यायाऽप्रवृत्त्या न्यायाऽनित्यत्ववर्णनस्यायुक्तत्वात् एकादेशस्य नियोगतऽपरादित्वं स्वीकृत्याऽवशिष्टस्य प्रत्ययविधानावधित्वस्वीकारे "न पदान्त" सूत्रे कथं ब्रह्मबन्धवा ब्रह्मबन्ध्वै उभयत आश्रयणे नान्तादिवदिति भाष्यविरोधाच्चेति । अत्र न्याये ज्ञापकन्तु "आढ्या"दिसूत्रेऽच्व्याविति प्रतिषेध एव ।

अथ शास्त्रत्वसम्पादकाख्ये प्रथमतन्त्रे यथास्थानमव्याख्यातशाब्दबोधानामिह परिभाषाणां समाप्तिकाले सहैव यथासंख्यं शाब्दबोधा लिख्यन्ते । ते च विद्वद्भिस्सम्यगालोचनीयाः ।

व्याख्यानतो विशेषप्रतिपत्तिर्नहि सन्देहादलक्षणम्—

कार्येत्यध्याहारः, विशेषप्रतिपत्तिर्व्याख्यानतऽकार्या । हि यतः सन्देहाच्छास्त्रमलक्षणन्न भवति इति अन्वयः । विशेषस्य प्रतिपत्तिरिति षष्ठीतत्पुरुषः। प्रातप्रत्तिशब्दार्थौ ज्ञाननिश्चयात्मकज्ञानम्वा विषयत्वं षष्ठ्यर्थः, घटस्य ज्ञानमितिवत् प्रतिपूर्वकपद गताविति धातुः भावे क्तिन्। विशेषपदेन सन्देहविषयीभूतान्यतररूपार्थग्रहणम् । विआङ्पूर्वकख्याधातुर्ल्युडन्तः, व्याख्यानं कथनम् । शिष्टत्वञ्च निखिलशब्दधर्मिकसाधुत्वप्रकारकयथार्थज्ञानवत्त्वम् । पाणिनिकात्यायनपतञ्जलिप्रभृतयः । प्रयोज्यत्वं पञ्चम्यर्थः ।

तथाच विषयतासम्बन्धावच्छिन्नान्यतरार्थकविशेषत्वावच्छिन्ना विशेषनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या प्रतिपत्तित्वावच्छिन्ना प्रतिपत्तिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना व्याख्यानत्वावच्छिन्ना व्याख्याननिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रयोज्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना कार्यात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

अत्र हेतुमाह सन्देहादिति । पञ्चम्यर्थो हेतुत्वम् । सन्देहत्वावच्छिन्ना सन्देहनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता विभक्त्यर्थहेतुत्वत्वावच्छिन्ना हेतुत्वनिष्ठा या विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना शास्त्रत्वावच्छिन्ना शास्त्रनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना अलक्षणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना भूधात्वर्थव्यापारत्वावच्छिन्ना भूधात्वर्थव्यापार-

निष्ठा वर्तमानकालत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

यथोद्देशं संज्ञापरिभाषम्—

संज्ञापरिभाषान्यतरत्वावच्छिन्ना संज्ञापरिभाषान्यतरनिष्ठा या स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या यथोद्देशत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविषयकशाब्दबोधः ।

एवम् संज्ञापरिभाषान्यतरत्वावच्छिन्ना संज्ञापरिभाषान्यतरनिष्ठा याऽधारता तादृशाधारतानिरूपिता या कार्यकालत्वावच्छिन्ना कार्यकालनिष्ठाऽधेयता तादृशाधेयताविशिष्टशाब्दबोधः ।

अनेकान्ता अनुबन्धाः—

इत्संज्ञकत्वमनुबन्धत्वमुच्चरितप्रध्वंसित्वम्वेति पाणिनिकात्यायनपतञ्जलीनां सङ्केतः । एकान्तशब्दोऽवयववाचीति पतञ्जलिसङ्केतः ।

तथाच पाणिन्यादिसङ्केतसम्बन्धावच्छिन्नाऽनुबन्धत्वावच्छिन्नाऽनुबन्धनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना समवायसम्बन्धावच्छिन्नाऽवयवत्वावच्छिन्नाऽवयवनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना आश्रयत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाश्रयनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

एकान्ता इति—

पतञ्जलिसङ्केतसम्बन्धेनानुबन्धत्वावच्छिन्नाऽनुबन्धनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्ना एकान्तत्वावच्छिन्ना एकान्तनिष्ठा या विशेष्यता तादृशविशेष्यताविशिष्टो बोध इति साधारणप्रकारः ।

नानुबन्धकृतमिति—

अनुबन्धेन कृतम् अनेकाल्त्वन्न भवति ।

स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्ना अनुबन्धत्वावच्छिन्नाऽनुबन्धनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता कृधात्वर्थविशिष्टकृतत्वावच्छिन्ना कृतपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या व्यापारजन्यफलाश्रयत्वसम्बन्धावच्छिन्ना अनेकाल्त्वत्वावच्छिन्ना अनेकाल्त्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना अनेकाल्त्वत्वावच्छिन्ना अनेकाल्त्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थभवनत्वावच्छिन्ना भवन-

निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या नञर्थ-भेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्र-कारतानिरूपिता या आश्रयत्वत्वावच्छिन्ना आश्रयत्वनिष्ठप्रकारतानिरूपिता-श्रयनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

वैयाकरणमते समासे विशिष्टा शक्तिः । नञर्थो भेदवान्, भेदपदार्थस्या-भेदसम्बन्धेनाश्रयेऽन्वयः । नैयायिकमते तु विशिष्टा शक्तिर्नास्ति, नञर्थो भेद-स्तस्य स्वरूपसम्बन्धेनाश्रयेऽन्वय इति सार्वत्रिको व्यवहारः ।

नानुबन्धकृतमनेजन्तत्वमिति—

अनुबन्धेन कृतम् अनेजन्तत्वन्न ।

पतञ्जलिसङ्केतसम्बन्धावच्छिन्नस्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्ना-ऽनुबन्धत्वावच्छिन्नाऽनुबन्धनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या कृधात्वर्थविशिष्टकृतत्वावच्छिन्ना कृतपदार्थनिष्ठा विशेष्यता तादृशविशेष्यता-समानाधिकरणप्रकारतानिरूपिता या कृधात्वर्थोत्पादनव्यापारजन्यफलाश्रयत्व सम्बन्धावच्छिन्ना एजन्तत्वप्रतियोगिकभेदाश्रयत्वत्वावच्छिन्नाऽनेजन्तत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वनिष्ठप्रतियो-गितानिरूपकत्वसम्बन्धावच्छिन्नाऽनेजन्तत्वत्वावच्छिन्नाऽनेजन्तत्वनिष्ठा विशे-ष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या नञर्थभेदत्वावच्छि-न्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्नाश्रयत्वत्वावच्छिन्नाश्रयत्वनिष्ठप्रकारतानिरूपिताश्रयनि-ष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

नानुबन्धकृतमसारूप्यमिति—

अनुबन्धेन कृतम् असारूप्यन्नेत्यन्वयः ।

स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्नाऽनुबन्धत्वावच्छिन्नाऽनुबन्धनि-ष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या कृधात्वर्थनिष्ठविशेष्यतासमाना-धिकरणप्रकारतानिरूपिता क्तान्तत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपि-ता या स्वव्यापारजन्यफलाश्रयत्वसम्बन्धावच्छिन्ना सारूप्यत्वावच्छिन्ना सारू-प्यनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता नञर्थभे-दत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिताश्रयत्वा-वच्छिन्नविशेष्यत्वावच्छिन्नस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्नप्रकार-तानिरूपिता या नञर्थभेदत्वावच्छिन्नविशेष्यत्वावच्छिन्ना अभेदसम्बन्धावच्छि-न्नप्रकारतानिरूपिता या आश्रयत्वत्वावच्छिन्नाश्रयत्वनिष्ठप्रकारतानिरूपिताश्र-यनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

उभयगतिरिह भवति—

इदंशास्त्रत्वावच्छिन्ना इदंशास्त्रनिष्ठा याऽधारता तादृशाधारतानिरूपिता या उभयत्वविशिष्टगतित्वावच्छिन्नोभयगतिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना वा याऽभेदसम्बन्धावच्छिन्नोभयगतित्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यतासमानाधिकरणा वा या वृत्तित्वसम्बन्धावच्छिन्नाऽधेयत्वसम्बन्धावच्छिन्ना वा कर्तृत्वावच्छिन्ना कर्तृनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः ।

यदागमा इति—

अत्र पूज्यचरणाः—स्वसमभिव्याहृतपदार्थो यदर्थे साकाङ्क्षस्तस्यैव षष्ठीवाच्यत्वमितिनियमः । यत्पदोत्तरं षष्ठ्या उद्देश्यत्वमर्थः । यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयो यदागमपदार्थः । तस्य गुणास्तद्गुणाः अतद्गुणास्तद्गुणास्सम्पन्नास्तद्गुणीभूताः । गुणशब्दार्थाऽवयवत्वम् , च्विप्रत्ययार्थ आहार्यज्ञानम् , च्विप्रत्ययार्थभूधात्वर्थाविवक्षा । क्तप्रत्ययार्थो विषयताश्रयः, तन्निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयस्समुदायार्थः । गृह्यतेऽनेनेतिग्रहणम् , तस्य ग्रहणन्तद्ग्रहणम् , तेन तद्ग्रहणेनेति ग्रहधात्वर्थो बोधः करणे ल्युटो विधानाज्जनकत्वं ल्युडर्थः, तत्पदोत्तरषष्ठ्यर्थस्तु बोधान्वयिविषयित्वम् । जन्यत्वम् गृह्यन्त इत्यत्रत्यग्रहधात्वर्थबोधान्वयितृतीयार्थः । बोधस्य च निरूपितत्वसम्बन्धेन विषयताश्रयक्तडर्थैकदेशविषयतायामन्वयः । तथाच तन्निरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावन्निरूपितजन्यत्वविशिष्टबोधनिरूपितविषयताश्रयः । अयमर्थः तद्ग्रहणेन गृह्यन्त इति समुदायस्य बोध्यः ।

तद्गुणा इति अंशे यदागमा इति हेतुः । तद्ग्रहणेन गृह्यन्त इत्यत्र तद्गुणीभूता इति हेतुः । तद्गुणीभूता इत्यत्र तद्विशिष्टा इति शेषः । यत इति अत इति च पदद्वयमुभयत्राध्याहृत्य बोधः । एवञ्च यतो यन्निष्ठोद्देश्यतानिरूपितावयवत्वावच्छिन्नविधेयताश्रयाः अतस्तन्निरूपितावयवत्वप्रकारकाहार्यज्ञाननिरूपितविषयताश्रयाः, यतस्तथाभूता अतस्तद्विशिष्टास्तन्निरूपितविषयितावद्बोधनिष्ठजन्यतानिरूपितजनकतावत्पदनिरूपितजन्यत्वविशिष्टबोधनिरूपितविषयताश्रयाः ।

निर्दिश्यमानस्यादेशा भवन्ति—

निर्दिश्यमानस्य उच्चार्य्यमाणस्य उच्चार्यमाणसजातीयस्य स्थाने आदेशा भवन्ति। स्थानित्वं षष्ठ्यर्थः। तत्र निर्दिश्यमानपदार्थस्य निष्ठत्वसम्बन्धेनान्वयः, निर्दिश्यमानपदार्थस्य स्वनिष्ठसादृश्यनिरूपकत्वसम्बन्धेन समवायसम्बन्धावच्छिन्नवर्णसमूहेऽन्वयः, तस्य च स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धेनादेशपदार्थेऽन्वयः, तस्य चाभेदसम्बन्धेन कर्तृपदार्थेऽन्वयः, तत्रैव कर्तृपदार्थे च समवायसम्बन्धेनैकत्वत्वावच्छिन्नैकत्वसंख्याया अन्वयः, कर्तृपदार्थस्य च वृत्तित्वसम्बन्धेन आधेयतासम्बन्धेन वा भूधात्वर्थसत्तायामन्वयः।

तथाच निर्दिश्यमानसजातीयवर्णसमुदायात्मकनिष्ठस्थानितानिरूपकादेशाऽभिन्नैकत्वविशिष्टकर्तृवृत्तिस्सत्तेति। स्वनिष्ठसादृश्यनिरूपकत्वसम्बन्धावच्छिन्ना निर्दिश्यमानत्वावच्छिन्ना निर्दिश्यमाननिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या सजातीयवर्णनिष्ठा विशेष्यता तादृशविशेष्यता समानाधिकरणप्रकारतानिरूपिता या निष्ठत्वसम्बन्धावच्छिन्नषष्ठ्यर्थस्थानित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वनिष्ठस्थानितानिरूपकत्वसम्बन्धावच्छिन्नाऽदेशत्वावच्छिन्नाऽदेशनिष्ठा विशेष्यता तादृशविशेष्यता समानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्नाऽदेशत्वावच्छिन्नाऽदेशनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या वृत्तित्वसम्बन्धावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टशब्दबोधः।

यत्रानेकविधमान्तर्यन्तत्र स्थानत आन्तर्यम्बलीयः—

यत्रेत्यधिकरणे सप्तमी, विशेषेण धोत्यत इति विधा व्यावर्तको धर्मः, अनेका विधा यत्रेति। अन्तरशब्दस्सदृशार्थकः, आन्तर्य्यं सादृश्यम्, अन्तरस्य भाव इति विग्रहे "गुणवचने"तिष्यञ्। स्थानत इति तृतीयार्थे पञ्चमी, स्थानेनेत्यर्थः। यत्रशब्देन वर्णरूपमधिकरणं कचित् वर्णघटितपदरूपम्वा गृह्यते।

तथाच—यत्किञ्चिन्निष्ठा याऽऽधारता तादृशाऽऽधारतानिरूपिताऽनेकप्रकारकान्तर्य्यनिष्ठाधेयता तादृशाधेयतावती या विषयता तदधिकरणनिष्ठप्रकारतानिरूपिता स्थानरूपान्तर्य्यनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या आन्तर्य्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिताऽभेदसम्बन्धावच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना वा बलीयस्त्वावच्छिन्ना बलीयोनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

अर्थवद्ग्रहणे नानर्थकस्य—

अर्थवद्ग्रहणे सम्भवति अनर्थकस्य ग्रहणन्न। अर्थवद्ग्रहणे इत्यस्य

विशिष्टरूपोपादान इत्यर्थः ।

अर्थश्च वृत्त्या पदप्रतिपाद्यः । अर्थवतो ग्रहणमिति सम्बन्धसामान्ये सत्त्वेऽपि कर्तृकर्मणोरिति कर्मणि षष्ठी । अर्थवत्कर्मकग्रहणे इत्यर्थः । सम्भवतीतित्वध्याहारलभ्यम् ।

तथाच स्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्ना अर्थवत्त्वावच्छिन्नाऽर्थवन्निष्ठा या प्रकारता तादृशप्रकारतानिरूपिता ग्रहणत्वावच्छिन्ना ग्रहणनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना सत्यर्थसम्भवत्त्वावच्छिन्ना सम्भवन्निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽनर्थकत्वावच्छिन्नाऽनर्थकनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या षष्ठ्यर्थकर्मत्वत्वावच्छिन्ना कर्मत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना ग्रहणनिष्ठा विशेष्यता तादृशविशेष्यत्वाभिन्ना तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यतासमानाधिकरणा वा या स्वप्रतियोगिकत्वसम्बन्धावच्छिन्ना ग्रहणत्वावच्छिन्नप्रकारतानिरूपिता नञर्थाभावनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

गौणमुख्ययोर्मुख्ये कार्यसम्प्रत्ययः—

गौणमुख्यपदार्थान्यतरनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या मुख्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या कार्यत्वावच्छिन्ना कार्यनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या सम्प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

अनिनस्मन्ग्रहणानीति—

प्रकृत्यादिभ्य उपसंख्यानमित्यभेदे तृतीया । स्वरूपसम्बन्धावच्छिन्नार्थवदनर्थकान्यतरनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या तृतीयार्थाभेदत्वावच्छिन्नाऽभेदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या तदन्तविधिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या कर्मत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता सती अभेदसम्बन्धावच्छिन्न-बहुत्वसंख्यावच्छिन्न-अनइन्‌अस्मन्‌ग्रहणत्वावच्छिन्नप्रकारतानिरूपिता कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नकर्तृत्वावच्छिन्नप्रकारतानिरूपिता प्रयोजित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

एकयोगनिर्दिष्टानामिति—

अभेदसम्बन्धावच्छिन्ना एकयोगनिर्दिष्टत्वावच्छिन्ना एकयोगनिर्दिष्टनिष्ठा

या प्रकारता तादृशप्रकारतानिरूपिता या पदत्वावच्छिन्ना विशेष्यता तादृश-विशेष्यतासमानाधिकरणप्रकारतानिरूपिता या सहशब्दार्थसाहित्यनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रवृत्तिनिवृत्त्यन्यतरनिष्ठा विधेयता सा चोद्देश्यतानिरूपितैव तादृशप्रवृत्तिनिवृत्त्यन्यतरनिष्ठाभेदसम्बन्धावच्छिन्नकर्तृवृत्तिस्सत्तेति शाब्दबोधः ।

क्वचिदेकदेशेऽपीति —

एकयोगनिर्दिष्टानामिति शेषः । अभेदसम्बन्धावच्छिन्नैकयोगनिर्दिष्टत्वावच्छिन्नप्रकारत्वावच्छिन्नपदत्वावच्छिन्नविशेष्यत्वावच्छिन्नसमवायसम्बन्धावच्छिन्नप्रकारत्वावच्छिन्नैकदेशत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितापिशब्दार्थत्वावच्छिन्नविशेष्यत्वावच्छिन्नभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितकर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपितानुवृत्तित्वावच्छिन्ना या विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

भाव्यमानेन सवर्णानामिति—

प्रयोज्यत्वन्तृतीयार्थः, अभेदसम्बन्धावच्छिन्नभाव्यमानत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना भाव्यमानत्वावच्छिन्ना भाव्यमाननिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या पदत्वावच्छिन्ना पदनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या तृतीयार्थप्रयोज्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाभिन्नाऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या सवर्णत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना अभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता षष्ठ्यर्थकर्मत्वस्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना ग्रहणत्वावच्छिन्ना ग्रहणनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

भाव्यमानोऽप्युकारस्सवर्णान् गृह्णाति—

अभेदसम्बन्धावच्छिन्ना भाव्यमानत्वावच्छिन्ना भाव्यमाननिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता याऽपिशब्दार्थत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना उकारत्वावच्छिन्ना उकारनिष्ठा विशेष्यता तादृशविशेष्यत्वाभिन्ना याऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकारतानिरूपिता कर्तृत्वावच्छिन्नो कर्तृनिष्ठ वि-

शेष्यता तादृशविशेष्यत्वावच्छिन्ना वृत्तित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धावच्छिन्नसवर्णत्वावच्छिन्नप्रकारतानिरूपिता या द्वितीयार्थाश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धावच्छिन्ना ग्रहधात्वर्थफलत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या स्वनिष्ठजन्यतानिरूपितजनकत्वसम्बन्धावच्छिन्ना परिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानकालत्वावच्छिन्ना वर्त्तमानकालनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता ग्रहधात्वर्थव्यापारत्वावच्छिन्ना व्यापारनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

वर्णाश्रये नास्ति प्रत्ययलक्षणम्—

स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना वर्णाश्रयत्वावच्छिन्ना वर्णाश्रयनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या प्रत्ययलक्षणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रतियोगित्वसम्बन्धावच्छिन्ना सत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

उणादयोऽव्युत्पन्नानि प्रातिपदिकानि—

अभेदसम्बन्धावच्छिन्ना उणाद्यन्तत्वावच्छिन्ना उणाद्यन्तनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या प्रातिपदिकत्वावच्छिन्ना प्रातिपदिकनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता याऽव्युत्पन्नत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

प्रत्ययग्रहणे यस्मात्स विहितस्तदादेस्तदन्तस्य ग्रहणम्—

स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रत्ययग्रहणाभिन्नशास्त्रत्वावच्छिन्ना प्रत्ययग्रहणशास्त्रनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या यत्किञ्चिन्निष्ठोद्देश्यतानिरूपितविधेयताश्रयीभूतप्रत्ययनिष्ठा विशेष्यता तादृशविशेष्यताघटिततदादितदन्तत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या षष्ठ्यर्थकर्मत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

प्रत्ययग्रहणेचाऽपञ्चम्याः—

यत्र प्रत्ययग्रहणे शास्त्रे पञ्चम्याः पर ✓ प्रत्ययस्तत्र तदन्तविधिर्नेत्यर्थः ।

स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना यत्प्रत्ययग्रहणाऽभिन्नशास्त्रत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या पञ्चम्यन्तत्वावच्छिन्ना विशे-

ष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या अव्यवहितोत्तरत्व-सम्बन्धावच्छिन्ना प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताघटितशास्त्र-निष्ठा याधारता तादृशाधारतानिरूपिता या तदन्तविधित्वावच्छिन्नाऽधेयता तन्निष्ठा या स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना नञर्थभेदत्वावच्छि-न्ना नञर्थभेदनिष्ठा या विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम्—

उत्तरपदाधिकारघटितप्रत्ययग्रहणाऽभिन्नशास्त्रत्वावच्छिन्ना याऽधारता ता-दृशाधारतानिरूपिता या स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना तद-न्तग्रहणत्वावच्छिन्नप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टः शाब्दबोधः।

स्त्रीप्रत्यये चानुपसर्जने न—

अनुपसर्जने स्त्रीप्रत्यये तदादिनियमो नेत्यर्थः।

अभेदसम्बन्धावच्छिन्ना उपसर्जनप्रतियोगिकाभाववन्निष्ठप्रकारतानिरू-पिता स्त्रीप्रत्ययत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यतासमानाधिकरणस्व-निष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तदादिनियमत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठ-प्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

संज्ञाविधौ प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति—

संज्ञाविधिपदार्थस्याभेदसम्बन्धेन प्रत्ययग्रहणशास्त्रेऽन्वयः।

अभेदसम्बन्धावच्छिन्ना संज्ञाविधित्वावच्छिन्ना संज्ञाविधिनिष्ठा या प्रका-रता तादृशप्रकारतानिरूपिता या प्रत्ययग्रहणशास्त्रनिष्ठा विशेष्यता तादृशवि-शेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तदन्तग्रहणत्वावच्छिन्ना विशेष्यता तादृशवि-शेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना या प्र-कारता तादृशप्रकारतानिरूपिता या तदन्तग्रहणत्वावच्छिन्ना विशेष्यता ताहृ-शविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकार-तानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्वनिष्ठप्रकार-तानिरूपिता कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमाना-धिकरणवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना वि-शेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्ब-न्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तद्विशिष्टबोधः।

अत्र प्रकारद्वयम्—

तदन्तग्रहणकर्तृकप्रतियोगिकाभाववती सत्ता इति वैयाकरणाः । तदन्तग्रहणकर्तृकसत्ताप्रतियोगिकोऽभावः इति नैयायिकाः ।

कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणम्—

अभेदसम्बन्धावच्छिन्नकृद्ग्रहणत्वावच्छिन्नप्रकारतानिरूपिता या शास्त्रनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या गतिकारकान्यतरपूर्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपितापिशब्दार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता षष्ठ्यर्थकर्मत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता भूधात्वर्थसत्तात्वावच्छिन्नसत्तानिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टः । सर्वं वाक्यं क्रियायां परिसमाप्यते इति सिद्धान्तात् भवतीत्यस्याध्याहारः ।

पदाङ्गाधिकारे तस्य तदन्तस्य च—

अभेदसम्बन्धावच्छिन्ना सङ्केतसम्बन्धावच्छिन्नपदाङ्गत्वावच्छिन्नान्यतरत्वावच्छिन्नाधिकारत्वावच्छिन्नप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तस्य केवलत्वावच्छिन्ना तदन्तस्य तदन्तत्वावच्छिन्ना वा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या षष्ठ्यर्थकर्मत्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

व्यपदेशिवदेकस्मिन्—

एकोऽन्यार्थे प्रधाने च प्रथमे केवले तथा ।<br>
साधारणे समानेऽल्पे संख्यायाञ्च प्रयुज्यते ।

इत्युक्त्या एकस्मिन् कोऽर्थः केवलेऽसहाय इत्यर्थः । व्यपदेशिना तुल्यमित्यर्थे वतिः । व्यपदेशिप्रतियोगिकसादृश्यवत्कार्यम्बोध्यमिति । स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्नाऽसहायत्वावच्छिन्नाऽसहायनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या व्यपदेशित्वावच्छिन्ना व्यपदेशिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या सादृश्यावच्छिन्ना विशेष्यता तादृशवि-

शेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या बोध्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्ति—

अत्र ग्रहणवच्छब्दस्सांकेतिको रूढः। परिष्कारानुधावनन्तु बुद्धिवैशद्यार्थम्। ग्रहणवत्पदार्थस्याभेदसम्बन्धेन प्रातिपदिकपदार्थेऽन्वयः, तस्य च स्वनिष्ठप्रयोजकतानिरूपकत्वसम्बन्धेन तृतीयार्थप्रयोज्यत्वेऽन्वयः, तस्य च स्वरूपसम्बन्धेन तदन्तविधिपदार्थेऽन्वयः, तस्य च स्वप्रतियोगिकत्वसम्बन्धेन नञर्थाभावेऽन्वयः, तस्य च स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धेन सत्तायामन्वयः। तथा च अभेदसम्बन्धावच्छिन्नग्रहणवत्त्वावच्छिन्नप्रकारतानिरूपिता प्रातिपदिकत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रयोजकतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तृतीयार्थप्रयोज्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या तदन्तविधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थाभावत्वावच्छिन्ना विशेष्यता तादृशविविशेष्यतासमानाधिकरणस्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता याऽस्त्यर्थसत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

व्यपदेशिवद्भावोऽप्रातिपदिकेन—

प्रातिपदिकेन व्यपदेशिवद्भावो न भवतीत्यर्थः। वृत्तित्वं तृतीयार्थः। स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रातिपदिकत्वावच्छिन्ना प्रातिपदिकनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या तृतीयार्थवृत्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या व्यपदेशिवद्भावत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थाभावत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थसत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

इति शास्त्रत्वसम्पादकम्प्रथमन्तन्त्रम्।

**पूर्वपरनित्यान्तरङ्गापवादानामुत्तरोत्तरं बलीयः ॥ ३८ ॥**

पूर्वात्परं बलवत्, विप्रतिषेधशास्त्रात्पूर्वस्य परं बाधकमिति यावत् ३८

नन्वेवं भिन्धीत्यत्र परत्वात्तातङा बाधितो धिर्न स्यादत आह—

**पुनः प्रसङ्गविज्ञानात्सिद्धम् ॥ ३९ ॥**

---

अथ बाधबीजाख्यन्द्वितीयन्तन्त्रम् ।

शास्त्रघटकपदप्रयोज्यविषयतानियामकपरिभाषा व्याख्याय अर्थाच्छास्त्रत्वसम्पादकप्रकरणाऽव्यवहितोत्तरकालावच्छेदेन क्रमप्राप्तं बाधबीजप्रकरणमारभमाणस्तद्बीजानि पूर्वं सङ्कलय्य दर्शयति पूर्वपरनित्येति । उत्तरोत्तरम्बलीय इति ।

"आनुपूर्व्यें द्वे वाच्य"इतिवचनेनात्र द्वित्वम् । स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् स्वोत्तरत्वादित्यनुमित्याकारः । वैशिष्ट्यञ्च स्वोत्तरत्वसम्बन्धेन ।

बीजमाह विप्रतिषेधशास्त्रादिति । "विप्रतिषेधे परङ्कार्य्यमि"ति सूत्रोच्चारणेन तुल्यबलवत्त्वस्यापि प्रकृते ध्वनितत्वात् हेतुदले पक्षदले च स्वनिरूपितबहिरङ्गत्वाऽभाववत्त्व स्वनिरूपिताऽनित्यत्वाऽभाववत्त्व स्वनिरूपितोत्सर्गत्वाभाववत्त्वसम्बन्धानामपि यथायोग्यं सन्निवेशः। तथाचायन्निष्कर्षः, परशास्त्रेण स्वप्रवृत्तियोग्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच इति फलति । एवमंशान्तरेऽपि बोध्यः । अत एव "पूर्वपरनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथः प्रसङ्गे परबलीयस्त्वमिति"च्छ्दिरुपधिवलेरि"ति सूत्रभाष्यं सङ्गच्छते ।

अयम्भावः, पूर्वात्परम्बलीयः, विप्रतिषेधसूत्रारम्भात् । अत एव वृक्षेभ्य इत्यादौ "सुपि चे"तिदीर्घम्बाधित्वा "बहुवचन" इत्येत्वम् । परान्नित्यम्बलीयः, अत एव अस्मै इत्यत्र नित्यत्वात्स्मायादेशोऽनन्तरं "हलि लोपः" । नित्यादप्यन्तरङ्गम्बलीयः, अत एव यूयमित्यत्र "शेषे लोपष्टिलोप" इति भाष्यसम्मतपक्षे नित्यं टिलोपम्बाधित्वा अन्तरङ्गे "अतो गुणे"कृतेऽनन्तरं टिलोपेऽदन्तत्वाभावाच्छीभावो न। अन्तरङ्गादप्यपवादो बलीयान्, अत एव हरये इत्यादौ वर्णमात्रापेक्षत्वेनान्तरङ्गं यणम्प्रबाध्यापवादत्वाद् "घेर्ङिती"तिगुणस्सिद्ध्यति। फलान्तराण्यप्येवमूह्यानि ।

पूर्वपरनित्यान्तरङ्गापवादत्वावच्छिन्नान्यतमत्वावच्छिन्नप्रकारतानिरूपितस्वाऽव्यवहितोत्तरत्वसम्बन्धावच्छिन्नोत्तरत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्ना या विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

नन्वेवम्भिन्धीत्यत्रेति—वस्तुतस्तु पूर्वं "सकृद्गतौ विप्रतिषेध" इति परिभाषालिखनमेव युक्तन्तद्बाधकत्वेन पश्चा"त्पुनःप्रसङ्गविज्ञानात्सिद्धमि"ति

नन्वेवं तिसृणामित्यत्र परत्वात्त्रिस्रादेशे पुनस्त्रयादेशः स्यादत आह-

**सकृद्गतौ विप्रतिषेधे यद्बाधितं तद्बाधितमेव ॥ ४० ॥**

तत्र क्वचिच्चरितार्थयोरेकस्मिन्युगपदुभयोः कार्ययोरसम्भवेन बाधकाभावात्पर्यायेण तृजादिवच्छास्त्रद्वयप्रसङ्गे नियमार्थं विप्रतिषेधसूत्रमिति सकृद्गतिन्यायसिद्धिः।

---

ङ्खनम्बाधकपरिभाषोल्लेखपूर्वकथङ्कारमिति शेखरकारा एव प्रष्टव्याः।

नच "तातङादेस्स्थानिवत्त्वप्रतिषेधो वक्तव्य" इतिवार्त्तिकबलेन भिन्तादित्येव रूपमिति कथमवतरणमिति वाच्यम्? भिन्धीति भिन्तादित्यस्योपलक्षणन्तत्रहि परत्वात्तातङि धिभावं बाधित्वा जाते धिभावस्याऽप्रसक्त्या "तातङादेस्स्थानिवत्त्वप्रतिषेधो वक्तव्य" इतिवार्त्तिकस्य वैयर्थ्यापत्तिरित्यवतरणाशयवर्णनात्। प्रसङ्गशब्दो लुप्तसप्तम्यन्तः, विज्ञानं कोऽर्थश्शास्त्रप्रवृत्तिः। एवञ्च परत्वमूलकबाधस्थले स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन(१)पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोच इति परिभाषाफलितार्थः।

अत्र "पुनःप्रसङ्गविज्ञानमि"त्येव परिभाषास्वरूपमिति मान्याः।

वस्तुतस्तु तिसृणामित्यत्र तिस्रादेशेन बाधितो नुडागमो न स्यादित्येव परिभाषावतरणमिति विशिष्टविचारः।

स्वनिष्ठविषयतानिरूपकत्वसम्बन्धावच्छिन्नपुनःप्रसङ्गत्वावच्छिन्नप्रकारतानिरूपितविज्ञानत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता सिद्धत्वावच्छिन्ना या विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

सकृद्गताविति—विप्रतिषेधे सति यत्सूत्रम्बाधितन्तद्गतौ कोऽर्थः प्राप्तौ सत्यामपि बाधितमेव, पुनर्न प्रवर्तत इति यावत्। उभयरूपेण पूर्वशास्त्रे सङ्कोच इति फलितार्थः। उभयत्र बीजमुपन्यस्यति क्वचिच्चरितार्थयोरिति। तृजादिवदिति–यथा ण्वुल्तृचौ पर्यायेण भवतस्तथा वृक्षेभ्य इत्यादावेत्वदीर्घयोरपि

---

(१) प्रक्रियावादिमते तल्लक्ष्यत्वञ्च स्वप्रथमप्राप्तावुद्देश्यत्वेनाश्रीयमाणसमुदाय-स्वदुद्देश्यत्वेन गृहीतसमुदायघटकविधीयमानैतदुभयाऽघटितत्वे सति स्वप्रथमप्राप्तिकालिकप्राप्तियोग्यताभाववत्त्वम्। उदाहरणम्पथ इति। पथेतेत्यादौ प्रथमप्राप्तावुद्देश्यत्वेन गृहीतसार्वधातुकलिङ्प्रत्ययघटकवर्णातिरिक्ताऽघटितत्वेन द्वितीयसकारलोपे तल्लक्ष्यत्ववारणाय विशेष्यदलम्। परमराजपुरुष इत्यादाववान्तरसमासप्रयुक्तान्तोदात्तत्ववेलायां विशिष्टसमासप्रयुक्तस्यान्तोदात्तस्य प्रवृत्तियोग्यताया अभावेन तत्प्रवृत्तौ तल्लक्ष्यत्ववारणाय सत्यन्तनिवेशः।

उद्वोढामित्यादावादेशविशिष्टस्य तल्लक्ष्यत्वसिद्धये सत्यन्तघटकपर्युदस्यमानकोटौ विधीयमाननिवेश इति दिक्।

यथा तुल्यबलयोरेकः प्रेष्यो भवति स तयोः पर्यायेण कार्यं करोति यदा तमुभौ युगपत्प्रेषयतो नाना दिक्षु च कार्ये तदोभयोर्न करोति यौगपद्याऽसम्भवादिति भावः। पर्यायेण प्रसङ्ग इत्यर्थः।

नन्वसति प्रतिबन्धके उद्देश्यतावच्छेदकव्यापकत्वं विधेये विधेयसंसर्गे वा भासत इति नियमस्तथाच विधेयरहितलक्ष्यस्य क्वचिदपि साधुत्वन्न भवति। एवञ्च यदि पर्य्यायेण प्रवृत्तिस्तर्हि विधेयरहितस्याऽपि कदाचिदापत्त्या निरुक्तनियमभङ्गाऽपत्तिः। तथाहि, यष्टा पक्तेत्यादौ धातुस्वरूपोद्देश्यतावच्छेदकाधिकरणे स्वाऽव्यवहितपूर्वत्वसम्बन्धेन ण्वुलोऽभावः।

नच स्वाऽव्यवहितपूर्वत्वसम्बन्धेन विधेयद्वये व्यापकत्वबाधेन तत्र तत्र तथानियमस्वीकारेऽपि प्रकृते उद्देश्यतावच्छेदकसामानाधिकरण्येनैवान्वय इति पर्यायेण प्रवृत्तावदोषाद्, वाक्यन्द्विविधमुद्देश्यतावच्छेदकावच्छेदेन विधेयान्वयपरमुद्देश्यतावच्छेदकसामानाधिकरण्येन विधेयान्वयपरञ्च। शङ्खो लक्ष्मीपतेऽपाञ्चजन्यश्चक्रं सुदर्शनम्। अत्र हि विष्णुसम्बन्धिशङ्खत्वावच्छेदेन पाञ्चजन्यपदशक्यत्वान्वये तात्पर्य्यमिति प्रथमोदाहरणम्। नीरूपं स्पर्शवन्मनः रूपशून्यत्वविशिष्टस्पर्शवत्त्वसामानाधिकरण्येनैव मनऽपदशक्यत्वान्वये तात्पर्य्यम्। रूपशून्यत्वस्य वाय्वाकाशादावपि विद्यमानत्वादिति द्वितीयोदाहरणम्। एवञ्चोद्देश्यतावच्छेदकसामानाधिकरण्येन प्रकृतेऽपि सम्भव इति वाच्यम्? लोके तथाऽन्वयेऽपि शास्त्रे सामानाधिकरण्येनान्वये कदाचिद्विधेयद्वयशून्यपच् पठ् इत्यादीनामपि साधुत्वाऽपत्तेः। इति चेन्न? "ण्वुल्तृचावि"त्यत्र विधेयांशेऽन्यतरवैयर्थ्यापत्त्या उद्देश्यतावच्छेदकम्प्रति विधेयतावच्छेदकधर्मावच्छिन्नव्यापकताया असंघटनेऽपि अन्यतरत्वावच्छिन्नव्यापकताया एव शास्त्रतात्पर्य्यविषयत्वस्वीकारात्। एवञ्च बाधाऽभावेन विधेयशून्यप्रयोगाऽनवकाशात् अन्यतरभिन्नाधिकरणत्वस्यैव व्यापकत्वलक्षणघटकाधिकरणत्वविवक्षणेन विधेयतावच्छेदकावच्छिन्नव्यापकताभानेऽपि दोषाऽभावाच्चेत्यधिकम्मृग्यम्।

नियमार्थमिति—"विधिरत्यन्तमप्राप्तौ नियमऽपाक्षिके सति। तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयते"। अत्यन्ताऽप्राप्तविधायकत्वन्नियमत्वम्। यत्किञ्चिच्छास्त्रविशिष्टत्वमित्यर्थः। वैशिष्ट्यञ्च स्वीयोद्देश्यतावच्छेदकव्याप्यधर्मावच्छिन्नोद्देश्यताकत्व–स्वीयविधेयतावच्छेदकधर्मावच्छिन्नविधायकत्वमित्युभयसम्बन्धेन।

इति वचनबलेन परकार्यरूपविधेयस्य पाक्षिकप्राप्तिरूपस्य नियमत्वप्रयोजकस्य सत्त्वादिति तात्पर्य्यम्। परमेवेति न पूर्वमिति नियमस्तेन पश्चादपि न पूर्वशास्त्रप्रवृत्तिरिति फलितार्थः।

अप्रतिपत्तौ प्राप्तायामिति–भृत्यस्थानीयं लक्ष्यन्तच्च कस्याऽपि शास्त्र-

पद्यासम्भवात्तथा शास्त्रयोर्लक्ष्यार्थयोः क्वचिल्लक्ष्ये यौगपद्येन प्रवृत्त्य सम्भवादप्रतिपत्तौ प्राप्तायामिदं परविध्यर्थम्, तत्र कृते यदि पूर्वप्राप्तिरस्ति तर्हि तदपि भवत्येवेति पुनः प्रसङ्गविज्ञानसिद्धिरिति विप्रतिषेधसूत्रे भाष्ये स्पष्टम् ।

यत्तु कैयटादयो व्यक्तौ पदार्थे प्रतिलक्ष्यं लक्षणापरिप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोश्चरितार्थ्येन पर्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः । अत्र पक्षे एतन्नियमवशादेतल्लक्ष्यविषयकत्वं शास्त्रानुपप्लव एव । जातिपक्षे तूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गविज्ञानसिद्धिरित्याहुः ।

तन्न ? व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जातिपक्ष इत्यत्र मानाभावात् ।

न ब्राह्मणं हन्यादित्यादौ जात्याश्रयसकलव्यक्तिविषयत्वार्थमेव जातिपक्षाश्रयणस्य भाष्ये दर्शनात् ।

अत एव सरूपसूत्रे भाष्ये जातौ पदार्थेऽनवयवेन साकल्येन विधिप्रवृत्तेर्गौरनुबन्ध्य इत्यादौ सकलगवानुबन्धनासम्भवात्कर्मणो वैगुण्यमुक्तम् ।

द्रव्यवादे चासर्वद्रव्यावगतेर्गौरनुबन्ध्य इत्यादावेकः शास्त्रोक्तोऽपरो ऽशास्त्रोक्त इत्युक्तम् ।

---

स्य विधेयसम्बन्धरूपं कार्यन्न करिष्यतीति शास्त्राऽप्रवृत्तिरूपाऽप्रतिपत्तिर्भवत्येवेत्यभिप्रायः ।

परविध्यर्थमिति—विधिरत्यन्तमप्राप्ताविव्युक्तेरित्याशयः ।

सत्प्रतिपक्षन्यायेनेति—विरुद्धसाध्यसाधकहेतुमान् पक्षस्सत्प्रतिपक्षः, एकपरामर्शस्य अपरसाध्यकानुमितौ प्रतिबन्धकत्वम् । तद्वत्ताबुद्धिम्प्रति तदभावव्याप्यवत्ताबुद्धेः प्रतिबन्धकत्वम् । अत एव बह्निव्याप्यधूमवान् पर्वतो बह्न्यभावव्याप्यपाषाणमयत्ववानित्यादौ वह्नेस्तदभावस्य चानुमितिर्न भवति । तथैव रीत्यैकस्याऽपि शास्त्रस्य न प्रवृत्तिः ।

सर्वं लक्ष्यं शास्त्रमिति—लक्ष्यङ्कर्म्म शास्त्रङ्कर्तृ ।

न ब्राह्मणं हन्यादिति—केवलव्यक्तिपक्षस्वीकारे एकस्या एव ब्राह्मणव्यक्तेर्हननं निषिद्धं स्यान्न सर्वासामिति हेतोर्जातिपक्षाश्रयणमपि ।

अतएवेति—जातिपक्षे शास्त्रस्य सकललक्ष्यव्यापकत्वादेवेत्यर्थः । अनवयवेनेत्यस्य व्याख्यानमाह साकल्येनेति ।

किञ्च न हि भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्ष एव सर्वविषयत्वं न जातिपक्ष इत्यत्र मानमस्ति ।

अपि च व्यक्तिपक्षेऽप्यन्यव्यक्तिरूपविषयलाभेन चरितार्थयोरियं व्यक्तिर्विरोधात्स्वविषयकत्वं न कल्पयतीति वक्तुं शक्यम् । जातिपक्षेऽपि तज्जात्याश्रयतद्व्यक्तिविषयकत्वमेव नैतद्व्यक्तिविषयकत्वमित्यत्र विनिगमकाभावः ।

तत्र लक्ष्यानुसारात् क्वचिच्छास्त्रीयदृष्टान्ताश्रयणं क्वचिल्लौकिकदृष्टान्ताश्रयणमिति भाष्यसंमतमार्ग एव युक्त इति बोध्यम् ।

द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी । इदमिको गुणेति सूत्रे कैयटे स्पष्टम् ।

यथा शिष्टादित्यादौ तातङ्शाभावयोर्युगपत्प्रवृत्तौ स्वस्वनिमित्तानन्तर्यासम्भवः । यद्यपि तातङादेः स्थानिवद्भावेनास्त्येव तत् तथाप्यादेशप्रवृत्त्युत्तरमेव सः, न तु तत्प्रवृत्तिकाले ।

एवं नुम्तृज्वत्त्वयोः प्रियक्रोष्टूनीत्यादौ युगपदसम्भवो यदागमा इत्यस्य नुम्प्रवृत्त्युत्तरं प्रवृत्तेः । एवं भिन्द्धीत्यत्र तातङ्धिभावयोर्युगपदेकस्थानिसम्बन्धस्याङ्गरूपनिमित्तानन्तर्यस्य चासम्भवो बोध्यः । नुम्नुटोरपि नुड्यजादिविभक्त्यानन्तर्यबाधो नुमि ह्रस्वान्ताङ्गबाध इत्यसम्भवाद्विप्रतिषेधः ।

---

द्रव्यवादे चेति—व्यक्तिपक्षे चेत्यर्थः । इयं व्यक्तिः, लक्ष्यरूपा व्यक्तिरित्याशयः ।

स्वमते तत्त्वम्व्यवस्थापयति तत्र लक्ष्यानुसारादित्यादिना । शास्त्रीयदृष्टान्ताश्रयणमिति—"ण्वुल्तृचावि"ति सूत्रविहितण्वुल्तृचौ यथा पर्य्यायेण भवतस्तथैव पर्य्यायेण प्राप्तिस्स्यादिति गुह्यम् । लौकिदृष्टान्ताश्रयणमिति—तुल्यबलयोः पुरुषयोर्यथैकः प्रेष्यस्सेवक एककालावच्छेदेन नोभयोः कार्य्यं करोति तथा लक्ष्यं शास्त्रयोरुभयोर्विधेयसम्बन्धन्न करिष्यति ।

यौगपद्येनाऽसम्भव एवेति—नत्वेकस्य कार्य्यद्वयाऽसम्भव एवेत्यर्थः । उदाहरणं शिष्टादिति । तातङ्शादेशयोरेकस्थानिकत्वाऽभावेऽपि यौगपद्याऽसम्भवाद्विप्रतिषेधशास्त्रप्रवृत्तिः । निमित्तवाचकपदानामावृत्त्या विधेयेऽपि विशेषणत्वेन तत्र निमित्तानन्तर्य्यबाधे विरोधः ।

राद्धान्ततस्तु निमित्तानन्तर्य्यस्य विशेषणदानेऽपि सुधी उपास्य इत्यादीनां सुद्ध्युपेत्याद्यादेशाऽपत्तेः "स्थानेऽन्तरतम" इत्यनेनैव वारणस्वीकारे निमित्तानन्तर्य्यन्न तत्र विशेषणम् ।

क्वचिदिष्टानुरोधेन पूर्वशास्त्रे स्वरितत्वप्रतिज्ञाबलात् स्वरितेनाधिकं कार्यमित्यर्थात्पूर्वमेव भवति । तेन सब पूर्वविप्रतिषेधाः संगृहीता इति स्वरितेनेति सूत्रे भाष्ये । विप्रतिषेधसूत्रस्थपरशब्दस्येष्टवाचित्वात्तत्संग्रह इति विप्रतिषेधसूत्रे भाष्ये ॥ ४० ॥

---

विरोधस्तु एकेन यस्य साधुत्वम्बोधितमपरेण तस्याऽसाधुत्वमित्येवं रीत्योपवर्णनीयः ।

परिभाषातात्पर्य्यन्तु पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च सङ्कोच इति । परशब्दस्येष्टवाचित्वादिति—नन्वपरं कार्य्यमिति भाष्यसम्वलनाय पदच्छेदेन पूर्वविप्रतिषेधसंग्रह इति परशब्दस्येष्टवाचित्वं कथं भाष्य इति चेन्न ? प्रमाणाभावेनावृत्तेरसम्भवात् परविप्रतिषेधस्य सार्वत्रिकस्याऽसंग्रहाऽपत्तेश्च ।

अथ शेखरमूलखण्डनप्रकारः ।

बाधकाऽभावेन तृजादिवत्पर्य्यायत्वमिति युक्तिविरुद्धम्बाधकाऽभावेनेति हेतोरसिद्ध्यापत्तेरसम्भवस्यैव बाधकपदार्थत्वात् । अन्यत्र चरितार्थयोश्शास्त्रयोरप्रवृत्तिरेव युक्ता नतु तृजादिवत्पर्य्यायत्वम् । तृचो नित्यम्प्रवृत्तिण्वुलश्च नित्यम्प्रवृत्तिस्तत्र कदाचित्तृच् कदाचिण्ण्वुलिति वैकल्पिकापत्तिरूपदोषवारणायाऽगत्या पर्य्यायत्वमभिमतम् । इह चैतादृशपर्य्यायत्वं विनापि विषयान्तरमादाय शास्त्रयोरिह प्रवृत्तिं विनैव प्रामाण्यापपत्तेः । भाष्यस्य व्यक्तिपक्षाभिप्रायकत्वं कैयटादिभिर्व्याख्यातमिति न भाष्यविरोधः ।

लोकव्यवहारे राज्ञां भेदे सति सेवका भिद्यन्ते । तथाच व्यक्तिपक्षमनपेक्ष्य तृजादिदृष्टान्तस्य पर्य्यायत्वप्राप्तेश्च महतामनादरणपूर्वकं वर्णनं साहसमात्रम् । तुल्यबलयोरेकःप्रेष्यो भवति भाष्यमेतज्जातिपक्षाश्रयणेन प्रवृत्तमिति शुद्धधिया विचार्य्यम् । व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोतीति सिद्धान्ते विशिष्टप्रमाणानि भाष्योक्तान्येव ।

एवञ्च भाष्योक्ततृजादिदृष्टान्तस्य व्यक्तिपक्षेऽपि सम्भव इत्यत्र प्रमाणधारावहनात् जातिपक्ष एव तृजादिदृष्टान्तसङ्गतिरिति प्रकारो मुधैव ।

सर्वजात्याश्रयव्यक्तिसंग्रहाय न ब्राह्मणं हन्यादित्यत्र "एकशेष" सूत्रे जातिपक्षाश्रयणम्भाष्ये दृश्यत इति तत्सर्वमयुक्तमेव विरोधाऽभावाद्विनिगमनाविरहाच्च आश्रीयमाणे जातिपक्षेऽपि सर्वव्यक्तिलाभस्याऽविरुद्धत्वात् । तथाच परिभाषाद्वयं "सकृद्गताविति–पुनःप्रसङ्गविज्ञानादिति" च जातिव्यक्तिपक्षाश्रयणजन्यमेव । तथाहि व्यक्तिपक्षाश्रयणेन सकृद्गतावित्यस्य सिद्धिः, जातिपक्षाश्रयणेन पुनःप्रसङ्गविज्ञानादित्यस्य सिद्धिः । व्यक्तिपदार्थपक्षे यावल्लक्ष्यन्तावल्लक्षणमिति वृक्षेभ्य इत्यादौ वृक्षभ्यसिति दशायामेतद्व्यक्तिगोचरं "सुपि

नन्वेवमेधतेइत्यादौ परत्वाद्विकरणेऽनुदात्तङित इत्यादिनियम-
नुपपत्तिस्तेन व्यवधानादत आह—

विकरणेभ्यो नियमो बलीयान् ॥ ४१ ॥

---

चे"त्येकन्दीर्घविधायकम् "बहुवचने झल्ये"दित्येकमेत्त्वविधायकम् । व्यक्तिपक्षे ते च शास्त्रे न क्वचिदपि चरितार्थीभूते, तथा दीर्घैत्त्वयोर्युगपत्पर्य्यायप्राप्तौ "विप्रतिषेध"सूत्रन्नियमार्थम् । विप्रतिषेधे परमेव शास्त्रम्प्रवर्त्तते नतु पूर्वमिति नियमाकारः । पूर्वशास्त्रन्तद्व्यक्तिविषयन्नोपपद्यते, विप्रतिषेधशास्त्रबलात् ।

तथाच तद्व्यक्तिविषयकपूर्वशास्त्राऽभावा"त्सकृद्गतौ विप्रतिषेधे यद्बाधितमि"ति सिद्धम् ।

यदि तु जातिपक्षस्तदा शास्त्रमेकमेव, व्यक्तिं विना जातेःकार्य्यन्न भवतीति व्यक्त्याक्षेपो जात्यैवेति यद्व्यक्त्याक्षेपेण लक्ष्ये बाधा नोत्पद्यते सच आक्षिप्यते नतु यत्र बाधकमस्ति ।

एवञ्च वृक्षेभ्यसिति व्यक्तेः परस्परविरोधाऽभावान्नियमाऽसम्भवात्परशास्त्रविधानार्थं विधित्वेन विधायकत्वेन वा विप्रतिषेधशास्त्रं सम्पद्यते । तस्मिन् कृते यदि विरोधो नास्ति तर्हि पूर्वशास्त्रेणाऽपि तद्व्यक्त्याक्षेपो युक्ततर एव ।

तथाच "पुनःप्रसङ्गविज्ञाना"दिति सिद्धम् । इदमेव हि कैयटादीनामभिमानमस्माद्भिन्नःप्रकारो न युक्तित इति विचार्य्यताम् ।

विप्रतिषेधे सति सकृद् यद् बाधितं तद् गतौ प्राप्तौ सत्त्यामपि बाधितमेव न प्रवर्तत इत्यर्थः ।

विप्रतिषेधत्वावच्छिन्नप्रकारतानिरूपिता या विभक्त्यर्थसत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या सकृत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता यद्बाधितत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तद्गतिप्राप्तिसतीत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या बाधितत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता एवशब्दार्थनिश्चयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

परत्वाद्विकरणे इति—खशप्रत्यये चानश्प्रत्यये च विकरणावकाशः, लिडादौ नियमावकाशः । नच परशब्दस्येष्टवाचित्वरूपपूर्वविप्रतिषेधेनापि निर्वाह इति वाच्यम्? भाष्योक्तस्थलातिरिक्तस्थले तस्याऽस्वीकारात् ।

अयम्प्रकारस्तावत् "तिप्तसझी"तिसामान्यसूत्रेण विहितप्रत्ययाना"मनुदात्तङित" इत्यादिनियमेनेतरनिवृत्तिरिति पक्षे बोध्यः । तिबादिविध्येकवाक्य-

अत्र वृद्भ्यः स्यसनोरिति सूत्रेण स्ये विभाषा तङ्विधानं ज्ञापकम् । अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात् ।

अत्रार्थे ज्ञापिते तु स्य इति तत्र विषयसप्तमी बोध्येत्यनुदात्तङितः इत्यत्र भाष्यकैयटयोः स्पष्टम् ।

विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकमिति शदेः शित इत्यत्र भाष्ये ध्वनितम् ।

वस्तुतोऽस्माज् ज्ञापकादनुदात्तङित इत्यादि प्रकरणं तिबादिविध्येकवाक्यतया विधायकम् । तत्र धातोरिति विहितपञ्चमी तत्समानाधिकरणमनुदात्तङित इत्यादि विहितविशेषणमेव । एवं च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः । शबादिभ्यस्तु पूर्वमेव नियमः ।

यद्वा लमात्रापेक्षत्वादन्तरङ्गा आदेशा लकारविशेषापेक्षत्वात्स्यादयो बहिरङ्गा इति दिग्योगलक्षणपञ्चम्यामपि न दोषः ।

अत्र पक्षे वृद्भ्यः स्येति सूत्रस्य विषयइति व्याख्येयम् । आत्मनेपदशब्दादौ भाविसंज्ञाश्रयणीयेति तत्त्वम् ।

---

तया नियमसूत्राणाम्विधायकत्वमिति सिद्धान्तपक्षे तु लकारावस्थायां सार्वधातुकपरत्वाऽभावात्परत्वाद् विकरण इत्युक्तिरसङ्गता स्यात् ।

परत्वादिति नित्यत्वादित्यस्योपलक्षणम् । एतदस्वीकारे विकरणस्य नित्यत्वेनातुल्यबलत्वाद्विप्रतिषेधसूत्राऽप्रवृत्त्या परत्वादिति ग्रन्थाऽसङ्गतेः ।

अन्यथा स्यव्यवधान इति—परिभाषाया असत्त्वे परत्वात् लृटस्थाने तिबादिसूत्रेण पदद्वये तङ्परत्वात्स्यप्रत्यये तेन व्यवधानान्नियमाऽप्राप्त्योभयपदस्थित्यैव सिद्धे अतङ्विधानं व्यर्थं सत्परिभाषां ज्ञापयति । ज्ञापितायान्तु स्यप्रवृत्तेः प्राक् नियमप्रवृत्तिवारणाय तच्चरितार्थमिति तत्त्वम् ।

नन्वेवमपि अस्यामवस्थायां स्यप्रत्ययपरत्वाऽभावात्कथम् "वृद्भ्यस्स्यसनोरि"त्यस्य प्रवृत्तिरित्याशयेनाह स्य इति तु विषयसप्तमीति । पक्षान्तरं वदति विकरणव्यवधानेऽपीति—अत्र पक्षे स्य इति परसप्तम्येव बोध्या । विप्रतिषेधशास्त्राऽबाधश्चेति लाघवानुसन्धानम् । भाष्यसिद्धान्तभूतं तृतीयम्पक्षमाह वस्तुत इति । तत्रेति तिबादिसूत्र इत्यर्थः ।

विहितपञ्चम्यां गौरवादाह यद्वेति । वस्तुतस्तु नायं ग्रन्थः ? सामान्यापेक्षाद्विशेषापेक्षम्बहिरङ्गमित्यस्य भाष्यसिद्धान्तसम्मतत्वाभावेन खण्डनस्य वक्ष्यमाणत्वात् । अत्र पक्ष इति— स्यादीनाम्बहिरङ्गत्वेनापवादत्वात्प्राप्तन्नियममपवादत्वेन बाधित्वा "वृद्भ्य" इति प्रवर्त्तत इति तात्पर्य्यम् ।

नन्वेवानीं स्यपरत्वाभावात्कथं प्रवृत्तिरित्यत आह वृद्भ्य इत्यादि । ननु

भिन्नवाक्यतया सामान्यशास्त्रविहितानां नियमे तु लुगादिनेव नियमेन जातनिवृत्तिरङ्गीकार्या ।

भुक्तवन्तं प्रति माभुङ्क्था इति ब्रूयात् किं तेन कृतं स्यादिति न्यायस्तु नात्र शास्त्र आश्रयितुं युक्तो नियमादिशास्त्राणां वैयर्थ्यापत्तेः । ध्वनितं चेदं स्थानेऽन्तरतम इति सूत्रे भाष्ये ।

शास्त्रानर्थक्यन्तु वृद्धिसंज्ञासूत्रे भाष्ये तिरस्कृतम् । सामान्यशास्त्रेणोत्पत्तिस्तु सरूपसूत्रस्थकैयटरीत्या प्रधानानुरोधेन गुणभेदकल्पना तावत् प्रकृतिकल्पनया कार्या प्रत्ययनिवृत्तौ च तत्कल्पितप्रकृतेरपि निवृत्तिःकल्प्येति गौरवमित्यन्यत्र विस्तरः ॥ ४१ ॥

## परान्नित्यं बलवत् ॥ ४२ ॥

कृताकृतप्रसङ्गित्वात् । तत्राक्लृप्ताभावकस्याभावकल्पनापेक्षया क्लृप्ताभावकपदस्यैव तत्कल्पनमुचितमिति नित्यस्य बलवत्त्वे बीजम् ।

---

जातस्य सञ्ज्ञाकरणात्सञ्ज्ञया विधानेऽन्योन्याश्रय इत्यत आह आत्मनेपदशब्दादाविति—विहितानान्नियमेऽपि दोषमाह जातनिवृत्तिरिति ।

वैयर्थ्यापत्तेरिति—वर्णेनाऽप्यनर्थकेन न भवितव्यं किं पुनरियता सूत्रेणेतिहि तत्सूत्रभाष्यम् ।

ननु विहितानान्नियमे सामान्यशास्त्रेण एकस्माद्धातोः परस्यैकस्य लकारस्य कथमष्टादशप्रत्ययाः अष्टादशानामेककालावच्छेदेनैकस्थानिकत्वबाधात् इत्याशयेनाह सामान्यशास्त्रेणेत्यादि । प्रकृत्यपेक्षया प्रत्ययः प्रधानमिति तत्त्वम् । प्रत्ययनिवृत्ताविति—नियमशास्त्रेणेति शेषः ।

मध्येमणिन्यायसदृशप्रकृतिप्रत्ययमध्यपातिविकरणत्वावच्छिन्ना विकरणनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या नियमत्वावच्छिन्ना नियमनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या बलीयस्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः ।

परान्नित्यम्बलवदिति—स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् स्वविशिष्टत्वात् । उभयत्र वैशिष्ट्यञ्च स्वप्रवृत्तिप्राक्कालिकप्राप्तिकत्व-स्वप्रवृत्त्युत्तरकालिकप्राप्तिकत्व-स्वनिष्ठान्तरङ्गत्वानिरूपकत्व—स्वनिष्ठापवादत्वानिरूपकत्वैतच्चतुष्टयसम्बन्धेन । तथाच परस्याऽप्यनेनैव बलवत्त्वम् । अत एव परत्वान्नित्यत्वाच्चेत्यत्र परत्वादित्युक्तिरेकदेशिन इति शेखरे ।

स्वनिष्ठनैर्बल्यसम्पादकत्वसम्बन्धावच्छिन्ना परत्वावच्छिन्ना परनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या नित्यत्वावच्छिन्ना विशेष्यता तादृशवि-

तदाह—कृताकृतप्रसङ्गि नित्यं तद्विपरीतमनित्यम्। अत एव तुदतो॰ त्यादौ परादपि गुणान्नित्यत्वात् शप्रत्ययादिर्भवति ॥ ४२ ॥

यद्व्यक्तिसम्बन्धितया पूर्वं प्रवृत्तिस्तद्व्यक्तिसम्बन्धितयैव पुनः प्रवृ॰ त्तौ कृताकृतप्रसङ्गित्वमित्याशयेनाह—

**शब्दान्तरस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४३ ॥**

इदं शादेः शित इति सूत्रे भाष्ये स्पष्टम्। तत्र हि न्यविशतेत्यत्र विक॰ रणे कृते तदन्तस्याडकृते धातुमात्रस्येत्यडनित्य इत्युक्तम् ॥ ४३ ॥

एतत्तुल्यन्यायेनाह—

**शब्दान्तरात् प्राप्नुवतः शब्दान्तरे प्राप्नुवतश्चानित्यत्वम् ॥४४॥**

एतन्मूलकमेवाह—

**लक्षणान्तरेण प्राप्नुवन्विधिरनित्यः ॥ ४५ ॥**

अतिदेशविषये इयमसिद्धवत्सूत्रे कैयटेनोक्ता ॥ ४५ ॥

यदा तु शास्त्रव्यतिरेकेण तद्विधेयकार्ययोरेव नित्यत्वादिविचारो यदापि व्यक्तिविशेषाश्रयणाभावस्तदाह—

**क्वचित् कृताकृतप्रसङ्गमात्रेणापि नित्यता ॥ ४६ ॥**

कृते द्वितीये नित्यत्वेनाभिमतस्य पुनः प्रसङ्गमात्रं नित्यत्वव्यवहारे प्रयोजकं न तु बाधकाबाधितफलोपहितप्रसङ्गोऽपि तथेति भावः ॥ ४६ ॥

तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते न तदनित्यम् ॥४७॥**

---

शेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता बलवत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताघटितशाब्दबोधः।

शब्दान्तरस्य प्राप्नुवन् विधिरनित्यो भवति। शब्दान्तरत्वावच्छिन्नप्रकार॰ तानिरूपितकर्मत्वत्वावच्छिन्नविशेष्यतासामानाधिकरणप्रकारतानिरूपिता कर्म॰ तानिरूपकत्वसम्बन्धावच्छिन्ना प्राप्नुत्त्ववावच्छिन्ना विशेष्यता तादृशविशेष्य॰ तासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या विधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धाव॰ च्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अनित्यत्वावच्छिन्ना अनित्य॰ निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रका॰ रता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्व॰ सम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थक्रियात्वा॰ वच्छिन्ना क्रियानिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

क्वचित्तु बाधकाबाधितफलोपहितप्रसङ्ग एव गृह्यते । तदाह—

**यस्य च लक्षणान्तरेण निमित्तं विहन्यते तदप्यनित्यम् ॥४८॥**

सप्तमे कैयटेनैतदुपष्टम्भकं लोकव्यवहारद्वयमुदाहृतम् । वालिसुग्रीवयोर्युध्यमानयोर्भगवता वालिनि हते ऽपि सुग्रीवस्य वालितः प्राबल्यं न व्यवहरन्ति ।

भगवत्सहायैः पाण्डवैर्जये लब्धे ऽपि पाण्डवानां प्राबल्यं व्यवहरन्ति चेति । सर्वं चेदं लक्ष्यानुरोधाद् व्यवस्थितम् ॥ ४८ ॥

लुटः प्रथमस्येति सूत्रेभाष्ये—

**स्वरभिन्नस्य प्राप्नुवन्विधिरनित्यो भवति ॥ ४९ ॥**

इति पठ्यते ।

यत्र त्वेकस्यैव कार्यस्य परत्वं नित्यत्वं च तत्रेच्छयान्यतरत्तदुभयं वा तस्य बलवत्त्वे नियामकमुल्लेख्यम् ।

अत एव तत्र तत्र परत्वान्नित्यत्वाच्चेति भाष्ये उच्यते । वस्तुतस्तत्र परत्वादित्युक्तिरेकदेशिनः । स्पष्टं चेदं विप्रतिषेधसूत्रे कैयटे । णौ चङीति ह्रस्वापेक्षया नित्यत्वान्तरंगत्वप्रयुक्तद्वित्वस्य प्रथमतः प्रवृत्तौ नित्यत्वादित्येव भाष्य उक्तम् ।

एवं नित्यान्तरङ्गयोर्बलवत्त्वमपि थागपद्यासम्भव एवेति बोध्यम्॥४९॥

नित्यादप्यन्तरङ्गं बलीयोऽन्तरंगे बहिरङ्गस्यासिद्धत्वात् । तदाह—

---

नित्यादप्यन्तरङ्गम्बलीय इति—अपिशब्दात्परादपीति । इदं हि समकालप्राप्तिकत्व एव । जातबहिरङ्गापेक्षया हि अन्तरङ्गस्य बलवत्त्वनैष्फल्यात् । उत्सर्गभिन्नमेवान्तरङ्गमिह विवक्षितम् । अत एवोत्सर्गरूपान्तरङ्गस्य बलवत्वाभावेऽपि न दोषस्तद्भिन्नस्यैव पक्षत्वात् ।

स्वविशिष्टं शास्त्रं स्वापेक्षया बलवत् । वैशिष्ट्यञ्च स्वनिष्ठापवादत्वानिरूपकत्व-स्वनिरूपितान्तरङ्गत्वोभयसम्बन्धेनेति फलति ।

असिद्धत्वादिति—नन्वसिद्धत्वपदार्थस्तु बहिरङ्गनिष्ठ इति हेतुसाध्ययोर्वैयधिकरण्येन कथमनुमितिरिति चेन्न ? अन्तरङ्गत्वस्यैव हेतुत्वेन विवक्षणीयत्वात् । असिद्धत्वन्नामाऽभावप्रतियोगित्वमन्तरङ्गदृष्ट्या बहिरङ्गस्याभावप्रतियोगित्वात् । अन्तर्मध्य इत्यर्थे बहिरङ्गशास्त्रीयेति कथनन्तु फलितार्थाभिप्रायेण नातोऽन्योन्याश्रयः ।

अत्र केचित्, बहिरङ्गत्वेन जिघृक्षितशास्त्रीयोद्देश्यतावच्छेदकत्वेनाश्रीयमाणशब्दसमुदायघटकनिमित्तकत्वम्, बहिरङ्गत्वेन जिघृक्षितमित्यस्य बहिरङ्गत्वप्रकारकज्ञानविषयकेच्छाविषयीभूतेत्यर्थः । एवञ्च बहिरङ्गम्विनापीच्छाया

## असिद्धं बहिरङ्गमन्तरङ्गे ॥ ५० ॥

अन्तर्मध्ये, बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्ये ऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम् । एवं तदीयनिमित्तसमुदायाद् बहिर्भूताङ्गकं बहिरङ्गम् । एतच्च खरवसानयोरिति सूत्रे ऽसिद्धवत्सूत्रे च भाष्यकैयटयोः स्पष्टम् । अत्राङ्गशब्देन शब्दरूपं निमित्तमेव गृह्यते, शब्दशास्त्रे तस्यैव प्रधानत्वात् । तेनार्थानिमित्तकस्य न बहिरङ्गत्वम् । अत एव "न तिसृचतसृ" इति निषेधश्चरितार्थः । अन्यथा स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षयान्तरंगत्वात् त्रयादेशे तदसङ्गतिः स्पष्टैव ।

---

अप्रतिबन्ध्यत्वेन तद्विषयकेच्छा भवत्येवैवम्बहिरङ्गत्वलक्षणेऽपि बोध्यम् । असिद्धम्बहिरङ्गमिति—

नन्वसिद्धं बहिरङ्गमन्तरङ्ग इत्यत्राऽसिद्धपदस्य पूर्वं कथम्प्रयोगः "उद्देश्यवचनं पूर्वम्विधेयञ्च ततऽपरम् । यच्छब्दयोगऽप्राथम्यं स्यादुद्देश्यस्य लक्षणम् । यच्छब्दयोगऽपाश्चात्त्यं स्याद्विधेयस्य लक्षणम्" अत एव "वृद्धिरादैजि"त्यत्र पूर्वं वृद्धिपदोपादानम्मङ्गलार्थमिति तत्सूत्रस्थभाष्यम् ।

तथाचान्तरङ्गे बहिरङ्गमसिद्धमित्येव परिभाषाकार इति प्रश्नः । नचोद्देश्यतानिरूपितत्वं विधेयत्वं, विधेयतानिरूपितत्वमुद्देश्यत्वमिति परस्परापेक्षत्वेनान्योऽन्याश्रयः । न च विशेष्यतावच्छेदकताभिन्नमुख्यविशेष्यतानिरूपितप्रकारत्वम्विधेयत्वं वक्तुं शक्यं पर्वतो वह्निमान् पर्वते वह्निरित्यादौ पर्वते उद्देश्यत्वम्वह्नौ विधेयत्वमिति कथनेऽपि अन्योन्याश्रयस्य तादवस्थ्यात् । उद्देश्यांशे विशेष्यतासम्बन्धो विधेयांशे प्रकारतासम्बन्ध इत्यपि न सार्वत्रिको नियमः ? पर्वते वह्निः सर्वेषु घटेषु रूपमित्यादिस्थले व्यभिचारादिति वाच्यम् ? विषयता त्रिविधा प्रकारताख्या विशेष्यताख्या संसर्गताख्या च । विषयताविशेषत्वमुद्देश्यत्वम्विषयताविशेषत्वम्विधेयत्वमिति लक्षणेनान्योन्याश्रयपरीहारात् । नच नीलो घटः पीतो घट इत्यादौ यथा विधेयताप्रयोजकनीलादिपदस्य पूर्वं प्रयोगस्तथाऽसिद्धपदस्यापि पूर्वं प्रयोगो गरीयानेवेति वाच्यम् ? प्रतिज्ञावाक्याभिप्रायकत्वेन तथा प्रयोगात् । घटो नील इत्यस्यैव प्रयोक्तुमुचितत्वाच्च । नीलो घट इति शिष्टव्यवहारपरम्पराप्राप्तलौकिकवाक्यस्योत्तरदाने दृष्टान्तत्वानर्हत्वाच्च । असिद्धम्बहिरङ्गप्रयोगस्तु साक्षाच्छेषावतारलक्ष्यैकचक्षुष्कमहापुरुषस्येति विवेकात् ।

### अथोत्तरम् ।

शाब्दक्रमादार्थक्रमो बलीयान् अग्निहोत्रं जुहोति यवागूम्पचतीति मीमांसकसिद्धान्तात् । अत एव "स्थानिवदादेश" इति पाणिनीयानुशासनं

सङ्गच्छते । अन्यथा तत्रापि शङ्कनमनिवार्यं स्यादेवञ्च परिभाषायाम्पूर्वम- सिद्धपदोपादानमार्थक्रमेणैवेति योग्यसमाधानात् । परिभाषायाम्भाष्यसम्म- ताऽसिद्धपदस्य पूर्वं प्रयोगोऽत एव वह्निमान् पर्वतः वह्नि〰पर्वते, स्थानिवदा- देशः, नीलो घटः, पीतो घट इत्यादिप्रयोगाश्साधव इति कल्पनाच्च ।

किञ्च विधेयांशस्य कुत्रापि प्रच्छन्नत्वाऽभावेन तात्पर्यज्ञानादीनामेव शा- ब्दबोधे कारणत्वेन पूर्वप्रयोगः परप्रयोगो वा तयोः । रघूणामन्वयं वक्ष्ये इत्या- द्यनन्तश्लोकार्थदर्शनेन प्रायिकत्वमेव सर्वथोद्देश्यविधेयवाचकपदप्रयोगोपादा- नस्येति सरयूपारीणशुक्लाः ।

अत्रास्मद्गुरवः ।

अन्तरङ्गत्वबहिरङ्गत्वयोस्सनिरूपकपदार्थत्वेन यन्निरूपितान्तरङ्गत्वम्विव- क्षितन्तदीयनिमित्तसमुदायान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वं, यन्निरूपितम्बहिर- ङ्गत्वम्विवक्षितन्तदीयनिमित्तसमुदायबहिर्भूतनिमित्तकत्वम्बहिरङ्गत्वन्तत्वन्तरङ्ग- त्वे बहिरङ्गत्वस्य तस्य तस्मिन् प्रवेश इति नान्योन्याश्रयः ।

तथाचेत्थम्फलितार्थः, स्वविशिष्टं शास्त्रं स्वापेक्षया बहिरङ्गम् स्वविशिष्टं शास्त्रं स्वापेक्षयाऽन्तरङ्गम् । वैशिष्टचञ्चाद्ये स्वघटकसप्तम्यन्तपदप्रयोज्यविषय- ताश्रयघटितसमुदायनिमित्तकत्वसम्बन्धेन । अन्त्ये वैशिष्टयञ्च स्वीयनिमित्तस- मुदायघटकनिष्ठविषयताप्रयोजकसप्तम्यन्तपदघटितत्वसम्बन्धेन । स्वपदेन शास्त्रं गृह्यते । "पुगन्तलघूपधस्यचे"ति शास्त्रापेक्षया "वाह ऊडि"त्यस्य बहिरङ्ग- त्वम । स्वघटकं सप्तम्यन्तंपदमार्द्धधातुकपदन्तत्प्रयोज्यविषयताश्रयो ण्विप्रत्य- यस्तद्घटितसमुदायो विश्ववाहरूपमङ्गन्तन्निमित्तकत्वमूड्विधायकस्येति गुणा- पेक्षया बहिरङ्गत्वेनोठोऽसिद्धत्वान्न गुणवृद्धिभ्यां सिद्धिरिति चरितार्थमूठ्ग्रहणम् ।

एवं स्वं "वाह ऊडि"ति शास्त्रीयसमुदायो विश्ववाहरूपमङ्गमेव तद्घ- टको ण्विप्रत्ययः शस्विभक्ते〰पूर्वसमुदायस्याङ्गत्वात् । तन्निष्ठविषयताप्रयोजकं पदं सप्तम्यन्तपदमार्द्धधातुकन्तद्घटितत्वं "पुगन्तलघूपधस्य चे"त्यस्येति तस्या- न्तरङ्गत्वम् ।

तथाच पूर्वं पूर्वमन्तरङ्गम् परम्परम्बहिरङ्गम् , अल्पापेक्षमन्तरङ्गम्बह्वपेक्ष- म्बहिरङ्गम् पूर्वोत्तरपदघटकवर्णनिमित्तकत्वम्बहिरङ्गत्वम् , केवलपूर्वपदघटक- वर्णनिमित्तकत्वमन्तरङ्गत्वम् , प्रकृतिप्रत्ययोभयसापेक्षकत्वम्बहिरङ्गत्वम् , प्रकृ- तिमात्रापेक्षकत्वमन्तरङ्गत्वम् ।

अधिकनिमित्तकत्वम्बहिरङ्गत्वम , अधिकसञ्ज्ञानिमित्तकत्वम्बहिरङ्गत्वम् , अर्थसञ्ज्ञानिमित्तकत्वम्बहिरङ्गत्वम् , अपरनिमित्तकत्वमन्तरङ्गत्वम् , पदनि- मित्तकत्वम्बहिरङ्गत्वम् वर्णनिमित्तकत्वमन्तरङ्गत्वम् , पूर्वोपस्थितिनिमित्तक- त्वमन्तरङ्गत्वम् , शीघ्रोपस्थितिनिमित्तकत्वमन्तरङ्गत्वम् , पदद्वयसम्बन्धि-

अत एव "त्रयादेशे स्रन्तस्यप्रतिषेध" इति स्थानिवत्सूत्रस्थभाष्यवार्त्तिकादि संगच्छते।

एतेन गौधेरः पचेदित्यादावेयादीनामङ्गसंज्ञासापेक्षत्वेन बहिरङ्गतयाऽसिद्धत्वाद्वलिलोपो न स्यादिति परास्तम्। एयादेशादेरपरनिमित्तकत्वेनान्तरङ्गत्वाच्च।

---

वर्णद्वयापेक्षकत्त्वम्बहिरङ्गत्वम्, केवलवर्णनिमित्तकत्त्वमन्तरङ्गत्वमित्याद्यनेकविधलक्षणानि।

अत एवेति—अर्थकृतबहिरङ्गत्वस्यानाश्रयणादेवेत्यर्थः। नच तिस्रादेशविधायके शास्त्रे स्त्रीत्वं यथा निमित्तं तथा त्रयादेशविधायके आमंशे विशिष्टरूपोपादानसत्त्वेनार्थोऽपि निमित्तमिति साम्यमिति वाच्यम्? तिस्रादेशविधायके विभक्तिसञ्ज्ञाया अधिकाया निमित्तत्वेन वैषम्यात्।

नच "स्वं रूप" सूत्रबलेन आम् सञ्ज्ञाया अपि विद्यमानत्वेन तत्त्वाभावो न वक्तुं शक्यः? त्रयादेशे त्रित्वम्, अर्थवत्त्वम्, आम् सञ्ज्ञा, तिस्रादेशे त्रित्वम्, अर्थवत्त्वम्, विभक्तिसञ्ज्ञेति चोभयत्र धर्मत्रयनिमित्तकत्त्वेन साम्येऽपि तिस्रादेशे स्त्रीत्वरूपार्थस्याधिकस्य निमित्तत्वेन बहिरङ्गत्वसौष्ठवात्।

एतेनेति—अर्थकृतबहिरङ्गत्वस्यानाश्रयणेनेत्यर्थः। प्रत्ययसञ्ज्ञाङ्गसञ्ज्ञाद्वयाश्रितत्वेन बहिरङ्गत्वम्। ननु यलोपेऽपि वलूसञ्ज्ञालोपसञ्ज्ञयोस्सत्त्वेन साम्यमित्याशयेनाह—पचेदिति।

अपरनिमित्तकत्वेनान्तरङ्गत्वाच्चेति—अन्तरङ्गत्वाभावविशिष्टबहिरङ्गस्यैवैनयाऽसिद्धत्वमिष्ट गौधेरः पचेदित्याद्यनुरोधात्। "आयनेयी"त्यैयादेशस्य "अतो येय" इतीयादेशस्य चोक्तप्रकारेण बहिरङ्गत्वेऽपि अपरनिमित्तकत्वरूपान्तरङ्गत्वस्यापि विद्यमानत्वेनान्तरङ्गत्वाभावविशिष्टबहिरङ्गत्वाभावेन लोपदृष्ट्याऽसिद्धत्वन्नेति तात्पर्य्यम्।

अत्र पूज्याः।

अन्तरङ्गत्वलक्षणान्यनेकानि अन्तर्भूतनिमित्तकत्त्वं, शीघ्रोपस्थितिकत्त्वम्, अपरनिमित्तकत्त्वमित्यादिपूर्वोक्तानि परन्तु बहिरङ्गत्वन्त्वेकमेव, तथाहि—अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रन्तन्निरूपितान्तरङ्गत्वप्रयोजकधर्माभाववत्त्ववत्त्वम्बहिरङ्गत्वम्। इहत्वपरनिमित्तकत्त्वरूपान्तरङ्गत्वप्रयोजकधर्मस्य विद्यमानत्वेन बहिरङ्गत्वाभावान्न तयोरादेशयोरसिद्धत्वमित्यूचुः।

अपरनिमित्तकत्वरूपान्तरङ्गत्वे प्रमाणन्तु "अतोऽमि"ति सूत्रे तपरकरणमेव, दीर्घव्यावृत्त्यर्थमेव। नपुंसके तु ह्रस्वविधानेन दीर्घोऽसिद्धेः। एवम्विधान्तरङ्गत्वफलन्तु अश्व आश्चेति समाहारद्वन्द्वे सवर्णदीर्घम्प्रबाध्यापरनिमित्त-

ननु येन विधिस्तदन्तस्येति सूत्रे भाष्ये इकोयणचीत्यादावपि तदन्त-विधौ स्योनइत्यत्रान्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यते तन्न सिद्धयेत् । ऊनशब्दमाश्रित्य यणादेशो नशब्दमाश्रित्य गुण इत्यन्तरङ्गत्वाद् एव स्यादित्युक्तम् ।

---

कत्वेन पूर्वं ह्रस्वे ततो दीर्घे लक्ष्ये लक्षणन्यायेन पुनर्ह्रस्वाऽप्रवृत्त्या तपरकरणे-नामादेशाऽप्राप्त्या सोऽलुकि [ आ ] इतिरूपमिष्टम् ।

एवम्विधान्तरङ्गत्वाभावे तु परत्वाद्दीर्घे पश्चाद्ध्रस्वे व्यावर्त्यलक्ष्याभावेन तपरकृतिवैयर्थ्यमापद्येत । अत एव "ऊङ्काल" इति निर्देशस्सङ्गच्छते ।

नचा"दसोऽसेरि"ति सूत्रीय "उ" इति समाहारद्वन्द्व इति ग्रन्थानुपपत्ति-रिति वाच्यम् ? भाव्यमानोऽप्युकार इति परिभाषयैव सिद्धेः ।

एवम्विकरणेभ्यो नियमो बलीयानिति परिभाषाऽर्थपरनिमित्तकत्वरूपान्त-रङ्गत्वमूलिकैव पचते इत्यादावपरनिमित्तकत्वेनान्तरङ्गत्वादात्मनेपदसिद्धे-र्विकरणसिद्धेः ।

नन्वेवमन्तरङ्गत्वस्वोकारे "नामी"तिसूत्रभाष्यविरोधस्तत्र "आमी"ति-न्यासे नित्यत्वाद्दीर्घे नुट् न स्यादित्युक्तमपरनिमित्तकत्वन्तु नुटोऽस्त्येवेति । एवं दुद्यूषतीत्यादावपरनिमित्तकत्वेनान्तरङ्गत्वात्प्रथमैकाचो द्वित्वेऽभ्यासे उका-रश्रवणानापत्तिः । जहर्थेत्यादौ गुणेऽजन्तत्वाभावेना "चस्तास्वदि"तिनि-षेधो न स्यादित्येतदर्थमुपदेशपदानुवर्त्तनमसङ्गतं स्यात् इण्निषेधस्याऽपरनि-मित्तकत्वात् 'इति चेन्न ? अपरनिमित्तकादेशविधायकत्वमन्तरङ्गत्वमिति स्वीकारात् । नुट्द्वित्वनिषेधानामनादेशत्वात् जहर्थेत्यत्र गुणे कृतेऽपि पुनः प्राप्तस्येटो निषेधार्थमुपदेशपदानुवृत्तेस्सफलत्वात् । केचित्तु सुमनायशब्दात्कर्तृ-क्विबन्तादल्लोपे यलोपे च सुमनाइत्यत्र तपरकरणं चरितार्थमत्र ह्रस्वः अल्लो-पयलोपयोस्स्थानिवत्त्वात् , कौलुप्तन्न स्थानिवदित्यस्य कौ विधिम्प्रत्येवप्रवृत्तेरे-वञ्च ज्ञापकाभावात्फलाभावाच्चापरनिमित्तकत्वमन्तरङ्गत्वमिति नास्त्येवातएव दुद्यूषतीत्यपि साधु सङ्गच्छत इत्युक्तवन्तः ।

वस्तुतस्तु—अजनिष्ठान्यानन्तर्य्यनिमित्तके कार्ये कर्त्तव्ये कृते च यदन्त-रङ्गम्प्राप्नोति तत्र कर्त्तव्ये बहिरङ्गासिद्धत्वन्नेत्यर्थकेन "नाजानन्तर्य्ये" इति परिभाषावचनेनोक्तदोषाणां वारणम् । संज्ञाकृतबहिरङ्गत्वाश्रयणपरकैयटवि-रोधं स्वमते उपपाद्य खण्डयति नन्विति ।

तदन्तविधाविति । "येन विधिरि"ति सूत्रस्य विशेषणमात्रे तदन्तस-म्पादकत्वे तदपवादभूत "यस्मिन्विधिरि"ति परिभाषाया अपि विशेषणमा-त्रपरसप्तम्यन्ते प्रवृत्त्यापत्तौ "इको यणचो"त्यादावचीति पदेऽपि अजादा-वित्यर्थापत्तिः ।

अत्र कैयट, स्त्रिवेर्बाहुलकादौणादिके नप्रत्यये गुणवलोपोठां प्रसंगे ऊठ् अपवादत्वाद्वलोपं बाधते गुणं त्वन्तरङ्गत्वाद् बाधते । गुणो ह्यंगसम्बन्धिनीमिग्लक्षणां लघ्वीमुपधामार्द्धधातुकं चाश्रयति । ऊठ् तु वकारान्तमङ्गमनुनासिकादिं च प्रत्ययमित्यल्पापेक्षत्वादन्तरङ्गः । तत्र कृते यणुगुणौ प्राप्नुत इति ।

एवं च संज्ञापेक्षस्यापि बहिरङ्गत्वं स्पष्टमेवोक्तमिति चेत् , न । तद्न्तविधावपि बहुपदार्थापेक्षत्वरूपबहिरङ्गत्वस्य गुणे सत्त्वेन तत्र दोषकथनपरभाष्यासंगतेः । बहिरङ्गान्तरङ्गशब्दाभ्यां बह्वपेक्षत्वाल्पापेक्षत्वयोः शब्दमर्यादयाऽलाभाच्च । तथा सत्यसिद्धं बह्वपेक्षमल्पापेक्ष इत्येव वदेत्।

अत एव विप्रतिषेधसूत्रभाष्ये गुणाद्यणादेशोऽन्तरङ्गत्वादित्यस्य स्योन इत्युदाहरणं न तु गुणादूडन्तरङ्गत्वादित्युक्तम् । त्वद्रीत्या तदपि वक्तुमुचितम् । प्राथम्यात्तदेव वा वक्तुमुचितम् । मम त्वन्तरङ्गपरिभाषया तद्वारणासम्भवात्तन्नोक्तम् ।

किं च सिद्धान्ते नित्यत्वाद् गुणात् पूर्वमूठ् गुणस्तु ऊठि यणा बाधितत्वादनित्यः । उनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देन सप्तम्याद्यन्यतयोपात्तं शब्दरूपं निमित्तमेव गृह्यत इति स्पष्टमेवोक्तम् । यत्तु कैयटेन तदन्तविधिपक्षे परत्वाद्गुणः प्राप्नोतीत्युक्तं तत्तूनशब्दमाश्रित्येत्यादिभाष्यासङ्गत्या चिन्त्यम् ।

वलि लोपेऽन्तरङ्गपरिभाषा न प्रवर्त्तत इति तु न युक्तम् । तत्सूत्रे भाष्य एव व्रश्चादिषु लोपातिप्रसङ्गमाशङ्क्योपदेशसामर्थ्यान्न । न च वृश्चतीत्यादौ चारितार्थ्यं, बहिरङ्गतया सम्प्रसारणस्यासिद्धत्वेन पूर्वमेव तत्प्राप्तेरिति भाष्योक्तेः ।

---

अपवादत्वादिति–अनुनासिकनिमित्तकस्योठोऽपवादकत्वादित्यर्थः । अन्तरंग इति—पञ्चसंज्ञापेक्षगुणापेक्षया संज्ञात्रयापेक्षस्योठोऽन्तरङ्गत्वमिति भावः ।

तदन्तवधिवपीति—तदपवादतदादिविधा "विको यणची"त्यादावजादावित्यर्थो इति ।

शब्दमर्यादयेति—शब्दशक्त्येत्यर्थः । वदेदिति—भाष्यकार इति शेषः । किञ्चेति किन्त्वित्यर्थः । सिद्धान्ते स्वमत इत्यर्थः । यणा बाधितत्वादिति—लक्ष्यानुरोधेन बाधकाऽबाधितकृताऽकृतप्रसङ्गित्वरूपनित्यत्वस्याश्रयणादित्याशयः ।

परिभाषायामङ्गशब्देनेति—परिभाषाघटकान्तरङ्गशब्दघटकाङ्गशब्देनेत्यर्थः । यथाश्रुतन्तु न युक्तम् ? "वाह ऊठ्" सूत्रे सप्तम्यन्तपदस्याऽसत्त्वात् ज्ञापकपरभाष्यासङ्गत्यापत्तेः ।

यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्पञ्चेत्यत्र नषडिति निषेधः

तथाच किमन्तरङ्गत्वमिति प्रश्नः ? बहिरङ्गत्वेन विवक्षितं यच्छास्त्रन्तद्घटकपदप्रयोज्यविषयताश्रयघटकवृत्तिविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वमन्तरङ्गत्वम् ।

ननु किम्बहिरङ्गत्वमेतावता प्रबन्धेनायातीति प्रश्नः ? अन्तरङ्गत्वेन विवक्षितं यच्छास्त्रं तद्घटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटितवृत्तिविषयताप्रयोजकपदघटितत्त्वम्बहिरङ्गत्वम् ।

लक्षणसंघटनप्रकारस्तु अन्तरङ्गत्वेन विवक्षितं शास्त्रं "पुगन्तलघूपधस्य चे"ति तद्घटकं सप्तम्यन्तम्पदमार्द्धधातुक इति, तत्प्रयोज्यविषयताश्रयो ण्विप्रत्ययः, तद्घटितम्विश्ववाहिति, तन्निष्ठविषयताप्रयोजकमङ्गपदं, तद्घटितत्त्व "व्वाह ऊठ्" इति शास्त्रे तद् बहिरङ्गमिति । प्रथमलक्षणसंघटनप्रकारस्तु बहिरङ्गत्वेन विवक्षितं शास्त्रं "व्वाह ऊठ" इति तद्घटकाङ्गभपदप्रयोज्यविषयताश्रयो विश्ववाहिति समुदायस्तद्घटको ण्विस्तदन्तस्य शसाद्यव्यवहितपूर्वत्त्वेन भसंज्ञया तन्निष्ठविषयताप्रयोजकं सप्तम्यन्तपदमार्द्धधातुकपदन्तद्घटितं"पुगन्तलघूपधस्ये"तिशास्त्रमिति तदन्तरङ्गम् इत्येवम्विधः ।

परन्तु इमे लक्षणे जाताऽसिद्धत्वप्रयोजकस्थल एव । समकालप्राप्ताऽसिद्धत्वस्थले तु उभयत्र सप्तम्याद्यन्ततयोपात्तमेवाङ्गपदेन गृह्यत इति निरुक्तम् । ऊनशब्दमाश्रित्येत्यादिभाष्येण च परिभाषायामङ्गशब्देनेति ।

अत्र केचित्—बहिरङ्गत्वेन जिघृक्षितशाब्दघटकयत्किञ्चित्पदेनाश्रीयमाणशब्दसमुदायघटकपर्य्याप्तोपस्थितीयप्रकारतासमानाधिकरणविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितशास्त्रत्त्वमन्तरङ्गत्त्वम् । बहिरङ्गत्वेन जिघृक्षितं शास्त्रमि "को यणची"ति तदाश्रीयमाणसमुदाय ऊन इति तद्घटकः न इत्येतत्पर्य्याप्तोपस्थितीयप्रकारतासमानाधिकरणं विषयताप्रयोजकं सप्तम्यन्तपदमार्द्धधातुक इति तत्पदघटितत्त्वं "पुगन्तलघूपधस्ये"तिशास्त्रस्येत्यन्तरङ्गत्वसंघटनप्रकारः ।

किञ्च बहिरङ्गत्वेन जिघृक्षितशास्त्रविशिष्टशास्त्रभिन्नत्वमन्तरङ्गत्त्वम् । शास्त्रे वैशिष्टयञ्च स्वीयोद्देश्यतावच्छेदकत्त्वेनाश्रीयमाणशब्दसमुदायघटकनिमित्तकत्वाभाववत्त्वस्वघटकोपश्लेषिकाधिकरणबोधकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्योपस्थितीयविषयतापर्य्याप्त्यधिकरणीभूतसमुदायघटकपर्य्याप्तोपस्थितीयप्रकारतासमानाधिकरणविषयताप्रयोजकसप्तम्यन्तपञ्चम्यन्तान्यतरपदघटितत्वाभाववत्त्वैतदुभयसम्बन्धेन । तथा च "ऊङ्काल: वाह ऊठ्" इत्यादौ चानुपपत्तिर्नेति दिगित्याहुः ।

यत्त्विति—संज्ञाकृतमपि बहिरङ्गत्वं वक्तव्यमित्याशङ्क्य समाधत्तेऽनेन

इति, तच्चिन्त्यम् ? नलोपस्य हि पदसंज्ञासापेक्षत्वेन बहिरङ्गत्वं वाच्यम्। तच्च न, संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात्। पञ्चेत्यत्र निषेधस्तु स्त्रियां यत् प्राप्नोति तन्नेति व्याख्यानसामर्थ्येन भूतपूर्वषट्त्वमादायेति बोध्यम्।

अत एव कृतितुग्ग्रहणं चरितार्थम्। वृत्रहभ्यामित्यादौ पदत्वनिमित्तकत्वेऽपि नलोपस्य बहिरंगत्वाभावात्। भ्यामः पदसंज्ञानिमित्तत्वे-

---

ग्रन्थेनेति। पञ्चेत्यत्र निषेधस्त्विति—नच "नलोपस्सुपि"त्यादिना षट्संज्ञादृष्ट्या नलोपाऽसिद्धत्वं स्यादिति वाच्यम् ? तत्सूत्रभाष्ये संज्ञापदेन घिसंज्ञाया एव ग्रहणस्योक्तत्वात्। तथाहि—अथ संज्ञायां किमुदाहरणम् दत्तदण्डिनौ दण्डिदत्तौ, अत्र नलोपस्य घिसंज्ञादृष्ट्याऽसिद्धत्वेन घित्वाभावात्पूर्वनिपाताऽनियमफलमुक्त्वा यदा घित्वं तदा पूर्वनिपातस्तदा नलोपे घित्वमित्यन्योऽन्याश्रयमाशङ्क्य सञ्ज्ञाग्रहणसामर्थ्याद् यस्य पूर्वपदत्वे घित्वं भावि तस्य पूर्वनिपात इत्यर्थेन समाहितम्। यद्यन्यस्यास्सञ्ज्ञाया ग्रहणं स्यात्तर्हि षट्सञ्ज्ञादृष्ट्या नलोपाऽसिद्धत्वेन सार्थक्यसम्भवात्सामर्थ्यकल्पनाया नैरर्थक्याऽपत्तेः।

ननु "द्वन्द्वे घी"त्यस्य भाव्यर्थकत्वे किम्फलमिति चेन्न ? द्युलिहौ ग्रामणिराजानावित्यादौ पूर्वनिपातफलसौष्ठवात्।

व्याख्यानसामर्थ्येनेति—अन्यथा षडादिशब्दाट्टापोऽसम्भवेन ङाप् न स्यादित्येव वदेदिति तत्त्वम्।

व्याख्यानसामर्थ्येनेति कथनन्तु केवलकार्यकालपक्ष इति बोध्यम्। यथोद्देशपक्षे तु सुब्लुगर्थं जातं षट्त्वमादायैवानुमानिकस्थानिवद्भावेन सिद्धिः।

नच प्रियपञ्चा द्रौपदीत्यत्र ङीब्डाब्निषेधेन व्याख्यानस्य चारितार्थ्यमिति कथं सामर्थ्यकल्पनमिति वाच्यम् ? "अजाद्यतष्टाप् ( ऋचि पादः ) अन्यतरस्यां ङीप् पाद इति वर्त्तते ऋचि इति निवृत्तन्तत "ऋन्नेभ्य" इति न्यासेन सिद्धे ङीप्प्रकरणमध्ये पुनष्टाप्करणेन टापोऽपि निषेध इति व्याख्यानेन भूतपूर्वषट्त्वाश्रयणपूर्वकसूत्रप्रवृत्तिलालित्यात्। सङ्केतसम्बन्धेन षट्पदवत्त्वस्यैव षट्त्वेनानल्विधित्वात्स्थानिवद्भावेन यथोद्देशपक्षाश्रयणान्निषेधोपपत्तेश्च। अत एव षट्सञ्ज्ञासूत्रभाष्ये षट्सञ्ज्ञा नलोपाऽसिद्धत्वस्य न फलमित्युक्तं सङ्गच्छत इति।

अत्र सरयूपारीणशङ्काः !

"न षट् स्वस्रादिभ्य" इति सूत्रं "डाबुभाभ्यामि"ति सूत्रेऽनुवर्त्य वाक्यभेदेन व्याख्यानमिति नापत्त्यनुपपत्ती इति सुगमः पन्था इति वदन्ति।

वृत्रहभ्यामिति—अत्र वृत्रेति पृथक् पदम्। अत एव समुदायापेक्षकत्व-

ऽपि नलोपस्य तन्निमित्तकत्वाभावात् । परम्परया निमित्तत्वमादाय बहिरंगत्वाश्रयणे तु न मानम् ।

ध्वनितं चेदं नलोपः सुबिति सूत्रे भाष्ये इति तत्रैव भाष्यप्रदीपोद्योते निरूपितम् ।

अन्तरङ्गे कर्तव्ये जातं तत्कालप्राप्तिकं च बहिरङ्गमसिद्धमित्यर्थः । वृश्चत्यादिषु पदसंस्कारपक्षे समानकालत्वमेव द्वयोरिति बोध्यम् ।

एतेनान्तरङ्गं बहिरङ्गाद् बलीय इति परिभाषान्तरमित्यपास्तम् । एनामाश्रित्य विप्रतिषेधसूत्रे भाष्ये तस्याः प्रत्याख्यानाच्च । अन्तरङ्ग-शास्त्रत्वमस्या लिङ्गम् ।

इयं च त्रिपाद्यां न प्रवर्तते त्रिपाद्या असिद्धत्वात् । अस्याञ्च "वाह ऊठ्" सूत्रस्थमूड्ग्रहणं ज्ञापकमित्येषा सपादसप्ताध्यायीस्था । अन्यथा सम्प्रसारणमात्रविधानेन लघूपधगुणे वृद्धिरेचीति वृद्धौ विश्वौह इत्या-दिसिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । सत्यां ह्येतस्यां बहिरङ्गसम्प्रसारणस्या-सिद्धत्वाल्लघूपधगुणो न स्यात् ।

न च पुगन्तेति सूत्रे निमित्तमिको विशेषणमत एव भिनत्तीत्यादौ न गुणः, एवं च नाजानन्तर्ये इति निषेधात्कथं परिभाषाप्रवृत्तिरिति वाच्यम् ? प्रत्ययस्याङ्गांश उत्थिताकाङ्क्षत्वेन तत्रैवान्वयात् पुगन्तेत्यादौ कर्मधारयाश्रयणेन प्रत्ययपराङ्गावयवलघूपधारूपेको गुण इतीको गुण-वृद्धी इति सूत्रभाष्यसम्मते ऽर्थे भिनत्तीत्यादावदोषाच्च ।

अकारान्तोपसर्गे ऽनकारान्ते चोपपदे वहेर्वाहेर्वा क्विब्विचावनभि-धानान्न स्त एव । वार्यूहेत्यादि तूहतेः क्विपि बोध्यम् । धातूनामनेकार्थ-

---

रूपबहिरङ्गत्वाभावः । हभ्यामित्यत्र वर्त्तमाने क्विप् । तेन "ब्रह्मभ्रूणे"ति नि-यमो न प्रवर्त्तते ।

ननु त्रिपाद्याम्बहिरङ्गपरिभाषा न प्रवर्त्तत इति कथङ्कारमयं ग्रन्थ इति चेन्न ? कृतितुग्ग्रहणाभावे तुकि नलोपस्याऽसिद्धत्वाऽभावेनाऽप्रवृत्तिबीजाऽ-भावात् ।

एनाम्परिभाषामुपक्रम्यविलक्षणशाब्दिकानाम् परीक्षालेखप्रकारपुरस्सर-खण्डन प्रकाराः ।

बहिरङ्गशास्त्रीयनिमित्तान्तर्भूतनिमित्तकत्वमन्तरङ्गत्वमित्येवम्विधे लक्षणे पचावेदमित्यादौ गुणैकादेशस्य पदद्वयापेक्षत्वेन बहिरङ्गत्वात्"एतऐ"इत्यैत्वन्न भवति सिद्धान्ते "एत ऐ"इत्यस्य बहिरङ्गशास्त्राद्गुण इति शास्त्रनिमित्ता-कारेकारानन्तर्भूत एकारनिमित्तकत्वेनान्तरङ्गत्वाभावात् पचावेदमित्यादौ कथ-ङ्कारं वारणमिति प्रश्नः । अत्र सरयूपारीणशुक्लाः—अल्पापेक्षकत्वमन्तरङ्ग-

त्वान्नार्थासङ्गतिः । प्रौह इत्याद्यसाध्वेव, वृद्धेरप्राप्तेः । अस्योहस्यानर्थक्यान्न प्राडूहो।ढेत्यस्यापि प्रवृत्तिः ।

न च कार्यकालपक्षे त्रिपाद्यामेतत्प्रवृत्तिर्दुर्वारेति वाच्यम्? पूर्वं प्रति परस्यासिद्धत्वादन्तरङ्गाभावेन पूर्वस्य तन्निरूपितबहिरङ्गत्वाभावात्तया तस्यासिद्धत्वप्रतिपादनासम्भवात् ।

न चानया पूर्वस्यासिद्धत्वादभावेन तं प्रति परासिद्धत्वं पूर्वत्रेत्यनेन वक्तुमशक्यमिति वाच्यम्? एवं हि विनिगमनाविरहादुभयोरप्यप्रवृत्त्यापत्तेः ।

किं च पूर्वत्रेत्यस्य प्रत्यक्षत्वेन तेनानुमानिक्या अस्या बाध एवोचितः । अतः कार्य कालपक्षे ऽपि त्रिपाद्यामस्या अनुपस्थितिरेव । अत एव कार्यकालपक्षमेवोपक्रम्योक्तयुक्तीरुक्तवातो ऽयुक्तो ऽयं परिहारो न वा बहिरङ्गलक्षणत्वादित्युक्तं विसर्जनीयसूत्रे भाष्ये सिद्धान्तिना । त्रिपादीस्थेऽन्तरङ्गे कर्तव्ये ऽयं परिहारो न युक्त इति तदर्थः । किं तु वचनमेवारब्धव्यमिति तदाशयः ।

---

त्वमिति लक्षणमाश्रित्य गुणस्य वर्णद्वयनिमित्तकत्वेन बहिरङ्गत्वा "दैत पे" इत्यस्य एकारनिमित्तकत्वेनान्तरङ्गत्वमित्यभिप्रायोऽत एव स्योन इति "येन विधिरि"तिभाष्यं सङ्गच्छते ।

किञ्च विश्वौह इत्यत्र सम्प्रसारणस्य बहिरङ्गत्वम् , "पुगन्ते"ति गुणस्यान्तरङ्गत्वम् । गुणनिमित्तं ण्विप्रत्ययः, सम्प्रसारणनिमित्तं शस्विभक्तिः । एवञ्च सम्प्रसारणनिमित्तशसघटितत्वं यद्यपि गुणस्य परन्तु गुणनिमित्तण्विप्रत्ययघटितत्वन्नैव सम्प्रसारणविधायकस्येति कथम्बहिरङ्गत्वम् ।

ननु यन्निमित्तोपस्थित्युत्तरोपस्थितिकनिमित्तकं यन्न भवति तदेव तदपेक्षयाऽन्तरङ्गम् , गुणनिमित्तीभूतण्विप्रत्ययोपस्थित्युत्तरोपस्थितिकशसनिमित्तकत्वात्सम्प्रसारणस्य बहिरङ्गत्वमिति चेन्न? ऊनशब्दमाश्रित्य यण् , न शब्दमाश्रित्य गुण इति भाष्यविरोधात् धर्मिग्राहकमानविरोधाच्च ।

यत्तु नलोपस्य षट्संज्ञायामसिद्धत्वात्"न षडि"ति पञ्चेत्यत्र निषेध इति संज्ञाकृतबहिरङ्गत्वस्यानाश्रयणात् इति ग्रन्थो नोपपद्यते । तथाहि "नलोपस्सुबि"ति सूत्रे संज्ञापदेन विसंज्ञाया एव ग्रहणम् , दण्डिदत्तौ दत्तदण्डिनाविति भाष्यात् । तत्र संज्ञाग्रहणसामर्थ्याद् यस्य पूर्वपदत्वे घित्वं भावि तत्र पूर्वनिपात इत्यर्थः । वृत्रलिहौ ग्रामणिराजानाविति फलम् । "नलोपस्सुप्स्वरे"ति सूत्रेण नलोपस्याऽसिद्धत्वन्न त्वन्तरङ्गपरिभाषया । यद्यपि नलोपस्य षट्संज्ञापेक्षया बहिरङ्गत्वम् । एवञ्च तेनैव सिद्धौ बह्वपेक्षम्बहिरङ्गमित्यस्याऽनित्यत्वज्ञापनार्थम्प्रकृतसूत्रीयसंज्ञाग्रहणम् ।

अत एव निगाल्यत इत्यादौ लत्वार्थं तस्य दोष इति वचनमेवारब्धम् । अन्यथान्तरङ्गत्वाण्णिलोपात्पूर्वं वैकल्पिकलत्वे तद्वैयर्थ्यं स्पष्टमेव । येऽपि लक्ष्यानुरोधादानुमानिक्याप्यन्तरङ्गपरिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधं वदन्ति तेऽपि लक्षणैकचक्षुर्भिर्नादर्त्तव्या इति दिक् ।

अत एव आमाङोश्चेत्याङ्ग्रहणं चरितार्थम् । तद्धि खट्वा आ ऊढेत्यत्र परमपि सवर्णदीर्घं बाधित्वान्तरङ्गत्वाद् गुणे कृते वृद्धिप्राप्तौ पररूपार्थम् । साधनबोधकप्रत्ययोत्पत्त्यनन्तरं पूर्वं धातोरुपसर्गयोगे पश्चात् खट्वाशब्दस्य समुदायेन योगाद् गुणस्यान्तरङ्गत्वमिति सम्प्रसारणाच्चेति सूत्रे भाष्ये स्पष्टम् । एहीत्यनुकरणस्य शिवादिशब्दसम्बन्धे तु नास्य प्रवृत्तिर्ज्ञापकपरसम्प्रसारणाच्चेतिसूत्रस्थभाष्यप्रामाण्येनानित्यं प्रकृतिवदनुकरणमित्यतिदेशमादाय लब्धाङ्त्वे एतदप्रवृत्तेः ।

यत्तु पूर्वं धातुरुपसर्गेण युज्यते पश्चात्साधनेन । उपसर्गेण तत्संज्ञकशब्देन साधनेन कारकेण तत्प्रयुक्तकार्येण च । अत एवानुभूयत इत्यादौ सकर्मकत्वात् कर्मणि लकारसिद्धिरिति तन्न ? क्रियायाः साध्यत्वेन बोधात्साध्यस्य च साधनाकाङ्क्षतया तत्सम्बन्धोत्तरमेव निश्चितक्रियाबोधेन साधनकार्यप्रवृत्त्युत्तरमेव क्रियायोगनिमित्तोपसर्गसंज्ञकस्य सम्बन्धौचित्यात् । अत एव सुट्कात्पूर्वं इति सूत्रे पूर्वं धातुरुपसर्गेणेत्युक्त्वा नैतत् सारं पूर्वं धातुः साधनेन युज्यते पश्चादुपसर्गेणेत्युक्त्वोक्तयुक्त्यास्यैव युक्तत्वमुक्तं, साधनं हि क्रियां निर्वर्तयतीत्यादिना भाष्ये । उपसर्गद्योत्यार्थान्तर्भावेण धातुनैवार्थाभिधानादुक्तेषु कर्मणि लकारादिसिद्धिः । पश्चाच्छ्रोतृबोधाय द्योतकोपसर्गसम्बन्धः ।

---

अत एव 'ह्रस्वत्वन्तुग्विधेः प्रामणिकुलम्' न लोपः वृत्रहभिरि"ति सन्निपातपरिभाषाप्रयोजनद्वयं "कृन्मेजन्त" इतिसूत्रेऽन्यथासिद्धमिति वर्णितम् ।

अर्थनिमित्तकस्य न बहिरङ्गत्वम् । अत एव "त्रयादेशे स्रन्तस्य प्रतिषेधो वक्तव्य" इत्यपि ग्रन्थो न युक्ततरः । तथाहि—त्र्यर्थवाचकात्रिशब्दघटकत्रिशब्दस्य त्रयादेशवारणाय'त्रेस्त्रय'इतिसूत्रेऽर्थवद्ग्रहणपरिभाषोपतिष्ठते । अर्थवत्त्रिशब्दस्य त्रयादेश इत्यर्थः । एवञ्चार्थनिमित्तकत्वेन बहिरङ्गत्वं त्रयादेशस्यापि, न केवलतिस्रादेशस्यैवेति "त्रयादेशे स्रन्तस्य प्रतिषेध" इति वार्त्तिकस्य न प्रयोजनम् । अन्तरङ्गपरिभाषायास्तुग्ग्रहणेनाऽनित्यत्वबोधनात्तस्या अप्रवृत्त्या त्रयादेशवारणाय "त्रयादेशे स्रन्तस्ये"तिवार्त्तिकमावश्यकमित्येव तात्पर्यम् । नतु शेखरोक्तम् ।

इयम्परिभाषा कार्यकालपक्षेऽपि त्रिपाद्यान्न प्रवर्त्तत इति ग्रन्थस्वरसंथाऽ-

एवं चान्तरङ्गतरार्थकोपसर्गनिमित्तः सुट् संकृतीत्यवस्थायां द्वित्वादितः पूर्वं प्रवर्तते ततो द्वित्वादि। अत एव प्रणिदापयतीत्यादौ णत्वं यदागमा इति न्यायेन समाहितं भाष्ये।

अत एव प्रत्येति प्रत्यय इत्यादिसिद्धिः। अन्यथाऽन्तरङ्गत्वात् सवर्णदीर्घं रूपासिद्धिः।

यत्तुपसर्गनिमित्तकं कार्यमुपसर्गार्थाश्रितं विशिष्टोपसर्गनिमित्तत्वात्तदन्तरंगम्। यत्तु न तथा, तत्र पूर्वागतसाधननिमित्तकमेवान्तरङ्गम्। अत एव न धात्विति सूत्रे प्रेद्ध इत्यत्र गुणो बहिरङ्ग इति भाष्ये उक्तम्।

किञ्च पूर्वमुपसर्गयोगे धातूपसर्गयोगे धातूपसर्गयोः समासे ऐकस्वर्याद्यापत्तिरित्युपपदमतिङिति सूत्रे स्पष्टम्। भावार्थप्रत्ययस्यापि पूर्वमेवोत्पत्तिः। अत एव णेरध्ययने इति निर्देशः संगच्छते।

इदं च सामान्यापेक्षं ज्ञापकं भावतिङोऽपि पूर्वमुत्पत्तेः। अन्यथा तत्र समासापत्तिः। तिङि त्वतिङिति निषेधान्न तत्र दोषो यदि भावतिङ्युपसर्गयोगोऽस्तीत्यलम्।

यत्तु विशेषापेक्षात्सामान्यापेक्षमन्तरङ्गं विशेषापेक्षे विशेषधर्मस्याधिकस्य निमित्तत्वात्। यथा "रुदादिभ्यः सार्वधातुके" इत्यत्र रुदादित्वं सार्वधातुकत्वं च। तत्र सार्वधातुकत्वज्ञानाय प्रकृतेर्धातुत्वज्ञानं प्रत्ययस्य प्रत्ययत्वज्ञानं चावश्यकमिति यानुडन्तरङ्गः।

---

नुपपन्नः तथाहि—दध्यत्र मध्वत्रेत्यादौ संयोगान्तलोपवारणाय त्रिपादीस्थेऽन्तरङ्ग इयम्परिभाषा भाष्यवार्त्तिककाराभ्यां सञ्चालिता। किञ्च "खरवसानयोरि"तिसूत्रे वार्त्तिककृता विस्पष्टं प्रदर्शितत्वाच्च "अयुक्तोऽयम्परिहारो नवा बहिरङ्गलक्षणत्वादि"तिविसर्जनीयसूत्रभाष्यन्न सुसङ्गतम्। अग्रे चोद्यान्तरमेतद्भाष्यमिति कैयटेन वर्णितत्वात्।

आनुमानिकया बाध एवोचित इति ग्रन्थोऽप्ययुक्ततरः "कर्णाख्वनव्ययस्ये"ति निर्देशादानुमानिकया परिभाषया प्रत्यक्षसिद्धस्य पूर्वत्रेत्यस्य बाधो न्याय्य एव। तथा च कार्य्यकालपक्षे त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्त्तत एव।

किञ्च "तस्मादित्युत्तरस्य' स्वौजसमौट्' अतः कृकमिकंसकुम्भपात्रकुशाकर्णीष्वनव्ययस्ये"ति सूत्रनिर्देशा एव कार्यकालपक्षे पक्षान्तरे च त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिं ज्ञापयन्तीति। यावता विनाऽनुपपत्तिरिति न्यायेनान्तरङ्गपरिभाषात्व ज्ञापयतीति शेखरप्रकारः कथमिति विचारयन्तु धीधनाः।

अत्र किञ्चित्—

"तस्य दोषस्संयोगादिलोपलत्वणत्वेषु" निष्ठानत्वमवृद्धेः, नृमतो वप्रतिषेधः' विसर्जनीयोऽनुत्तरपदे" चक्रयत्र नार्मतम् कार्त्तिः नाकुटः नार्पत्य इत्यादिष-

एतेन यत् अनुदात्तङित इति सूत्रे कैयटेनोक्तं लमात्रापेक्षयान्तरङ्गा-स्तिबादयो लकारविशेषापेक्षत्वाद् बहिरङ्गाः स्यादय इति, तत्परास्तम् ? विशेषापेक्षत्वेऽपि तस्य सामान्यधर्मनिमित्तकत्वाभावेन तत्त्वस्य दुरुपपादत्वात् । परनिमित्तकत्वेन स्यादीनां बहिरङ्गत्वाच्चेति, तन्न ? विशेषस्य व्याप्यत्वेन व्यापकस्यानुमानेनोपस्थितावपि तस्य निमित्तत्वे मानाभावेनाधिकधर्मनिमित्तकत्वानुपपादनात् । भाष्ये एवंविधान्तरङ्ग-बहिरङ्गभावस्य क्वाप्यनुल्लेखाच्च ।

यत्तु मतुप्सूत्रे भाष्ये पञ्च गावो यस्य सन्ति स पञ्चगुरित्यत्र मतुप्प्राप्तिमाशङ्क्य प्रत्येकमसामर्थ्यात् समुदायादप्रातिपदिकत्वात् समासात् समासेनोक्तत्वादिति सिद्धान्तिनोक्ते नैतत्सारमुक्तेऽपि हि प्रत्ययार्थे उत्पद्यते द्विगोस्तद्धितो यथा पाञ्चनापितिरिति पूर्वपक्षयुक्तिर्भाष्ये। द्विगोर्लुगनपत्ये इति लुग्विधानात्तद्धितार्थंगोस्तद्धितो भवति पञ्चगुशब्दश्च द्विगुरिति तदाशयं कैयटः । ततो द्वैमातुरः पाञ्चनापितिः पञ्चसु कपालेषु संस्कृत इत्यादौ सावकाशद्विगोर्बहुव्रीहिणा प्रकृते परत्वाद् बाध इत्याशयेन नैष द्विगुः कस्तर्हि बहुव्रीहिरिति सिद्धान्तिनोक्ते तम-

---

क्ष्यसिद्धये वार्त्तिकानि न कर्त्तव्यानि भवन्ति। त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्त्यैवोक्तकार्याणामसिद्धत्वेन रूपसिद्धेः । "यण॒प्रतिषेधो वाच्य" इत्यपि न कार्य्यं भवति ? तथा च त्रिपाद्यामप्रवृत्तौ लाघवमुक्तभाष्यवार्त्तिकानामकरणात् । एवञ्च त्रिपाद्यामन्तरङ्गपरिभाषाप्रवृत्तिस्सप्रमाणैवेति युक्तितत्त्वविद ऊचुः ।

पूज्यचरणास्तु—

"झलो झली"ति झल्ग्रहणापकर्षणेन "यण॒प्रतिषेधो वाच्य" इत्यस्य सर्वमतेऽकर्त्तव्यत्वम् । चकन्यकैदित्यत्र पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वाभावात्संयोगादिलोपनिवृत्तये तक्षधाताण्र्यन्तात्क्विपि णिलोपे पदत्वे संयोगान्तलोपे तगित्यत्र संयोगादिलोपनिवृत्तये प्लायत इत्यत्र पूर्वत्रासिद्धीये न स्थानिवदित्यस्याऽप्रवृत्तये प्राह्णिणोदित्यत्र "हि नुमीने"तिणत्वसिद्धये च "तस्य दोषस्संयोगादिलोपलत्वणत्वेष्वि" त्यस्य कर्त्तव्यत्वात् गुणस्यैवान्तरङ्गत्वात् ।

ऋधातोः क्तस्तदन्तादाचारक्विबन्तात्लङि आर्त्तादित्यत्र निष्ठातत्वनिवृत्तये "निष्ठातत्त्वमवृद्धेरि"त्यस्यावश्यकत्वम्। ऋमच्छब्दादाचारक्विबन्तात्लङि आर्मतदित्यत्र वत्वाभावाय "नृमतो वप्रतिषेध" इत्यस्यावश्यकत्वात् वृद्धेरेवान्तरङ्गत्वात् ।

ऋशब्दात्कप्रत्यये तदन्तादाचारक्विबन्तात्लङि आर्कत्दित्यत्र वृद्धेरबहिरङ्गत्वेन विसर्गाभावार्थं "विसर्जनीयोऽनुत्तरपद" इत्यस्याऽप्यावश्यकत्वमेव।

वकाशमजानानोऽपवादत्वाद् द्विगुः प्राप्नोतीति पूर्वपक्षी। अन्यपदार्थे सुबन्तमात्रस्य विधीयमानबहुव्रीहेः संख्यायास्तद्धितार्थे विधीयमानो द्विगुर्विशेषविहितत्वाद् बाधकः प्राप्नोतीति कैयटः।

ततः सिद्धान्त्येकदेश्याह। अन्तरङ्गत्वाद् बहुव्रीहिः। कान्तरङ्गता? अन्यपदार्थे बहुव्रीहिर्विशिष्टेऽन्यपदार्थे द्विगुस्तस्मिंश्चास्य तद्धितेऽस्तिग्रहणं क्रियत इति। अधिकास्त्यर्थापेक्षमत्वर्थनिमित्तो द्विगुर्बहिरङ्ग इति कैयट इति। नैषा सिद्धान्त्युक्तिरेतावताप्यपवादत्वाहानेः। अच्सामान्यापेक्षयणो विशिष्टसवर्णाजपेक्षदीर्घेण बाधदर्शनात्। किञ्चोक्तरीत्या परत्वेन बाधसिद्धेः। किं चात्राधिकापेक्षत्वेनैव बहिरङ्गत्वम्। न केवलविशेषापेक्षत्वेनेति नैतद्भाष्यारूढं विशेषापेक्षस्य बहिरङ्गत्वम्। अत एव सुबन्तसामान्यापेक्षो बहुव्रीहिस्तद्विशेषापेक्षा द्विगुरिति नोक्तं भाष्ये। न चार्थकृतबहिरङ्गत्वस्यानाश्रयणादिदमयुक्तम्। एकदेश्युक्तित्वेनादोषात्। अत एवास्तिग्रहणं नोपाध्यर्थं किं त्वस्तिशब्दान्मतुबर्थमिति त्वदभिमतं बहिरङ्गत्वमपि द्विगोर्नास्तीति प्रतिपाद्य सिद्धान्तिना मत्वर्थे द्विगोः प्रतिषेधो वक्तव्य इति वचनेनैतत्सिद्धमित्युक्तम्। अत एव तदोः सः सावनन्त्ययोरिति सूत्रेऽनन्त्ययोरिति चरितार्थम्। अन्यथा प्रत्ययसामान्यापेक्षत्वेनान्तरङ्गत्वादन्त्यस्यात्वे ऽनन्त्यस्यैव सत्वे सिद्धे तद्वैयर्थ्यं स्पष्टमेव।

पादः पदिति सूत्रे भाष्यकैयटयोरप्येतदन्तरंगत्वाभाव एव सूचित इति सुधियो विभावयन्तु।

नन्वेवमस्युस्रुवदित्यत्र लघूपधगुणादुवङोऽल्पनिमित्तत्वाभावादुवङ् न स्यादिति चेन्न? तत्रान्तःकार्यत्वरूपान्तरङ्गत्वसत्त्वात्। अन्तःका-

---

तथाच त्रिपाद्यामन्तरङ्गपरिभाषा प्रवर्त्तत इत्यत्रोक्तयुक्तिरेव प्रमाणमित्यास्तां विस्तरः।

अन्तरङ्गपरिभाषा त्रिपाद्यां प्रवर्त्तते न वेति विचारे गुरवः।

परिभाषा द्विविधा शास्त्रत्वसम्पादिका शास्त्रत्वावच्छिन्नोद्देश्यिका च। "पूर्वत्राऽसिद्धमि"त्यनेन शास्त्राऽसिद्धत्वमेव सिद्धान्तितम्। यस्याः प्रवृत्तिमन्तरेण अप्रामाण्यज्ञानाऽनास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबोधजनकत्वरूपशास्त्रत्वमेव न तस्याः पूर्वत्राऽसिद्धमित्यनेनाऽसिद्धत्वाभावात्सा त्रिपाद्यां प्रवर्त्तते। यथा "तस्मिन्निति निर्दिष्ट" इति। याम्बिनापि शास्त्रत्वं स्वतस्सिद्धं तदुद्देश्या त्रिपाद्या असिद्धत्वेन न सा त्रिपाद्यां प्रवर्त्तत इति असिद्धम्बहिरङ्ग इति विवरणमाहुः।

"वाह ऊठ्" सूत्र ऊठ्ग्रहणं ज्ञापकमिति—अत्र "वाह ऊठ्" इति सूत्र ऊठ्ग्रहणं ज्ञापकमन्यथा सम्प्रसारणमात्रविधानेन "पुगन्तलघूपधे"तिगुणे

र्यत्वं च पूर्वोपस्थितनिमित्तकत्वमङ्गशब्दस्य निमित्तपरत्वात् ।

इदमन्तरङ्गत्वं लोकन्यायसिद्धमिति, मनुष्योऽयं प्रातरुत्थाय शरीरकार्याणि करोति, ततः सुहृदां, ततः सम्बन्धिनामर्थानामपि जातिव्यक्तिलिङ्गसंख्याकारकाणां बोधक्रमः शास्त्रकृत्कल्पितस्तत्क्रमेणैव च तद्बोधकशब्दप्रादुर्भावः कल्पित इति तत्क्रमेणैव तत्कार्याणीति पट्व्येत्यादावन्तरंगत्वात्पूर्वं पूर्वयणादेशः परयणादेशस्य बहिरंगतयाऽसिद्धत्वादित्यनेनाचः परस्मिन्निति सूत्रे भाष्ये स्पष्टम् ।

तदपि युगपत्प्राप्तौ पूर्वप्रवृत्तिनियामकमेव यथा पट्व्येत्यत्र पदस्य विभज्यान्वाख्याने, न तु जातस्य बहिरंगस्य तादृशेऽन्तरङ्गेऽसिद्धतानियामकं, प्रागुक्तलोकन्यायेन तथैव लाभादिति वाह ऊठ्सूत्रे कैयटे स्प-

---

"वृद्धिरेची"तिवृद्धौ प्रष्ठौह इति सिद्धेऽ न्तरङ्गपरिभाषाज्ञापकन्तत् । नच "ऊडिदम्पदाद्यप्पुम्रैद्युभ्य" इति स्वरार्थन्तदिति वाच्यम् ? "वाह ऊठि"त्यत्र स्वरविधायके च ह्रस्व एव विधातव्ये दीर्घोच्चारणं ज्ञापकमेव, लघूपधगुणे वृद्धौ च रूपसिद्धेः । "एत्येधत्यूठ्स्वि"तिदार्धसाहित्यन्तु अवतीति ऊः "ज्वरत्वरे"त्यूठ् जनानवतीति जनौरित्यत्र वृद्ध्यर्थम् । नच जूरेत्यादौ स्वरविधानार्थं दीर्घग्रहणन्न ज्ञापकमिति वाच्यम् ? वार्त्तिके स्वरविधायके च ठित्करणेनाऽदोषात् ।

स्वरविधायके वार्त्तिके च प्रश्लेषेण दीर्घणोकारोऽपि विधेयः । ऊठ्साहचर्यात् उकारो वकारस्थानिक उपधाभूतो धातुस्थो गृह्यतेऽतो यून इत्यादौ न दोष इति सम्प्रसारणमात्रविधानेन सिद्धावूठ्ग्रहणस्य ज्ञापकत्वसौष्ठवाच्च ।

किञ्च "वाह ऊठ्" इति सूत्र्यताम् स्वरविधायके च "ठिदिदम्" इति सूत्र्यताम् "ठित्युपधाग्रहणं कर्त्तव्यमि"तिवार्त्तिकञ्च कर्त्तव्यम् । "वाह ऊठि" त्यत्र दीर्घानुच्चारणाल्लाघवं स्वरश्च सिद्ध्यत इति दीर्घोपादानं ज्ञापकमेव ।

किञ्च "च्छ्वोरि"तिसूत्रे सतुग्ग्रहणं ज्ञापकमस्यां परिभाषायान्तदेवोक्तम् भाष्ये, "क्रियमाणेऽपि वै अज्ग्रहणे अवश्यमत्र तुगभावे यत्नः कर्त्तव्यः अन्तरङ्गत्वाद्धि तुक् प्राप्नोति इति,, एवं वदता तेन तुगभावे यत्नोऽन्तरङ्गपरिभाषाज्ञापक इति ध्वनितम् ।

एतयाऽसिद्धत्वन्द्विविधम् जातबहिरङ्गाऽसिद्धत्वम् समकालप्राप्तिकबहिरङ्गाऽसिद्धत्वञ्चेति । तत्र जातबहिरङ्गाऽसिद्धत्वस्य किम्फलमिति प्रस्तूयते ।

पचावेदमित्यादौ गुणस्य बहिरङ्गत्वेनासिद्धत्वात् "एत ऐ" इत्यैत्वन्तु न भवति इति तु न "इत ऐरि"तिन्यासात् । भवानीत्यत्र तु न दोषः ? तक्रकौण्डिन्यन्यायेन निआदेशेन बाधात् । न "चामेत" इति प्रवृत्त्या दोषः ? प्रतिपदोक्तैकारस्य लक्षणप्रतिपदोक्तपरिभाषया तत्र ग्रहणात् "टित आत्मनेपदा-

ष्टम् । अत एव वाय्वोरित्यादौ वलि लोपो यणः स्थानिवत्त्वेन वारितोऽचः परस्मिन्नित्यत्र भाष्यकृता ।

क्रमेणान्वाख्याने तूक्तोदाहरणे पूर्वप्रवृत्तिकत्वमन्तरङ्गत्वं बहिरङ्गस्यासिद्धत्वमपि निमित्ताभावादप्राप्तिरूपं बोध्यम् ।

यत्त्वेवंरीत्या पूर्वस्थानिकमप्यन्तरङ्गमिति, तच्चिन्त्यम् ? स्रजिष्ठ इत्यादौ विन्मतोर्लुकि टिलोपस्यापवादविन्मतोर्लुक्प्रवृत्त्या जातिपक्षाश्रयणेन वारणप्रयासस्य प्रकृत्यैकाजिति सूत्रप्रयोजनखण्डनावसरे भाष्यकृत्कृतस्य नैष्फल्यापत्तेः । त्वदुक्तरीत्या विन्मतोर्लुको बहिरङ्गासिद्धत्वेनानायासतस्तद्वारणात् । भाष्य ईदृशरीत्या बहिरङ्गासिद्धत्वस्य काप्यनाश्रयणाच्च । परिभाषायामङ्गशब्दस्य निमित्तपरत्वाच्च ।

इयं चोत्तरपदाधिकारस्थबहिरङ्गस्य नासिद्धत्वबोधिकेतीच एकाचोमिति सूत्रे भाष्ये पूर्वपदयुक्तिरिति सा नादर्तव्या । परन्तप इत्यादावनुस्वारे नासिद्धत्वं मुमस्त्रिपाद्यां तदप्रवृत्तेः ।

---

नामि"त्यत आत्मनेपदानुवृत्त्या भाष्योक्तया फलाभावाच्च । ह्रस्वस्याऽसिद्धत्वेन हेजगदम्ब इत्यादौ टाबभावस्तु न फलम् ? टाप्यपि पुनर्ह्रस्वेनेष्टसिद्धेः । लक्ष्ये लक्षणन्यायस्य तु न विषयः ? जगदम्बात्रेति प्रयोगे दीर्घस्यासिद्धत्वेनाम्बार्थकत्वान्न ह्रस्व इत्यपि न फलम् ? उत्तराकारात्पूर्वभूतसम्बुद्ध्यपेक्षया उत्तराकारपर्यन्तैकादेशविशिष्टस्य पूर्वत्वबुद्ध्यभावेन ह्रस्वत्वाऽप्राप्तेः ।

स्वयम्भवतीति स्वयम्भूः स्वयम्भुवे इत्यत्रोवङोऽसिद्धत्वाच्छ्वोरित्यूठोऽभावस्तु न फलम् ? छकारसाहचर्य्येण विभक्त्यनिमित्तकवकारग्रहणात् ।

अथाकास्यफलानि—नौशब्दस्य अशब्देन समासे नावशब्दादाचारक्विबन्ताण्णावल्लोपे नावयतीत्यत्रोठ्निवारणाय परिभाषा ।

किञ्च कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तभूशब्दात् "अचो यदि" ति यति भव्यमिति तत्रोठोऽभाव एव फलम् ।

किञ्च दिव्धातोः कप्रत्यये दिवः, मनधातोः क्विपि मत् समस्ताण्णिचि टिलोपे दिवमिति मान्तशब्दस्य मशब्देन साकं समासे पुनर्णिचि टिलोपे देवयतीत्यत्रोठोऽभावस्य फलत्वात् ।

दीङ् क्षये घञर्थे कप्रत्यये इयङि दियशब्दादाचारक्विपि तदन्ताण्णावल्लोपे दिययतीत्यत्र "लोपो व्योरि"तिसूत्रेण क्विब्वकारनिमित्तकयलोपो नानयाऽसिद्धत्वादित्यपि फलम् । सुवाविरित्यत्रोवङोऽसिद्धत्वादूठ् नेत्यपि फलम् ।

ननु समकालप्राप्तिकबहिरङ्गाऽसिद्धत्वस्य किंफलमिति प्रश्नः । पदस्य विभज्यान्वाख्यानपक्षे तृतीयैकवचने पटु ई आ पट्व्येति न फलम् । क्रमिकान्वाख्यानपक्षे पूर्वयण्समये तृतीयाविभक्त्यभावेन परयणोऽप्रवृत्त्या पूर्वयण्वि-

नव्यमतेऽपि यथोद्देशपक्षाश्रयणेनान्यथासिद्धोदाहरणदानेन तस्य तदुक्तित्वमावश्यकमित्याहुः । आभीयेऽन्तरङ्गे आभीयस्य बहिरङ्गस्य समानाश्रयस्य नानेनासिद्धत्वमसिद्धत्वादित्यसिद्धवत्सूत्रे भाष्ये स्पष्टम् ।

एवं सिचि वृद्धेर्येननाप्राप्तिन्यायेनान्तरङ्गबाधकत्वमूलकं न सिच्यन्तरङ्गमस्तीतीको गुणेति सूत्रे भाष्ये स्पष्टम् ॥ ५० ॥

नन्वेवमक्षद्यूरित्यादौ बहिरङ्गस्योठोऽसिद्धत्वादन्तरङ्गो यण् न स्यादत आह—

---

धाने बाधकविरहात् परयण्यपि स्थानिवद्भावेन पूर्वयणि दोषाऽभावाच्च । इ उ आ इति समासे परयणादेशे जातबहिरङ्गासिद्धत्वेन तस्याऽसिद्धत्वेऽपि "नाजानन्तर्य्ये" इति निषेधात्पूर्वपूर्वयणादेशविधानाय समकालप्राप्तबहिरङ्गाऽसिद्धत्वं सफलम् "य्वा" इति तत्र रूपम् ।

कश्च अश्च ईशश्चेत्यत्र नित्यमपि गुणम्बाधित्वाऽनया परिभाषया दीर्घ इदमपि फलम् ।

इच्छतीत्यत्र छत्वेऽन्तरङ्गत्वात्तुकि लघूपधत्वाभावान्न गुण इदमपि फलम् ।

अभवकदित्यत्र नित्यमकचम्प्रबाध्य "इतश्चे"तीकारलोपेऽकचि अभवकदिति रूपम् । परिभाषांशाभावे तु नित्यत्वादकचि तन्मध्यपतितन्यायेनाकचिविशिष्टस्य "इतश्चे"तीकारलोपे अभवदित्यनिष्टरूपाऽपत्तिरिति सिद्धान्तफलम् ।

अन्तरङ्गपरिभाषायाश्शाब्दबोधः—यच्छब्दयोगप्राथम्यं स्यादुद्देश्यस्य लक्षणमित्युक्त्या विधेयस्यासिद्धपदस्य पूर्वप्रयोगः क्वचिद्विधेयस्यापिपूर्वं प्रयोग इति सिद्ध्यर्थम् । तेन 'कृदतिङ्' । 'वान्तोयिप्रत्यये' 'अपृक्त एकाल् प्रत्ययः' 'वृद्धिरादैच्'' इत्यादि सिद्ध्यति। अन्तरङ्गे बहिरङ्गमसिद्धंस्यादिति स्वरूपम्। अन्तरङ्गत्वेन विवक्षितशास्त्रीयविधेये कर्त्तव्य इति भावः। अन्तरङ्गत्वावच्छिन्नप्रकारतानिरूपिताभेदसम्बन्धावच्छिन्न शास्त्रत्वावच्छिन्नविशेष्यत्वावच्छिन्नकर्त्तव्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता बहिरङ्गत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या असिद्धत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्त्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अस्त्यर्थक्रियात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

अपवादसङ्गत्याऽऽह—नन्वेवमक्षद्यूरिति । आदिना हरय इत्यस्य सङ्ग्रहः । अन्तरङ्गे कर्त्तव्ये जातबहिरङ्गाऽसिद्धत्व इत्यर्थः । यत्रोत्तरकालप्रवृत्तिकेऽच आन्तर्य्यमाश्रीयते तत्र बहिरङ्गपरिभाषा न प्रवर्त्तत इति परिभाषाफलितार्थस्तेनाक्षद्यूरि-

नाजानन्तर्ये बहिष्ट्वप्रक्लृप्तिः ॥ ५१ ॥

अत्र षत्वतुकोरिति सूत्रस्थं तुग्ग्रहणं ज्ञापकम् ।

अन्यथाधीत्य प्रेत्येत्यादौ समासोत्तरं ल्यप्प्रवृत्त्या पूर्वं समासे जाते तत्र संहिताया नित्यत्वाद्ल्यबुत्पत्तिपर्यंतमप्यसंहितयावस्थानासम्भवेनैकादेशे ल्यपि तुगपेक्षया पदद्वयसम्बन्धिवर्णद्वयापेक्षैकादेशस्य बहिरङ्गतया असिद्धत्वेन तद्वैयर्थ्यं स्पष्टमेव ।

पदद्वयसम्बन्धिवर्णद्वयापेक्षं बहिरङ्गमिति प्रेद्ध इत्यादौ गुणो बहिरङ्ग इति ग्रन्थेन न धातुलोपइति सूत्रे संयोगान्तस्य लोप इति सूत्रे च भाष्ये स्पष्टम् ।

यत्तु षत्वग्रहणमपि ज्ञापकमन्यथा कोऽसिचदित्यादौ पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेन बहिरङ्गस्यैकादेशस्यासिद्धत्वेन षत्वप्रवृत्तौ किं तेनेति। तन्न ? इणःपूर्वपदसम्बन्धित्वेन षत्वस्यापि पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वेनोभयोः समत्वात् । एकादेशस्य परादिवत्वेनौसिचदित्यस्य पद-

---

त्यत्र बहिरङ्गस्योठोऽसिद्धत्वेऽपि एनया यण् सिद्धचति। बहिरङ्गस्येति–ननु बहिरङ्गत्वेन जिघृक्षित "च्छ्वोरि" तिशास्त्रीयाङ्गपदेनाश्रीयमाणात्तद्विघटकत्वपर्य्याप्ता सप्तम्यन्तपदप्रयोज्यविषयता नास्तीति यणोऽन्तरङ्गत्वं कथमिति चेन्न ? स्थानिद्वारापि घटकत्वमत्राश्रीयते इत्यूठ्स्थानिवकारस्य घटकतयोकारस्यापि तत्त्वाश्रयणात् । अत एव औजिढदित्यत्र ढत्वादीनामसिद्धत्वेन हतिशब्दस्य द्वित्वे उत्तरखण्डे ढत्वादिप्रवृत्तौ द्वित्वापेक्षया "ढ्लोप" इतिदीर्घस्यान्तरङ्गत्वेन द्वित्वाऽसिद्धया दीर्घाभावस्सङ्गच्छते । अन्यथा द्वित्वशास्त्रेणाश्रीयमाणहतिघटकत्वस्य ढकारेऽभावेनान्तरङ्गत्वाऽभावान्न्यायाप्रवृत्तौ दीर्घापत्तेः । ढस्थानिकहस्य घटकत्वे त्वभीष्टं सिद्धयति । नचाभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषया विरोध इति वाच्यम् ? अभ्यासत्वावच्छिन्नोद्देश्यताके एव तत्प्रवृत्तिस्वीकारात् । समासोत्तरमिति—ल्यपस्तन्निमित्तकत्वादिति तत्त्वम् । प्रेद्ध इत्यादाविति—"न धातुलोप" इत्यस्य धात्वंशलोपनिमित्त आर्द्धधातुके सति गुणो नेत्यर्थे प्रेद्ध इत्यादौ धात्वंशनकारलोपनिमित्तक्तप्रत्ययरूप आर्द्धधातुके सति "आद्गुण" इति गुणो न स्यादित्याशङ्क्य गुणो बहिरङ्गः निषेधोऽन्तरङ्ग इति निषेध्यस्याऽसिद्धत्वेनाऽदर्शनान्निषेधो न स्यादिति भाष्यसमाधानम् । तत्र गुणस्य पदद्वयसम्बन्धिवर्णद्वयापेक्षत्वरूपबहिरङ्गत्वमेव भाष्याभिमतमिति भावः ।

यदि च तद्भाष्यमेकदेश्युक्तिरित्युच्यते तदाऽप्याह–संयोगान्तलोप इति । तत्र "यण प्रतिषेधो वाच्यो नवा बहिरङ्गलक्षणत्वा"दित्युक्तम् ।

त्वेन तस्य पदादित्वाभावान्न सात्पदाद्योरित्यनेन निषेधः । औपादिकेऽन्त-रङ्गे कार्यकालपक्षेऽपि बहिरङ्गपरिभाषाया अप्रवृत्तेः पूर्वमुपपादितत्वाच्च ।

परिभाषार्थस्त्वचोऽन्यानन्तर्यनिमित्तकेऽन्तरङ्गे कर्तव्ये जातस्य बहि-रङ्गस्य बहिष्टूवप्रक्लृप्तिः । बहिष्पदेन बहिरङ्गम् । तस्य भावो (बहिष्ट्वम्) बहिरङ्गत्वम् । तत्प्रयुक्तासिद्धत्वस्य न प्रक्लृप्तिः न प्राप्तिरिति । असिद्धं बहिरङ्गमित्युक्त्वा नाजानन्तर्ये इति वक्ष्यामीति भाष्योक्त्या तत्रत्यस्या-न्तरङ्गे इत्यस्यानुवृत्तिसूचनात् ।

तेन पचावेदमित्यादौ न दोषः । अन्तरङ्गस्याचूस्थानिककार्यस्यैत्व-स्यान्यानन्तर्यनिमित्तकत्वाभावात् ।

---

वृक्षेच्छत्रमित्यत्र वैकल्पिकतुगव्यावृत्त्यर्थन्तुग्ग्रहणमिति तु न ? "पदान्तप-दाद्योरिति वक्तव्यमि"तिवार्त्तिकबलेन पदान्तपदाद्योरेकादेशस्यैव तुक्यसिद्ध-त्वबोधनात् ।

वृक्षस्य इः वृक्षेस्तस्य च्छत्रं वृक्षे च्छत्रमित्यादौ तथाभूतत्वेन चारितार्थ्यन्तु न वाच्यम् ? "न चैङ्‌ऽपदान्तात्परो हरस्ति" इति भाष्यात् ज्ञापकपरभाष्य-प्रामाण्याच्च तादृशप्रयोगानभिधानात् ।

अनुवृत्तिसूचनादिति—असिद्धम्बहिरङ्गमन्तरङ्गे नाजानन्तर्य्ये इति भा-ष्योक्तौ नाजानन्तर्य्ये इत्युत्तरकोटौ पूर्वस्यान्तरङ्ग इत्यस्यानुवृत्तिरिति भावः ।

सूक्ष्मवेत्तारस्तु—

अन्तरङ्गपरिभाषाया "वाह ऊठ्" सूत्रदेशस्थत्वेन प्रथमपादस्थतुग्ग्रहणेन ज्ञापितायान्नाजानन्तर्य्यपरिभाषायामन्तरङ्ग इत्यनुवृत्त्यसम्भवात् ग्रन्थोऽयुक्तः ।

अत्रसरयूपारीणशुक्लाः—

नाजानन्तर्य्यपरिभाषास्थबहिष्ट्वपदार्थस्यान्तरङ्गपदार्थे नित्यसाकाङ्क्षत्वा-त्प्रत्यासत्तिन्यायेनाजानन्तर्य्यनिरूपितस्यैव तस्य ग्रहणेनान्तरङ्गपदार्थलाभ इति वदन्ति ।

नन्वेवमप्यधीत्येत्यादावन्तरङ्गानपि विधीन्बहिरङ्गो ल्यब्बाधत इति परि-भाषयैकादेशात्पूर्वं ल्यपि अधि इयेत्यत्रैककालावच्छेदेनैकादेशतुकोऽप्राप्तौ जातबहिरङ्गाभावेन परिभाषाया अप्रवृत्त्या न तुकस्त्वांशे चारितार्थ्यमिति चेन्न ? अन्तरङ्गनिमित्तविनाशकस्यैव ल्यपऽप्राबल्यबोधनात् । अत एव निरे-ष्य दुरेष्येत्यादौ "ल्यपि लघुपूर्वादि"त्ययादेशो न ।

नन्वेवं पराजग्ध्येत्यादौ ल्यप एकादेशनिमित्तविनाशकत्वाभावेन प्राबल्या-भावेन तत्पूर्वं समकालमेव वा दीर्घे परादिवद्भावेन जग्ध्यादेशे पराग्ध्येति रूपं स्यादिति चेन्न ? जग्ध्यादेशद्वारा परम्परया दीर्घनिमित्तविनाशकत्वस्य विद्य-मानत्वेनापत्तेः ।

जातस्य बहिरङ्गस्येत्युक्त्यायजे इन्द्रं धियतीत्यादौ बहिरङ्गदीर्घगुणादेरसिद्धत्वं सिद्धम् । अत एवेण्ङ्शीनामाद्गुणः सवर्णदीर्घत्वाच्छ्चङन्तस्यान्तरङ्गलक्षणत्वादित्यादि सङ्गच्छते ।

अत एवोमाङोश्चेत्याङ्ग्रहणं चरितार्थम् । तद्धि शिव आ इहीति स्थिते परमपि सवर्णदीर्घं बाधित्वा धातूपसर्गकार्यत्वेनान्तरङ्गत्वाद् गुणे वृद्धिबाधनार्थम् । न चाद्दूयूरित्यत्र यणि कृते ऊठोऽसिद्धत्वाद्धलिलोपापत्तिरिति वाच्यम् ? अचोऽन्यानन्तर्यानिमित्तकेन्तरङ्गे कर्तव्ये कृते च तस्मिन्यदन्तरङ्गं प्राप्नोति तत्र च कर्तव्ये नासिद्धत्वमिति तदर्थात् ।

असिद्धपरिभाषाया अनित्यत्वेन तद्वारणे त्वस्या वैयर्थ्यं, तेनैव सिद्धेः । अत एव नलोपः सुपिति सूत्रे कृति तुग्ग्रहणं चरितार्थम् । अन्यथा वृत्रहभ्यामित्यादौ बहिर्भूतभ्यान्निमित्तकपदत्वाश्रयत्वेन बहिरङ्गतया नलोपस्यासिद्धत्वेन सिद्धेस्तद्वैयर्थ्यं स्पष्टमेव । मम तु तुक्यजानन्तर्यसत्त्वान्न दोषः ।

---

अत एवेति । जातस्यैवाऽसिद्धत्वबोधनादेवेत्यर्थः सवर्णदीर्घत्वादिति । ल्यब्लोपे पञ्चमी । इण्ङ्शीनां स्थाने सवर्णदीर्घम्बाधित्वा "आद्गुण" एव भवतीत्यर्थः । श्चङन्तस्यान्तरङ्गलक्षणत्वादिति—श्चङन्तस्यविषये रियति पियति असुस्रुवदित्यादौ अन्तरङ्गलक्षणाक्रान्तत्वाल्लघूपधगुणम्बाधित्वा इयुवौ भवत इत्यर्थः । तेनैवेति । अन्तरङ्गपरिभाषाया अनित्यत्वेनैवेत्यर्थः । अत एव नलोप इति नाजानन्तर्य्यपरिभाषायास्सत्त्वादेवेत्यर्थः । मम तु—नाजानन्तर्य्यपरिभाषावादिनस्तु । नन्वत्र तस्यास्सत्त्वेऽपि समकालप्राप्तत्वान्न दोष इति चेन्न ? परिभाषायास्स्वीकृतिस्तत्र जातत्वनिवेशस्तदपेक्षया बहिरङ्गपरिभाषाया अनित्यत्वेनैव सर्वं सुस्थम् इति समाधानात् । अत एवेति । नाजानन्तर्य्यपरिभाषाया अभावादेवेत्यर्थः ।

नाजानन्तर्य्यपरिभाषा कर्त्तव्या अन्तरङ्गपरिभाषाया अनित्यत्वं वा कल्पनीयमिति विचारद्वये प्रचलिते अनित्यत्वमेवेति केचित् । तथाहि दोङ् क्षये इत्यस्माद्विचि "मिनाति मीनोती"त्यात्वे विचो लोपे शसि "आतो धातोरि" त्याकारलोपे "दः" अस्य अः आः शसि आलोपे "अः" पशुं सनोतीति पशुसाः विटि "विड्वनोरि"त्यात्वे शसि आलोपे पशुसः यायावरः, यातिरित्याद्यर्थमन्तरङ्गपरिभाषाया अनित्यत्वमेवाश्रयणीयम् । नाजानन्तर्य्यपरिभाषया तु न निर्वाहः ? अन्तरङ्गस्याज्निष्ठान्यानन्तर्य्यनिमित्तकत्वाभावात् । अनैमित्तिकत्वेन आलोपस्यान्तरङ्गस्य वल्मात्रनिमित्तकत्वेन यलोपस्य च क्रियमाणत्वेन बहिरङ्गस्य आत्वस्य आकारलोपस्य चासिद्धत्वेनातोलोपयलो-

न चैवं सति ह्रस्वस्य पितीति सूत्रस्थभाष्यविरोधः। तत्र हि ग्रामणिपुत्र इत्यत्रेको ह्रस्वोऽङ्य इति ह्रस्वे कृते तुकमाशङ्क्य ह्रस्वस्य बहिरङ्गासिद्धत्वेन समाहितम्। नाजानन्तर्य इत्यस्य सत्त्वे तत्र तद्प्राप्तेरसङ्गतिः स्पष्टैवेति वाच्यम्? तेन भाष्येणास्या अनावश्यकत्वबोधनात्। एतज्ज्ञापकेनान्तरङ्गपरिभाषाया अनित्यत्वबोधनस्यैव न्याय्यत्वात्।

---

पयोरभावापत्तेः। तथा चानित्यत्वेनैव निर्वाहे नाजानन्तर्य्यपरिभाषा न कार्य्येत्यूचुः।

अननुगताऽनित्यत्वकल्पनापेक्षया नाजानन्तर्य्यपरिभाषैव कार्य्या। ग्रामणिपुत्र इत्यादौ सन्निपातपरिभाषयापि तुको वारणस्य कर्त्तुंशक्यत्वात्। "नासूया कर्त्तव्या यत्रानुगमः क्रियत आचार्य्यैः" एवञ्च परिभाषैव कार्य्येति केचिदाहुः।

वस्तुतस्तु—

औजिढत् अम्बात्रेत्यादौ दीर्घह्रस्वनिषेधार्थन्नाजानन्तर्य्यपरिभाषाऽनित्यत्वाङ्गीकारस्याननुगतस्यान्यमतेऽपि कर्त्तव्यतयाऽन्तरङ्गपरिभाषाऽनित्यत्वेन वारणस्यैव युक्तिसिद्धत्वात्। अनित्यत्वन्नाम स्वविषयतावच्छेदकसमानाधिकरणाभावप्रतियोगित्वम् अयमेव हि मौलिकाऽर्थ इति दिक्।

अत्र सरयूपारीणशुक्लाः। नाजानन्तर्य्यपरिभाषायां षत्वतुकोरसिद्ध इति सर्वं सूत्रं ज्ञापकन्नतु केवलन्तुग्ग्रहणम्। सर्वसूत्रन्तु कोऽसिचत् अधीत्येत्यादौ षत्वतुकोर्निवृत्तिप्रवृत्ती स्यातामेतदर्थमेव "एङः पदान्तादती"त्यस्य "अकस्सवर्णे दीर्घ" इत्यस्य च पदद्वयापेक्षत्वेनान्तरङ्गयोः षत्वतुकोः कर्त्तव्ययोरन्तरङ्गपरिभाषयैवाऽसिद्धत्वसिद्धौ सर्वं सूत्रं व्यर्थं सज् ज्ञापकम्।

नच षत्वग्रहणन्न ज्ञापकमेकादेशस्य पूर्वान्तवत्त्वे षत्वस्यापि पदद्वयाश्रितत्वात् त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषा न प्रवर्त्तते कथं सकलसूत्रं ज्ञापकमिति वाच्यम्? एकादेशस्य पूर्वान्तवत्त्वेन ग्रहणस्वीकारे तुग्विधायकस्यापि पदद्वयाश्रितत्वेन भवदुक्तरीत्या षत्वग्रहणाऽज्ञापकत्ववत्तुग्ग्रहणस्याऽप्यज्ञापकत्वप्रसङ्गात्।

> यश्चोभयोस्समो दोषः परीहारस्तयोस्समः।
> नैकः पर्य्यनुयोक्तव्यस्तादृगर्थविचारणे॥

इति न्यायाश्रयणात्। नच "अन्तादिवच्चे"त्यस्य कार्यत्वेन कार्यार्थत्वात्परत्वात्परादिवद्भाव एव नतु पूर्वान्तवद्भावः, एवञ्च तुग्ग्रहणज्ञापकत्वप्रकारस्साधीयानेवेति वाच्यम्? षत्वेऽप्येवम्प्रकारस्य निर्विवादत्वात्। षत्वे पूर्वान्तवद्भावाश्रयणे पदादित्वेन "सात्पदाद्योरि"तिनिषेधप्रवृत्त्या षत्वाभावसि-

अत एवाचः परस्मिन्निति सूत्रे भाष्ये पटु ई आ इत्यत्र परयणादेशस्यानयाऽसिद्धत्वात्पूर्वयणादेशः साधितः । अत एवैषा भाष्ये पुनः क्वापि नोल्लिखिता । अत एवान्तरङ्गपरिभाषामुपक्रम्य विप्रतिषेधसूत्रेऽस्या बहूनि प्रयोजनानि सन्ति तदर्थमेषा परिभाषा कर्तव्या प्रतिविधेयं च दोषेष्वित्युक्तं सम्प्रसारणाच्चेति सूत्रे भाष्ये। प्रतिविधानं च परिभाषाविषयेऽनित्यत्वाश्रयणमेवेति ध्वनितमित्यलम् ॥ ५१ ॥

नन्वेवं गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गम् लुकं बाधित्वान्तरङ्गत्वाद्धल्ङ्याब्दिलोपे नुमादयः स्युरत आह—

---

द्धावसिद्धवचनस्य प्राकृतस्य वैयर्थ्यापाताच्च । त्रैपादिकेऽन्तरङ्गे बहिरङ्गपरिभाषास्वीकारे सूत्रकारवार्त्तिककारभाष्यकाराद्यभिप्रायाणामनुकूलत्वमेव । सर्वं सूत्रं ज्ञापकमिति भाष्यकृताऽप्युक्तम् । तुग्ग्रहणमेव ज्ञापकमिति शेखरः कथमिति विचार्य्यताम् ।

वस्तुतस्तु सम्पूर्णसूत्रसामर्थ्यादन्तरङ्गपरिभाषाऽनित्येति ज्ञाप्यते । तथा चाद्ध्यूरित्यत्र यण्सिद्धिरिति वदन्ति ।

परिभाषायाश्शाब्दबोधः—अजानन्तर्य्ये बहिष्ट्वस्य न प्रक्लृप्तिः । अजानन्तर्यत्वावच्छिन्नप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना कार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या बहिष्ट्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या प्रक्लृप्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

अन्तरङ्गपरिभाषाबाधिकाम्परिभाषाम्वक्तुमारभते—नन्वेवं गोमत्प्रिय इति—अन्तरङ्गपरिभाषायास्स्वीकार इत्याशयः, असिद्धपरिभाषायास्त्रिजादाविव प्रागुक्तज्ञापकबलेनाचोऽन्यानन्तर्य्यं यत्र तत्रानित्यत्वादप्रवृत्तिस्वीकारे इत्येवं शब्दार्थ इति केचित् । बहिरङ्गं लुकमिति । नन्वन्तरङ्गपरिभाषया जातसमकालप्राप्तबहिरङ्गाऽसिद्धत्वबोधनमेवेति लुकस्तत्त्वाभावात्कथमयं ग्रन्थ इति चेन्न ? लुक्प्रयोजकीभूतसमासस्यापि परिभाषया बलवत्त्वबोधनेन समासस्य समकालप्राप्तिकत्वेनाक्षतेः । न च तस्याऽप्यन्यपदार्थान्तर्भावेण वृत्तिकल्पनोत्तरमेव प्रवृत्तेः पुनरप्यापत्तिस्तदवस्थैवेति वाच्यम् ? प्राप्तिमत्त्वम्बहिरङ्गत्वमिति लक्षणस्वीकारेण लुकस्तत्सत्त्वेनाऽविरोधात् ।

हल्ङ्याब्दिलोप इति—ननु नुम ऽपरत्वात्कथं लोप इति चेन्न ? अपर-

## अन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधते ॥ ५२ ॥

अत्र च प्रत्ययोत्तरपदयोश्चेति सूत्रं ज्ञापकम् । त्वत्कृतमित्यादौ लुगपेक्षयान्तरङ्गत्वाद्विभक्तिनिमित्तकेन त्वमावेकवचन इत्यनेन सिद्ध इदं व्यर्थं सत्तज्ज्ञापकम् ।

ननु तव पुत्रस्त्वत्पुत्र इत्यादौ तवममादिबाधनार्थं तदावश्यकमिति

---

निमित्तकत्वरूपान्तरङ्गत्वस्य लोपे सत्त्वेन पूर्वं नुम्यपि दोषस्यैव सत्त्वेनापाद्यमानेऽथ न्यायानादरस्यैवौचित्याच्च ।

ननु कौमुद्यांवचनसामर्थ्यादादौ दीर्घस्यैवोक्तत्वात्कथन्नुमादय इति चेन्न ? वचनसामर्थ्यादित्यस्य दीर्घविधायके उपधाग्रहणं पूर्वमात्रोपलक्षकमिति तात्पर्य्यवर्णनात् ।

परिभाषीयापिशब्देन पूर्वस्य परस्य नित्यस्यानित्यस्य च ग्रहणं दण्डापूपिकन्यायात् ।

भाष्येत्वपिशब्दघटितःपाठो नास्तीत्ययुक्तोऽयम्प्रकार इति । नच "स्वमोर्नपुंसकादि"तिसूत्रे कैयटेनापिघटितःपाठःकथं कृत इति वाच्यम् ? मतान्तरपरतया तदुक्तिसौष्ठवात् । अत एव "तद्राज" सूत्रस्थभाष्यं स्वरसत उपपद्यते सामासिकलुको बहिरङ्गत्वेन तद्राजलुको बाधकत्वात् । अत एव "त्यदादिभ्यश्चे"तिवार्त्तिकसङ्गतिः । भवतादित्यत्र परत्वात्तातङादेशे सकृद्गतिन्यायेन हेर्लुक् न । त्वं ब्राह्मणकुलम् सनी सस इत्यादौ लुग्बहिरङ्ग एव । सुपथि वनमित्यत्र कृताकृतप्रसङ्गित्वमात्रेण नित्यत्वाल्लुक्यात्वमपि न । स्वआदितः ह्यः इत्यादावसन्तत्वान्न दीर्घः ? चतुसाहचर्य्येणाव्ययभिन्नाऽसन्तग्रहणात् । भवतादित्यत्र ज्ञापकसिद्धन्न सर्वत्रेति परिभाषयावारणन्तु न रोचते ? सर्वत्र ज्ञापकसत्त्वप्रतिज्ञानाभावात्, भाष्यमते वाचनिकीत्वेन ज्ञापकत्वाऽभावाच्च ।

किञ्च तुह्योरिति विषयसप्तमी हेःपूर्वं तातङादेशेन भवतादिति रूपसिद्धेश्च । "त्यदादिभ्यश्चे"ति वार्त्तिकन्तु यदि लुक् न स्यात्तदा त्यदाद्यत्वेऽम् स्यादित्युपसञ्जनिष्यमाणन्यायात्स्वमोर्लुकोऽप्राप्तौ लुगर्थम् । अत एव प्रियास्तिस्रो यस्य तत्कुलम्प्रियत्रि इत्यादौ न लुकःपूर्वन्तिस्रादेशोऽत एव हि हे त्रपो इत्येतदर्थं "न्लुमते"त्यस्यानित्यत्वम्भाष्योक्तं सङ्गच्छते ।

युष्मदस्मदोरलिङ्गत्वन्तु न वाच्यम् ? "शिशीलुङ्नुम्विधिभ्यो युष्मदस्मदोरादेशाःपूर्वविप्रतिषेधेने"तिवार्त्तिकोक्तेः ।

प्रत्ययोत्तरपदयोश्चेति—ननु ज्ञापितेऽपि सूत्रम्व्यर्थं "त्वमावि"ति सूत्रे विभक्तिपदानुवृत्तेरत आह—विभक्तिनिमित्तकत्वेनेति ।

चेत् ? एवं तर्ह्यन्त्यमपर्यन्तग्रहणानुवृत्तिस्तज्ज्ञापिकेति भाष्यकृतः ।

युष्मदादिभ्य आचारक्विप् तु न ? सम्पूर्णसूत्रस्य ज्ञापकतापरभाष्यप्रामाण्याद्ध्रस्वनद्याप इति नुड्विधायकसूत्रस्थभाष्यप्रामाण्येन हलन्तेभ्य आचारक्विबभावाच्च ।

एवमेवैकार्थकाभ्यां प्रातिपदिकाभ्यां प्रातिपदिकणिचोऽप्यनभिधानं बोध्यम् ।

एतेन तत्रादेशार्थं प्रत्ययग्रहणं चरितार्थमित्यपास्तम् ।

ननु मपर्यन्तानुवृत्तिरपि सर्वादेशत्ववारणाय चरितार्था । नचोत्सर्गसमानदेशा अपवादा इति न्यायेनासिद्धवत्सूत्रस्थभाष्यसम्मतेन

---

मपर्य्यन्तानुवृत्तिरिति—उत्सर्गसमानदेशा अपवादा इति न्यायेन मपर्य्यन्तस्य सिद्धेऽनुवृत्तिर्व्यर्थेति भावः । नचानुवृत्तिवैयर्थ्येऽननुवृत्तिरेवास्त्विति वाच्यम् ? अनुवृत्तिकरणपरभाष्यप्रामाण्येनानुमितपाणिनीयस्वरितत्वप्रतिज्ञाया व्यर्थत्वाऽपत्तेः ।

ननु तक्तन्यायास्वीकर्त्तृवार्त्तिकमतेऽपवादत्वाभावः, तत्स्वीकर्त्तुर्भाष्यमते द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधसिद्धये उत्सर्गसमानदेशा अपवादा इति न्यायाऽभाव इति सर्वादेशबाधनार्थमनुवृत्तिस्सार्थिकेति चेन्न ? यत्रापवादशास्त्रीयस्थानितावच्छेदकं साक्षात्परम्परया वोत्सर्गशास्त्रीयस्थानिताया अवच्छेदकन्तत्रोत्सर्गसमानदेशा इति न्यायस्य भाष्यकृतोऽभिप्रायविषयत्वात् ।

नचानुवृत्तिसामर्थ्यान्मास्तु सेति कथन्न कल्प्यत इति वाच्यम् ? एतत्पर्यन्तानुवृत्तिप्रयोजकस्वरितत्वकरणरूपपाणिनिव्यापारस्य वैयर्थ्यात्स एव ज्ञापक इत्याशयस्य पूर्वमुक्तत्वात् ।

भाष्यप्रामाण्यादिति—यदि तु वक्ष्यमाणरीत्या "प्रत्ययोत्तरपदयोश्चे"ति सूत्रेऽपि विभक्तावित्यनुवर्त्य प्रत्ययोत्तरपदपरकविभक्तावित्यर्थस्तदा तु नायं ग्रन्थस्सम्यक् ।

एकार्थकाभ्यामिति—अत एव मपर्य्यन्तसूत्रीयपरिग्रहणफलनिरूपणावसरे यत्र मान्ते तत्र माभूत्, क्वच मान्ते युष्मयतेरप्रत्यये इत्युक्तमप्रत्यय इत्यस्य अविद्यमान⁀प्रत्यय⁀क्विबादिरित्यर्थः । तथाच द्वित्वबहुत्वविशिष्टवाचकाण्णौ मान्तत्वसम्भव एव । एकत्वविशिष्टवाचकाच्चैतत्प्रामाण्यादनभिधानमिति परस्परवैचित्र्यम् । णिचोऽप्यनभिधानमिति ।

वस्तुतस्तु—विभक्तावित्यनुवर्त्य "त्वमावेकवचने" प्रत्ययोत्तरपदयोश्च" त्येकयोगेनैव त्वदीयस्त्वत्पुत्र इत्यादिरूपसिद्धौ पृथग्योगकरणसामर्थ्यादिहापि विभक्तावित्यनुवर्त्योक्तार्थकल्पनया णिचि प्रत्ययोत्तरपदपरकविभक्त्यभावेनादेशाऽप्राप्तावनभिधानकल्पनं सुधैवेत्यलम् ।

मपर्य्यन्तस्यैवादेशे सिद्धे तदनुवृत्तिर्व्यर्थेति वाच्यम् ? तस्य श्नमकजादौ व्यभिचारादिति चेत् ? न । श्नमि मित्वेन बहुचि पुरस्ताद्ग्रहणेनाकचि प्राक्टेर्ग्रहणेन तस्य बाधेऽप्यत्रोत्सर्गस्य त्यागे मानाभावात् ।

अत एव "तस्मिन्नणि च" इत्यनेन युष्माकाद्यादेशविधानं चरितार्थम् । अन्यथा आकङादेशमेव विदध्यात् । आकङि तवकाद्यादेशयोरेतदपवादयोरुक्तन्यायेनान्त्यादेशत्वापत्तिः, अतस्तद्विधानमिदमेव च तज्ज्ञापकम् ।

यद्यपि विरोधे बाधकत्वमिति वार्तिकमतेऽयं न्यायो भाष्यकारस्तु विनापि विरोधं सत्यपि सम्भवे बाधकत्वमिच्छतीत्यनभिहितसूत्रस्थकैयटरीत्या नायं नियमस्तथापि युष्माकाद्यादेशविधानज्ञापित उत्सर्गः स्वीक्रियत एवेति प्रकृते न दोषः । एतद्भाष्यमपि तत्स्वीकारे मानम् । एवं च मपर्य्यन्तानुवृत्तिस्त्वतत्कृतमित्यादौ मपर्य्यन्तस्यादेशविधानार्था। तत्र चान्तरङ्गत्वात् "त्वमौ" इत्येव सिद्धे व्यर्था सैतज्ज्ञापिका । ज्ञापिते त्वस्मिन्नेतद्विषये तवादीनामप्राप्त्या तदपवादत्वाभावेन मपर्य्यन्तस्यैवादेशार्थं सा चरितार्थेति तदाशयः ।

---

भाष्यप्रामाण्येनेत्यत्र शुक्लाः—तत्र हि "कास्प्रत्ययादाममो" मित्त्वेऽमित्त्वे वा विशेषाभाव इत्युक्तम् । हलन्तेभ्य आचारक्विपि तु अन्त्यादच परत्वे विशेषस्य स्पष्टतया भाष्यानुपपत्त्याऽनभिधानमिति मूलाशयः ।

वस्तुतस्तु—एतद्भाष्यप्रामाण्याल्लिट्लकार एवानभिधानम्र लडादाविति युक्तियुक्त पन्थाः ।

निरुक्तरीत्या "प्रत्ययोत्तरपदयोश्चे"त्यत्रापि विभक्तिपदानुवृत्तिरिति न ज्ञापकपरभाष्यविरोध इति मान्याः ।

उत्सर्गसमानदेशा अपवादा इति—एतत्फलन्तु असिक्नी पलिक्नीति "छन्दसि क्नमेक" इति वार्त्तिके "वर्णादनुदात्तात्तोपधात्तोन" इति सूत्रात्तपदानुवृत्त्या रूपसिद्धौ तु तृप तृम्फ तृप्तौ सिब्विकल्पः अङपवादत्वात् इति तुदादिकौमुदी, उत्सर्गसमानदेशा अपवादा इति न्यायात् ।

किञ्च "स्पृशमृशकृषे"तिवार्त्तिके एतयोर्ग्रहणे पक्षे सिजभावे च्लेरेव श्रवणोपपत्तौ च्लि कापि न श्रूयेतेति भाष्यविरोधश्च ।

असिद्धवत्सूत्रभाष्यन्न्याये मानम्—तथाहि "एवं लोपापवादो विज्ञास्यते सकारस्य लोप प्राप्नोति" इत्येवं रूपम् ।

आकङादेशमेवेति—ननु तव अः त्वदः अस्मादाचारक्विबन्तात्कर्त्तरि क्विप्यल्लोपे तस्मात् खञि युष्माकादेशे यौष्माकीणः, आकङादेशे तु त्वाकीन इति फलभेद इति चेन्न ? तत्रैकार्थवाचित्वेन तवकादेशस्यैव प्रवृत्तेः ।

नन्वेवमपि युष्मदस्मच्छब्दाभ्यामकचि तदन्तात्खञि अनेकाल्त्वात् यु-

ष्माकादेशे यौष्माकीणः, आकञादेशे तु यौष्मकाकीण इति फलभेदः । किञ्च युवयोरपत्यमिति विग्रहे आकञादेशे लुकः पूर्वमन्तरङ्गत्वाद् युवादेशे यौवाकीनः, सिद्धान्ते यौष्माकीण इति फलभेदश्च ।

नचान्तरङ्गानपीति न्यायेन युवावापेक्षया लुगेव पूर्वमितीष्टसिद्धौ न फलभेद इति वाच्यम् ? पिशाचभयापन्नस्य वेतालदर्शनदृष्टान्तवत् युष्माकादेशविधानादुत्सर्गसमानदेशा इति न्यायसिद्धिः, न्यायसिद्धौ मपर्यन्तानुवृत्तिवैयर्थ्यम् , अनुवृत्तिवैयर्थ्येन अन्तरङ्गानपीतिन्यायसिद्धिः, न्यायसिद्धावेव युष्माकादेशविधानवैयर्थ्यमिति तज्ज्ञप्त्यधीनज्ञप्तिकत्वरूपचक्रकापत्तेरिति चेन्न ? अकच्विषये नायन्न्याय इति सिद्धान्तेनाकच्विशिष्टस्य निर्दिश्यमानत्वाभावेन फलभेदाऽभावात् ।

नच "अनाप्यकः" सूत्रीयकैयटमनोरमादिविरोध इति वाच्यम् ? तत्र "माद्राक" इति न्यासेनेष्टसिद्धौ युष्माकादेशविधानवैयर्थ्यवर्णनस्य सयुक्तिकत्वात् ।

एवं "घकालतनेषु कालः" इति ज्ञापकेन तद्धितविशिष्टोद्देश्यतानिरूपितविधेयताश्रये कार्य्ये कर्त्तव्ये विभक्तेरविद्यमानवद्भावः । वैशिष्ट्यञ्च स्वनिष्ठविधेयतानिरूपितोद्देश्यतावच्छेदकरूपावच्छिन्नत्वस्वावधिकपूर्वत्वसमानाधिकरणप्रकारकसम्भवनाविशिष्टत्वोभयसम्बन्धेन । प्रकृते विभक्तेरविद्यमानवद्भावाद् युष्माकादेशविधानज्ञापकत्वसम्भवात् चक्रकदोषाभावाच्च ।

अत्रकेचिद्विलक्षणाः—

ननु "तवकश् ममकश्" इति न्यासेन शित्करणसामर्थ्यात्सर्वादेशसिद्ध्या ज्ञापितेऽपि चारितार्थ्याभाव इति चेन्न ? एवमपि "तवकश् ममकश्" इत्यत्र शित्करणमेव ज्ञापकम्भविष्यतीति न दोष इति ब्रुवन्ति ।

मान्यास्तु—

"तस्मिन्नणि चाकञनेकवचन" इति न्यासेन सिद्धौ युष्माकाद्यादेशज्ञापकत्ववर्णनन्निर्विवादमिति वदन्ति ।

वार्त्तिकरीत्यैवेदं ज्ञापकमिति केचित्तन्न ? भाष्यमतेऽपि ज्ञापकत्ववर्णनस्य कैयटेन स्पष्टीकृतत्वात् ।

नचोत्सर्गसमानदेशा अपवादा इति न्यायस्वीकारे "एकाचो द्वे प्रथमस्य" इत्यस्यापवादत्वम् "अजादेर्द्वितीयस्य" इत्यस्य कथमिति वाच्यम् ? ज्ञापकसाजात्यादुत्सर्गशास्त्रीयोद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यतावच्छेदकत्वं यत्रापवादशास्त्रे तत्रैवोत्सर्गसमानदेशा अपवादा इति न्यायप्रवृत्तिस्वीकारेण प्रथमैकाच्त्वद्वितीयैकाच्त्वयोर्भिन्नाधिकरणत्वात्तदुद्देश्यतावच्छेदकाधिकरणपर्याप्तोद्देश्यताकत्वाभावान्न्यायाऽप्रवृत्तेरविरोधात् ।

यत्तु हरदत्तेनान्तरङ्गप्रवृत्तौ प्रत्यय उत्तरपदे च मपर्य्यन्तासम्भवेन तदनुवृत्तिर्व्यर्था सती तज्ज्ञापिकेत्युक्तं तन्न? अन्तरङ्गाणामप्यपवादबाध्यत्वेन तद्विषये तदप्रवृत्तेः।

वस्तुत इदं ज्ञापकं वार्तिकरीत्यैव, भाष्यरीत्या तु वाचनिक एवायमर्थ इत्याहुः। इयं "सुपो धातु" इति लुग्विषयैवेति केचित्। "यञ्ह्रस्वात्सम्बुद्धेः""न यासयोः" इति सूत्रस्थाकरप्रामाण्येन लुङ्मात्रविषया। आद्ये हे त्रपु इत्यादावनेन न्यायेन लोपं बाधित्वा लुग्भवतीति भाष्ये उक्तम्। अन्त्येऽन्तरङ्गाँश्च विधीन् सर्वोऽपि लुग्बाधते न तु सुब्लुगेव।

---

अत्र सरयूपारीणशुक्लाः—

प्रथमद्विर्वचनस्य द्वितीयद्विर्वचनम्विप्रतिषेधसूत्रबलेन परत्वादेव बाधकत्वस्वपवादत्वादित्यपूर्वकल्पनम्मुधैवेति वदन्ति।

तदनुवृत्तिर्व्यर्था सतीति—मपर्यन्तानुवृत्तिरित्यर्थः। ननु "प्रत्ययोत्तर"इत्यस्य 'तवममौ ङसि' इति नोत्सर्गः, अपि तु बाध्यसामान्यचिन्तया आस्वयत्वाद्योऽपि। एवञ्चानुवृत्त्यभावे कदाचिदन्त्यवर्णस्थानेऽपि त्वमौ स्याताम्, मपर्यन्तानुवृत्तौ तु नेति फलभेद इति चेन्न? मपर्यन्तानुवृत्तिज्ञापकपरभाष्यप्रामाण्येन "प्रत्ययोत्तरपदयोश्चे"तिसूत्रविषये बाध्यविशेषचिन्ताया आश्रयणेन "प्रत्ययोत्तरपदयोरि"तिसूत्रं "तव ममावि"त्यस्यैवापवादकन्नत्वास्वयत्वयोरिति कल्पनात् तत्रोत्सर्गसमानेतिन्यायेन सिद्धेऽनुवृत्तिर्व्यर्था सती ज्ञापिकेति विधानात्।

वाचनिक एवायमर्थ इति—अत्र ज्ञापकान्तरसम्भवः "त्रेस्त्रय" इति सूत्रेण त्रयसादेशविधानमत्र ज्ञापकम्। अन्यथैतस्या अभावे त्रयोविंशतिः त्रयोदशेत्यादौ त्रेरसुग्विधानेनान्तरङ्गत्वा"ज्जसिचे"ति गुणेऽसुकि तद् व्यर्थं सज् ज्ञापकम्। अस्याम्परिभाषायान्तु पूर्वं लुकि रूपाऽसिद्धया त्रयसादेशविधानं स्वांशे चरितार्थम्।

किञ्च "अष्टनआ विभक्तावि"ति सूत्रादग्रे "कपाले नित्यं हविषी"त्यैव सिद्धे अष्टन इत्युक्तिरपि ज्ञापिका। अन्यथाऽन्तरङ्गत्वादेव पूर्वमात्वे तस्यैव कपाले हविषि नित्यत्वविधानेनैवोपपत्तेः। "अष्टन आविभक्तावि"त्यस्य वैकल्पिकत्वञ्चोत्तरत्र नित्यग्रहणादेव सिद्धम् इति मूलस्थज्ञापकानुशरणक्लेशो नास्तीति विचित्रं लाघवम्। एतस्यां परिभाषायान्तु पूर्वं विभक्तिलुकि विभक्तिनिमित्तकत्वाऽप्राप्त्या स्वांशेऽष्टन इति ग्रहणञ्चरितार्थम्।

किञ्च "गुणो यङ्लुकोरि"ति सूत्रीयलुग्ग्रहणमत्र ज्ञापकमन्यथा लुकः पूर्वमेव गुणे तद्वैयर्थ्यं स्पष्टमेव।

किञ्च "भूसुवोस्तिङी"तिसूत्रे भूग्रहणमपि ज्ञापकम् बोभूत्विति निपात-

अत एव "सनीस्रंस" इत्यादौ नलोपो न भवति। पञ्चभिः खट्वाभिः क्रीतः पञ्चखट्व इत्यादावेकादेशात् प्रागेव टापो लुक्। अन्यथा कृतैकादेशस्य लुक्यकारश्रवणं न स्यादिति कैयट उक्तम्। एतद्विरोधाद्यत् "तद्राजस्य" इति सूत्रे कैयटेनोक्तमङ्गानतिक्रान्तोऽत्यङ्ग इत्यत्र सुपो लुकि

नाच्चास्य यङ्लुक्यप्रवृत्तिरेव। तथाचाभूदित्यत्र गुणनिषेधनमेव भूग्रहणस्य प्रयोजनम्। एतस्या अभावे सिज्लुकः पूर्वमेव गुणे तद्व्यर्थं सज् ज्ञापकम्।

विशेषविचारपरिशीलास्तु—

"तुभ्यमह्यौ ङयि" अवृत्तावि"ति सूत्रकरणेन "तवममौ ङसि,, इत्यत्रावृत्तावित्यनुवृत्त्या सिद्धे "प्रत्ययोत्तरपदयोश्चे"ति सूत्रमपि ज्ञापकम्। नच अतितव तव पुत्र इत्यादौ "षष्ठ्या आक्रोश"इति अलुकि दोष इति वाच्यम्? "अवृत्तेरि"ति न्यासेन वृत्त्यनवयवे ङसादावित्यर्थेनाक्षतेः।

नन्वेवम्विधज्ञापकान्तरानुसरणे "प्रत्ययोत्तरपदयोश्चे"ति सूत्रभाष्याशयः कीदृश इति चेन्न? "प्रत्ययोत्तरपदयोश्चे"ति सूत्रम्बाधकबाधनार्थं लाघवात् "त्वमावि"ति विहितयोरनुवादकम्, "वनोर च" इतिवत् इति तेनैव मपर्य्यन्तस्यादेशसिद्धौ तदनुवृत्तिर्व्यर्था सती ज्ञापिकेति भाष्याक्षरार्थः।

नच मपर्य्यन्तानुवृत्तिरनुवादत्वार्थाऽन्यथा सर्वादेशार्थतया विधायकत्वापत्तिरिति वाच्यम्? "द्विगुरेकवचनमि"ति शास्त्रस्यापि तद्धितार्थद्विगौ विधायकत्वापत्तेः।

साधारणपण्डितास्तु—

"प्रत्ययोत्तरपदयोश्चे"त्येव ज्ञापकमस्याम्। ननु त्वद्धितमित्यादौ तवममादेशबाधनाय सूत्रमावश्यकमिति कथं ज्ञापकमिति चेन्न? "तवममौ ङस्यवृत्तेरि"ति न्यासः, षष्ठ्यर्थोऽवयवत्वम्, वृत्त्यनवयवविभक्ताविति तदर्थात्।

ननु यथास्थितन्यासे युष्मत्सुन्दरपुत्र इत्यादौ प्रवृत्त्यभावः, उक्तन्यासे तु प्रवृत्तिरिति फलभेदात्कथङ्कारं ज्ञापकत्वोपवर्णनमिति चेन्न? इदानीमन्तरङ्गानपि विधीन्बहिरङ्गो लुग्बाधत इति न्यायाभावेनान्तरङ्गपरिभाषयाऽन्तरङ्गत्वात् "त्वमावि"त्यस्य प्रवृत्तेः फलभेदाऽभावादित्यूचुः।

नलोप इति–यङ् लुकः पूर्वं "मनिदितामि"त्यनेनेति भावः। तत्प्रौढ्येति-केचित्तु अन्तरङ्गनिमित्तविनाशक लुक एव परिभाषया बलवत्वस्य वक्ष्यमाणत्वात्प्रकृते अत्यङ्ग इत्यत्र सुब्लुक एव तथात्वेन तस्यैव बलवत्त्वबोधनन्नायुक्तमितिकल्पनाश्रयणमेव प्रौढिपदार्थ इत्यूचुः। लुगपेक्षयेति—धर्मिग्राहकमानात् लुगितरकार्यापेक्षयैव लुको बलवत्त्वमनया बोध्यते नतु लुगपेक्षयाऽपीत्याशयः। अन्तरङ्गनिमित्तविनाशकस्यैव लुको बलवत्त्वमित्यस्यामे प्रकाशयिष्यमाणत्वात्।

बहुवचनपरत्वाभावात् "तद्राजस्य" इति लुक् न स्यादिति शङ्कापरभाष्यव्याख्यावसरेऽन्तरङ्गानपीति न्यायेनायं लुक् लुग्लुको बाधकः स्यादित्याशङ्क्य लुग्लुक एवानेन बलवत्त्वं बोध्यत इति तत् प्रौढथेति द्रष्टव्यम् । लुगपेक्षया लुको बलवत्त्वस्य वक्तुमशक्यत्वादिति तथाशङ्कासमाधानं वक्तुं युक्तम् । अनेन न्यायेनान्तरङ्गनिमित्तविनाशकलुकस्तत्प्रयोजकसमासादीनां च प्राबल्यं बोध्यत इति अन्यत्र विस्तरः ॥ ५२ ॥

---

तथाशङ्कासमाधानमिति—तस्य कैयटस्य आशङ्कायास्यास्समाधानमित्यर्थः । वक्तुंयुक्तमिति—काकुरियन्नयुक्तमिति भावः ।

अनेन न्यायेनेति-एतत्फलम् शृणुहि राजपुत्रीति । आद्ये "उतश्चप्रत्ययाद्संयोगपूर्वादि"तिसूत्रविहितलुकः गुणनिमित्तविनाशकत्वाभावेनान्तरङ्गपरिभाषया गुणे संयोगपूर्वकत्वेन लुङ् न भवति । अन्त्ये"ञ्नित्यादिर्नित्यमि"ति विहिताद्युदात्तस्य ङीनो निमित्तविनाशकत्वस्य लुक्यभावेनान्तरङ्गपरिभाषया ङीन्याद्युदात्तयोः पश्चात्समासस्वरेणान्तोदात्तत्वविधानमिति ।

ननु गोमत्प्रिय इत्यादौ समासोत्तरं लुकः प्रवृत्त्या समासात्प्रातिपदिकत्वाच्चैकपदापेक्षयाऽन्तरङ्गत्वाद्धल्ङ्यादिलोपः पूर्वं कस्मान्नेत्यत आह तत्प्रयोजकसमासादीनाञ्चेति । आदिना प्रातिपदिकत्वसंग्रहः ।

बहिरङ्गशब्दस्य बहिरङ्गत्वेन बहिरङ्गमर्थः । लुक्पदम्पाणिनीयसंकेतसम्बन्धेन लुक्पदवत्परम् । प्रातिपदिकार्थे विधानात्तदुत्तरवर्त्तिसुप्रत्ययस्य सएवार्थः, अन्तरङ्गशब्दस्य विधिशब्दस्य च विधित्वेनान्तरङ्गत्वेन च सएवार्थः, तदुत्तरवर्त्तिशस्प्रत्ययस्याश्रयोऽर्थः,फलाश्रयत्वं हिकर्मत्वम् , तत्रच फलस्य धातुलभ्यत्वादनन्यलभ्यो हि शब्दार्थ इति न्यायेनाश्रयमात्रं शसर्थः, त प्रत्ययस्याश्रयोऽर्थः तनः कर्मणीति कर्त्तरि तद्विधानात्,सोरेकत्वमप्यर्थः एकत्वविवक्षायां तद्विधानात्, वर्त्तमानकालोऽप्यर्थः, वर्त्तमानत्वस्य स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन बाधूधात्वर्थव्यापारेऽन्वयः, संख्यायाश्च स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेनाश्रयेऽन्वयःसमानप्रत्ययोपात्तत्वात्, बहिरङ्गाभिन्नलुक्पदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन तदर्थाश्रयेऽन्वयः सामान्यविशेषयोरभेदान्वय इति सिद्धान्तात् । आश्रयस्य स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन धात्वर्थव्यापारेऽन्वयः,अन्तरङ्गाभिन्नविधिपदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन शसर्थाश्रयेऽन्वयः, आश्रयस्य च स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन धात्वर्थफलेऽन्वयः, फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन व्यापारेऽन्वयः ।

तथा च

अभेदसम्बन्धावच्छिन्ना बहिरङ्गत्वावच्छिन्ना बहिरङ्गनिष्ठा या प्रकारता ता-

नन्वेवं सौमेन्द्रेऽन्तरङ्गत्वात् "आद्गुणे" पूर्वपदात् परेन्द्रशब्दाभावेन "नेन्द्रस्य परस्य इति वृद्धिनिषेधो व्यर्थः, अन्तादिवद्भावस्तूभयत आश्रयणे निषिद्धः।

किञ्च वृद्धिरप्यत्र न प्राप्नोत्यन्तादिवत्त्वोभयाभावेऽपि पूर्वान्तवत्त्वे-नैकादेशविशिष्टे पूर्वपदत्वेन इन्द्रशब्दस्यैकदेशविकृतन्यायेन उभयत आश्रयणे नान्तादिवदित्यस्याभावेन तदाश्रयणे चोत्तरपदत्वेऽपि तस्यानचूकत्वादेकस्यैकादेशेन परस्य नित्येन "यस्य" इति लोपेनापहारात्।

न च परादिवद्भावेनैकादेशविशिष्टस्योत्तरपदत्वमेवास्त्विति तत्सम्भव इति वाच्यम्? उत्तरपदाद्यचूस्थानिकत्वाद् वृद्धेस्तदभावेन अप्राप्तेस्ताद्रूप्यानतिदेशात्। अन्यथा खट्वाभिरित्यादावपि पूर्वान्तवत्त्वेनादन्तत्वे भिस ऐसापत्तिरिति भाष्ये स्पष्टम्।

---

दृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्ना स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धावच्छिन्ना वा एकत्वत्वावच्छिन्ना एकत्वनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या लुकृत्वावच्छिन्ना लुकृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्व सम्बन्धावच्छिन्ना आधेयत्वसम्बन्धावच्छिन्ना वा प्रकारता तादृशप्रकारतानिरूपिता अभेदसम्बन्धावच्छिन्नान्तरङ्गत्वावच्छिन्नप्रकारतानिरूपिता या अपिशब्दार्थविशिष्टविधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणनिष्ठत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्मत्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणजनकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या बाधधात्वर्थव्यापारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः।

नन्वेवम्—अन्तरङ्गपरिभाषास्वीकारे इत्यर्थः। अन्तरङ्गत्वादिति। ननु "समर्थानां प्रथमाद्वे"तिसूत्रे सामर्थ्यं परिनिष्ठितत्वं कृतसन्धिकार्यत्वमित्युक्त्या कृतसन्धिकार्यादेव प्रत्ययोत्पत्त्याऽन्तरङ्गकथनमयुक्तमिति चेन्न? तस्यान्तरङ्गपरिभाषानुवादकत्वेनावृतेः।

निषिद्ध इति। पूर्वपदात्परत्वस्य व्यपवर्गधर्मत्वात्तत्प्राप्तिरिति फलितार्थः। किञ्चेत्यादि—अन्तादिवत्त्वोभयाऽभावेऽपि—अपिशब्दस्त्वर्थकः, अन्तादिवत्त्वोभयाभावे तु। अपहारादिति—"देवताद्वन्द्वे चे"त्यनेन शास्त्रेण पूर्वोत्तरपदयोर्घटकस्याचो वृद्धिविधानम्। प्रकारान्तरमप्याह नच परादिवद्भावेनेति। एकादेशविशिष्टस्येति—इन्द्रशब्दस्येत्यर्थः। मान्तस्यैकदेशविकृतन्यायेन पूर्वपदत्वम्बोध्यम्।

तत्सम्भव इति—वृद्धिविधायकशास्त्रप्राप्तिसम्भव इत्यभिप्रायः। तद्भावेन—आदित्वाभावेन। नन्वादित्वस्याऽप्यतिदेशोऽस्त्वित्यत आह तादूप्येति। तादूप्यन्नाम वर्णमात्रवृत्तिधर्मस्तस्यानतिदेशादित्यर्थः। पृथगवस्थिताभ्यामाद्यन्तघटिताभ्यां ये व्यवहारा प्रातिपदिकत्वसुबन्तत्वप्रत्ययत्वादयस्ते कृतैकादेशस्यापि भवन्तीत्यर्थे भाष्यकारतात्पर्य्यात्। तदुक्तम्भाष्ये "वर्णाश्रये विधावन्तादिवद्भावप्रतिषेधो वक्तव्यः नवा अतादूप्यातिदेशात्" इति। आद्यन्तान्यतरवर्णवृत्तिर्वर्णमात्रवृत्तिर्यो धर्मस्तद्घटितो यो धर्मस्तस्यानतिदेशादिति हि तदर्थः।

नन्वेवम्भाष्यार्थवर्णने क्षीरपेणेत्यत्रैकाजुत्तरपदत्वातिदेशो न स्यात्तथाच कथं णत्वश्रुतिरिति चेन्न ? अल्मात्रवृत्तिधर्मस्य केवलस्य नातिदेशस्तद्घटितस्यातिदेशस्तु भवत्येवेति तात्पर्य्यवर्णनेनैकाजुत्तरपदत्वस्य तद्घटितत्वेनातिदेशसौलभ्यात्। नच खट्वाभिरित्यादावप्यदन्तत्वातिदेशेन भिस ऐसापत्तिरिति वाच्यम् ? अत परस्याङ्गसंज्ञानिमित्तस्य भिस ऐस् इत्यर्थाश्रयणेनाचुतेः।

नच खट्वाद्यावन्तशब्दात् "अत इनि"इतिविहितेनिप्रत्ययापत्तिरिति वाच्यम् ? "मालादीनाञ्चे"त्यस्य वैयर्थ्यापत्त्या तादृशे तथातिदेशाऽसम्भवात्। ननु देवदत्ताशब्दात् "अतइञ्"तिसूत्रेणेञ्प्रत्ययापत्तिरिति चेत्तर्ह्यित्थम्प्रकारः। "अन्तादिवच्चे"त्यनेन शास्त्रेण शास्त्रीयधर्मस्यैवातिदेशः। उत्तरपदत्वन्तु न शास्त्रीयम्। अच्त्वरूपशास्त्रीयधर्मघटितत्वेनोत्तरपदाद्यच्त्वस्य शास्त्रीयत्वात्। क्षीरपेणेत्यादावापत्तिर्नास्तीति विवेकानुसन्धानात्।

किञ्च स्ववृत्तित्वस्ववृत्तिवर्णत्वव्याप्यत्वस्वविषयकशाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदको यो धर्मस्तद्घटितधर्मानतिदेश इत्येव हि तदर्थः। एकार्थीभावस्तु एकाजुत्तरपदे वर्त्तते अच्त्वे शाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदकत्वाभावात्। प्रकृते अच् अच्पदवाच्य इत्याकारकज्ञानस्य शाब्दबोधजनकत्वन्नास्ति, समुदायैकदेशशक्तिज्ञानस्याऽन्यथासिद्धत्वात्। "अतो भिस ऐसि"त्यादौ तु ह्रस्वाकारः अच्पदवाच्य इत्येव शक्तिज्ञानं शाब्दबोधजनकम्। स्वविषयकशाब्दबोधजनकशक्तिज्ञानीयविशेष्यतावच्छेदकत्वन्तु अत्वे वरीवर्त्ति तस्यानतिदेशेन खट्वाभिरित्यादावदोषः। विशेष्यतावच्छेदकमत्त्वन्तद्घटितमदन्तत्वमिति तस्य नातिदेश इत्यनुसन्धानात्।

किञ्च स्वविशिष्टधर्मघटितधर्मानतिदेश इति हि तदर्थः। वैशिष्ट्यञ्च स्ववृत्तित्व-स्ववृत्तिवर्णत्वव्याप्यत्व-स्वस्थानिकादेशवृत्तित्वस्वनिष्ठाऽभेदसम्बन्धावच्छिन्नप्रकारतावच्छेदकतावच्छेदकत्वएतदुभयसम्बन्धावच्छिन्नप्रतियोगिताकत्वाभाववत्त्वैतत्त्रितयसम्बन्धेन। संघटनप्रकारश्चेत्थम्, क्षीरपेणेत्यादौ तु न तादूप्यम्, एवृत्त्यच्त्वे उत्तरपदनिष्ठविशेष्यतानिरूपिताज्निष्ठाऽभेदसम्बन्धाव-

अत एव पूर्वेषुकामशम इत्यादावन्तरङ्गत्वादाद्गुणे वृद्धिर्न स्यादित्याशङ्कितम् । तदेकदेशमात्रस्य विकाराभावाच्च । तदुक्तं भाष्ये इन्द्रे द्वावचावेको यस्येति लोपेनापहृतेऽपर एकादेशेन ततोऽनच्क इन्द्रशब्दः सम्पन्नस्तत्र कः प्रसङ्गो वृद्धेरिति । मरुदादिभिरिन्द्रस्य द्वन्द्वे इन्द्रस्यैव पूर्वनिपातोऽत आह—

**पूर्वोत्तरपदनिमित्तकार्यात्पूर्वमन्तरङ्गोऽप्येकादेशो न ॥ ५३ ॥**

अत्र च "नेन्द्रस्य" इति निषेध एव ज्ञापक इति "अन्तादिवच्च" "विप्रतिषेधे परम्" इति सूत्रयोर्भाष्ये स्पष्टम् ॥ ५३ ॥

नन्वेवमपि प्रधाय प्रस्थायेत्यादावन्तरङ्गत्वात् हित्वादिषु कृतेषु ल्यप् स्यादत आह—

**अन्तरङ्गानपि विधीन् बहिरङ्गो ल्यप् बाधते ॥ ५४ ॥**

अदो जग्धिर्ल्यप्तिकितीति सूत्रे ति कितीत्येव सिद्धे ल्यब्ग्रहणमस्या ज्ञापकमित्यदो जग्धिरित्यत्र भाष्ये स्पष्टम् ॥ ५४ ॥

नन्वेवमपीयायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात्सवर्णदीर्घत्वे तदसिद्धिरत आह—

**वार्णादाङ्गं बलीयो भवति ॥ ५५ ॥**

तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिरिति तत्सिद्धिः ।

---

च्छिन्नप्रकारतावच्छेदकतावच्छेदकत्त्वस्य स्वस्थानिकादेशवृत्तित्त्वस्य च विद्यमानत्त्वेनैकाजुत्तरपदत्त्वादेकादेशेऽपि णत्त्वसिद्धिः । सोमेन्द्र इत्यादौ तु एकारे स्वस्थानिकादेशवृत्तित्त्वरूपसम्बन्धसत्त्वेऽपि द्वितीयसम्बन्धाऽभावः । एवञ्च एकसत्त्वेऽपि द्वयन्नास्तीति प्रतीत्त्या उभयसम्बन्धावच्छिन्नप्रतियोगिताकाभावसत्त्वादुक्तेः ।

नन्वेकदेशविकृतन्यायादेन्द्रशब्दे उत्तरपदत्वमतिदिश्यतामत आह तदेकदेशमात्रस्येति ।

इन्द्रशब्दस्यैवेति—"अजाद्यदन्तमि"त्यनेनेति तत्त्वम् । इन्द्रशब्दस्य विष्णवादिशब्दैस्समासे द्वन्द्वे तु "द्व्यन्तादजादी पूर्वविप्रतिषेधेने"तिवार्त्तिकेनेन्द्रशब्दस्यैव पूर्वनिपातः । सोमेन्द्र इति द्वन्द्वे तु सोमस्याभ्यर्हितत्वेना"भ्यर्हितञ्चे"ति वार्त्तिकेन "वासुदेवार्जुनाभ्यां वुञि"त्यत्र वासुदेवशब्दवत्सोमशब्दस्यैव पूर्वनिपात इत्यलम् ।

एवमपीति । अन्तरङ्गानपीति न्यायस्वीकारेऽपीत्यर्थः । अन्तरङ्गत्वादिति । पदद्वयापेक्षसमाससापेक्षल्यब्विधानापेक्षया एकपदसापेक्षस्य "दधातेर्हिरि"त्यादेरन्तरङ्गत्वादित्यर्थः ।

अभ्यासस्यासवर्णे इतीयङ्विधायकसूत्रस्थमसवर्णग्रहणमस्या ज्ञापकम्।

तद्धीषतुरित्यादावियङादिव्यावृत्त्यर्थम्। एतत्परिभाषाभावे त्वीष-

ननूक्तज्ञापकबलेन प्रकृतिप्रत्ययमात्रनिमित्तकं कार्य्यं ल्यब्विषये नेत्येव ज्ञाप्यम्, लाघवा "न्नल्यपी"तिसूत्रन्न कार्य्यम् इति चेन्न ? अधीत्येत्यादौ तुगभावापत्तेः। नापि क्त्वाश्रयानुबन्धकार्य्याणां ल्यब्विषयेऽप्रवृत्तिरिति कल्प्यम् ? प्रश्नूय प्रोह्य प्रमथ्येत्यादौ गुणनिषेधसम्प्रसारणनलोपाद्यप्रवृत्त्यापत्तेः। अयमाशयः, ल्यब्ग्रहणाद्यर्थं सत् स्वप्रवृत्तिविरोधिप्राप्तेर्बाधेन चरितार्थम् स्वप्रवृत्त्युत्तरप्राप्तिबाधेन समर्थमिति स्थानिवद्भावेन ल्यबुत्तरप्राप्तेस्त्वनिषेधाय "नल्यपी"त्यावश्यकम्। अनया परिभाषयाऽन्तरङ्गनिमित्तविनाशकस्यैव ल्यप प्राबल्यम्। अत एव प्रपूर्वकेषूधातोर्ण्यन्तात्क्त्वाप्रत्यये प्रेष्य गतइत्यादौ गुणात्पूर्वंल्यप् न। अन्यथाणेर्गुणात्पूर्वं "ल्यपि लघु पूर्वादि"त्यनेन णेरयादेशापत्तेः।

अत्रकेचित्कल्पकाः—ननु ल्यब्विषयेऽन्तरङ्गन्नेत्येव परिभाषाकारो "नल्यपी"त्यपि न कार्य्यम्। इति चेन्न ? निरेष्य गत इत्यादौ लघूपधगुणस्याऽप्रवृत्त्यापत्तौ "ल्यपि लघुपूर्वादि"ति अयादेशाऽपत्तेः। सङ्कीर्त्येत्यादावीत्वानापत्तेश्च।

ननु ल्यब्निमित्तककार्य्यंन्नेत्येव परिभाषास्त्विति चेन्न ? णिलोपानापत्तेः। ननु अन्तरङ्गनिमित्तविनाशकल्यब्विषय इत्येवास्त्विति चेन्न ? एवं करणे"न ल्यपी"त्यस्यावश्यकत्वापत्तौ लाघवाभावेन भाष्योक्तपरिभाषाकारस्यैव गरीयस्त्वात्।

केचित्तु—"नल्यपी"तिसूत्रमस्यां ज्ञापकमन्यथाऽन्तरङ्गत्वादीत्वे तद्वैयर्थ्यं स्पष्टमेवेति समूचुस्तन्न ? उत्सर्गस्यापवादविषयपरिहारेण प्रवृत्ते पूर्वमीत्वाऽप्रवृत्तेः।

नन्वेवम् प्रधानसेमेन्द्र इत्यादीनामुक्तैरुपायैस्साधुत्वेऽपि इयायेत्यादाविति आदिशब्देन इयेषेत्यादीनां संग्रहः, द्वित्वे कृतइति दीर्घेक्रियमाणे द्वित्वस्य न बहिरङ्गाऽसिद्धत्वम् नाजानन्तर्य्येतिनिषेधात् आहतुरूसतुरितिवत्।

अन्तरङ्गत्वादिति—प्रकृतिप्रत्ययोभयसापेक्षवृद्ध्यपेक्षयेतिभावः। नाजानन्तर्य्य इति तु न प्रवर्त्तते ? तस्या जाताऽसिद्धत्वविषयकत्वस्य पूर्वमुक्तत्वात्।

वार्णादाङ्गमिति—अत्र वार्णादित्यस्य वर्णत्वव्याप्यधर्मावच्छिन्नोद्देश्यकादित्यर्थः, आङ्गमित्यस्य उदाहरणं कारक इति, यणं बाधित्वा अचो ञ्णितीति वृद्धिः। अङ्गत्वावच्छिन्नोद्देश्यकमित्यर्थः। तेनेति। वार्णादाङ्गमिति न्यायेनेत्यर्थः। वर्णनिमित्तंवार्णम्, अङ्गाधिकारे विहितमाङ्गम्। असवर्णग्रहणमिति सूत्रन्तु इयर्त्तीत्यादौ चरितार्थमित्याशयः। तद्धीति—असवर्णग्रहणं

तुरित्यादावन्तरङ्गेण सवर्णदीर्घेण बाधात्तदर्थम् ।

हीत्यर्थः । ईषतुरित्यादावादिपदेन ईयतुरित्यादिसंग्रहः ।

न च ईयतुरित्यत्र यण्सवर्णदीर्घयोर्येननाप्राप्तन्यायेन "दीर्घ इण⁀किती" त्यस्यानवकाशत्वात्तेनैव दीर्घे तत उत्तरखण्डे "इणो यणि" तियणि स्थानिवद्भावेन तत्रेयङ्वारणार्थमसवर्णग्रहणमिति वाच्यम् ? "ओं⁀पुयण्जी" तिसूत्रारम्भसामर्थ्यादभ्यासस्य कार्यं कर्त्तव्ये "अच⁀परस्मिन्नि" ति सूत्रन्न प्रवर्त्तत इति साधारणकल्पनाश्रयणात् । तन्न्यायेनेयङ्म्बाधित्वा जाते दीर्घे इयङप्रवृत्तेश्च ईयतुरित्यत्र स्थानिवद्भावेनेयङि चिकीर्षिते "दीर्घइण⁀किती" त्यत्र युगिति न्यासेनेष्टरूपसिद्धौ दीर्घग्रहणसामर्थ्यादियङ् स्थानिवद्भावेन न भवतीति विचित्रसमाधानाच्च ।

न च दीर्घग्रहणम् "अत आदेरि" त्यत्रानुवृत्त्यर्थमिति वाच्यम् ? "अत आदेरि" त्यत्र लाघवाद् व्याख्यानाच्च आ आदेरिति पदच्छेदं कृत्वा अभ्यासस्यादेरकारस्य आकार इत्यर्थवर्णनेनोत्तरत्र प्रयोजनाभावात् । "अभ्यासस्यानिणि" इति अभ्यासेवर्णस्येयङ् अचि न श्विण्धाताविर्त्यर्थकन्यासेन सिद्धौ असवर्णग्रहणवैयर्थ्यसौष्ठवात् ।

अत्र परिभाषार्थीयविषयताप्रयोजकपदेन सप्तम्यन्तपदस्यैव ग्रहणम्बोध्यम् । अत एव प्रकृतलक्ष्ये वृद्धिगुणयोरन्तरङ्गत्वाभावोऽन्यथा वृद्धिगुणविधायकशास्त्रघटकाङ्गपदप्रयोज्यविषयतात्वं यथा दीर्घस्य तथैव दीर्घविधायकशास्त्रघटकपूर्वपरयोरिति अधिकृतशास्त्रपदप्रयोज्यविषयताश्रयेकारद्वयसमुदायघटकपरेकारनिष्ठविषयताप्रयोजकाजादिपदघटितत्वे वृद्धिगुणयोरप्यन्तरङ्गत्वं समानमापतेदेवञ्च ग्रन्थानुपपत्तिः ।

ननु इयङुवङोरपि दीर्घशास्त्रघटकपूर्वपरयोरित्येतत्पदप्रयोज्यविषयताश्रय इ-इ- इति समुदायस्तद्घटकपरेकारवृत्ति विषयताप्रयोजकसप्तम्यन्ताच्पदघटितत्वेनान्तरङ्गत्वाऽविशेष इति चेन्न ? प्रकृते बहिरङ्गशास्त्रघटकपदविशिष्टवृत्तिविषयताप्रयोजकसप्तम्यन्तपदघटितत्वस्यैवान्तरङ्गत्वस्य विवक्षणीयत्वात् । वैशिष्टचञ्च स्वप्रयोज्यविषयताश्रघटकत्व स्वघटकपदप्रयोज्यविषयतापर्य्याप्त्यनधिकरणत्वोभयसम्बन्धेन । संघटनप्रकारस्स्वयमूह्यः ।

वस्तुतस्तु—द्वित्वप्रयोज्यसंज्ञानिमित्तककार्य्याणां द्वित्वनिमित्तप्रत्ययाऽव्यवहितपूर्वत्वनिमित्तकत्वमिति कल्प्यते "ह्रस्संप्रसारणमि" ति सूत्रारम्भसामर्थ्यात् । तच्च सूत्रम् अजूहवदित्यत्र सम्प्रसारणविधानार्थम् , एतत्कल्पनाभावेऽभ्यस्तीभविष्यतोह्वेन्स्सम्प्रसारणमित्यर्थकाऽ "भ्यस्तस्य चे" त्यनेनैव सम्प्रसारणसिद्धेः । कल्प्यवाक्ये तु "अभ्यस्तस्यचे" त्यत्रानेन वाक्येन द्वित्वप्रयोज्याभ्यस्तसंज्ञानिमित्तकत्वेन णिचा व्यवधानेन तदप्राप्तेश्चङ्परे णौ विधानार्थं "ह्व-

इयङुवङौ ह्यभ्याससम्बन्धनिमित्तकत्वाद् बहिरङ्गौ। न चेयङादि-रपवादो, येन नाप्राप्तिन्यायेनेयर्त्तीत्यादिसकललक्ष्यप्राप्तयणपवादत्वस्यैव निर्णयादिति प्राञ्चः।

---

स्संप्रसारणमि"तिस्वांशे चरितार्थम्। अत एव ण्वुल्प्रत्ययान्तह्वायकशब्दप्र-कृतिकक्यजन्तात्सनि जिह्वायकीयिषतीत्यादाव"भ्यस्तस्य चे"त्यनेन सम्प्रसार-णन्न। एवञ्च प्रकृते ईयतुरित्यादावियङादेरपि अतुस्निमित्तकत्वेन प्रकृतिप्रत्य-योभयापेक्षत्वेन बहिरङ्गत्वमिति युक्तितत्प्रकारः।

नन्वेवं कल्पनापेक्षया 'लाघवात्पूर्वोक्तज्ञापकेन अभ्यस्तकार्याणामेव तत्सं-ज्ञाप्रयोजकप्रत्ययनिमित्तकत्वमेव कल्प्यते। तथा च प्रकृतग्रन्थाऽसङ्गतिः पुन-रपीति चेन्न? प्रदुद्योतकीयिषति प्रसुस्वापयिषति प्रजिह्ननीयिषतीत्यादिषु "द्यु-तिस्वाप्योस्संप्रसारणमभ्यासाच्चे"तिसूत्राभ्यां सम्प्रसारणकुत्वाभावयोस्सिद्ध्य-र्थमसतिबाधके प्रमाणानां सामान्ये पक्षपात इति न्यायेन षाष्ठद्वित्वप्रकरणीय-संज्ञाकार्य्याणां तत्संज्ञाप्रयोजकप्रत्ययनिमित्तकत्वकल्पनेनाक्षतेः।

अत्र केचित्साधारणाः—संज्ञाकृतबहिरङ्गत्वं बह्वपेक्षत्वरूपबहिरङ्गत्वञ्च यद्यपि पूर्वोक्तान्तरङ्गपरिभाषाव्याख्यावसरे नाश्रयणीयमित्युक्तम्,तथापि अङ्ग-पदस्य प्रत्यये परतो विधानावच्छिन्ने शक्त्या प्रत्ययनिमित्तकत्वस्य सुतरां सापेक्षत्वेन विद्यमानत्वाद्बहिरङ्गत्वसौष्ठवात्। अभ्यासेत्युक्तिश्च प्राचीनमता-नुसारेणेति चोचुः।

यणपवादत्वस्यैव निर्णयादिति—'कुप्वोः क पौ चे'ति शास्त्रं सक-ललक्ष्यप्राप्त "विसर्जनीयस्य स"इत्यस्यैव बाधकन्नतु "शर्परे विसर्जनीयस्ये" त्यस्येति भावः। ननु ऋ ऋतीति स्थिताविक्त्वेन यण्सवर्णदीर्घयोस्तक्रन्यायेन बाधादित्त्वप्रवृत्त्युत्तरं नैव यणिविषयतेति कथं यणपवादत्वमिति चेन्न? ऋतीति-दशायां शब्दगुणयोः प्राप्तौ नित्यत्वस्योभयोस्तुल्यत्वेन तयोरपेक्षया पर-त्वाद् गुणे पश्चाच्छपि श्लाविति अरशब्दस्य द्वित्वे "अर्त्तिपिपर्त्योश्चे"तत्त्वे ततो यणः प्राप्तौ इत्वयणोरेककालावच्छेदेन प्राप्तचभावेनोक्तन्यायाऽविषय-त्वेनेयङो यणपवादत्वस्य ध्रौव्यतरत्वात्। अत एव अभ्यासविकारेषु बाध्यानां पूर्वं प्रवृत्त्या उरदत्वे पश्चाद्द्वित्वे यणस्सकललक्ष्यप्राप्तत्वेऽपि चक्रकदोष इति शङ्काया नावसरः।

नच इयङंशे यणपवादत्वसिद्धावप्युवङ्सवर्णदीर्घस्यैवापवाद उपसञ्जनिष्य-माणन्यायात्। न च उवोखेत्यादावन्तरङ्गत्वात्सवर्णदीर्घेण लघूपधगुणस्य बाधेनोवङोऽनुवृत्तिरेव नास्तीति शङ्क्यम्नोदेतीति वाच्यम्? "अचि श्नु"इति सूत्रे प्रत्येकं स्वरितत्वप्रतिज्ञाया वैयर्थ्यापत्तेः। तथा च ऊखतुरित्येतदर्थमसव-र्णग्रहणं कथन्तस्य ज्ञापकतेति वाच्यम्? एतावन्मात्रप्रयोजनकत्वे अनाविवि

परे त्वेतत्परिभाषाभावेऽभ्यासस्येति सूत्रमेव व्यर्थम् ।

न चेयायेयेषेत्यादौ चरितार्थम् ? तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेचोति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्ते गुणवृद्धी बाधित्वान्तरङ्गत्वात्सवर्णदीर्घापत्तेः ।

न चेयर्तीत्यादौ तच्चरितार्थम् । तावन्मात्रप्रयोजनकत्व उरित्येव ब्रूयात् ।

य्वोरित्यनुवर्तते । इणोयणिति साहचर्याद्व्याख्यानाच्च ऋधातोरेव ग्रहणम् । अर्तेरिवर्णस्येयङित्यर्थः । अभ्यासस्यार्ताविति अभ्यासस्यार्तेरिति वा गुरुत्वान्न युक्तम् ।

न च ए ऐ ओ औशब्देभ्य आचारक्विबन्तेभ्यो लिटीयङाद्यर्थं तत्सूत्रमावश्यकं, तथा ओणृधातोण्वुलन्तादिच्छाक्यजन्तात्सन्युवोणकीयिषतीत्याद्यर्थमावश्यकमिति वाच्यम् ? षाष्ठप्रथमाह्निकान्तस्थभाष्यप्रामाण्येन तेषामनभिधानात् । अन्त्ये द्वितीयद्विर्वचनस्यैव सत्वेन त्वदुक्तप्रयोगस्यैव दुर्लभत्वात् । एवं च सम्पूर्णसूत्रस्य ज्ञापकता युक्ता ।

यद्यपि भाष्ये यदयमभ्यासस्यासवर्ण इत्यसवर्णग्रहणं करोतीति ग्रन्थेनासवर्णग्रहणस्यैव ज्ञापकता लभ्यते तथापि न ह्यन्तरेण गुणवृद्धी असवर्णपराभ्यासो भवतीति तदुपपादनग्रन्थेन सम्पूर्णसूत्रस्यैव ज्ञापकता लभ्यते ।

---

न्यासेनोखतुरित्यादिप्रयोगसिद्धौ असवर्णग्रहणस्य ज्ञापकत्वसम्भवात् ।

रूपातिदेशेनापहार इति—नन्वतिदेशशास्त्रेण हि अतिदिश्यमानधर्मविरुद्धधर्मप्रयुक्तकार्य्याभाव एव बोध्यते नत्वतिदिश्यमानधर्मविरुद्धधर्माभाव इति "स्थानिव"त्सूत्रभाष्यसिद्धान्तेन प्रकृते पूर्वस्थितधर्मापहारानन्तरपुनर्गुणवृद्धिप्राप्तिरनुपपन्नेति चेन्न ? मुखञ्चन्द्र इति रूपकालङ्कारवत् वास्तविकमेव रूपं रूपातिदेशस्थले समुत्पद्यते । पूर्वरूपापहारम्बिना गत्यभावोऽत एव "तृज्वत्क्रोष्टुरि"त्यतिदेशे वस्तुतो रूपातिदेशस्थले तद्रूपविशिष्टादेशे एव तात्पर्य्यम्पाणिनेः ।

चरितार्थमिति—सवर्णाच्परत्वाभावाद्दीर्घस्यानवकाशत्वेन बाधाद्यणश्च तत्राऽप्राप्तेरिति भावः ।

उरित्येव ब्रूयादिति—नन्वेवन्न्यासेऽङ्गस्येत्यस्याचीत्यस्य च सम्बन्धे ऋवर्णान्ताङ्गस्याचि परे इयङित्यर्थापत्तौ कर्त्तारावित्यादावपीयङापत्तौ फलभेद इत्यत आह—य्वोरिति ।

सूत्रान्तरसाहचर्य्यमकिञ्चित्करमित्याह—व्याख्यानादिति । अचिश्नुधात्वित्यतो धातुग्रहणानुवृत्तिमूलकव्याख्यानादित्यर्थः । षाष्ठेति—दाश्वानितिसूत्रस्थेत्यर्थः ।

अग्रेऽपि नैतदस्ति ज्ञापकमर्त्यर्थमेतत्स्यादित्यनेन सूत्रस्यार्थक्यमेव दर्शितमसवर्णग्रहणस्यैव ज्ञापकत्वे तु तद्वैयावर्त्यप्रदर्शनेन तस्यार्थक्यमेव दर्शितं स्यात्।

न चाकृतव्यूहपरिभाषयैवेत्यादौ सवर्णदीर्घप्राप्तिर्यदि दीर्घो न स्यात्तर्हि गुणः स्यादिति सम्भावनायाः सत्त्वेन परिभाषाप्रवृत्तेः सूपपादत्वादिति कथं सम्पूर्णसूत्रस्य ज्ञापकतेति वाच्यम्? तस्या असत्त्वात्। सत्त्वे वैतद्भाष्यप्रामाण्येन यत्रान्तरङ्गकार्यप्रवृत्तियोग्यकालोत्तरमेव तन्निमित्तविनाशकवहिरङ्गविधेः प्राप्तिस्तत्रैव तत्परिभाषाप्रवृत्तिस्वीकाराच्च।

---

प्रत्ययग्रहणमपनीय तत्स्थानेऽनेकाच इति वाच्यमित्यारम्भप्रत्याख्यानयोःफलैक्याय ऐ ओ औ इत्यादिभ्य आचारक्विपोऽनभिधानम्बोध्यम्।

वस्तुतस्तु—द्वित्वे कृते निरुक्तरीत्या ह्रस्वात्पूर्वमयादेशे इयङ्प्राप्तिरेव नास्ति। किञ्च "कास्प्रत्ययादि"तिसूत्रे प्रत्ययग्रहणमपनीयेति प्राचीनपद्धतिन्तिरस्कृत्य प्रत्ययान्तेभ्योऽप्याम्भवतीति नागेशमते अयाञ्चकतुरित्येव रूपम्।

नन्वनभिधानवादिमूलग्रन्थसङ्गतिः कथन्तत्र "इजादेश्च गुरुमतोऽनृच्छ" इत्यनेनाम्प्रवृत्तेर्दुर्वारत्वादिति चेन्न? अनृच्छ इति पर्युदासेनानतिदिष्टगुरुमत्त्वस्यैव ग्रहणेनाप्रवृत्तेः। नच कटी धातावीकारप्रश्लेष एवञ्च अयाञ्चकारेति रूपे कथमाम्प्रत्यय एवञ्च न तादृशसाहचर्य्याश्रयणमिति वाच्यम्? द्वित्वे कृते ए ऐ इति स्थितौ इदानीन्तने परिभाषाया असत्त्वेनान्तरङ्गत्वाद्गुणम्प्रबाध्य अयादेशादेरेव प्रवृत्त्या तेषु नामधातुसिद्धेषु चारितार्थ्याऽसम्भवात्।

अत्रसरयूपारीणशुक्लाः—ए ऐ ओ औशब्देभ्यो क्विपि इजादेश्चेत्त्याम् तु न भवति? अनृच्छ इतिपर्य्युदासेन गणपठितत्वेन सादृश्याश्रयणादामोऽप्रवृत्तेरिति वदन्ति।

तथा च मनस एणो मन एणस्तस्मात्क्यजन्तात्सनि यथेष्टं नामधातुष्वित्यनेन एणइत्यस्य द्वित्वे ह्रस्वे मनइ एणइति मनउओण् इति एवमेधीत्यस्य पदद्वित्वे तस्माद्रूपप्रत्यये तस्मात्क्यचिसनि द्वितीयैकाच एध इत्यस्य द्वित्वे एधिइ एधिरूपहसति इत्यत्र देवशब्दस्य ऋच्छकशब्देन समासे "ऋत्यक" इति प्रकृतिभावे क्यचि सनि ऋच्छेत्यस्य द्वित्व उरदत्वे "सन्यत" इतीत्वे देवइ ऋच्छकिसतीत्यत्र च चारितार्थ्यमत आह पाष्ठेत्यादि। ज्ञापकपरेत्यर्थः।

वस्तुतस्तु—ए आइत्यादिभ्यो क्विपि पूर्वोक्तरीत्या ह्रस्वस्य द्वित्वनिमित्तप्रत्ययनिमित्तकत्वेन बहिरङ्गत्वादसिद्धत्वेनपूर्वमयादेश एव नत्वियङ्प्राप्तिरिति प्रथमे विचारः। द्वितीयप्रबन्धे तु एतद्भाष्यप्रामाण्याद् यथेष्टंनामधातुष्वित्यनेन प्रथमैकाजितरस्य हलादेरेव द्वित्वमिति कल्पने सति क्षतिविरहादयुक्तोऽयं ग्रन्थ इति कल्पकाः।

न चान्तरङ्गत्वादीर्घोपीपायेत्यादौ पूर्वान्तवत्त्वेनाभ्यासत्वादिवर्णत्वा-च्च णत्यसवर्णं इयङ्विधानेन सूत्रं चरितार्थम्।

न चाचिश्नुवित्यनेन सिद्धिः, वृद्धिबाधनार्थत्वादिति वाच्यम्? प्र-त्यासत्त्याऽसवर्णपदेनाभ्यासोत्तरखण्डसम्बन्ध्यसवर्णाच एव ग्रहणा-च्छास्त्रबाधकल्पनापेक्षया परिभाषाज्ञापकत्वस्यैवौचित्याच्चेत्याहुः।

सा चेयं धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्थित्वे (१)एव। यत्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति तन्न? ज्ञापितेऽपीया-

सम्पूर्णं सूत्रज्ञापकतामेव द्रढयति यद्यपितथापीत्यादिना।

शास्त्रेति—वृद्धिशास्त्रेत्यर्थः। औचित्यादिति—वस्तुतस्त्वेवं सति "प्र-त्ययोत्तरपदयोश्च"त्यस्यापि बाधकबाधनार्थत्वकल्पनापेक्षया परिभाषाज्ञापक-त्वमेव स्यादिति एवन्तर्हीत्यादि लुक्परिभाषाग्रन्थासङ्गतिरिति विचार-रहितोऽयम्प्रकारः।

किञ्च उपस्थितम्परित्यज्येति न्यायादसवर्णाजुत्तरखण्डसम्बन्धी ग्राह्यः। बाधकत्वंवा कल्पनीयमिति विचारे प्रचलिते उभयोस्सयुक्तिकत्वात् कस्याश्रयणं युक्ततरमिति विस्पष्टयन्नाह शास्त्रेत्यादि।

अत्रमान्याः—शास्त्रबाधकल्पनापेक्षया लाघवादुपस्थितत्वात्तथाविधाज्-ग्रहणेन परिभाषाज्ञापकत्वंश्रेयस्करमिति वदन्ति।

केचित्तु—"पुरोऽग्रतोऽग्रेषु सर्त्तेरि"तिटविधानमत्र ज्ञापकमन्यथा पुर-स्सर इत्यत्रान्तरङ्गत्वाद् यणि "कर्मण्यणि" टे वा विशेषाभावः।

परिभाषाप्रवृत्तौ लिङ्गमाह धर्मिग्राहकेत्यादि। समानकार्यित्वन्धर्मः धर्मी हि परिभाषा तद्ग्राहकं तज्ज्ञापकम्, मानम्प्रमाणं "अभ्यासस्याऽसव-र्ण" इति सूत्रन्तस्मादित्यर्थः। एवं स्वरसमानकार्यित्वएवेति। ननु समा-नोद्देश्यकत्वे समाननिमित्तकत्वे वा, समानस्थानिताकत्व इत्यर्थः।

आङ्गशास्त्रे समानकार्य्यित्वञ्च वार्णशास्त्रीयस्थानितासमानाधिकरण-स्थानिताकत्वम्। उदाहरणमियायेति। इ इ अ इति स्थिते दीर्घशास्त्रीयस्था-निता परेकारनिष्ठा तत्समानाधिकरणस्थानिता वृद्धिनिरूपिता तन्निरूपकत्व-म्वृद्धिशास्त्रस्येति समन्वितिः।

(१) समान कार्यित्व एवेति–कार्यित्वमागमादेशोभयसाधारणम् समानस्थानिता-कत्व एवेत्यत्रापि स्थानि पदं कार्यिमात्रोपलक्षणम्। अतएव वारिणी इत्यादौ सवर्णदी-र्घात्पूर्वंनुम्प्रवृत्तेर्बाधो न, ग्रन्थकर्त्तुः परस्परविरोधश्च नास्ति। अनेनैव व्याख्यानेन च्छ्वोरिति सतुङ्निर्देशस्य प्रकृतपरिभाषाऽनित्यत्वज्ञापकतापरमाष्यसङ्गतिः।

अत्रमान्याः—इयम्परिभाषा भावकार्य्यविषयिकाऽपि। अत एव मघोन इत्यादौ सम्प्रसारणाच्चेति पूर्वरूपात्पूर्वमल्लोपोऽन इत्यस्याऽप्रवृत्तिरन्यथा विभक्तेरुदात्तनिवृ-त्तिस्वराऽपत्तिरित्यास्तामविस्तरः।

येयेषेत्याद्यसिद्धेः सूत्रवैयर्थ्यस्य तदवस्थत्वाच्च । स्योन इत्यत्र तु वक्ष्यमाणरीत्यास्या अनित्यत्वादप्रवृत्तौ गुणादन्तरङ्गत्वाद्यणादेशः ।

नन्वेवम्परिष्कारे त्वं स्त्रीत्यत्र टाबापत्तेस्तथाहि, अन्तरङ्गत्वादतो गुणे कृते टिलोपेनादन्तत्वाभावान्न टाबिति कौमुदीमूलम् । लोपीयस्थानितायाः परस्त्रपीयस्थानितायाश्च एकाधिकरणे अकारे विद्यमानत्वेन समानस्थानिताकत्वादेतत्परिभाषाप्रवृत्त्यापत्तौ पररूपापेक्षया पूर्वं टिलोपेऽदन्तत्वाट्टाबिति चेन्न ? वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यधिकरणपर्य्याप्तस्थानिताकत्वं समानस्थानिताकत्वम् । इयायेत्यत्र दीर्घीयस्थानितावच्छेदकपरत्वपर्य्याप्तिः परेकारनिष्ठा तत्रैवहि वृद्धिशास्त्रीयस्थानितावच्छेदकपर्याप्तिरपीति । त्वमित्यत्र पररूपीयस्थानितावच्छेदकपरत्वपर्य्याप्तयधिकरणे परेकारे टिलोपस्थानितापर्य्याप्तयधिकरणत्वाभावः । हलन्ता एवादेशा इति युष्मदस्मद्विषये सिद्धान्तितत्वेन टापोऽप्राप्तेश्च ।

किञ्च वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्य्याप्तिकस्थानिताकत्वं समानकार्य्यित्वम् ।

फलितार्थस्तु वार्णशास्त्रीयस्थानितावच्छेदकपर्य्याप्त्यनुयोगितावच्छेदको यो धर्मस्स एव धर्मोऽङ्गशास्त्रापेक्षाविषयीभूत इति । संघटनप्रकारस्तु इयायेत्यत्र वार्णशास्त्रम् "अकस्सवर्णे" इति तच्छास्त्रीयस्थानितावच्छेदकधर्म "एकः पूर्वपरयोरि"त्यधिकारात्पूर्वत्वं परत्वञ्च, तत्र परत्वस्य पर्याप्त्यनुयोगितावच्छेदकधर्म उत्तरेकारवृत्तितद्व्यक्तित्वरूपो धर्मस्स एव धर्मोऽपेक्षणीतीति आङ्गशास्त्रस्येति ।

अत्र स्थानितानिवेशफलन्तु उच्छति युच्छतीति । अत्रान्तरङ्गत्वात्पूर्वं तुकि लघूपधत्वाभावेन गुणो न भवति । केवलकार्यित्वनिवेशे तु तुको गुणस्य च समानकार्य्यित्वेनैतत्परिभाषया तुकः पूर्वं गुणापत्तेः ।

अत एव चच्छावित्यत्रान्तरङ्गत्वात्तुकि अजन्तत्वाभावात् ह्रस्वो न स्यादित्याशङ्क्य वैयधिकरण्यान्वयेन समाधानपरभाष्यं सङ्गच्छते । अन्यथा समानोद्देश्यकत्वेनाङ्गत्वात्पूर्वं ह्रस्वे भाष्यस्थं समाधानमसङ्गतं स्यात् एवं लक्षणे तु तुक आगमत्वेन वार्णशास्त्रीयस्थानितैव नास्तीत्यविरोधः ।

अत एव गान इत्यादौ "आने मुगि"तिमुगागमो न, अन्यथा गा अ आनेति सिद्धे आङ्गत्वान्मुकि गामान इति रूपं स्यात् । अत एव आदादिकोऽयमिति हरदत्तादयः । फले तु न विशेष इति ग्रन्थश्च सङ्गच्छते । एतस्यास्समानकार्यित्वविषयकत्वादेव गाते इत्यत्र गा अ आत इति स्थितौ आङ्गादपि "आतोङित"इतिसूत्रात्पूर्वमन्तरङ्गत्वात्सवर्णदीर्घः । "येन विधिरि"तिसूत्रीय "स्यो न" इति प्रयोगे गुणं बाधित्वाऽन्तरङ्गत्वाद्यण् । अनया तु गुण

एवेति भाष्यविरोधस्तु सतुग्ग्रहणेन वार्णपरिभाषाऽनित्यत्वस्य वक्ष्यमाणत्वात् ।

ननु "च्छ्वोरि"ति सतुग्ग्रहणं कथमनित्यत्वे ज्ञापकन्तथाहि, प्रष्टेत्यादौ ह्रस्वस्य तुगागमः, छकारस्य शकार इति । समानकार्यित्वाभावेन वार्णपरिभाषाया अप्रवृत्त्या अन्तरङ्गपरिभाषया तुकि तन्निवृत्तये सतुकग्रहणमिति कथमनित्यत्वे ज्ञापकमिति चेन्न ? "अन्तरङ्गत्वाद्यणो गुणबाधकत्वमिष्यत" इति भाष्याद्नित्यत्ववर्णनात् ।

नन "पुगन्ते"त्यत्र पुगन्तसाहचर्य्येण लघूपधांशे हलन्ताङ्ग एव गुणप्रवृत्तिरिति स्योन इत्यत्र सि वनेत्यत्र हलन्तत्वाभावेन गुणो न प्राप्नोतीति नानित्यत्वे फलम्प्रमाणञ्चेति वाच्यम् ? अन्तरङ्गत्वाद्यणो गुणबाधकत्वमिति भाष्यविरोधात् ।

नच तद्भाष्यमेकदेशिन उणादिष्वव्युत्पत्तिपक्षस्यैवादरात् । एवञ्च नानित्यत्वे किमपि प्रमाणम् ।

किञ्च सतुग्ग्रहणाभावे आञ्छ वाञ्छ धातोः क्विपि नकारसहितछकारस्य शादेशापत्तिर्यदागमन्यायादिति वाच्यम् ? वार्णपरिभाषावतारस्तु लक्ष्यसिद्ध्यर्थ एव नानिष्टापादनार्थस्तथाच यत्र प्रवृत्तिरिष्यते तत्र प्रवर्त्ततां यत्र नेष्यते तत्र "ज्ञापकसिद्धन्न सर्वत्रे"तिपरिभाषामनुसृत्य न प्रवर्त्ततान्तावतैवानित्यत्वतुल्यफलमिति व्याख्यानात् । कारिणी इत्यादावन्तरङ्गत्वान्नुमम्बाधित्वा सवर्णदीर्घस्तु न ? "इकोऽचि विभक्ता"वित्यस्य सन्धिकार्यापवादकत्वात् । चञ्छ्यत इत्यत्रान्तरङ्गत्वात्तुक्यपि यदागमन्यायेन "नुगतोऽनुनासिकान्तस्ये"त्यत्रात्पदेनाच्छब्दस्य ग्रहणान्नुक्सिद्धौ क्षतिविरहात् ।

अत्रकेचिन्मान्याः—ननु समाननिमित्तकत्वपरिष्कारेण सर्वं सुस्थमिति न समानकार्यित्वपरिष्कारावश्यकतेति । तथाहि, अङ्गशास्त्रीययत्किञ्चित्पदप्रयोज्यविषयतापर्य्याप्त्यधिकरणपर्य्याप्तसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताप्रयोजकपदघटितत्वं समाननिमित्तकत्वम् । इयायेत्यत्र "अचोञ्णिती"त्येतद्घटकाच्पदप्रयोज्यविषयतापर्य्याप्त्यधिकरणोत्तरेकारे वार्णदीर्घशास्त्रीयसप्तम्यन्ताच्पदप्रयोज्यविषयतापर्य्याप्तेस्सत्त्वेनावतरणसङ्गतिः । स्योन इत्यत्र तु नैतस्याः प्रवृत्तिः ? अङ्गशास्त्रं गुणशास्त्रं तदीयाङ्गपदप्रयोज्यविषयतापर्य्याप्त्यधिकरणे "सिव"इति स्वरूपे वार्णशास्त्रमि "को यणाची"ति सप्तम्यन्तपदप्रयोज्यविषयतापर्य्याप्तिर्नास्तीति समाननिमित्तकत्वाभावेन न परिभाषाप्रवृत्तिः । एवमव्याप्त्यतिव्याप्त्योरनवकाश इति भाष्यसङ्गतिः । गाते इत्यत्रापि अङ्गपदप्रयोज्यविषयतापर्य्याप्त्यधिकरणे "गा अ"इति स्वरूपे वार्णे "कस्सवर्णे"इति सप्तम्यन्तपदप्रयोज्यविषयतापर्य्याप्तिर्नास्ति न तत्र परिभाषा प्रवर्त्तते ।

नच अल्पदप्रयोज्यविषयतामादाय समाननिमित्तकत्वमिति प्रकृतलक्ष्ये दोष इति वाच्यम् ? प्रकारत्वाऽसमानाधिकरणविषयताया ग्रहणम् "आने मुगि"त्यत्र तु अङ्गनिष्ठविशेष्यतानिरूपित "अत्"निष्ठप्रकारताया एव सत्त्वेन समाननिमित्तकत्वाभावात् ।

नन्वेवन्निवेशे इयायेत्यत्रैवम्विधा विषयता नास्तीत्यव्याप्तिरिति चेन्न ? निर्दिश्यमानपदप्रयोज्यविषयतामादाय लक्षणसमन्वयादिति ।

अथवा वार्णशास्त्रघटकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्म्मस्तद्धर्मावच्छिन्नानुयोगिताकपर्य्याप्तिकाङ्गपदविशिष्टविशेष्यताकत्वं समाननिमित्तकत्वम् । वैशिष्ट्यञ्च स्वप्रयोज्यत्व-स्वप्रयोज्यविशेष्यतानिरूपितप्रकारत्वाऽसामानाधिकरण्योभयसम्बन्धेन । इयायेत्यत्र वार्णशास्त्र "मकर्णस्सव" इतितद्घटकसप्तम्यन्तपदमचीति, तत्प्रयोज्यविषयतापर्य्याप्त्यनुयोगितावच्छेदकीभूतो धर्म उत्तरेकारनिष्ठ तद्व्यक्तित्वम् , तद्धर्मावच्छिन्नानुयोगिताकाङ्गपदविशिष्टविशेष्यता निर्दिश्यमानत्वावच्छिन्ना विशेष्यता, तत्कत्वम "चोक्ङिणती"त्यस्येति समन्वयः ।

विशेष्यतायामङ्गपदवैशिष्ट्यफलन्तु गाते इति गान इति च, अन्यथा "आतो क्ङित" इति शास्त्रघटक "अत्पद" प्रयोज्यविषयताया "मकस्सवर्ण" इति शास्त्रघटकाच्पदप्रयोज्यविषयतापर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्य्याप्तिकत्वस्य सत्त्वेन परिभाषाप्रवृत्त्या दीर्घाभावेन इयादेशो दुर्वार एव स्यात् । तथा "आने मुगि"ति सूत्रघटकात्पदप्रयोज्यविषयतायाश्च "अकस्सवर्ण" इति सूत्रघटकाच्पदप्रयोज्यविषयतापर्य्याप्त्यनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिकत्वस्य सत्त्वेन समाननिमित्तकत्वात्परिभाषाप्रवृत्त्या मुगागमस्स्यादेव । एवं चच्छौ स्योन इत्यादि सर्वं सुगतमिति वदन्ति । तन्न ? कारक इत्यादौ आङ्गशास्त्रीयपदप्रयोज्यविषयतापर्याप्त्यधिकरणे वर्णयण्शास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयतापर्याप्तिर्नास्तीति वार्णादाङ्गमिति परिभाषाया अप्रवृत्त्या यणादेशो ध्रुवस्स्यादिति प्रकारद्वयन्न युक्तियुक्तम् ।

सूक्ष्मतत्त्ववेत्तारस्तु—यत्राङ्गशास्त्रे वार्णशास्त्रवैशिष्ट्यन्तत्र समाननित्तकत्वम् । वैशिष्ट्यञ्च स्वघटकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्य्याप्त्यधिकरणसमुदायपर्य्याप्त्यधिकिञ्चित्पदप्रयोज्यविषयताप्रयोजकपदघटितत्व स्वघटकसप्तम्यन्तपदप्रयोज्यविषयतापर्य्याप्त्यधिकरणसमुदायघटितपर्याप्तसप्तम्यन्तपदप्रयोज्यविषयताप्रयोजकपदघटितत्वैतदन्यतरसम्बन्धेन । कारक इत्यत्र वार्णशास्त्रम् "इको यणची"ति अच्पदप्रयोज्यविषयतापर्याप्त्यधिकरण -'अक"घटिताकारघटिते अङ्के अङ्गाधिकारीय "अचोक्ङिणती"ति

न चैवमपीयायेत्यादावियङ् दुर्लभस्तत्र कर्तव्ये वृद्ध्यादेः स्थानिवसप्तम्यन्तणिस्पदप्रयोज्यविषयताप्रयोजकपदघटितत्वेन परिभाषाप्रवृत्त्या वृद्धिः, एवञ्च प्राचीनमतमेव युक्तमिति ब्रुवन्ति ।

अस्मद्गुरुचरणास्तु—आङ्गशास्त्रविशिष्टत्वं वार्णशास्त्रे समाननिमित्तकत्वम् । वैशिष्ट्यञ्च स्वीयस्थानितापर्याप्त्यधिकरणवृत्तित्व स्वघटकसप्तम्यन्तपदप्रयोज्यविषयताश्रयघटकवृत्तित्वान्यतरसम्बन्धेन । स्वविशिष्टविषयताप्रयोजकसप्तम्यन्तपदघटितत्वसम्बन्धेन कारक इत्यादौ वृद्धिशास्त्रीयसप्तम्यन्तपदप्रयोज्यविषयताश्रयाकघटकाकारे यण्शास्त्रीयाच्पदप्रयोज्यविषयताया विद्यमानत्वेन समाननिमित्तकत्वेन यणम्बाधित्वाऽङ्गम्वृद्धि "रचो ञ्णिती"ति । इयायेत्यादौ वृद्धिनिरूपितस्थानितापर्य्याप्त्यधिकरणपरेकारे दीर्घशास्त्र "मकस्सवर्णे"इति, तद्घटकाच्पदप्रयोज्यविषयतायास्सत्त्वेन समाननिमित्तकत्वाद् वृद्धिः ।

नन्वेवमपि—ऊखतुरित्यत्राङ्गत्वाद्ध्रस्वे ह्रस्वम्विधाय "लक्ष्येलक्षण" न्यायेन पुनर्ह्रस्वाभाव इतिसिद्धान्तः । परन्तु दीर्घशास्त्रघटकसप्तम्यन्तपदप्रयोज्यविषयतायां ह्रस्वशास्त्रवैशिष्ट्याभावेन समाननिमित्तकत्वाभावात्परिभाषाया अप्रवृत्त्या ह्रस्वम्प्रबाध्य दीर्घे ह्रस्वापत्तिरिति चेन्न ? सप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयताया निवेशेन ह्रस्वविधायके पञ्चम्यन्ताक्पदप्रयोज्यविषयतायास्सत्त्वेन परिभाषाप्रवृत्तिस्सुघटैवेति ।

ऊखतुरित्यादौ उख उख अतुसिति दशायाम् "अभ्यासविकारेषु बाध्यबाधकभावो नास्ती"तिसिद्धान्ताद्धलादिश्शेषह्रस्वयोरेककालावच्छेदेन प्रवृत्तिसत्त्वात्खकारेण व्यवधानात्तस्मिन्काले न दीर्घप्राप्तिस्तदुत्तरं दीर्घे लक्ष्येलक्षणन्यायेन पुनर्न ह्रस्व इति लक्ष्यसिद्धिः । तत्र वार्णपरिभाषा न प्रवर्त्ततेऽत एवारुचे कौमुद्याम्परत्वादित्युक्तिः । दीर्घस्य परकालिकप्रवृत्तिमत्त्वादिति हि तदर्थः । एवञ्चात्र वार्णपरिभाषाया अप्रवृत्तिरेवेष्टेति समाननिमित्तकत्वं प्राचीनाभिमतमेव न्यायस्तरमिति वि० या० समूचुः ।

स्थानिवत्त्वेनाऽसवर्ण इति प्रतिषेधादिति—

ननु "आय" इत्यत्र सवर्णत्वबुद्धावपि तद्घटकाकारेऽसवर्णत्वस्य स्वतस्सत्त्वेनेय प्रवृत्तिर्निश्शङ्केति । नच स्थानिनि सति यद्भवति तदादेशेऽपि भवति स्थानिनि सति यन्नभवति तदादेशेऽपि न भवति इति तदर्थकरणादियङ् प्राप्नोतीति वाच्यम् ? देवयते क्विपि द्यूरित्यादावयादेशानापत्तेः । स्थानिनि णौ सत्यभवतोयादेशस्य आदेशेऽपि दुर्लभत्वात् । तथाचादेशे स्थानिवृत्तिधर्मसम्भावनायां यद्भवति तद्भवति यन्न भवति तन्न भवतीति वर्णनस्यावश्यकत्वेन इयायेत्यादौ सवर्णत्वसम्भावनायामपि तद्घटकाका-

त्वेनासवर्ण इति प्रतिषेधादिति वाच्यम् ? सूत्रारम्भसामर्थ्यादेव स्था-
निवत्त्वाप्रवृत्तेः ।

रमादायेयङ् सिद्ध्यत्येव । अत एवा "च॒परस्मिन्नि"तिभाष्ये परस्मिन् किं युवजानिः नैतदस्ति प्रयोजनं स्थानिवद्भावेऽपि आदेशघटकनकारमादाय लोपो भविष्यतीति सङ्गच्छत इति चेन्न ? स्थानी न निवृत्त आदेशो न जात इति बुद्ध्या यद्भवति तद्भवति यन्न भवति तन्न भवतीत्यर्थवर्णनेन शङ्काग्रन्थस्य सयुक्तिकत्वात् ।

अत एव एषो गमयतीत्यादौ "एतत्तदोरि"तिसुलोपो न । उक्तभाष्यन्त्वेकदेश्युक्तिरेव । युवजानिरिति फलस्यान्यथासिद्धत्वात्सिद्धान्तफलन्तु वैयाघ्रपद्य इति । अधिकं शब्देन्दुशेखरे ।

सूत्रारम्भसामर्थ्यादिति—ननु सूत्रन्तु इयर्त्तीत्यादौ चरितार्थम् , गुणात् पूर्वमभ्यासस्येत्त्वेऽपि उत्तरखण्डस्य स्थानिवद्भावेऽपि असवर्णाच्त्वस्य विद्यमानत्वात् । तथा इयेषेत्यत्र पूर्वं गुणे ततो द्वित्वे ह्रस्वे च तस्य स्थानिभूतादच॒पूर्वत्वेन इष्टत्वाभावात्स्थानिवद्भावाप्राप्तेः सूत्रञ्चरितार्थमिति चेन्न ? अभ्यासस्यानचीत्येव अभ्यासस्यानावित्येव वा न्यासेन सिद्धौ सूत्रवैयर्थ्यध्रौव्यात् । ज्ञापिते त्वियर्त्तीत्यादौ उत्तरखण्डस्य स्थानिवद्भावाऽप्राप्त्याऽकारेऽनचीति निषेधाऽपत्तेः तथा न्यासस्यायुक्तत्वात् ।

ननु इयायेत्यत्र "इ ऐ अ" इति जाते स्थानिवद्भावेनासवर्ण इति प्रतिषेधादियङोऽप्राप्तावपि पूर्वमायादेशे तत्रेकारनिष्ठसवर्णत्वातिदेशेऽपि तदवयवाकारेऽसवर्णत्वस्य विद्यमानत्वेनानचीति न्यासेन इधातोरवयवीभूतो य इकारस्तस्येयङ्, ऋधातोरवयवीभूतो य इकारस्तस्येयङित्यर्थकेन रूपसिद्धौ सावकाशत्वाभावेन सूत्रवैयर्थ्यसौष्ठवात् ।

न च मूलस्थसूत्रवैयर्थ्यादित्यस्य "ओ॒पुयण्जी"ति सूत्रवैयर्थ्यादित्यर्थः । अन्यथा अबीभवदित्यादौ "णिच्यच आदेशो न स्याद् द्वित्वे कर्त्तव्ये" इति सिद्धान्तेन भूशब्दस्य द्वित्वे वृद्ध्यावादेशयोर्ह्रस्वे स्थानिवद्भावेन 'अवर्णपरकपवर्गाऽसत्त्वेन सूत्रवैयर्थ्यसम्भवादिति वाच्यम् ? "परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथ॒प्रसंगे परबलीयस्त्वमि"तिभाष्यबलेन प्रतिपदोक्तत्वात्पूर्वं "णौ चङी"तिह्रस्वे पश्चाद् "ह्रस्व" इति ह्रस्वे स्थानिभूतादच॒पूर्वत्वेन इष्टत्वस्याभावेन स्थानिवद्भावाऽप्रवृत्त्या सूत्रवैयर्थ्याभावात् ।

ननु स्थानिवद्भावेन लघुपरकोऽभ्यासाभावे सन्वद्भावस्यापि न प्राप्तिरेवञ्च सूत्रवैयर्थ्यमाप्नोतीति चेन्न ? भूधातो॒क्विपि नपुंसकह्रस्वे णिचि चङि द्वित्वादिषु तेषां स्थानिवद्भावाल्लघुपरकाभ्यासत्वेन सन्वद्भावे दीर्घो लघोरिति

तच्च सामान्यापेक्षमभ्यासकार्यं तदुत्तरखण्डादेशस्य तत्कार्यप्रतिबन्धकीभूतं स्थानिवत्त्वं नेति । अत एवारतीत्यादौ यणादेशस्य स्थानिवत्त्वादभ्यासस्य ढ्लोप इति दीर्घो दुर्लभ इत्यपास्तम् । दीर्घविधौ तन्निषेधाच्च । अरियियादित्यत्र तु स्थानिवत्त्वेनेयङ् भवत्येव, तस्य स्थानिवत्त्वस्याभ्यासकार्यप्रतिबन्धकत्वाभावात् ।

---

दीर्घे तत्र स्थानिभूतादच:पूर्वत्वाभावेन स्थानिवद्भावाऽभावात्तत्र सूत्रसार्थक्यसम्भवात् । तथाच निरुक्तरीत्या "अभ्यासस्याऽसवर्णे" इति सूत्रारम्भसामर्थ्यादित्येव नागेशाभिप्राय इति युक्तिसम्मत:प्रकार: ।

"च्छ्वोरि"ति सूत्रे छकारात्पूर्वं तकारप्रश्लेषस्तद्विशिष्टस्य शकारोऽन्यथा तच्छ्रुति: । अकृतव्यूहपरिभाषया तु न वारणम् ? तस्या असत्त्वात् । न च समानस्थानिताकत्वाभावात्परिभाषाया अप्रवृत्त्या वैयर्थ्यापत्तिरिति वाच्यम्, समानस्थानिताकत्वस्यानित्यत्वमूलकत्वात् ।

न च सतुङ्निर्देशात्समानस्थानिताकत्व एवेयम्प्रवर्त्तत इत्येव ज्ञाप्यमिति वाच्यम् ! स्योन इत्यादौ यणुगुणयोस्समानस्थानिताकत्वेन एनया पूर्वं गुणापत्तेः । चञ्छम्यत इत्यादावेवं नुमः प्रवृत्तेरभावापत्तेश्च न तत्कल्पनमिति मूलाशय: ।

अभ्यासकार्य्य इति—नच अभ्यासेत्यस्याभ्यासत्वावच्छिन्नोद्देश्यताककार्ये इत्यर्थोऽत एव पपौ जह्रौ ययौ इत्यादिष्वत उपधाया इति वृद्धिर्न्न ।

नच यणोऽभ्यासत्वावच्छिन्नोद्देश्यकत्वाभावेन प्रतिबन्धकीभूतेति निवेशाऽभावेऽपि ईयतुरित्यादौ यण् स्यादेवेति वाच्यम ? सन्निपातपरिभाषयोपधावृद्धिवारणसम्भवात् । आदन्तमङ्गन्निमित्तीकृत्य जात औकारस्तद्विघातको नेति । तथा च ज्ञाप्यवचनेऽभ्यासत्वावच्छिन्नोद्देश्यताककार्य्यंति निवेशो निष्फल एवेति । एतत्फलन्तु निन्यतुरिति । तत्र स्थानिवद्भावेन "अनिदितामि"तिनलोपो न भवति । नलोपस्याभ्यासकार्य्यत्वाभावात् । उत्तरखण्डादेशस्येति । एतत्फलन्तु वव्रश्चेति । तत्र वकारस्य सम्प्रसारणनिषेधाय स्थानिवद्भावो भवति, उरदत्वस्योत्तरखण्डादेशत्वाभावात् नेदं वचनम्प्रवर्त्तत इति प्रतिबन्धकीभूतेति । विशेषणस्य फलन्तु अरियियात्, कटि वी इयाय, अचकाणत्, अर्तेर्यङ्लुगन्तात्लिङि द्वित्वेऽभ्यासस्य रिगागमे "रिङशयग्लिङ्क्षिव"तिरिङ् प्राप्त: इयङादेशश्च । परत्वादुत्तरखण्डस्य रिङादेशे तस्य स्थानिवद्भावेनाभ्यासस्येयङ् भवति । अनेन ज्ञाप्यवचनेन निषेधस्तु न भवति ? तस्य स्थानिवद्भावस्याभ्यासकार्य्यसाधकत्वमेव न प्रतिबन्धकत्वम् । एतद्विशेषणाभावे तु स्थानिवद्भावनिषेधस्यादतो विशेषणं सार्थकम् ।

एतत्सिद्धवचनफलन्तु—अचीकमत अतूतवत् । अत्र दीर्घसन्वद्भा-

इयं (१)चांगसम्बन्धिन्यांग एवेति स्वरितो वेति सूत्रे भाष्ये । तत्र हि कुमार्यै इत्यादौ यणुत्तरमाडुक्तः । इयं चानित्या च्छ्वोरिति (२)सतुग्निर्देशात् । अन्यथान्तरङ्गत्वात्पूर्वं तुकः शादेशे तुकोऽप्राप्त्या तद्वैयर्थ्यं स्पष्टमेवेत्यन्यत्र विस्तरः ॥ ५५ ॥

---

वयोऽकर्तव्यत्वे उत्तरखण्डाजादेशस्य स्थानिवद्भावाऽभावः ।

श्रीभैरवमिश्रास्तु—समाननिमित्तकत्व एवैषेति नियमो नास्ति नङः ङित्वाज्ज्ञापकात् । गुणाभावार्थमेव तत् । यदि समाननिमित्तकत्वमिति नियमस्स्यात्तदा तुकि छकारो निमित्तं गुणे तु प्रत्ययो निमित्तमिति व्याश्रयत्वादेतस्या अप्रवृत्त्याऽन्तरङ्गत्वात्तुकि गुणाऽप्राप्त्या ङित्वम्व्यर्थम् । तथा च व्याश्रयेऽसमाननिमित्तकत्वेऽपि परिभाषाप्रवृत्तौ तु वार्णतुकऽपूर्वमाङः गुणस्स्यादिति स्त्रांशे चरितार्थम् । व्याश्रये प्रवृत्तिफलञ्च च्यवन्ते प्लवन्ते शबेकादेशमन्तरङ्गम्बाधित्वा पूर्वं गुणस्य सिद्धिः ।

ननु व्याश्रयेऽपि प्रवृत्तौ तुगागमम्बाधित्वा संप्रसारणं स्यादिति चेन्न ? "प्रश्ने चासन्नकाले" इत्यादिनिर्देशाद्प्रवृत्तेः ।

वस्तुतस्तु—"स्वरितोवे"तिसूत्रभाष्याद् यत्र प्रवर्तते तत्त्वमाह इयञ्च अङ्गेत्यादिनेति ।

अङ्गसम्बन्धिन्याङ्ग एवेति—अङ्गनिष्ठोद्देश्यताके अङ्गाधिकारस्थे कार्ये एवेयम्परिभाषा प्रवर्त्तत इत्यर्थः । धर्मिग्राहकमानादिति यावत् । कुमार्य्यै इति प्रयोगे आङ्गत्वेऽपि अङ्गनिष्ठोद्देश्यताकत्वाभावात् पूर्वमाऽभावः ।

अङ्गसम्बन्धिन्याङ्ग एवेतिग्रन्थो न युक्तः ? एतस्या अनित्यत्वादेव कुमार्य्यै इत्यत्र पूर्वमाडभावः । ज्ञाने वारिणी इत्यादीनामसिद्ध्यापत्तेः । श्यादेशस्याङ्गसम्बन्धित्वाभावेनान्तरङ्गत्वाद् वृद्धियणोस्ततः श्यादेशेऽभीष्टरूपाऽसङ्गतेः । तस्य वैयर्थ्यन्तु न शङ्क्यम् ? हलन्ते चारितार्थ्यात् ।

---

(१) इयञ्चाङ्गसम्बन्धिन्याङ्ग एवेति—धर्मिग्राहकसाजात्यादिप्रमाणात् । अत्राङ्गसम्बन्धित्वमङ्गोद्देश्यकत्वम् । उद्देश्यता च साक्षादवयवद्वारा चातो न ज्ञापकत्वविरोधः । परन्त्वङ्गसम्बन्धिन्याङ्ग एवेति ग्रन्थो न युक्तः ? कुले दधिनी इत्यादौ श्यादेशात्पूर्वं वृद्धिसवर्णदीर्घयोरापत्तेः । हलन्तेषु श्यादेशस्य चारितार्थ्यादनित्यत्वेनैवानिष्टवारणं युक्तमित्याहुः ।

(२) सतुग्निर्देशादिति—अङ्गकार्यप्रवृत्ति विषयतासम्भावनायामपि वार्णकार्य्यस्य पूर्वमप्रवृत्तिरित्यनया परिभाषया बोध्यते । अतएवाध्यैयातामित्यादौ लावस्थायामटि लादेशोत्तरमियङादेशं प्रवर्त्तिष्यमाणमपेक्षते नतु ततऽपूर्वमाटश्चेति वृद्धिमित्याशयः । अन्यत्र विस्तर इति-सामान्यतोऽनेनानित्यत्वं साध्यत इत्येतदुक्तम्, समानस्थानिककार्य्यमात्रविषयकत्वमिति तु न युक्तम् ? चच्छ्म्यत इत्यादौ तुकऽपूर्वन्नुगागमानापत्तेः । स्योन इत्यत्र लघूपधगुणात्पूर्वमन्तरङ्गयणादेशानापत्तेश्च ।

नन्वेवं सेदुष इत्यादौ कसोरन्तरङ्गत्वादिटि ततः सम्प्रसारणेऽपीटः श्रवणापत्तिरिति चेत् ? अत्र केचित्—

अकृतव्यूहाः पाणिनीयाः ॥ ५६ ॥

न कृतो विशिष्ट ऊहो निश्चयः शास्त्रप्रवृत्तिविषयो यैरित्यर्थः । भाविनिमित्तविनाश इत्यध्याहारः । बहिरङ्गेणान्तरङ्गस्य निमित्तविनाशे पश्चात्सम्भाविते ऽन्तरंगं नेति यावत् ।

अत्र च ज्ञापकं समर्थानां प्रथमादिति सूत्रे समर्थानामिति । तद्धि सूत्थितादिभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् । अन्यथान्तरङ्गत्वाद्दीर्घे कृत एव प्रत्ययप्राप्त्या तद्वैयर्थ्यता स्पष्टैव । तत्र हि भाविन्यादिवृद्ध्या

---

नैर्बल्यसम्पादकत्वं पञ्चम्यर्थः, निरूपकत्वसम्बन्धावच्छिन्ना वार्णत्वावच्छिन्ना वार्णनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता विभक्त्यर्थनैर्बल्यसम्पादकत्वनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या आङ्गत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या बलीयस्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या समवायसम्बन्धावच्छिन्नैकत्वविशिष्टकर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थसत्तात्वावच्छिन्ना सत्तानिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

नन्वेवमिति—मनुष्योऽयम्प्रातरुत्थाय शरीरकार्याणि करोति ततस्सुहृदां ततस्सम्बन्धिनामिति पूर्वोक्तन्यायेन पूर्वोपस्थितनिमित्तककार्यस्य प्रथमं प्रवृत्तिवर्णने सतीत्यर्थः । अन्तरङ्गत्वात् पूर्वोपस्थितनिमित्तकत्वरूपान्तरङ्गत्वात् । सम्प्रसारणस्य तु विभक्त्युत्पत्त्यनन्तरं प्रवृत्तिरिति तात्पर्यम् । अत्रेति—उक्तपूर्वपक्षे, केचित्—दीक्षितप्रभृतयः । आहुरिति परेणान्वयः । अध्याहार इति—यथाश्रुतपरिभाषार्थवर्णने शास्त्राणाम्वैयर्थ्यापत्तिरिति भावः । बहिरङ्गेणेति—प्रयोज्यन्तृतीयार्थः बहिरङ्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्या यत्रान्तरङ्गनिमित्तविनाशसम्भावना तत्रान्तरङ्गं पूर्वन्न प्रवर्त्तत इत्यर्थः । फलितार्थकथनमेतत् । नैवात्र बहिरङ्गत्वमन्तरङ्गत्वं वा परिभाषाप्रवृत्तौ बीजम् । पश्चादिति—उत्तरकालिक इत्यर्थः, अत्र चेति—परिभाषायामित्यर्थः । समर्थानामिति—कृतसन्धिकार्यादिति यावत् । अन्यथेति—परिभाषाया असत्त्वे इत्यर्थः । अन्तरङ्गत्वादिति—प्राथमिकत्वमन्तरङ्गत्वम्, अप्राथमिकत्व-

सवर्णाच्त्वविनाशः स्पष्ट एव।

न चाऽऽगैकादेशप्रवृत्तिसमये वृद्ध्यप्राप्त्यैकादेशे कृत आदेशे वृद्धेः प्राप्तावपि तन्निमित्तविनाशाभाव इति वाच्यम्? तद्द्वारैव तन्निमित्तविनाशसत्त्वेनाक्षतेः।

न च सौतिथतौ बहिरङ्गतया वृद्धेरसिद्धत्वान्न तन्निमित्तविनाश इति वाच्यम्? समर्थग्रहणेनैतद्विषये तस्या अप्रवृत्तेरपि ज्ञापनात्।

यत्तु समर्थग्रहणेनान्तरङ्गपरिभाषाया अनित्यत्वमेव ज्ञाप्यत इति। तन्न? असिद्धपरिभाषया समकालप्राप्तबहिरङ्गस्य पूर्वं जातबहिरङ्गस्य चान्तरङ्गे कर्तव्येऽसिद्धत्वं बोध्यते न तु जातेऽन्तरङ्गे तस्य तत्त्वं बोध्यते, मानाभावात् फलाभावाच्च। एवं च सुत्थितादावेकादेशस्य परिभाषासाध्यत्वाभावेन तदनित्यत्वज्ञापनासम्भवात्।

अन्तरङ्गानपि विधीनित्यादेरप्यस्यामेवान्तर्भावः। एतत्प्रवृत्तौ च निमित्तविनाशसम्भावनापि निमित्तम्। अत एव गोमद्दण्डीत्यादौ हल्ङ्यादिलोपो न। अन्यथा हल्ङ्यादिलोपकाले सामासिकलुकोऽप्राप्त्वहिरङ्गत्वम्।

---

अच्त्वविनाश इति—"अल्पाच्तरमि"ति(१) सौत्रप्रयोगः, कथमनच्त्वमिति भाषाप्रयोगः। एवम्प्रमाणेनाचि पदत्वस्य वैकल्पिकत्वात्।* तद्द्वारैवेति-एकदेशविनाशद्वारैवेत्यर्थः। निमित्तविनाश इत्यस्य निमित्तविशिष्टो विनाश इत्यर्थः, बहिरङ्गेणान्तरङ्गनिमित्तविशिष्टविनाश इति वा प्रकारः। वैशिष्ट्यञ्च स्वप्रतियोगिकत्व स्वस्थानिकादेशप्रतियोगिकत्वैतदन्यतरसम्बन्धेन। प्रथमसम्बन्धफलम् सेदुष इति। द्वितीयसम्बन्धफलम् सौतिथितिरिति सम्बन्धद्वयनिवेशः। सेदुष इत्यत्र विनङ्क्ष्यतो वकारस्य निमित्तत्वेनानाश्रयणाद्वलादिलक्षणेडभावः। विनङ्क्ष्यतोऽनाश्रयणं लोकप्रसिद्धम्। लोको हि नङ्क्ष्यन्तम्प्रभुमुपेक्ष्य भाविनं प्रभुमाश्रयति, एतदभिप्रायको माघः।

छायामपास्य महतीमपि वर्तमानामागामिनीं जगृहिरे जनतास्तरूणाम्।
सर्वोऽपि नोपगतमप्यपचीयमानं वर्द्धिष्णुमाश्रयमनागतमभ्युपैतीति॥

वृद्धेरसिद्धत्वादिति—ननु जातस्य समकालप्राप्तस्य च बहिरङ्गस्यैवाऽसिद्धत्वमन्तरङ्गपरिभाषया भवति। प्रकृते च वृद्धेर्भविष्यत्प्राप्तिकत्वा-

---

(१) अल्पाच्तरमितिनिर्देशेन वृत्तिघटकाच्पदीयचकारगतचुत्वप्रयुक्तकार्यंन्न भवतीति ज्ञाप्यम्। अचोऽश्विवति भाष्ये एकशेषस्य वृत्तित्वाभावान्नाविरोधः। किञ्च अनेन निर्देशेन प्रत्याहारात्मकाच्पदीयचकारस्य सामान्येन चुत्वप्रयुक्तकार्यसमर्पकत्वाभावो ज्ञाप्यः।

* अत्र प्रमाणन्तु "हलोऽनन्तरा" इति सूत्रवृत्तौ अज्भिरव्यवहिता इति निर्देश एव। पल्पशायां कुत्वन्तु भाष्यकारस्य स्वतन्त्रत्वात्।

प्त्या तदुत्तरं चापहार्याभावादप्राप्त्या लोपस्यैवापत्तेः । अस्ति चात्रापि यदि लोपो न स्यात्तर्हि लुक् स्यादिति सम्भावना ।

अल्लोपोऽनइति सूत्रस्थतपरकरणं तु परिभाषानित्यत्वज्ञापनेन चरितार्थम् । तक्षयान इत्यादौ लोपवारणाय । अन्यथा दीर्घाभावे लोपसम्भावनयैतत्परिभाषाबलाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेवेत्याहुः ।

समर्थानामिति सूत्रे कैयटस्तु समर्थवचनेनेयं परिभाषा ज्ञाप्यते अकृतव्यूहाः पाणिनीया इति । तेन पपुष इत्यादावन्तरङ्गत्वात्पूर्वं कृतोऽपीडागमो निवर्तत इति वदन्न कृतो व्यूहो विशिष्टस्तर्को निमित्तकारणविनाशेपि कार्यस्थितिरूपो यैरित्यर्थमभिप्रैति । निमित्तापाये नैमित्तिकस्याप्यपाय इति यावत् । सूत्थितादिज्ञि वृद्धौ दीर्घनिवृत्तौ सावुत्थितिर्माभूदिति समर्थानामिति ।

लोकन्यायसिद्धश्चायमर्थः । तथा हि–लोके निमित्तं द्विविधं दृष्टम् । कार्यस्थितौ नियामकं तदनियामकं च । आद्यं यथा न्यायनयेऽपेक्षाबुद्धिस्तन्नाशे द्वित्वनाशाभ्युपगमात् । वेदान्तिनये प्रारब्धस्य विक्षेपस्थितिनियामकत्वं च प्रसिद्धमेव । द्वितीयं यथा दण्डादि, तन्नाशेपि घटनाशादर्शनात् । शास्त्रे लक्ष्यानुरोधाद्व्यवस्था । भाविनिमित्तविनाशे पूर्वमनुत्पत्तौ तु न कश्चिन्न्यायो नापि सम्प्रतिपन्नो दृष्टांतः । समर्थाना·

---

दीर्घापेक्षया कथमसिद्धत्वमिति चेन्न ? अन्तरङ्गत्वेन जिघृक्षितशास्त्रप्रवृत्तिकालावच्छेदेन उपस्थितबहिरङ्गत्वेन जिघृक्षितशास्त्रस्यैवान्तरङ्गपरिभाषयाऽसिद्धत्वविधानम् इति नियमः, उपस्थितिश्चान्तरङ्गपरिभाषयाऽसिद्धत्वविधानम् इति नियमः । उपस्थितिश्चान्तरङ्गप्रापकतया तत्प्रतिबन्धकतया च । एवंरूपेणोपस्थितिस्तयोरेव, तत्फलितैव जातेति । प्रकृते च स्वप्र त्तिप्रतिबन्धकपरिभाषाप्रवृत्तिकारणीभूताया वृद्धेऽपरिभाषाद्वारा स्वप्रतिबन्धकत्वेन दीर्घप्रवृत्तिसमये उपस्थितैव वृद्धिरित्यसिद्धत्वन्तस्या युक्तमिति तात्पर्य्यात् । परम्परयान्तरङ्गनिमित्तविनाशनिमित्तकत्वेन अन्तरङ्गदेशस्थत्वेन परिभाषाऽप्यन्तरङ्गा । तदुक्तञ्चैव तत्समकालप्राप्तवृद्धेरसिद्धत्वेन परिभाषाया अन्तरङ्गनिमित्तविनाशज्ञानाऽभावान्न प्रवर्त्तते सा । तथा च नात्र विवादऽकोपि दृष्टिपथगत इति । एतत्प्रवृत्तौ च निमित्ताविनाशसम्भावनापीति ।

पाणिनीया व्यवहारा अकृतव्यूहा भवन्ति ।

स्वरूपसम्बन्धावच्छिन्नपाणिनीयत्वावच्छिन्नप्रकारतानिरूपिता या व्यवहारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या अकृतव्यूहत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता

मित्यस्यापि लोकसिद्धार्थज्ञापनेन चारितार्थ्यसम्भवे लोकासिद्धापूर्वतादृशार्थज्ञापकत्वे मानाभाव इति तदाशय इति बोध्यम् ।

परे तु सेदुष इत्यादौ पदावधिकेऽन्वाख्याने सेद्वस् अस् इति स्थिते इट्सम्प्रसारणयोः प्राप्तयोः प्रतिपदविधित्वात्पूर्वं सम्प्रसारणे वलादित्वाभावादिटः प्राप्तिरेव नेति तत्सिद्धिरिति स्पष्टं समर्थानामिति सूत्रे कैयटे, असिद्धवत्सूत्रे कैयटे च स्पष्टमेतत् ।

यद्यपि प्रतिपदविधित्वमनवकाशत्वे सत्येव बाधकत्वे बीजं, तथापि पूर्वप्रवृत्तौ सावकाशत्वेपि नियामकं भवत्येवेति तदाशयः । निरूपितं चैतद्बहुशः शब्देन्दुशेखरादौ ।

समर्थानामिति सूत्रस्थसमर्थग्रहणं तु विष्णु इत्यादावकृतसन्धेः प्रत्ययदर्शनेन सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एव ।

ध्वनितं चेदं विप्रतिषेधसूत्रे भाष्ये । तत्र हि ऐक्षमाणिरित्यन्तरङ्गपरिभाषोदाहरणमुक्तम् ।

किंच विभज्यान्वाख्याने तु उत्थित अस् इ इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणाय समर्थग्रहणमित्यत्रैव कैयटे स्पष्टम् ।

अत एवासिद्धवत्सूत्रे वसुसम्प्रसारणमज्विधौ सिद्धं वक्तव्यं पपुष इत्यादौ वसोः सम्प्रसारणे कृते आतो लोपो यथा स्यादिति भाष्ये उक्तम् ।

पदस्य विभज्यान्वाख्याने पूर्वोक्तकैयटरीत्या पूर्वं सम्प्रसारणे इटोऽप्राप्तावुस्निमित्तक एवातो लोप इति तदाशयः । अन्यथान्तरङ्गत्वादिटि तन्निमित्तक एवातो लोप इति तदसङ्गतिः ।

अत एव चौ प्रत्यङ्गस्य प्रतिषेध इति वचनं वार्तिककृतारब्धं भाष्यकृता च न प्रत्याख्यातम् । प्रत्यङ्गमन्तरङ्गम् । अस्यां परिभाषायां सत्यां तु तद्वैयर्थ्यं स्पष्टमेव ।

अत एव च्छ्वोरिति सूत्रे अवश्यमत्र तुगभावार्थो यत्नः कार्योऽन्तरंगत्वाद्धि तुक् प्राप्नोतीति भाष्ये उक्तम् । एतत्सत्त्वे तु तुकोऽप्राप्त्या यत्नावश्यकत्वकथनमसङ्गतमिति स्पष्टमेव । न चैतदनित्यत्वज्ञापनार्थमेव तदिति तदाशयः ? अवश्यमेवेत्यक्षरस्वारस्यभङ्गापत्तेः । किंचानयैव "प्रत्ययोत्तरपदयोश्च "अदो जग्धिर्ल्यप्ति किती"त्यनयोश्चारितार्थ्येन तज्ज्ञापकवशाल्लुग्ल्यपोरन्तरङ्गबाधकता भाष्योक्ता भज्येत ।

किञ्चैषा भाष्ये न दृश्यते । तदुक्तमसिद्धवत्सूत्रे कैयटेन निमित्तापाये नैमित्तिकस्याप्यपाय इति परिभाषाया भाष्यकृतानाश्रयणादिति ।

---

या कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नाधेयतासम्बन्धावच्छिन्नप्रकारतानिरूपिता सत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

पदसंस्कारपक्षे हरिरित्यादौ विसर्ग(१) कृते ततो गच्छतीत्यादिसम्बन्धे हरिः गच्छतीत्याद्येव साधु। तद्विषये पदसंस्कारपक्षानाश्रयणं वेति दिक्॥ ५६॥

अन्तरङ्गादप्यपवादो बलीयान्॥ ५७॥

तत्रापवादपदार्थमाह—

येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति॥ ५८॥

परनित्यान्तरङ्गापवादानामिति क्रमप्राप्तमपवादपदार्थं परिष्कुर्वन्प्रमाणयति अन्तरङ्गादपीति। अपिना परनित्यादिसंग्रहः। तत्र अपवादपदार्थस्य सनिरूपकत्वेन यन्निरूपितापवादभूतं यच्छास्त्रं तत् तस्मात्परान्नित्यादन्तरङ्गादपि बलवत् अपवादत्वात्। अपवादः पक्षः, परादीनां संग्राहकोऽपिः हेतुरप्यपवादत्वरूप एवापवादशब्देनैव तदुक्तेः। अन्तरङ्गादप्यपवादो बलीयान्—नैर्बल्यसम्पादकत्वं पञ्चम्यर्थः, अन्तरङ्गत्वावच्छिन्नप्रकारतानिरूपिता या नैर्बल्यसम्पादकत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणापिशब्दार्थविशिष्टप्रकारता तादृशप्रकारतानिरूपिता या अपवादत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता या बलीयस्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः। तत्रेति—घटकत्वं सप्तम्यर्थः, अपवादपदार्थान्वयि यच्छब्देन तु पूर्वोक्तानुमानप्रयोग आरभ्यते नाप्राप्त इति। नन्वत्र नञोऽप्राप्तशब्देन समासे नलोपस्स्यात्, असमस्तनञा भेदबोधने प्रथमान्तप्रतियोगिवाचकपदसमभिव्याहारस्य कारणमिति सिद्धान्तेन समासाभावे त्वत्यन्ताऽभावाभावश्च स्यादिति वाच्यम्? पश्य लक्ष्मण नाराचैश्छिनद्मि

---

(१) पदसंस्कारपक्षे हरिरित्यादौ विसर्गे इति—नतु भाविन्यवसानभङ्गे विसर्जनीयस्य पूर्वमप्रवृत्तिः, अवसानभङ्गे वा तन्निवृत्तिरिति मन्यते इति ग्रन्थाशयः।

परमिदञ्चिन्त्यम् 'विसर्जनीयस्य सः' इति सूत्रभाष्यविरोधात्। तत्र हि खरीत्यस्यानुवृत्त्यभावेऽपि खर्य्येव विसर्ग इति प्रतिपादनाय खरवसानयोर्विसर्गम्विधाय तस्यानेन सत्वविधानादन्यतरस्मिन् सत्वम्। यदि च खरवसानयोरुभयोरपि सत्वं स्यात्तर्हि विसर्जनीयविधानं व्यर्थं स्यात् इत्युपक्रम्य "शर्परेविसर्जनीय" इति ज्ञापनात्खर्य्येव "विसर्जनीयस्य सः" इत्यस्य प्रवृत्तिः। विपर्यये तु खरि विसर्जनीयस्य सिद्धतया पुनर्विधानमनर्थकं स्यादित्युक्तम्। यद्यवसाननिमित्तकस्य विसर्जनीयस्य पदान्तरसमभिव्याहारमन्तरेणावसानभङ्गसम्भावनायामपि विसर्जनीयस्य पूर्वम् प्रवृत्तिः प्रवृत्तस्य निमित्तविनाशे निवृत्त्यभावस्तदा तादृशविसर्जनीयवदिते कः रुत्वरित्यादौ सत्वनिवृत्तये विसर्जनीयविधानेन सार्थकस्य शर्परे इत्यस्य भाष्यकारोक्ता ज्ञापकता भज्येत, तस्मादिह विसर्जनीयरहितस्य हरिर्गच्छतीत्यादेरेव साधुत्वम्। हरिः ओमित्यस्य वैदिकसम्प्रदायसिद्धस्य शिक्षाकारवचनबलादेवास्तु कथञ्चित्साधुत्वम्।

प्राप्त इति भावे क्तः, येन नाप्राप्त इत्यस्य यत्कर्तृकावश्यप्राप्तावित्यर्थः नञ्द्वयस्य प्रकृतार्थदार्ढ्यबोधकत्वात् ।

एवं च विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामान्यधर्माव-च्छिन्नोद्देश्यकशास्त्रस्य विशेषशास्त्रेण बाधः । तद्प्राप्तियोग्येऽचा-रितार्थ्यं ह्येतस्य बाधकत्वे बीजम् । अत एवायादय इति सूत्रे गोपायि-ष्यतीत्यादावायादीन्बाधित्वा परत्वात्स्यादयः प्राप्नुवन्तीत्याशङ्‌क्यानव-काशा आयादयः ।

---

कति विंशतीरिति वाक्ये नाराचशब्दस्य यथा सिद्धिः, नैकधाशब्दस्य यथा सिद्धिः, तथैव "सुप्सुपे"ति समासाभिधानात् पृषोदरादित्वकल्पनया नलोपा-भावसिद्धेश्च । भावे क्त इति—"नपुंसके भावे क्तस्य योगे षष्ठ्या उपसंख्यान-मि"ति वार्त्तिकेन छात्रस्य हसितमितिवत् षष्ठी तु न भवति शेषत्वविवक्षया वार्त्तिकस्य भाष्ये प्रत्याख्यानात् ।

न च शेषत्वविवक्षया षष्ठी स्यादिति वाच्यम् ? वैवक्षिकत्वेन शेषत्वस्य प्रकृतेऽविवक्षितत्वात् । येनेति कर्त्तरि तृतीया तदाह यत्कर्त्तृकावश्यप्राप्ता-विति । नच "लुम्पेदवश्यमः कृत्ये तुङ्काममनसोरपि । समो वा हिततयो-र्मांसस्य पचियुड्घञोरि"ति भाष्यवचनेन कृत्यप्रत्यय एव मलोपविधानेन कथ-मयं प्रयोग इति वाच्यम् ? अवश्यंशब्दसमानार्थकावश्यशब्देन समासे रूप-सिद्धेः । नच तत्पर्य्यायवाचकश्शब्दो नास्तीति वाच्यम् ? "आवश्यकाधमर्ण्ययो-रि"ति निर्देशात् । आवश्यकप्राप्ताविति पाठस्यैव पुरातनत्वाच्च । फलितमाह एवञ्चेति । विशेषशास्त्रोद्देश्यो यो विशेषधर्मावच्छिन्नस्तद्वृत्तिर्य्यस्सामान्य-धर्मस्तदवच्छिन्नोद्देश्यताकं यच्छास्त्रं तस्य विशेषधर्मावच्छिन्नोद्देश्यताक-शास्त्रेण बाधः । शास्त्रं स्वीयोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्नोद्देश्य-ताकशास्त्रस्य बाधकम् इति यावत् । यथा ङेरामि"ति विशेषशास्त्रोद्देश्य-विशेषधर्मावच्छिन्न—आबन्तात्परङित्तद्वृत्तिस्सामान्यधर्मो ङिद्वचनत्वम् । तदवच्छिन्नोद्देश्यताक "याडाप" इत्यस्य "ङेरामि"त्यनेन बाधः । तथा "वृ-द्धिरेची"ति शास्त्रीयोद्देश्यतावच्छेदकमेजव्यवहितपूर्वत्वविशिष्टमात्वन्तद्व्या-पकमजव्यवहितपूर्वत्वविशिष्टात्वमित्या"द्गुण" इत्यस्य "वृद्धिरेची"ति बाध-कम् । एवमा"मि सर्वनाम्नस्सुट्' ह्रस्वनद्यापो नुडि"ति सुट्नुटोरपि बाध्य-बाधकभावः ।

ननु सामान्यधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य विशेषशास्त्रेण बाध इत्ये-तावन्मात्रकल्पनेनैवाभीष्टसिद्धौ वृत्त्यन्तनिवेशो निरर्थक इति चेन्न ? यत्सम्ब-न्धावच्छिन्नोद्देश्यतावच्छेदकता तत्सम्बन्धावच्छिन्नैव व्याप्यता व्यापकता च प्राप्नोति नियमस्सार्वत्रिकः । एवञ्च 'एकाचो द्वे प्रथमस्य' अजादेर्द्वितीय-

स्य'प्रथमैकाच्त्वद्वितीयैकाच्त्वयोरुद्देश्यतावच्छेदकस्वरूपसम्बन्धेन सामानाधिकरण्यमेव नास्तीति द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधो न स्यात् ।

अत एवात्र परिभाषायामुद्देश्यतावच्छेदकतानवच्छेदककालिकादिसम्बन्धेतरस्वाव्यवहितोत्तरत्वस्वघटकाच्त्ववदुत्तरत्वादिसम्बन्धैरपि व्याप्यव्यापकभावसंग्रहार्थन्तन्निवेशस्य सफलत्वात् । तथाच स्वावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धेन प्रथमैकाच्त्वे द्वितीयैकाच्त्वव्यापकत्वम् । स्वाधिकरणप्रथमैकाज्वृत्ति—अत्यन्ताभावाऽप्रतियोगित्वस्य विद्यमानत्वात् । तथैव द्वितीयैकाच्त्वे प्रथमैकाच्त्वव्याप्यत्वमपि स्वावच्छिन्नाऽव्यवहितोत्तरत्वसम्बन्धेन स्वाभाववद्वृत्तित्वरूपमिति द्वितीयद्विर्वचनेन प्रथमद्विर्वचनस्य बाधसिद्धयर्थम्वृत्यन्तनिवेशस्य सौष्ठवात् ।

अत्र विशेषः—ननु उद्देश्यतावच्छेदकधर्मयोर्यो व्याप्यव्यापकभावस्तस्य बाधप्रयोजकत्वं स्यात्तर्हि "अचोरहाभ्यामि"त्यत्र साक्षादुद्देश्यताया यरि पर्य्याप्तत्वात् । रेफे तूद्देश्यता नास्तीति, "नेमौ रहौ कार्य्यिणौ किन्तर्हि निमित्तमिमौ द्विर्वचनस्य"इतिभाष्यवार्त्तिकेन निमित्ततया उद्देश्यताया बाधकथनपरभाष्यासङ्गतिः । यदि च उद्देश्यदलप्रविष्टयोर्ययोः—कयोश्चिद्धर्मयोर्यो व्याप्यव्यापकभावस्तस्य बाधप्रयोजकत्वमिति कथ्यते तर्हि "अनुशतिकादिषु" पुष्करसच्छब्दपाठेनादिवृद्धिरन्त्योपधावृद्धो बाधत"इति भाष्यविरोधस्तथाहि उद्देश्यदलप्रविष्टयोस्तद्धितत्वञ्णित्प्रत्ययत्वयोर्व्याप्यव्यापकभावापन्नत्वेन बाधोपपत्तौ ज्ञापकानुसरणस्य वैयर्थ्यापत्तिरिति चेन्न ? शाब्दबोधीयविषयतयोर्यो व्याप्यव्यापकभावस्तस्यैव बाधप्रयोजकत्वमिति कल्प्यते । व्याप्यतावच्छेदके व्यापकतावच्छेदकसम्बन्धश्च विषयतात्वम्, व्यापकतावच्छेदके व्याप्यतावच्छेदकसम्बन्धश्च स्वरूपमेवेति । विषयता च विशेष्यताख्या प्रकारताख्या संसर्गताख्या च । सा च विषयता विशेषणेन विशेष्येणेतरबाधादिना च सङ्कुचिता भवतीति विषयतयोरेव व्याप्यव्यापकभावो बाधप्रयोजकोऽर्थात्सामान्यविषयताकशास्त्रस्य विशेषविषयताकशास्त्रेण बाध इति निष्कर्षः । "अचोरहाभ्यामि"त्यत्र रपदप्रयोज्यविषयताऽजव्यवहितपरत्वविशिष्टयरव्यवहितपूर्वत्वविशिष्टरेफे एवास्ति, तद्व्यापकता च "अनचि" इत्यत्रास्ति अजव्यवहितोत्तरत्वविशिष्टयर्पदप्रयोज्यविषयतायामिति । व्याप्यतावच्छेदको व्यापकतावच्छेदकश्च सम्बन्धस्त्वरूपसम्बन्ध एवेति यावत् । एवञ्च व्यापकत्वेन जिघृक्षितं यच्छास्त्रन्तदीयोद्देश्यदलीयविषयतानिरूपितव्यापकतावद्विषयताप्रयोजकपदघटितत्वम्वाध्यत्वे बीजम् । "एकाचो द्वे प्रथमस्य, अजादेर्द्वितीयस्ये"त्यादावजादेरित्येतद्घटकाच्पदप्रयोज्यविषयताव्यापकत्वमेकाज्घटकाच्पदप्रयोज्यविषयतायामस्तीति बाध्यबाधकभावसङ्गत्या लक्ष्यसिद्धिः ।

नन्वेवमपि "नेमौ रहौ कार्यिणौ निमित्तन्द्विर्वचनस्ये"तिभाष्यसिद्धान्तेन "अचो रहाभ्यामि"ति रत्वावच्छिन्ननिमित्ततया भाष्योक्तबाधप्रकारो न सिद्ध्येत्। "यणो मयो द्वे वाच्ये"इति शास्त्रीयमयपरत्वविशिष्टयण्त्वावच्छिन्नकार्य्यितायाम् "अचो रहाभ्यामि"ति अजव्यवहितोत्तरत्वविशिष्टरेफहकारान्यतरोत्तरत्वविशिष्टयत्वावच्छिन्नकार्यितायां स्वाश्रयातिरिक्तवृत्तित्वबोधनेऽपि मद्रहृदः धात्र्यंशः अर्हणेत्यादिषु "अचो रहाभ्यामि"ति "यणो मयो द्वे वाच्ये, अनचि चे"तिशास्त्रैर्द्वित्वविधानस्याऽनिवार्य्यत्वमिति चेन्न? अत्र बाध्यबाधकभावप्रकरणेऽस्ति न्यायद्वयम्, तक्रकौण्डिन्यन्यायः माठरपरिवेषणन्यायश्च। दधि ब्राह्मणेभ्यो दीयतान्तक्रं कौण्डिन्याय ब्राह्मणायेति प्रथमाकारः' सर्वे ब्राह्मणा भोज्यन्तांमाठरकौण्डिन्यौ परिवेविषातामिति द्वितीयाकारः। आद्यन्यायेन स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च बाध इति स्पष्टीकरिष्यते। द्वितीयेन हि व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाधो बोध्यते। व्यापकधर्मावच्छिन्नविषयतायां स्वावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वबोधनमेवेह बाध इति फलितार्थः। तथाच द्वितीयन्यायेन यत्णत्वयत्वावच्छिन्नकार्यिताया रत्वावच्छिन्ननिमित्ततया बाधेन रेफातिरिक्तस्यैव यरो द्वित्वविधानेनाक्षतेः। बाध्यबाधकयोरेकप्रकरणस्थत्वं यत्र तत्रैवायन्न्यायः। यथा "अचो रहाभ्यामि"ति "दीर्घादाचार्य्याणामि"ति "एरच्" इको यणचो"त्यादिभिन्नप्रकरणस्थानाम्बाध्यबाधकभावसंसिद्धये नायन्न्यायःप्रवर्त्तते। मद्रहृदः अर्हणेत्यादिषु द्वित्ववारणपरभाष्यप्रामाण्यात्।

नन्वेतावता प्रबन्धेन तद्व्यक्तित्वावच्छिन्नविषयतयोरेव व्याप्यव्यापकभावो बाधप्रयोजक इत्येव फलति। तथाच "अकस्सवर्ण"इत्यनेन "इको यणची"ति सूत्रबाधो न स्यात्। दैत्यारिरित्यादावक्पदप्रयोज्यविषयतायास्सत्वेऽपीक्पदप्रयोज्यविषयता नास्ति। तथाचाक्पदप्रयोज्यविषयतानिरूपितव्यापकत्वस्येक्पदप्रयोज्यविषयतायामभावेन कथं बाध्यत्वङ्किन्त्वक्पदप्रयोज्यविषयतानिरूपितव्यापकत्व "माद्गुण"इत्येतद्घटकात्पदप्रयोज्यविषयतायाम्बरीवर्त्ति।

अयमभिप्रायः, स्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वमेव व्यापकत्वं, सामानाधिकरण्यञ्च अत्र विषयतासम्बन्धेनैव। तथाच विषयतासम्बन्धेन अकोऽधिकरणं यत् दैत्यारिरिति, तत्र "इको यणची"तीक्पदप्रयोज्यविषयता नास्त्येवेत्यव्यापकत्वम्। तथा "आद् गुण" इत्यस्य श्रीश इत्यादौ विषयता नास्त्येवेति तद्व्यक्तित्वावच्छिन्नविषयतयोस्सर्वत्र भिन्नत्वादिति चेन्न? तद्व्यक्तित्वावच्छिन्नविषयतयोर्व्याप्यव्यापकभावो बाधप्रयोजक इति नियमे प्रमाणन्नास्ति किन्तु योग्यधर्मावच्छिन्नविषयतयोर्व्याप्यव्यापकभावो बाधप्रयोजक इत्येव सिद्धान्तः। एवञ्च दीर्घीयविषयताधिकरणे दैत्यारिश्श्रीश इत्यादौ तत्त-

द्विषयतात्वेन तयोरभावेऽपि अन्यतरविषयता नास्तीत्याकारकाभावस्य धर्तुमशक्यत्वेनान्यतरत्वस्याभावप्रतियोगितानवच्छेदकत्वेन स्वसमानाधिकरणवृत्त्यत्यन्ताभावाप्रतियोगित्वरूपव्यापकत्वस्योभयत्र सत्त्वेन क्षतिविरहात् ।

ननु यत्किञ्चिद्धर्मावच्छिन्नविषयतयोर्व्याप्यव्यापकभावस्य बाधप्रयोजकत्वे यणूशास्त्रीयविषयताम्प्रति दीर्घशास्त्रीयविषयतायाः प्रमेयत्वेन वाच्यत्वेन अभिधेयत्वेन ज्ञेयत्वेन वा व्यापकत्वन्नतु व्याप्यत्वम्विनिगमनावैकल्येन येन केनापि धर्मेण यत्र कुत्रापि व्यापकत्वसिद्धौ "अकःसवर्ण" इत्यादेर्व्याप्यत्वाभावेन कथम्बाध्यबाधकभाव इति चेन्न ? दीर्घविधायकशास्त्रादिवैयर्थ्यापत्तावेवं रूपेण सामान्यधर्मेण व्यापकत्वमारोप्य बाध्यबाधकभावस्येष्टस्य खण्डनानर्हत्वात् । व्यापकतावच्छेदको धर्मो विषयतागततद्व्यक्तित्वरूपस्तद्घटितरूपत्वोऽपि व्याप्यघटित एवेत्याकूतम् ।

नन्वन्यतरत्वेनापि व्यापकत्वमादाय बाध्यत्वस्वीकारे "आमि सर्वनाम्नःसुडि"ति शास्त्रनिरूपितव्यापकत्वं "ह्रस्वनद्यापो नुडि"ति "बहुवचने झल्येदि"त्येनयोरप्यापद्येत । आमव्यवहितपूर्वत्वविशिष्टसर्वनामसंज्ञकविहितावर्णाव्यवहितोत्तरत्वविशिष्टाम्त्वावच्छिन्नविषयतानिरूपितव्यापकत्वस्य "ह्रस्वनद्याप" इति सूत्रघटकह्रस्वपदप्रयोज्यविषयतायां "बहुवचने झल्येदि"त्येतद्घटकात्पदप्रयोज्यविषयतायाञ्च विद्यमानत्वात् तत्राप्यन्यतरविषयता नास्तीत्यभावस्य वक्तुमशक्यत्वात् ।

तथाच तत्राप्यनिष्टं व्यापकत्वं स्यादिति "बहुवचने झल्येदि" त्यस्यापि बाध्यत्वापत्तौ सर्वेषामित्यादावेत्वन्न स्यात् । किञ्च "कुप्वोः क पौचे"तिकवर्गपवर्गान्यतराऽव्यवहितपूर्वत्वविशिष्टविसर्गत्वावच्छिन्नविषयतानिरूपितव्यापकत्वस्य "विसर्जनीयस्य सः" खरव्यवहितपूर्वत्वविशिष्टविसर्जनीयत्वावच्छिन्नविषयतायां "शर्परे विसर्जनीयः" शर्परखरव्यवहितपूर्वत्वविशिष्टविसर्जनीयत्वावच्छिन्नविषयतायाञ्च विद्यमानत्वेन बाधापत्तौ वासःक्षौममद्भिःप्सातमित्यादावपि जिह्वामूलीयाद्यापत्तिः, तत्राप्यन्यतरविषयता नास्तीत्यभावस्य धर्तुमशक्यत्वेन सुतरां व्यापकत्वाद्वाध्यत्वन्दुर्वारमिति । किञ्च विनिगमनाविरहेणान्यतरविषयता नास्तीतिवत् अन्यतमत्वेनापि व्यापकत्वं वक्तुं शक्यत एव । तथाहि "एरनेकाचि"ति शास्त्रीयविषयतागुणीयविषयतायणीयविषयतानामन्यतमत्वेन व्यापकत्वमादाया "कःसवर्ण" इति दीर्घीयविषयतया गुणादेरिव "एरनेकाच" इति यणोऽपि बाधाऽपत्त्या वातप्रम्योत्यत्र यणश्रु तिरिष्टाऽनिष्टा स्यादिति चेन्न ? व्याप्यत्वेन जिघृक्षितशास्त्रदलीयविषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकधर्मविशिष्टधर्मभिन्नधर्मावच्छिन्नव्यापकताकविषयताप्रयोजकपदघटितशास्त्रस्य बाधः । वैशिष्ट्यञ्च स्वव्याप्य-

स्वाभाववत्त्व–स्वव्यापकत्वैतदुभयसम्बन्धेन "विसर्जनीयस्य स" इत्येतद्घटकविसर्जनीयविषयतावृत्तितद्व्यक्तित्वम् तद्व्याप्यत्वाभाववत्त्वं तद्व्यापकत्वञ्च "विसर्जनीयस्य सः" शर्परे" इत्येतदुभयविषयतावृत्त्यन्यतरत्वे इति धर्मविशिष्टो धर्मोऽन्यतरत्वन्तद्भिन्नो धर्मो निरुक्ततद्व्यक्तित्वम् तदवच्छिन्नव्यापकताकविषयताप्रयोजकविसर्जनीयपदघटितशास्त्रस्य "विसर्जनीयस्य स" इत्यस्यैव बाधो न तु "शर्परे" इत्यस्य । अन्यतरत्ववद्विषयताप्रयोजकयोरेव बाधो नत्वन्यतमत्ववद्विषयताप्रयोजकस्य "एरनेकाच" इत्यस्येति वातप्रम्यीत्यस्य सिद्धिः ।

नन्वेवमपि "उरर्ण्वृ"ति शास्त्रे इररारामपवाद इति लिखितम्, तत्र "मृजेर्वृद्धिः" उपधायाश्च 'पुगन्तलघूपधस्ये'ति तन्न सिद्धयेत् । तत्र व्यापकतावच्छेदको धर्मो हि पुगन्तोपधायाश्चेत्येतद्घटकपदप्रयोज्यविषयतावृत्त्यन्यतरत्वम्, तद्विशिष्टो धर्मस्त्रितयवृत्त्यन्यतमत्वन्तद्भिन्नो धर्मोऽन्यतरत्वम्' तद्धर्मावच्छिन्नव्यापकताकविषयताप्रयोजकपदघटितोपधायाश्च पुगन्तेत्येनयोरेव बाधो नतु "मृजेर्वृद्धि"रित्यस्येति कौमुदीग्रन्थोऽनुपपन्न इति चेन्न ? परनित्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथःप्रसङ्गे परबलीयस्त्वमिति सिद्धान्तेन "उरर्णे"ति सूत्रे ऋकारस्य चक्रो गोश्च प्रतिपदोक्तत्वेनोपादानात्प्रतिपदविधित्वेनैव त्रयाणाम्बाध इति ग्रन्थसङ्गतेः ।

किञ्च व्याप्यत्वेन जिघृक्षितशास्त्रदलीयविषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकविशिष्टाऽवृत्तिधर्मावच्छिन्नव्यापकताकविषयताप्रयोजकपदघटितशास्त्रस्य बाध इत्यर्थः । वैशिं स्वानाश्रयत्व–स्वाश्रयाऽव्याप्यत्वैतदुभयसम्बन्धेन । पूर्वोक्तव्यापकतावच्छेदकीभूतधर्मान्यतरत्वविशिष्टाऽवृत्तिधर्मोऽन्यतमत्वम् । तत्र स्वानाश्रयत्वेऽपि स्वाश्रयपुगन्तेतिसूत्रघटकेकपदप्रयोज्यविषयताव्याप्यत्वमेव मृज्पदप्रयोज्यविषयताया व्याप्यत्वादिति स्वविशिष्टा उदासीनविषयता तद्वृत्ति अन्यतमत्वमिति त्रयाणाम्बाधेन ग्रन्थसङ्गतेश्च । एतयैव दिशा यण्गुणोभयबाधकत्वम "कस्सवर्ण" इत्यस्येष्टम् । तत्र व्यापकतावच्छेदकीभूतो धर्मोऽन्यतरत्वम् तद्विशिष्टाऽवृत्तिधर्मस्स एव तस्य स्वाश्रयाव्याप्यवृत्तित्वेऽपि स्वानाश्रयवृत्तित्वाभावादित्युभयसम्बन्धेन स्वविशिष्टा उदासीनविषयता तद्वृत्तित्वमेवेति "अतोगुण" इत्यस्य वृद्धिदीर्घोभयबाधकत्वम् । तत्र व्यापकतावच्छेदकीभूतो धर्मो "वृद्धिरेचि" अकस्सवर्ण इति शास्त्रीयविषयतावृत्त्यन्यतरत्वम् तदाश्रयाऽव्याप्या "कस्सवर्णे" आद्गुणः, वृद्धिरेचि" इति घटक अत् अक् पदप्रयोज्यविषयता तद्वृत्तिधर्मो निरुक्तान्यतरत्वमित्युभयबाधः । "आद्गुण" इत्यस्य तु स्वातन्त्र्येणैव बाधः । एवमेव "ङेराम्नद्याम्नीभ्य" इत्यस्य याड्स्याडुभयबाधकत्वम् । याड्विधिघटकापप-

दप्रयोज्यव्यापकविषयतावृत्तितद्व्यक्तित्वानाश्रयत्वेऽपि तदाश्रयव्याप्यत्वसत्त्वे-नोभयसम्बन्धेन स्वविशिष्टोदासीनविषयता तद्वृत्त्यन्यतरत्वधर्मावच्छिन्नव्या-पकताकविषयताप्रयोजकपदघटितत्वेन याट्स्याड्विधायकशास्त्रयोर्बाधः।

नन्वेवमपि "विसर्जनीयस्य सः' शर्परे विसर्जनीयः" एतद्घटकविसर्जनी-यपदप्रयोज्यविषयतावृत्त्यन्यतरत्वम् उक्तविषयतायास्तद्व्यक्तित्वानाश्रयत्वेऽपि स्वाश्रयव्याप्यतया उभयसम्बन्धविशिष्टविषयता उदासीना तद्वृत्तित्वेन "कु-प्वोरि"त्यनेनोभयबाधस्स्यादिति चेन्न ? 'शर्परे' इति सूत्रदृष्ट्या "कुप्वोरि" त्यस्याऽसिद्धत्वेन बाधकत्वाऽयोगात्।

नन्वेवं "विसर्जनीयस्य स" इत्येतद्दृष्ट्यापि "कुप्वोरि"त्यस्याऽसिद्धत्वं स्यादिति चेन्न ? "कुप्वोरि"तिसूत्रारम्भसामर्थ्यात्तद्दृष्ट्याऽसिद्धत्वाभावक-ल्पनेनाक्षतेः।

नन्वेवमपि "ङेराम्नि"तिसूत्रेण "गुण" इति गुणबाधकत्वन्न सिद्ध्येत्। तथाहि व्यापकतावच्छेदकीभूतो धर्मो "याडाप" इति सूत्रघटकङिद्वचनपदप्रयो-ज्यविषयतावृत्तितद्व्यक्तित्वम्। तद्विशिष्टा "आद्गुण" इति शास्त्रघटकपद-प्रयोज्या विषयता स्वानाश्रया स्वाश्रयाऽव्याप्या चेति तद्वृत्तितद्व्यक्तित्वम् तद्वृत्तिर्नेति संघटनादिति चेन्न ? व्याप्यत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीय-विषयतानिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदकधर्म विशिष्टभिन्नधर्मावच्छिन्न-व्यापकतावद्विषयताप्रयोजकपदघटितशास्त्रस्य बाधः। वैशि० स्वव्यापकत्व स्वावच्छिन्नाऽभाववद्वृत्तित्वैतदुभयसम्बन्धेन। तथाच "आद्गुण" इति शास्त्रघटकात्पदप्रयोज्यविषयतावृत्तितद्व्यक्तित्वस्य ङिद्वचनपदप्रयोज्यविषयता-वृत्तितद्व्यक्तित्वावच्छिन्नविषयताऽभाववदुपइन्द्रवृत्तिविषयतावृत्तित्वेऽपि स्व-व्यापकत्वाभावेन स्वविशिष्टभिन्नमेव अत्पदप्रयोज्यविषयतावृत्ति तद्व्यक्ति-त्वम् इति तदवच्छिन्नव्यापकतावद्विषयताप्रयोजकपदघटिताद्गुण इत्येत-द्बाधकत्वसौष्ठवात्।

केचित्तु—बाधकत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविशिष्टान्यतमत्व-वद्विषयताप्रयोजकपदघटितत्वम्बाध्यत्वे निदानम्। वैशिष्ट्यञ्च स्वनिष्ठव्याप्य-तानिरूपितव्यापकतावच्छेदकत्व—स्वनिष्ठव्याप्यतानिरूपितव्यापकतावच्छेदक-विशिष्टाभाववत्त्वैतदुभयसम्बन्धेन। व्यापकतावच्छेदकवैशिष्ट्यञ्च स्वाभा-ववद्वृत्तित्व—स्वाधिकरणवृत्त्यत्यन्ताभावप्रतियोगित्व—स्वाश्रयव्यधिकरणवि-षयतावृत्तित्वैतत्त्रितयसम्बन्धेन। आमि सर्वनाम्नस्सुडिति सूत्रे आत्पदप्रयोज्य-विषयताव्यापकतावच्छेदकं यत् ह्रस्वपदप्रयोज्यविषयतामात्रवृत्त्यन्यतमत्वं निरुक्तोभयसम्बन्धेन तद्वैशिष्ट्यस्यैव सत्त्वेनाक्षतेः।

एवं "कुप्वोः ≍क ≍पौ चे"त्यत्रापि वारणम्। इररारामपवाद इति ग्रन्थ-

सिद्धये स्वाश्रयव्यधिकरणविषयतावृत्तित्वनिवेश इत्यूचुः।

श्रीपूज्यचरणविजयाकारास्तु—स्वीयविषयताविशिष्टधर्मवद्विषयताकशास्त्रस्य स्वेन बाध इत्यर्थः। वैशिष्ट्यञ्च स्वव्यापकतावच्छेदकत्वस्वव्यापकतावच्छेदकविशिष्टभिन्नत्वोभयसम्बन्धेन स्वविशिष्टविशिष्टभिन्नत्वसम्बन्धेन, उभयत्र सम्बन्धघटकवैशिष्ट्यञ्च स्वव्यापकत्व-स्वभिन्नत्वोभयसम्बन्धेन। अथवा स्वविशिष्टवैशिष्ट्ये स्वव्यापकाऽव्यापकत्वरूपतृतीयसम्बन्धः।

परोक्षालेखप्रकारः।

अन्तरङ्गादप्यपवादो बलीयानिति। अपवादपदार्थस्य सनिरूपकत्वात् यन्निरूपितापवादभूतं यच्छास्त्रन्तत्तस्मात्परान्नित्यादन्तरङ्गादपि बलवदित्याशयः। येन नाप्राप्त इति—येन लक्षणसमुदायेन, येन एकेन लक्षणेनेति वा तात्पर्य्यद्वयम्। तत्राद्यतात्पर्य्ये बाध्यसामान्यचिन्तापक्षो बाध्यविशेषचिन्तापक्षश्च। स्वविषये यत् यत् प्राप्तन्तत्तत्सर्वं बाध्यमिति बाध्यसामान्य· इदमिदं प्राप्तन्तत्र किम्बाध्यं किन्न बाध्यमिति बाध्यविशेषचिन्तापक्षः। बाध्य चिन्तापक्षः। स्वविषये सामान्यचिन्तापक्षस्योदाहरणम् "अचिर ऋत" इति रादेशो गुणदीर्घोत्वानां सर्वेषाम्बाधकः। नाप्राप्त इत्यत्र नैकधा नाराच इत्यादिप्रयोगवत् निषेधार्थकनञ्शब्देन "सुप्सुपे"ति समासः। पृषोदरादित्वान्नलोपाभाव इति निष्कर्षः।

परिभाषाफलितार्थश्च तत्तच्छास्त्रन्तत्तच्छास्त्रीयोद्देश्यतावच्छेदकव्यापकधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य बाधकम्, उदाहरणं यथा "वृद्धिरेचो"ति शास्त्रस्योद्देश्यतावच्छेदकमेजव्यवहितपूर्वत्वविशिष्टात्वन्तद्व्यापकञ्च "आद्गुण" इति अजव्यवहितपूर्वत्वविशिष्टात्वन्तस्य "वृद्धिरेचो"ति बाधकम्।

नन्वेवं स्वीकारे "अजादेर्द्वितीयस्य" द्वितीयैकाज्निरूपितव्यापकत्वस्य "एकाचो द्वे प्रथमस्य" प्रथमैकाच्त्वेऽभावात्कथम्बाध्यत्वं यथा ऊर्णुधाताविति चेन्न ? स्वघटकाच्त्ववदुत्तरत्वसम्बन्धेन प्रथमैकाचो व्यापकत्वम्। तेन बाध्यत्वसिद्धिः।

नच मद्रह्रदः भद्रह्रद इत्यादौ परस्य रेफस्य "अचो रहाभ्यान्द्वे" इत्यनेन द्वित्वङ्कुतो न, धात्रंश इत्यादौ "यणो मय" इति वार्तिकेन रेफस्य तथा अर्हेत्यादौ "वनचि चे"ति द्वित्वङ्कथन्नेति वाच्यम् ? माठरपरिवेषणन्यायेनाऽदोषात्। न्यायस्वरूपञ्च सर्वे ब्राह्मणाः भोज्यन्तां माठरकौण्डिन्यौ परिवेविषाताम् माठरकौण्डन्यब्राह्मणातिरिक्तत्वेन ब्राह्मणभोजने सङ्कोचः। व्यापकधर्मावच्छिन्नविषयतायां स्वावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वज्ञानमेव बाधपदार्थः। "अचोरहाभ्यासि"ति सूत्रीयरेफत्वावच्छिन्नविषयतया "यणो मयो द्वे वाच्ये" अनचि च" यण्त्वयत्वावच्छिन्नविषयताया बाधात्

रेफातिरिक्तस्यैव यणो यरश्च द्वित्वमिति नोक्तलक्ष्ये दोष इति समाधानात् ।

ननु व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया एव बाधपदार्थत्वे "अकस्सवर्णे दीर्घ" इत्यनेन "इको यणचि' आद्गुण" इत्यनयो-र्व्यापकत्वाभावेन कथम्बाधः, स्वसमानाधिकरणात्यन्ताभावाऽप्रतियोगित्वस्य व्यापकत्वात् दीर्घविधायकशास्त्रीयसवर्णाज्व्यवहितपूर्वत्वविशिष्टाक्त्वावच्छि-न्नविषयताविशिष्टे श्रीश इति लक्ष्ये "आद्गुण" इति शास्त्रीयाजव्यवहित-पूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयता नास्तीति कथम्व्यापकत्वम् । एवमेव सव-र्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयताविशिष्टे लक्ष्ये दैत्यारिरि-त्यादौ "इको यणचो"ति शास्त्रीयाजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नविष-यताया अभावेनैकस्मिन् दीर्घव्याप्ये कथं व्यापकत्वमिति चेन्न ? लक्ष्यानुरो-धात् "नाज्झलावि"ति सूत्रे दीर्घदर्शनात् सूत्रवार्त्तिकभाष्यबलाच्च दीर्घशा-स्त्रीयविषयताधिकरणे श्रीशे दैत्यारिरित्यादावुक्तशास्त्रद्वयीयविषयतायास्तत्त-द्व्यक्तित्वरूपतत्तद्विषयतात्वेन तयोरभावेऽपि अन्यतरविषयता नास्तीति अभावो दीर्घीयवि यताधिकरणे धर्त्तुं न शक्यते । काचिदन्यतरविषयता तु तत्रास्त्येव, दीर्घीयविषयताधिकरणे घटाद्युदासीनानामभावोऽभावीयप्रतियोगि-तावच्छेदकत्वं घटत्वादौ अप्रतियोगितावच्छेदकत्वमन्यतरत्व इति स्वाधिक-रणनिष्ठाभावप्रतियोगितानवच्छेदकत्वरूपव्यापकत्वमन्यतरत्वस्येति तेन रूपेण सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयतातिरिक्ताजव्यवहितपूर्व-त्वविशिष्टात्वावच्छिन्न-अजव्यवहितपूर्वत्वविशिष्टेक्त्वावच्छिन्नान्यतरविषय-ताधिकरणे यण गुणश्चेति तत्त्वम् ।

न च सवर्णाजव्यवहितपूर्वत्वविशिष्टाक्त्वावच्छिन्नविषयताया अपि प्रमे-यत्ववाच्यत्वाभिधेयत्वादिधर्मैर्विनिगमनाविरहेण व्यापकत्वमापद्येत । एवञ्च कथम्बाध्यत्वमेनयोरिति वाच्यम् ? एवं स्वीकारे सत्तात्वब्रह्मत्वपदार्थत्वादिध-र्माणां सर्वत्र सत्त्वेन क्वापि व्यापकत्वन्न सिद्ध्येत् । एवञ्च "अकस्सवर्ण"इ-त्यादिशास्त्राणां वैयर्थ्यापत्तिस्तत्सामर्थ्याच्छास्त्रप्रवृत्तिनिवृत्त्युपयोगिधर्मैर्व्या-प्यव्यापकभावविधानेनैवम्विधायाश्शङ्काया अनभ्युपगमात् ।

नचैवं रीत्या समाधाने वासः क्षौममित्यादौ विसर्गश्रुतिर्न स्यात् "विसर्ज-नीयस्य सः, शर्परे विसर्जनीय"इत्येनयोरप्यन्यतरत्वेन व्यापकत्वात् "कुप्वोᳲ-कᳲपौचे"त्यस्य व्याप्यत्वा"दकस्सवर्ण" इतिवत् अतिरिक्तत्वेन सङ्कोचात्ᳲ-कस्याद्विति । किञ्च विनिगमनावैकल्येन यथान्यतरत्वेन व्यापकता तथाऽन्य-तमत्वेनापि व्यापकता वक्तुं शक्यत एव । एवञ्च वातप्रम्यि प्रध्यि इत्यादा-"वैरनेकाचोऽसंयोगपूर्वस्य, आद्गुणः, इकोयणची"त्येतदीयविषयतानामन्यत-मत्वेन व्यापकत्वात् गुणयणोरिवैरनेकाच इति यणोऽपि दीर्घेण बाधस्या-

दिति थकारो न श्रूयेतेति वाच्यम् ? एतद्दोषद्वयपरिहाराय स्वीयविषयता-विशिष्टधर्मवद्विषयताकशास्त्रस्य स्वेन बाध इति तात्पर्यात् । वैशिष्ट्यञ्च स्वव्यापकतावच्छेदकत्व (स्वावच्छेदकोपधात्वावच्छिन्नविषयतागततद्व्यक्ति-त्वविशिष्टभिन्नत्वमिति सम्ब०) स्वव्यापकतावच्छेदकधर्मविशिष्टभिन्नत्वोभयस-म्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वव्यापकत्वस्वभिन्नत्वोभयसम्बन्धेन । स्वम् अपवादत्वेन विवक्षितं शास्त्रं तदीया या विषयता तया विषयतया वि-शिष्टो यो धर्मताद्दशधर्मवती विषयता यत्र शास्त्रे ताद्दशधर्मवद्विषयताकशा-स्त्रस्य स्वेन अपवादत्वेन विवक्षितशास्त्रेण बाध इति । स्वमत्र अपवादत्वेन विवक्षितं "कु⌣त्वो⌣क⌣पौ चे"ति शास्त्रन्तदीयविषयताकवर्गपवर्गान्यतर-त्वावच्छिन्नाऽव्यवहितपूर्वत्वावच्छिन्नविसर्जनीयत्वावच्छिन्ना विषयता त-द्विशिष्टधर्मो "विसर्जनीयस्य स" इत्येतदीयविषयतागततद्व्यक्तित्वन्तदेव व्यापकतावच्छेदकमन्यतरत्वन्तु विषयतागततद्व्यक्तित्वापेक्षया स्वव्याप-कतावच्छेदकविशिष्टमेव न तु विशिष्टभिन्नमिति सम्बन्धघटकवैशिष्ट्याऽसं-घटनात् नोभयोर्बाधोऽपि तु "विसर्जनीयस्य स" इत्यस्यैवेष्टस्येति ।

एव "माद्गुणः" इको यणचि, एरनेकाचोऽसंयोगपूर्वस्ये"ति शास्त्रीया अन्यतमत्वावच्छिन्ना व्यापकता । व्याप्यता च सवर्णाजव्यवहितपूर्वत्ववि-शिष्टाकृत्वावच्छिन्नविषयतायाम् । अत्र सम्बन्धो न सङ्घटते, तथाहि—अन्यतमत्वे आद्यसम्बन्धसत्त्वेऽपि स्वव्यापकतावच्छेदकत्वरूपे द्वितीयसम्बन्धो न गच्छति । स्वव्यापकतावच्छेदकमन्यतरत्वम् तद्व्यापकत्ववतद्भिन्नत्वमे-वान्यतमत्वस्येति, स्वव्यापकतावच्छेदकविशिष्टभिन्नत्वन्नास्ति किन्तु स्वव्या-पकतावच्छेदकविशिष्टत्वमेवेति द्वितीयसम्बन्धाऽसङ्घटनेन "एरनेकाच" इति यणो बाधाऽभावेन वातप्रम्यीत्यादीनां साधुत्वसौष्ठवात् । उक्तस्थले व्यापक-तावच्छेदकधर्मश्च विषयतागततद्व्यक्तित्वरूपस्तद्घटितरूपस्सोऽपि व्याप्या-घटितो गृह्यते तत्तल्लक्षणारम्भसामर्थ्यात् ।

नच अन्यतमत्वेन व्यापकत्वमादाय बाधाऽभावे निश्चेतव्ये "उरॄद्धि"तिशास्त्रेण "उपधायाश्च'मृजेर्वृद्धिः' पुगन्तलघूपधस्ये"ति शास्त्राणाम्बाध इष्टः न स्यात् । तथाहि—व्यापकतावच्छेदकं "पुगन्तलघूपधस्य च' उपधायाश्चे"तिशास्त्रद्वयीयविषयताद्वयगतमन्यतरत्वमेव, तद्व्यापकत्ववतद्भिन्नत्वसम्बन्धा-भ्यां व्यापकतावच्छेदकधर्मविशिष्टमेवान्यतमत्वन्नतु विशिष्टभिन्नत्वमिति द्वितीयसम्बन्धाऽसंघटनेन बाध्यबाधकभावाभावेन इररारामपवाद इतिग्रन्था-ऽसङ्गतिरिति वाच्यम् ? यत्रान्यतरत्वादिना बाधस्तत्र बाध्यसामान्यचिन्ता-पक्षः, यत्र तद्व्यक्तित्वेन बाधस्तत्र बाध्यविशेषचिन्तापक्ष इति भेदः । "उ-रॄदि"तिशास्त्रे ऋकारस्य चक्रो णेश्च प्रातिस्विकरूपेणोपादानसत्त्वात्परनि-

त्यान्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषाम्मिथःप्रसङ्गे परबलीयस्त्वमिति भाष्ये "उपधायाश्च पुगन्तलघूपधस्य च मृजेर्वृद्धिरि"तिसूत्राणां प्रतिपदविधित्वेन "उरऋदि"ति बाधकम् । एवमेव "अचिरऋत" इत्यत्र गुणदीर्घोत्वानामपवादः "यचिभमि"त्यनेन "सुप्तिङन्तमि"ति "स्वादिष्वसर्वनामे"तिशास्त्रयोः "अतो गुण" इत्यनेन "अकस्सवर्णे दीर्घः" प्रथमयोःपूर्वसवर्णः" इत्येनयोरप्येनयैव दिशा दोषा वारणीयाः ।

"अचिर ऋत" इत्यत्र प्रियतिस्र आगत इत्यादौ गुणदीर्घयोःप्राप्तिर्नास्ति । तिस्रस्तिष्ठन्तीत्यादौ दीर्घोत्वयोःप्राप्तिर्नास्ति कथं गुणदीर्घोत्वानाऽव्यापकत्वम् । किञ्च प्रियतिस्रोरित्यादावोस्विभक्तौ गुणदीर्घोत्वानां केषामप्यसत्त्वात् कथं व्यापकत्वाद् बाध्यतया रत्वसिद्धिरिति चेन्न ? प्रियतिस्रोरित्यत्र "को यणाची"त्यनेनैव यण् नतु "अचि र ऋत" इत्यनेन । तथाच त्रितयपर्य्याप्तान्यतमत्वेन व्यापकत्वसौष्ठवात् । "ङेराम्नि"ति आम् तु याटोऽपवादत्वाद् बाधकः, स्याटस्तु परत्वाद्बाधकः इत्याम्नि रूपसिद्धौ क्षतिविरहात् ।

ननु "एत्येधत्यूठ्स्वि"त्यत्र पररूपगुणापवाद इतिकथम् उपसर्गविषयकपररूपमात्रस्य व्यापकत्वेन वृद्ध्या बाध इष्यते, तत्र "ओमाङोश्च" एङि पररूपमि"त्येनयोरन्यतरत्वेन व्यापकत्वमादाय कस्यचिदेव बाधस्स्यादिति चेन्न ? विषयतागततद्व्यक्तित्वापेक्षया स्वव्यापकतावच्छेदकधर्मविशिष्टभिन्नत्वरूपद्वितीयसम्बन्धाऽसंघटनात् तद्धर्मविशिष्टत्वमेव न विशिष्टभिन्नत्वमिति पूर्वोक्तरीत्याऽन्यतरत्वेन व्यापकत्वाभावेनादोषात् ।

नच भसंज्ञाविधायके "यचि भमि"ति शास्त्रेण सुप्तिङन्तस्वादिष्वि"त्येनयोर्बाधोऽभिमतोऽत एव राजन्य इत्यत्र "राजश्वशुराद्यदि"ति यति अन्तर्वर्त्तिविभक्त्या पदत्वेऽपि "यचि भमि"तिभत्वेन पदत्वबाधान्नलोपो नेति, सच बाधो न स्यादन्यतरत्वे तद्व्यक्तित्वापेक्षया वैशिष्ट्यविरहादिति वाच्यम् ? द्वितीयसम्बन्धघटकवैशिष्ट्ये तृतीयस्य स्वसमनियतोभयावृत्तिधर्माश्रयविषयत्वाऽव्याप्यावृत्तित्वरूपसम्बन्धदानेनाक्षतेः । "सुप्तिङन्तम्पदमि"तिशास्त्रीयविषयतायाः "स्वादिष्वि"तिविषयताम्प्रत्यव्याप्यत्वात् । येन नाप्राप्तन्यायाङ्गबाध्यसामान्यचिन्तापक्षबाध्यविशेषचिन्तापक्षफलकपुरस्तादपवादन्यायमध्येऽपवादन्यायाभ्यां रामा इत्यत्र "अतो गुण" इति "अकस्सवर्ण" इत्यस्यैव बाधकन्तेन "प्रथमयोरि"त्यनेन दीर्घ एवमन्यत्रापि बोध्यम् ।

इति सरलतया परीक्षालेखप्रकारः ।

तदप्राप्तियोग्येऽचारितार्थ्यमिति—तदप्राप्तियोग्येऽचारितार्थ्यम् २ तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृतेचारितार्थ्यम् २ तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृतेचारितार्थ्याभावः ३ तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते

चारितार्थ्याभावविशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैयर्थ्यम् ४ उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावना चेति ५ पञ्चबाधबीजानि, चत्वार्य्येवेति केचित् । एतेनैव तक्रकौण्डिन्यन्याया-न्तर्भावः ।

प्रथमस्थले हेरमे इत्यादौ "हल्ङ्याब्भ्य" इत्यप्रवृत्तियोग्ये चारितार्थ्या-भावस्य "सम्बुद्धौ चे"त्यस्य विद्यमानत्वेन "सम्बुद्धौ चे"त्यस्य प्रवृत्तियोग्यं यत्सम्बुद्ध्यव्यवहितपूर्वत्वविशिष्टमाबन्तमङ्गं तदतिरिक्तत्वेन सङ्कोच इत्यपि बोध्यम् । उत्सर्गशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यलक्ष्याति-रिक्तत्वेन सङ्कोचः । अपवादे सम्पन्ने यद्युत्सर्गप्राप्तिस्तर्हि तदपि प्रवर्त्तते यथा रमायामित्यादौ "ङेराम्नि"त्याम्नि पुनर्याट् प्रवर्त्तते ।

द्वितीयस्थले तु स्वप्रवृत्तिलक्ष्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्त-त्वेन चोभयरूपेण सङ्कोचः । सर्वेषामित्यादौ सुटचपि आम्त्वबुद्ध्या न नुट् । कुलमित्यत्र अम्यपि "स्वमोर्नपुंसकादि"ति न लुक् । "इदमोम"इति सूत्रार-म्भसामर्थ्यात्तक्रकौण्डिन्यन्यायो नास्ति अनित्यो वा । "वाऽवसान"इत्यत्र चर्त्वावच्छिन्नविधेयतया झल्त्वावच्छिन्नकार्यिताया बाधः । चर्भिन्नस्यैव झलश्चर्त्वमिति तात्पर्य्यम् । अन्यथा षकारस्यैव चर्त्वेनान्तरतम्यात् षकारे रत्नमुष् तदभावे जश्त्वेन रत्नमुडिति टकारो न श्रूयेतेत्याशयः । तत्र न्यायेन जश्त्वं बाधित्वा षकारस्य षकार इति तत्त्वम् ।

नच "शेषो घ्यसखी"तिसूत्रे घिपदोपादानेन इदन्ते घिशब्दातिरिक्तत्वेन सङ्कोचापत्तौ "घेर्ङिती"तिसूत्रे घेरित्यस्य सिद्धिर्न स्यादिति वाच्यम् ? एत-न्न्यायस्यानित्यत्वाश्रयणात् ।

नच "लोपो व्योरि"तिशास्त्रे यकारातिरिक्तत्वेन सङ्कोचस्स्यादिति वा-च्यम ? न्यायानित्यत्वसमाधानतौल्यात् ।

न चद्वितीयम्बाधबीजन्नोपपद्यते यदि कृते चारितार्थ्यन्तर्हि न तदप्रा-प्तियोग्ये अचारितार्थ्यं, यदि यदप्राप्तियोग्ये अचारितार्थ्यन्तर्हि न कृते चारि-तार्थ्यमिति विप्रतिषेधादिति वाच्यम् ? स्वविधेयाऽघटितं यत्स्वाप्राप्तियोग्य-न्तत्राचारितार्थ्यविशिष्टं कृते चारितार्थ्यंबीजमिति तात्पर्य्यवर्णनेनाक्षतेः ।

अतएवेति—सामान्यशास्त्राऽप्राप्तियोग्ये विषये चारितार्थ्यस्य बाधबीज-त्वादेवेत्याशयः । अत एवेत्यस्य तद्व्याप्यत्वमात्रस्य बीजत्वादेवेत्यर्थः । "आ-याद्यो वा सार्वधातुके नित्यमि"ति न्यासमुपक्रम्येदम्भाष्यं प्रवृत्तम् । गोपा-यिष्यतीत्याद्यावायादीन्बाधित्वा परत्वात्स्याद्यस्स्युः । तत्र कृते सार्वधातुके नित्यमित्यस्याऽप्राप्त्या आद्ययोगेन वैकल्पिक आयप्रत्यये गोपायिष्यति गो-पिष्यति इत्यस्य सिद्धिस्स्यादिति भावः ।

गोपायतीत्यादावपि शप्स्यादिः प्राप्नोति । न च सति शप्यसति वा न विशेषः । अन्यदिदानीमिदमुच्यते नास्ति विशेष इति । यदुक्त-मायादीनां स्यादिभिर्व्याप्तोऽवकाश इति स नास्त्यवकाश इति भाष्ये उक्तम् । एवमत्र तत्प्रवृत्त्युत्तरं चारितार्थ्येऽपि तद्व्याप्तोऽवकाशो ना-स्तीति सममेव ।

किञ्चानेन न्यायेन तत्प्रवृत्त्युत्तरमपि चारितार्थ्यं तद्बाधबोधनम् । अन्यथानवकाशत्वेनैव बाधे सिद्धे एतत्कथनवैयर्थ्यापत्तेस्तक्रकौण्डिन्य-न्यायप्रदर्शनस्यापि वैयर्थ्यापत्तेश्च । यथा प्रथमद्विर्वचनस्य तदुत्तरं सावकाशेनापि द्वितीयद्विर्वचनेन बाधः । यथा चादेरपि प्रवृत्त्या चरिता-र्थेनादेः परस्येत्यनेनालोऽन्त्यस्येत्यस्य बाधः ।

तदुक्तं मिदचोऽन्त्यादिति सूत्रे भाष्ये सत्यपि सम्भवे बाधनं भव-तीति । अन्यथा ब्राह्मणेभ्यो दधि दीयतां तक्रं कौण्डिन्यायेत्यत्र तक्रदा-नेन दधिदानस्य बाधो न स्यात्तद्दानोत्तरं तत्पूर्वं वा तद्दानस्य चारि-तार्थ्यसम्भवात् ।

---

ननु आयादीनां कथमनवकाशत्वं गोपायतीत्यादौ स्यप्रत्ययाऽप्राप्तियोग्ये चारितार्थ्यादित्यत आह—गोपायतीत्यादावपीति । स्यतासिशपामन्यतम-त्वेन बाध इति भावः ।

ननु शपि कृतेऽपि गोपायति अकृतेऽपि गोपायति तथाच फलाभावान्न शप् स्यादिति कथमनवकाशत्वमायादीनामित्यत आह—अन्यदिदानीमिति । शप॒प्राप्ति॒फलवती माभूदायादीनां व्याप्यत्वन्त्वस्त्येवेति भावः । एतद्-भाष्यबलाद्व्याप्यत्वमात्रस्य बाधकताबीजत्वमुपलभ्यते । एवमत्रेति—यथा शप॒फलाभावेऽपि प्राप्तिमात्रेण व्याप्यता तथेत्यर्थः । अत्र बाध्यबाधकभावे कृते चारितार्थ्येऽपि व्याप्यत्वम्बाधकताबीजमस्त्येवेति भावः । पूर्वग्रन्थाव-गमेन कृते चारितार्थ्येऽपि बाधो भवतीत्यर्थस्य लाभेऽपि तत्र प्रमाणान्तरप्र-दानाय स्पष्टार्थमुच्यते किञ्चानेन न्यायेनेति—अन्यथेति—व्याप्यत्वमात्रस्य बाधकताबीजत्वाभाव इत्याशयः । अनवकाशत्वेनेत्यस्य वैयर्थ्येनेत्यर्थः । तस्य किञ्चिदर्थज्ञापकत्वन्तु ज्ञापकस्थले सुप्रसिद्धमेवेति तत्त्वम् । एतत्क-थनेति—येन नाप्राप्त इति न्यायकथनेत्यर्थः । कृते चारितार्थ्येऽपि बाधे फ-लमाह यथेति । अनभ्यासग्रहणप्रत्याख्यानकर्तुर्भाष्यकारस्य मतेनेदम्बोध्य-म् । इह हि परत्वा (?)धेनाप्यदोष इत्यरुचेराह यथेति ।

सत्यपि सम्भव इति—समावेशसम्भवेऽपीत्यर्थः । अन्यथेति चारि-तार्थ्याभाव एव बाधकत्वाङ्गीकार इत्यर्थः । अत एवेति—व्याप्यत्वमात्रस्य बाधकत्वबीजत्वादेवेत्यर्थः । विषयभेद इत्यस्य विभिन्नकार्यित्वमित्याशयः ।

अत एव विषयभेदेऽप्यपवादत्वम् । अत एवाचिरादेशेन नुटोऽप्यपवादत्वाद् बाधमाशंक्य न तिस्त्रिति ज्ञापकेन समाहितं तृज्वत्सूत्रे भाष्ये ।

तेन विषयभेदेऽपवादत्वाभाव एव बोध्यते इति कश्चित्, तन्न ? विन्मतोर्लुका टिलोपमात्रस्य बाधानापत्तेः ।

यत्तु द्यतेर्दिगीति सूत्रे द्वित्वोत्तरं दिग्यादेशस्य चारितार्थ्यं कैयटेनोक्तं तत् प्रौढ्या । ध्वनितं च तेनापि तस्य तथात्वं तदुत्तरग्रन्थेन ।

असम्भव एव बाधकत्वं विरोधस्य तद्बीजत्वादिति वार्त्तिकमतं तु भाष्यकृता दूषितत्वान्न लक्ष्यसिद्ध्युपयोगि । तक्रकौण्डिन्यन्यायोऽपि तद्प्राप्तियोग्येऽचरितार्थविषयो विधेयविषय एव चेति तद्धितेष्वचामादेर्धातोरेकाच इत्यादिसूत्रेषु भाष्ये स्पष्टम् ।

---

अचिरादेशेनेति—प्रकृते रेफादेशः प्रत्ययस्य नुडिति विषयभेदः । विषयभेदे अपवादत्वाभावे शङ्कासमाधाने निर्दले स्यातामित्याकूतम् । तेनेति—"न तिस्त्रि"तिज्ञापकेनेत्याशयः ।

ननु विषयभेदेऽपि बाधेऽब्राह्मणेभ्यो दधि दीयतान्तक्रं कौण्डिन्यायेतिवत् दधि ब्राह्मणेभ्यो दीयतां कम्बलः कौण्डिन्यायेत्यादावपि कम्बलदानेन दधिदानस्य बाधस्यात् ।

किञ्च 'सुटा यासुट् न बाध्यते लिङो यासुट् तकारथकारयोस्सुडिति' ग्रन्थासङ्गतिश्चेति चेन्न ? सजातीययोरेव बाध्यबाधकभाव इति सिद्धान्तः । दधितक्रयोर्भोजने रुच्युत्पादकत्वेनास्ति साजात्यम् न तथा दधिकम्बलयोरिति न बाध्यबाधकभावः ।

एवमेककालिकयोरेव बाध्यबाधकभावः । अत एवाद्य ब्राह्मणाय दधि दीयतां श्वः कौण्डिन्याय तक्रमित्यादौ बाध्यबाधकभावो न । विषयभेदादित्यस्य कालभेदादित्यर्थः । "परस्मैपदेष्वि"त्यत्र विषयसप्तम्याश्रयणेन लिङ एव यासुट् आदेशोत्तरकाले तकारथकारयोस्सुडिति कालभेदान्न बाध्यबाधकभावः । पिप्य इत्यादौ "लिङ्यङोश्चे"तिविषयसप्तम्या लिटः पूर्वस्यादेशेन न द्वित्वबाध इतिवत् । तस्माद्विषयभेदेऽपि बाध इति सिद्धः पन्थाः ।

तथात्वमिति । अशुद्धत्वमिति यावत् । असम्भव इति । समावेशासम्भव इति भावः । दूषितत्वादिति-"मिदचोऽन्त्यादि"ति सूत्रस्थभाष्येण दूषितत्वादित्यर्थः । न लक्ष्यसिद्ध्युपयोगीति यथोत्तरंमुनीनाम्प्रामाण्यमिति भावः । तक्रकौण्डिन्यन्यायेन बाधो निरवकाशत्वेन बाधश्च येननाऽप्राप्तन्याय एवान्तर्भूत इति सर्वेषां समानविषयत्वप्रतिपादनाय आह—तक्रकौण्डिन्यन्यायोऽपीति । तद्प्राप्तीति–विषयतयोर्व्याप्यव्यापकभावविषय इत्याशयः । विधेयविषय इति । एककार्य्यविधायकशास्त्रेणाऽपरकार्यविधा-

क्वचित्तु सर्वथानवकाशत्वादेव बाधकत्वं यथा ङेराम्नो याडादिबाधकत्वम् । न हि याडादिषु कृतेषु ङेराम् प्राप्नोति निर्दिश्यमानस्य व्यवधानात् । तत्र स्वस्य पूर्वं प्रवृत्तिरित्येव तेषां बाधः । तत्र बाधके प्रवृत्ते यद्युत्सर्गप्राप्तिर्भवति तदा भवत्येव यथा तत्रैव याडादयः । अप्राप्तौ तु न, यथा पचेयुरित्यादौ दीर्घबाधके निरवकाश इयादेशे दीर्घाभावः ॥५८॥

तदेतत्पठ्यते—

क्वचिदपवादविषयेऽप्युत्सर्गोऽभिनिविशत इति ॥ ५९ ॥

अपवादशब्दोऽत्र बाधकपरः । तदुक्तं गुणोयङ्लुकोरित्यत्र भाष्ये । अभ्यासविकारेष्वपवादा उत्सर्गान्न बाधन्ते । अजीगणत् । अत्र गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते । न गणेरीत्वमपवादत्वाद्धलादिःशेषं बाधते । किं तर्हि । अनवकाशत्वादिति ग्रन्थेन गणरूपाभ्यासान्त्यणस्येत्वमित्यर्थं हलादिःशेषेण तन्निवृत्तौ तदनवकाशमीत्वे तु कृते न तस्य प्राप्तिरन्त्यहलोऽभावात् । अभ्यासविकारेषु बाध्यबाधकभावाभावेन च साधितम् ।

तस्मिंश्च सति लोपे कृते सामर्थ्याच्छिष्टस्यान्त्यस्येत्वमिति न दोषः। न च येननाप्राप्तिन्यायेनापवादत्वमप्यस्य सुवचं तस्य चरितार्थविषयताया उक्तत्वात् ।

इको झलित्यत्र भाष्येऽपि ध्वनितमेतत् तत्र हि अज्झनेतिदीर्घेण

---

यकशास्त्रस्य बाधः नत्वेककार्यविधायकशास्त्र एव व्याप्यधर्मावच्छिन्नविषयतया व्यापकधर्मावच्छिन्नविषयताया बाध इत्यर्थः । इदमनुसन्धेयम्—अचारिताार्थ्यविषयत्वकथनेनैव समायाति एकशास्त्रीयविषयतयोर्व्याप्यव्यापकभावविरहात् । तद्धितेष्वचामादेरिति—तत्र हि—आदिवृद्धिरन्त्योपधावृद्धी बाधत इत्युपक्रम्य सुश्रुत् सौश्रुत इति "धातोरेकाच" इति अतद्गुणसंविज्ञानबहुव्रीहिणा 'नित्यं कौटिल्ये' लुपसदचरे"त्यनयोर्ग्रहः ।

क्वचित्तु सर्वथाऽनवकाशत्वादिति—नैतदपूर्वं किन्तु येननाप्राप्तन्यायस्यैवैकदेशमनूद्य तत्र सङ्कोचविशेष^प्रतिपाद्यत इति ।

क्वचिदपवादविषयेऽप्युत्सर्ग इति—नायमपूर्वः अपितु स्वप्रवृत्तियोग्यातिरिक्तत्वमात्रबोधफलित एवेति तत्त्वम् ।

क्वचिदिति—सर्वथा निरवकाशस्थल इत्यर्थः ।

अपवादशब्दोऽत्रेति—अत्र कोऽर्थ^अकृतपरिभाषायामित्यर्थः । तन्निवृत्ताविति । णकारनिवृत्तावित्यर्थः । तस्मिंश्च सतीति । अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति वचने सतीत्यर्थः । ध्वनितमेतदिति । येन नाप्राप्तन्यायस्य कृते चारिताार्थ्यविषयत्वमिति तात्पर्यम् ।

गुणोत्तरं फलाभावेनानवकाशत्वाद् गुणे बाधिते दीर्घोत्तरं गुणः स्या-द्दीर्घविधानं तु मिनोतेर्दीर्घे कृते सनि मीमेत्यत्र मीग्रहणेन ग्रहणेऽर्थव-त्तत्र पश्चात् प्राप्तगुणबाधनार्थमिको झलिति कित्त्वमित्युक्तम् । अन्य-थापवादत्वेन बाधे तद्विषये उत्सर्गाप्रवृत्तेर्भाष्यस्य सूत्रस्य चासङ्गति-रिति स्पष्टमेव ।

यत्तु(१) कांचनीत्यादावपवादमयड्विषयेऽप्यण् भवति क्वचिदप-वादविषयेऽपीति न्यायादिति, तन्न ? अण् कर्मणि चेति सूत्रस्थभाष्यवि-रोधात् । तत्र ह्यणः पुनर्वचनमपवादविषयेऽनिवृत्त्यर्थं गोदायो व्रजती-त्याद्युक्तम् । काञ्चनीत्यादौ काञ्चनेन निर्मितेत्यर्थे शषिकोऽण् बोध्यः ।

अत्रेदं बोध्यम् । येन नाप्राप्तेत्यत्र येनेत्यस्य यदि स्वेतरेणेत्यर्थ-स्तदा स्वविषये स्वेतरद्यद्यत् प्राप्नोति तद्बाध्यं विध्यन्तराप्राप्तविषया-

---

मीग्रहणेन ग्रहणेऽर्थवदिति—न "चेको झलि"ति सूत्राभावेऽपि दीर्घे गुणे "आदेच" इत्यात्त्वे "सनि मीमे"त्यत्र माग्रहणेन ग्रहणादिति । "हलन्ताच्चे"तिकित्त्वे सिद्ध "इको झलि"तिसूत्रम्व्यर्थमेवेति चेन्न ? एज् "निमित्तत्वमुपजीव्य जायमानमीत्वमिसि निमित्तन्न स्याद्धलन्ताचे"ति कित्वेनैज्निमित्तत्वविनाशेन सन्निपातपरिभाषयोपजीव्यविरोधात् । शै-षिकोऽण्बोध्य इति—शेषइत्यधिकारो लक्षणञ्चेति सिद्धान्तेन "तत्र भव" इत्याद्यधिकारसूत्रेषु "वृद्धाच्छ" इत्यनुवृत्त्या तत्तदधिकारविहितप्रत्ययाना-मेव "वृद्धाच्छ" इत्येतेन वाधाच्छेष इति लक्षणसूत्रेण निर्मितेऽर्थेऽण् वोध्य: इत्याशयः । अत्रेदम्बोध्यमिति । इदानीमपवादस्वप्रयुक्तवाधविषये निरव-काशस्वप्रयुक्तवाधविषये च व्यवस्थाविशेषन्निरूपयन्नारभते अत्रेदमित्या-दिना । स्वेतरेणेति । इतरेणेत्यर्थः । यद्युदाहरणमिति—यथा दीर्घो यण्-

---

( १ ) तेन काञ्चनीवासयष्टिरित्यादौ "नित्यम्वृद्धशरादिभ्य" इतिमयटो विषयेऽ"नु-दात्तादेश्चे"त्यञ् सिद्ध्यति । एवम्प्रदीयतां दाशरथाय मैथिलीत्यत्रा "त इञि"त्यस्य विषये "प्राग्दीव्यतोऽणि"त्यण् भवति ।

केचित्तु—"समर्थानां प्रथमाद्वे"ति वानुवृत्तेरिञोऽभावपक्षे "तस्यापत्यमि"त्यणा दाशरथायेति सिद्धम् इति ब्रुवन्ति । तन्न ? यत्रोत्सर्गो विभाषाऽपवादोऽपि तत्रापवा-देन विनिर्मुक्ते विषये उत्सर्गो न प्रवर्तते "पीलाया वा" इति ज्ञापकात् । वा ग्रहणन्तु वाक्यार्थम् दशरथापत्यमित्यादिसमासार्थञ्च । दैवयज्ञिशौचिवृक्षिसात्यमुग्रिकाण्डविद्धि-भ्योऽन्यतरस्यामि"त्यतो द्वितीयान्यतरस्यां ग्रहणानुवृत्तिरुक्ता विचारशीलेन । अत्र ज्ञापकन्तु कटं कारको व्रजतीत्य "केनोर्भविष्यदाधमर्ण्ययो"रितिभविष्यदकप्रयोगे क-र्मणि षष्ठीनिषेधविधानम् । तद्धि यद्यण् "कर्मणि चे"ति अपवादविषये "तुमुन्ण्वुलौ क्रियायां क्रियार्थायामि"त्युत्सर्गः प्रवर्तते तदोपपद्यते नान्यथेति ।

क्वचिदिति वचनान्न सर्वत्रापवादविषये उत्सर्गाः प्रवर्तन्ते ।

भावात्। इयमेव बाध्यसामान्यचिन्तेति व्यवह्रियते। अनवकाशत्वेन बाधेऽप्येषा वक्तुं शक्या यद्युदाहरणमस्ति, विनिगमनाविरहात्।

यदि तु येनेत्यस्य लक्षणेनेत्यर्थः कार्येणेत्यर्थो वा तदा बाध्यविशेषचिन्ता। अनवकाशत्वेन बाधेऽप्येतद्बाधेन सार्थक्यमुत तद्बाधेनेत्येवं विशेषचिन्ता सम्भवति यद्युदाहरणमस्ति ॥ ५६ ॥

तत्र कार्येणेत्यर्थे परत्वावच्छिन्ने कार्ये आरभ्यमाणाया वृद्धेस्तद्बाधकत्वे निर्णीते किंशास्त्रविहितस्येत्येवं तद्विशेषचिन्तायामाह—

पुरस्तादपवादा अनन्तरान्विधीन् बाधन्ते नोत्तरान् ॥ ६० ॥

अवश्यं स्वपरस्मिन्बाधनीये प्रथमोपस्थितानन्तरबाधेन चारितार्थ्ये पश्चादुपस्थितस्य ततः परस्य बाधे मानाभावः। आकांक्षाया निवृत्तेः विप्रतिषेधशास्त्रबाधे मानाभावाच्चेत्येतस्य बीजम् ॥ ६० ॥

नासिकोदरौष्ठजंघादन्तेत्यस्यौष्ठाद्यंशे ङीष्निषेधत्वावच्छिन्नबाधकत्वे निर्णीते किं विहितस्येत्याकाङ्क्षायामाह—

मध्येऽपवादाः पूर्वान्विधीन् बाधन्ते नोत्तरान् ॥ ६१ ॥

---

गुणयोर्बाध्यसामान्यचिन्तापक्षाश्रयणेन बाधकः। लक्षणेनेति। शास्त्रेणेतिफलितम्। उदाहरणमिति। "कुप्वोरि"ति सूत्रं यथा "विसर्जनीयस्य स" "इत्यस्यैव बाधक "न्न शर्परे विसर्जनीय" इत्यस्य बाध्यविशेषचिन्तापक्षाश्रयणेनेति तत्त्वम्।

अत्र मान्याः।

उभयपक्षेऽपि येनेत्यस्य स्वेतरेणेत्येवार्थोऽन्यथा विशेषचिन्तापक्षे तद्प्राप्तियोग्येऽचारितार्थ्यमेवाऽसिद्धं स्यात्। एवञ्च येन नाप्राप्तेत्यादिघटकतस्येत्यस्य स्वेतरस्येत्यर्थे बाध्यसामान्यचिन्ता। लक्षणस्य कार्य्यस्य वेत्यर्थे विशेषचिन्तेति विलक्षणम्विचारमाहुः।

यत्किञ्चिदधिकरणकत्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्नाऽपवादविषयत्वावच्छिन्नाऽपवादविषयनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिताऽपिशब्दार्थविशिष्टोत्सर्गत्वावच्छिन्नविशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्त्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अभिनिविशित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

बाध्यसामान्यचिन्तायामनुगतंबीजमुपवर्ण्य विशेषे तदाह पुरस्तादपवादाइति। अनन्तरान्-बाध्यव्यवधानशून्यान्। स्वपरस्मिन्निति। पर-

तेनौष्ठादिषु पञ्चस्वसंयोगोपधादिति प्रतिषेध एव बाध्यते न तु सङ्घनञिवद्यमानलक्षणइति नासिकोदरेत्यत्र भाष्ये स्पष्टम् । पूर्वोपस्थित-बाधेन नैराकाङ्क्ष्यमस्या बीजम् ॥ ६१ ॥

स्मिन्नित्यर्थः । प्रतिषेध एवेति । प्रसज्यप्रतिषेध एवेत्यर्थः । अतएव "ऋष्य-न्धके"त्यण् इञ एवापवादो न ढकंस्तेन आत्रेयसिद्धिरिति । अपित्वस्येति । ननु "सेर्ह्यपिच्च"त्येवास्तु अपिद्ग्रहणमुत्तरत्रानुवृत्त्यर्थमेवेति चेत्सिप‿पि-त्वा"त्सुप्पितावनुदात्तावि"ति अनुदात्ततया तत्र जायमानह्रेरपि तत्त्वाऽप-त्यापिद्ग्रहणस्यावश्यकत्वात् ।

समवायसम्बन्धावच्छिन्नबहुत्वत्वावच्छिन्नप्रकारतानिरूपिता पुरस्तादप-वादत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धाव-च्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्र-कारतानिरूपिता अभेदसम्बन्धावच्छिन्नानन्तरत्वावच्छिन्नप्रकारतानिरूपिता या विधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणनिष्ठत्व-सम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता अभेदसम्बन्धावच्छि-न्नानन्तरत्वावच्छिन्नप्रकारतानिरूपिता या विधित्वावच्छिन्ना विशेष्यता ताद-शविशेष्यतासमानाधिकरणनिष्ठत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकार-तानिरूपिता या कर्मत्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकर-णजनकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता तथा परिच्छि-न्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नप्रकारतानिरूपिता या बाधधा-त्वर्थव्यापारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः । उत्तरान्विधीन्न बाधन्ते उत्तराभिन्नविधिनिष्ठकर्मतानिरूपकपुरस्तादपवादाभिन्न-कर्तृतानिरूपकबाधप्रतियोगिकाभावः ।

अथ शेखरप्रबन्धखण्डनम् ।

लक्षणैकचक्षुष्कस्याद्यो न्यायः, लक्ष्यैकचक्षुष्कस्य द्वितीयो न्याय इति ग्रन्थो न युक्तः । ईदृग्व्यवस्थायां प्रमाणाऽभावात् । लक्षणैकचक्षुष्कस्यापि अपवादवाक्यार्थबोधपूर्वकमपवादप्रवर्त्तनात्प्रागपि उत्सर्गवाक्यार्थबोधेन ल-क्ष्यसंस्कारे बाधकाऽभावात् निर्ज्ञातलक्ष्यस्यापि प्रथममपवादवाक्यार्थबोधः पश्चादुत्सर्गवाक्यार्थबोध इति कल्पनायां बाधकाऽभावाच्च ।

यदि तु व्यक्तिपक्षे उत्सर्गशास्त्रमपवादशास्त्रात्प्राक् प्रवर्त्तेत तर्ह्येवापवाद-विषयेऽपि तस्य प्रवृत्त्या विकल्पापत्तिरिति । जातिपक्षे तु कतिपयलक्ष्यस्वी-कारेण प्रवृत्तस्योत्सर्गस्य पश्चात्प्रवृत्तावपवादशास्त्रेण बाधसम्भवात् । तथाच जातिव्यक्तिपक्षयो‿फलभूतन्यायद्वयमिति युक्तियुक्तम् । अभ्यस्तसंज्ञासूत्रे

ननु वा छन्दसीत्यनेन सेर्ह्यपिच्चेत्यनन्तरस्यापित्त्वस्येव हेरपि विकल्पः स्यात् । तथा नेटीति निषेधोऽनन्तरहलन्तलक्षणाया इव सिचिवृद्धिमृजिवृद्ध्योरपि स्यात् ,

अत उक्तन्यायमूलकमेवाह—

अनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति ॥ ६२ ॥

अत एव संख्याव्ययादेरिति ङीब्ग्रहणं चरितार्थम् । तद्ध्यनन्तरस्य ङीषो विध्यभावाय । न क्तिचीति सूत्रे दीर्घग्रहणं च चरितार्थम् । तद्ध्यनन्तरस्यानुदात्तोपदेशेत्यस्यैव निषेधाभावाय ।

मध्येपवादन्यायाद्यपेक्षयाऽनन्तरस्येतिन्यायः प्रबल इत्यष्टाभ्य इति सूत्रे कैयटः ।

---

प्रकल्प्येति प्रतीकमुपादाय यथा "न सम्प्रसारण"इति "परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तः प्रतिषेध" इति कैयटोक्तमक्षरानुगुणमिति शेखरो न युक्तः ? अपवादप्रवृत्ते प्रागुत्सर्गप्रवृत्तिरिति कैयटोक्तार्थे अपवादवाक्यार्थबोधात्प्रागप्युत्सर्गवाक्यार्थबोध इति स्वोक्तार्थापेक्षया अननुगुणत्वस्य कस्यचिदनुपपादनात् । प्राक्पदाध्याहारस्य द्वयोरपि तुल्यत्वात् । प्रत्युत अभिनिविशत इत्यस्य प्रवृत्तौ स्वारस्येन कैयटोक्तमेवाक्षरानुगुणमिति सिद्धान्त इत्यलम ।

उक्तन्यायमूलकमिति—इह हि उक्तन्यायमूलमूलकमित्येव पाठो युक्तः। उक्तन्याये मूलं प्रथमोपस्थितत्वं तदेव मूलं यस्येत्यर्थः । ङीष इति—नच ङीषोऽनुवृत्तौ बहुव्रीहेरित्येव सिद्धे सूत्रप्रणयनवैयर्थ्यान्ङीप एवानुवृत्तिरिति वाच्यम् ? सूत्रप्रणयनं व्यर्थं सत् परिच्छेदकपूर्वाच्चेत्संख्यादेरेवेति नियमकल्पनात् ।

अत एव भूर्यूधा इति प्रयोगसङ्गतिः । एवमेवाऽसत्त्ववाचकात्परस्य चेदव्ययादेव तेनाग्रेवर्णीया इति पूर्वोक्तोक्त्यसम्भवात्स्वांशेचारितार्थ्यञ्चोक्तप्रकारेणैव ज्ञेयम् । विधिनियमसम्भव इति वाक्यस्य लाघवोपजीव्यतया प्रकृतेऽनन्तरन्यायकल्पनेन विधित्वकल्पनायामेव गौरवान्नियमत्वकल्पनाया एव लघीयसीत्वात् ।

विध्यंशे ज्ञापकमुपवर्ण्य निषेधांशे तदुपवर्णयति न क्तिचीति ङापेति—टापोऽनुवृत्तौ तु टापैव लक्ष्यसिद्ध्या "टिड्ढे"ति सूत्रमेव व्यर्थं स्यादिति तत्त्वम् ।

पुरस्तादपवादवत्मध्येऽपवादा इत्यस्या अपि शाब्दबोधप्रकारः । अनन्तरस्यविधिर्वा भवति प्रतिषेधोवेति—विधिप्रतिषेधान्यतरनिष्ठा याऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता

प्रत्यासत्तिमूलकोयम् । लक्ष्यानुरोधाच्च व्यवस्थेत्यपि पक्षान्तरम् । तत्र तत्र क्वचित्स्वरितत्वप्रतिज्ञानात् सामर्थ्येन वा बाध्यतेऽयं न्यायः । यथा टिड्ढेति सूत्रेण डापा व्यवहितस्यापि ङीपो विधिः । न षडित्यादिना द्वयोरपि टाब्ङीपोः प्रतिषेधः । इयंच शि सर्वनामस्थानमित्यादौ भाष्ये स्पष्टेत्यन्यत्र विस्तरः ॥ ६२ ॥

ननु दधतीत्यादावन्तरङ्गत्वादन्तादेशेऽल्विधौ स्थानिवत्त्वाभावाद्दादेशो न स्यादिति तद्वैयर्थ्यापत्तिरत आह—

पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः ॥ ६३ ॥

लक्षणैकचक्षुष्को ह्यपवादविषयं पर्यालोच्य तद्विषयत्वाभावनिश्चय उत्सर्गेण तत्तल्लक्ष्यं संस्करोति । अन्यथा विकल्पापत्तिरित्यर्थः ।

अभिनिविशन्त इत्यस्य बुद्ध्यारूढा भवन्तीत्यर्थः । अपवादो यद्यन्यत्र चरितार्थ इति न्यायस्य तु नात्र प्राप्तिरन्तादेशाप्राप्तिविषये चारितार्थ्याभावात् ॥ ६३ ॥

---

तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता सती यत्किञ्चिदपेक्षयाऽनन्तरत्वावच्छिन्नप्रकारतानिरूपिता षष्ठ्यर्थकर्मत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतयाऽभिमतस्य विधि प्रतिषेधो वेति योजना ।

वैयर्थ्यापत्तिरिति—ननु जक्षतीत्यादौ न दोषो "जक्षित्यादय षडि"त्यभ्यस्तसंज्ञायां तक्रन्यायेनान्तादेशस्यादादेशो बाधक इति न वैयर्थ्यमिति चेन्न ? दधतीत्यादेरेवावतरणत्वात् ।

अत्र केचित् । आयन्नादिषूपदेशिवद्वचनं स्वरसिद्ध्यर्थमिति वार्त्तिकबलादुपदेश एवान्तादेशे तद्वैयर्थ्यम् । नच विनिगमनाविरहेणादभ्यस्तादित्यत्राप्युपदेशिवद्वचनापत्तौ पूर्वमेवादादेशेऽवतरणमसङ्गतमिति वाच्यम् ? अभ्यस्तेष्वभ्यस्तानामादिरिति स्वरे आद्युदात्तश्चेति स्वरूपप्रयोजनाऽभावादुक्तवार्त्तिकाऽप्रवृत्तेरिति समूचुः । विकल्पापत्तिरिति—एकस्मिन्नेव लक्ष्ये उत्सर्गशास्त्रप्रवृत्त्या अपवादप्रवृत्तिदौर्लभ्येन पर्य्यायापत्तिर्दूषणमिति साधारणाः ।

सूक्ष्मवेत्तारस्तु—अदभ्यस्तादिति सूत्रचारितार्थ्याय अन्यत दधूतीति रूपं प्रकल्प्य तत्र प्रवृत्तौ रूपद्वयं स्यात् परन्विकल्पेष्टदूषणोद्भव इत्युक्तवन्तस्तदपरे न क्षमन्ते ।

पूर्वंह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः—पूर्वंहीति स्वतन्त्रपदम् । पूर्वंन्तावदित्यर्थकम् । अपवादाभिन्नबहुत्वविशिष्टकर्तृवृत्त्यभिनिवेशाः, पश्चान्निष्ठप्रकारतानिरूपितोत्सर्गाभिन्नबहुत्वविशिष्टकर्तृवृत्त्यभिनिवेशाः, प्रकल्प्य चाप-

लक्ष्यैकचक्षुष्कस्तु(१)तच्छास्त्रपर्यालोचनं विनाऽप्यपवादविषयं परित्यज्योत्सर्गेण लक्ष्यं संस्करोति तस्यापि शास्त्रप्रक्रियास्मरणपूर्वकप्रयोग एव धर्मोत्पत्तेः, तदाह—

---

वादविषयं तत उत्सर्गोऽभिनिविशते—अपवादशास्त्रसम्बन्धिविषयत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता निष्ठत्वसम्बन्धावच्छिन्ना कर्मत्वत्वावच्छिन्ना आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणजनकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या प्रकल्पनत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वकर्तृकर्तृकत्वस्वोत्तरकालिकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता ततः तदव्यवहितोत्तरकालावच्छिन्नाभेदसम्बन्धावच्छिन्नोत्सर्गत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपितकर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता सती परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्नप्रकारतानिरूपिता अभिनिविशित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधो भवति।

अत्रकिञ्चित्फलनम्—लक्षणमेकैकं चक्षुःप्रवृत्तौ निवृत्तौ च येषान्ते। लक्ष्यसाधुत्वज्ञानं लक्षणैकशरणमेवेति निश्चयं कुर्वाणा लक्षणैकचक्षुष्कास्तादृशाभिप्रायेणोक्तन्यायमुक्त्वा लक्ष्यैकचक्षुष्कतात्पर्य्येण न्यायान्तरमुत्थापयति लक्ष्येत्यादि। लक्षणपर्य्यालोचनमन्तरेणाऽपि यस्य साधुत्वज्ञानं सः। "एक-

---

(१) पूर्वं ह्यपवादा अभिनिविशन्ते पश्चादुत्सर्गाः प्रकल्प्य चापवादविषयमिति। अत्रमान्याः-लक्ष्यैकचक्षुष्कपरतया शास्त्रव्यवस्थापनमयुक्तम् तेषां शास्त्रानुपयोगात् नहि लक्ष्यैकचक्षुष्कानधिकृत्य शास्त्रप्रवृत्तिः शब्दतत्त्वविदां तेषां जिज्ञासानुपपत्तेः। शास्त्रप्रक्रियास्मरणपूर्वके साधुशब्दप्रयोगे धर्माऽभ्युच्चय इत्यपि प्रमाणशून्यः, साधुशब्दप्रयोगे प्रयोक्तॄणामभ्युदयः, साधुत्वज्ञानपूर्वके तत्प्रयोगे महानभ्युदय इत्येव पस्पशाह्निकान्तस्थभाष्यमर्यादाशयः। एतद्भाष्यबलादेव एकश्शब्दस्सम्यग् ज्ञात इति श्रुतौ शास्त्रान्वित इत्यस्य साधुत्वज्ञानविषय इत्येवार्थः। किञ्च अङ्गानां प्रधानभूतवेदोपकारकत्वेनैव पारायणादिभिर्द्धर्मसाधनत्वं न तु वेदवत्स्वरूपतोव्याकरणस्य हि साधुत्वबोधनमुपकारः। यत्र तु साधुत्वज्ञानं प्रकारान्तरेण सिद्धं तत्र शास्त्रनैरर्थ्यमेवेति तथाभूतस्य पारायणे स्मरणे वा न कश्चिद्विशेषः। अत एव तत्र तत्र प्रत्याख्यानभाष्यं सुगतम्। शास्त्रप्रक्रियास्मरणपूर्वके साधुशब्दप्रयोगे क्लेशाधिक्याद्धर्माधिक्यमिति सिद्धान्तो न युक्ततरः? विहितस्यैव क्लेशस्य धर्मसाधनत्वात्। अन्यथोत्सर्गशास्त्रापवादशास्त्रस्मरणमपि लक्ष्यैकचक्षुष्काणामावश्यकम् आपद्येत। तथाचार्यविलक्षणप्रकारः—प्रथममपवादशास्त्रस्य लक्ष्ये प्रवृत्तौ स्वविषयत्वाभावेन तत्र प्रवृत्तेःपूर्वमेव विशिष्टवाक्यार्थबोधप्रयुक्तेन अपवादविषयत्वज्ञानेन वा प्रथमकल्पे अपवादशास्त्रीयो लक्ष्यसंस्कारः पश्चादुत्सर्गशास्त्रीयः। द्वितीयकल्पे तु अपवादविषयं परित्यज्य पूर्वमेवोत्सर्गशास्त्रीयलक्ष्यसंस्कारः पश्चादपवादशास्त्रीय इति तु युक्ता व्यवस्थेति।

प्रकल्प्य चापवादविषयं तत उत्सर्गोऽभिनिविशते ॥ ६४ ॥

तत इत्यस्यापवादशास्त्रपर्यालोचनात् प्रागपीत्यर्थः । प्रकल्प्येत्यस्य परित्यज्येत्यर्थः ।

अत एव प्रातिपदिकार्थसूत्रे भाष्ये इदं द्वयमप्युक्त्वा न कदाचित्तावदुत्सर्गो भवत्यपवादन्तावत्प्रतीक्षत इत्यर्थकमुक्तम् ।

एतन्मूलकमेव नवीनाः पठन्ति ।

उपसंजनिष्यमाणनिमित्तोऽप्यपवाद उपसंजातनिमित्तमप्युत्सर्गं बाधत इति ॥ ६५ ॥

यत्तु अभ्यस्तसंज्ञासूत्रे कैयटेन प्रकल्प्य चेति प्रतीकमुपादाय यथा न सम्प्रसारण इति परस्य यणः पूर्वं सम्प्रसारणं पूर्वस्य तु तन्निमित्तकः प्रतिषेध इत्युक्तं, तत्तु तत उत्सर्ग इत्याद्यक्षरार्थाननुगुणम् ।

यत्त्वपवादवाक्यार्थं विना नोत्सर्गवाक्यार्थ इति तदर्थ इति तन्न ? अभिनिविशतेऽपवादविषयमित्यादिपदस्वारस्यभङ्गापत्तेः । पदजन्य-

---

स्शब्दस्सम्यग् ज्ञातस्सुष्ठुप्रयुक्तस्स्वर्गे लोके च कामधुग् भवती"तिश्रुतिबोधितेत्यर्थः । अत एवेति—अधिकारिद्वैविध्येन न्यायद्वैविध्यादेवेत्यर्थः ।

नवीना दीक्षितप्रभृतयः । बाधत इति—उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रापवादप्रवृत्तिसम्भावना तत्रोत्सर्गशास्त्रं पूर्वन्न प्रवर्त्तत इत्यर्थः । अनेन न्यायेन हि भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचः । अत एव दधतीत्यस्य सिद्धिः । अत्रापवादपदेन निषेधपर्य्युदासापवादास्समे गृह्यन्ते । तेन ररन्धतुरित्यादौ यदि कित्वन्न स्यात्तदा नुमि संयोगात्परत्वेनासंयोगादिति स्यात्सम्भावना । तथा च नुमः पूर्वन्न कित्त्वम् । अत एव नलोपाभावोऽपि, प्रफुल्त इत्यादौ उपसर्गयोगात्पूर्वं लत्वन्न, वागत्रेत्यादावत्रेत्यस्य योगात्पूर्वं द्वित्वन्न । यत्रापवादशास्त्रोत्सर्गशास्त्रयोः कचित्समकालप्राप्तिर्न तत्रायन्न्यायः प्रवर्त्तते । गविष्ठिर इत्यादौ गवीतिवचनादेवालुगिति भाष्यसङ्गतिरेतत्कल्पनाभावे यदि लुक् न स्यात्तर्ह्यवादेशे हलन्तात्परत्वेनालुक् स्यादिति सम्भावनायास्सत्त्वेन पूर्वमलुकस्सिद्धत्वाद् गवीति वचनादेवालुगिति भाष्यमसङ्गतं स्यात् "ऋदुपधेभ्यो लिटः कित्त्वमि"तिवार्त्तिकसङ्गतिश्च ।

वस्तुतस्तु "हलन्तादि"तिसूत्रेऽदन्तग्रहणसामर्थ्याल्लुग्विषय उपसञ्जनिष्यमाणन्यायो न प्रवर्त्ततेऽथवा "हलन्तादि"तिविहितविशेषणमिति कल्प्यते, तावतैवोक्तभाष्यसङ्गतिसत्त्वात् ।

अपवादविषयमिति—अस्मिन् सिद्धान्ते न लक्ष्यज्ञानापेक्षा । तथाच लक्ष्यबोधकापवादविषयशब्दोपादानमनर्थकमिति तत्त्वम् । कारणाऽभावा-

पदार्थोपस्थितौ वाक्यार्थबोधाभावे कारणाभावाच्च। यत्र त्वपवादो निषिद्धस्तत्रापवादविषयेऽप्युत्सर्गः प्रवर्तत एव। यथा वृक्षावित्यत्र नादिचीति पूर्वसवर्णदीर्घनिषेधादप्रवर्तमानस्य वृद्धिबाधकत्वाभावाद् वृद्धिः प्रवर्तते।

अत एव तौ सदित्यादि संगच्छते। अत एव निर्देशाद् भ्रष्टावसर-न्यायस्यात्र शास्त्रेऽनाश्रयणम्। ध्वनितं चेदमिको गुणेति सूत्रे भाष्ये इति भाष्यप्रदीपोद्योते निरूपितम्।

अत्र देवदत्तस्य हन्तरि हते देवदत्तस्योन्मज्जनं नेति न्यायस्य विषय एव नास्ति। हते देवदत्त उन्मज्जनं न, देवदत्तहननोद्यतस्य हनने तु भवत्येवोन्मज्जनम्। प्रकृतेऽपि न पूर्वसवर्णदीर्घेण वृद्धेर्हननं किन्तु हननोद्यमसजातीयं प्रसक्तिमात्रं प्रसक्तस्यैव निषेधात्।

प्रतिपदोक्तत्वमपि निरवकाशत्वे सत्येव बाधप्रयोजकम्। स्पष्टं चेदं शेषाद्विभाषेति सूत्रे भाष्ये। तत्र हि शेषग्रहणमनर्थकं ये प्रतिपदं विधी-यन्ते ते बाधका भविष्यन्तीत्याशङ्क्यानवकाशा हि विधयो बाधका भवन्ति समासान्ताश्च कबभावे सावकाशा इत्युक्तम्।

क्वचिदनवकाशत्वाभावेऽपि परनित्यादिसमवधाने शीघ्रोपस्थि-तिकत्वेन पूर्वप्रवृत्तिप्रयोजकं बलवत्त्वं प्रतिपदविधित्वेनापि, परनित्या-न्तरङ्गप्रतिपदविधयो विरोधिसन्निपाते तेषां मिथः प्रसङ्गे परबलीयस्त्व-मिति प्रत्ययोत्तरपदयोश्चेति सूत्रे कैयटेन पाठात्।

---

च्चेति-कार्ये कारणातिरिक्तस्याऽपेक्षाभावादिति भावः। अनाश्रयणमिति-उद्देश्यतावच्छेदकाक्रान्तेरेव शास्त्रावसरत्वेन तस्यापवादनिषेधस्थलेऽपि वि-द्यमानत्वेनावसरभ्रष्टत्वाभावाच्च। शेषग्रहणमनर्थकमिति।

ननु रम्यपथ इत्यादौ प्रतिपदोक्तत्वेन अपप्रत्यये कृतेऽपि कप् माभूदि-त्यर्थमस्त्वित्यत आह ये प्रतिपदमिति। बाधका इति—स्वप्रवृत्त्युत्तरमपि कपम्वारयिष्यन्तीत्यर्थः। अनवकाशा हीति—एवञ्च येन नाप्राप्तन्यायस्थले एव तथा बाधो नान्यत्रेति भावः।

ननु तेनैव बाधोऽस्त्वित्यत आह समासान्ताश्चेति—एवञ्च प्रतिपद-विधित्वम् शीघ्रोपस्थितिनिमित्तकत्वरूपमन्तरङ्गत्वमेव नातिरिक्तं बाधनिमि-त्तमिति बाधतत्त्वम्।

उपसञ्जनिष्यमाणनिमित्तोऽप्यपवाद उपसञ्जातनिमित्तमप्युत्सर्गं बाधते—

अभेदसम्बन्धावच्छिन्नोपसञ्जनिष्यमाणनिमित्तत्वावच्छिन्नप्रकारतानि-रूपितापवादत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदस-म्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता समवायसम्बन्धावच्छि-

अत एव रमे इत्यादौ प्रतिपदोक्तत्वात्पूर्वमेत्व आकारप्रश्लेषाद्धल्ङ्या-दिलोपो न प्राप्नोतीत्याशङ्क्यौङ्हस्वादिति लोपेन(१) समाहितम् ॥ ६५॥

नन्वयजे इन्द्रमित्यादावन्तरङ्गस्यापि गुणस्यापवादेन सवर्णदीर्घेण बाधः स्यादत आह—

**अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तरङ्गेण बाध्यते ॥ ६६ ॥**

निरवकाशत्वरूपस्य बाधकत्वबीजस्याभावात् । एवं च प्रकृतेऽन्तरं-गेण गुणेन सवर्णदीर्घः समानाश्रये चरितार्थो यण्गुणयोरपवादोऽपि बाध्यते । पूर्वोपस्थितनिमित्तत्वरूपान्तरङ्गत्वविषय इदम् ।

---

न्नैकत्वत्वावच्छिन्नपरिच्छिन्नत्वसम्बन्धावच्छिन्नैकत्वत्वावच्छिन्नैकत्ववि-शिष्टकर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणा-धेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता सती परिच्छिन्न-त्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानि-रूपिता सती अभेदसम्बन्धावच्छिन्नोपसञ्जातनिमित्तत्वावच्छिन्नप्रकारतानि-रूपिता योत्सर्गत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणनि-ष्ठत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणनिरूपकत्वसम्बन्धावच्छिन्ना प्र-कारता तादृशप्रकारतानिरूपिता या बाधधात्वर्थव्यापारत्वावच्छिन्ना विशेष्य-ता तादृशविशेष्यताविशिष्टश्शाब्दबोधः । अपवादो यद्यन्यत्र चरितार्थस्तर्ह्यन्तर-ङ्गेण बाध्यते, अन्तरङ्गेण अपवादो बाध्यते, अन्तरङ्गाभिन्नैकत्वविशिष्टक-र्तृवृत्तिबाधनानुकूलव्यापारजन्यफलाश्रयोऽपवादः ।

बाधकत्वबीजस्याऽभावादिति—अन्तरङ्गपरिभाषामबाधित्वैव गुणं येननाप्राप्तन्यायेन बाधित्वा दैत्यारिरित्यादौ चरितार्थसवर्णदीर्घस्यान्तरङ्गप-रिभाषाबाधकत्वे प्रमाणाऽभावः ।

यत्त्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादित्यारभ्य सूत्रे कैयट इत्यन्तग्रन्थखण्डनपरश्शेखरो न युक्तः । नुकि कृते दीर्घस्य सम्भवाऽभा-वात् अजन्तस्याभ्यासस्य दीर्घो विधीयते । असम्भवस्थले आगम आदेश-स्य बाधको भवत्येवेत्येव भाष्याशयः । सम्भवस्थलेऽपि बाधे तक्रकौण्डि-

---

(१) लोपेन समाहितमिति—नव्यैरिति शेषः । मान्यास्तु नहि प्रतिपदोक्तत्व-प्रयुक्तं हल्ङ्यादिलोपापेक्षमन्तरङ्गत्वमेत्वस्यात्र वक्तुं शक्यम् ? तस्य सावकाशविषय-त्वात् । एत्वविधिश्च निरवकाशः । न हि हल्ङ्यादिलोपाप्राप्तिविषये सम्बुद्धिनिमित्तक-स्यैत्वस्य क्वचिच्चारितार्थ्यसम्भवः । ततश्च सत्यपि सम्भवे बाधनमिति न्यायेनापवाद-त्वात् पूर्वमेत्वे हल्ङ्यादिलोपाप्रवृत्तिरित्येव वक्तुमुचितमिति नव्योक्तमचारुतरम्प्रति-भातीति ।

यत्त्वागमादेशयोर्न बाध्यबाधकभावो भिन्नफलत्वादत एव ब्राह्मणे-भ्यो दधि दीयतां कम्बलः कौण्डिन्यायेत्यादौ कम्बलदानेन न दधिदान-न्यन्याय एवोदाहरणम्। दधि ब्राह्मणेभ्यो दीयतां कम्बलःकौण्डिन्यायेति कम्बलेन न दधिबाध इति कैयटेनोक्तम्। स्यूरित्यादौ ऊठि कृते वकारस्य हि लोपसम्भवः।

तथा च असम्भवस्थले आगमस्यादेशबाधकत्वं स्पष्टमेवेत्येव "दीर्घोऽ-कित" इति भाष्याशयः। अत एव तत्राकित इति शक्यमकर्तुंकस्मान्न भवति यंयम्यते रंरम्यत इति अनजन्तत्वादित्यसम्भव उक्तः। तथा च स-म्भवस्थले कैयटोक्तोऽबाध इति। असम्भवस्थले भाष्योक्तो बाध इतिसि-द्धान्तप्रकार इति सूक्ष्मतत्त्ववेत्तारः।

वस्तुतस्तु—अपवादत्वेऽपि व्याप्यविषयतया व्यापकविषयतायां स-ङ्कोचः। अवर्णे सवर्णाऽजव्यवहितपूर्वत्वविशिष्टाकृत्वावच्छिन्नविषयताति-रिक्तत्वेन सङ्कोचः। अचि अणव्यवहितोत्तरत्वविशिष्टसवर्णाज्भिन्नत्वेन वा सङ्कोचः। एवञ्च अयज् इ इन्द्रमित्यादौ गुणप्रवृत्तिर्युक्तैवेति नाऽपूर्वा परिभाषाऽपि तु सङ्कोच्यसङ्कोचकभावमूलिकैवेति फलति यण्गुणयोरप-वाद इति।

ननु कथमनयाऽपवादत्वम् यणि सिज्लोपस्याऽसिद्धत्वात्, एकादेशे च सिद्धत्वात् यण्गुणयोरप्राप्तियोग्ये आतीदित्यादौ दीर्घस्य चारितार्थ्यादिति चेन्न? एकादेशविषयेऽविशेषात्सर्वं प्रति सिज्लोपस्सिद्ध इति वार्त्तिकार्थ इति यणोऽपि प्राप्तिसत्त्वात्। नह्येकमुदाहरणमिति न्यायेन सिज्लोप एका-देशो भवतीति वार्त्तिकार्थः। एवञ्च "अकस्सवर्णे"इत्यस्यानवकाश इति सि-ज्लोपस्यासिद्धत्वेन यण्प्रवृत्त्यभावेऽपि उद्देश्यतावच्छेदकाक्रान्तिरूपयण्-प्राप्तिसत्त्वाच्चेति तत्त्वम्!

अभेदसम्बन्धावच्छिन्नान्तरङ्गत्वावच्छिन्नाऽन्तरङ्गनिष्ठा या प्रकारता ता-दृशप्रकारतानिरूपिता समवायसम्बन्धावच्छिन्नपरिच्छिन्नत्वसम्बन्धाव-च्छिन्नैकत्वत्वावच्छिन्नैकत्वविशिष्टकर्त्तृत्वावच्छिन्ना कर्त्तृनिष्ठा या विशे-ष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छिन्नप्रकारता तादृ-शप्रकारतानिरूपिता तथा परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्त्तमानकालत्वा-वच्छिन्नप्रकारतानिरूपिता सती या बाधधात्वर्थव्यापारत्वावच्छिन्ना विशे-ष्यता तादृशविशेष्यतासमानाधिकरणजन्यत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या सम्भावनात्वावच्छिन्नार्थविशिष्टस्थलान्तरत्वा-वच्छिन्नाधारतानिरूपिता या स्वरूपसम्बन्धावच्छिन्ना चरितार्थत्वावच्छि-न्नप्रकारतानिरूपिताऽपवादत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्ट-शाब्दबोधः।

बाध इति च्छ्वोरिति सूत्रे कैयटस्तन्न ? अपवादो नुग्दीर्घत्वस्येति दीर्घोऽकित इति सूत्रभाष्यविरोधात् ॥ ६६ ॥

नन्वजीगणदित्यादौ णेरीत्वं निरवकाशत्वाद्धलादिः शेषं बाधेत तत्राह—

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति ॥ ६७ ॥

दीर्घोऽकित इत्यकिद्ग्रहणमस्यां ज्ञापकम् । अन्यथा यंयम्यत इत्यत्र नुकि कृतेऽनजन्तत्वाद्दीर्घाप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव ।

इयं परान्तरंगादिबाधकानामप्यबाधकत्वबोधिका । तेनाचीकरत् मीमांसत इत्यादि सिद्धम् । आद्ये सन्वद्भावस्य परत्वाद्दीर्घेण बाधः प्राप्नोति । अन्त्ये माम्बधेति दीर्घेणान्तरङ्गत्वादित्वस्य बाधः प्राप्तः ।

यत्तु यत्रैकैकप्रवृत्त्युत्तरमपि सर्वेषां प्रवृत्तिस्तत्रैवेदमित्यत एकेति

---

निरवकाशत्वादिति—गणरूपस्याभ्यासस्येत्वमित्यर्थक "ई च गणः" इत्यस्य हलादिशेषेण णकारलोपे निरवकाशत्वमिति ग्रन्थाशयः। बाधेतेति—बाधसत्त्वे तु णकारस्येत्वे ह्रस्वे च जातेऽग्लोपित्वाभावाद्दीर्घाभावेऽजिगणदितिरूपमनिष्टमापद्येतातः परिभाषाया अस्या अवतारः । अन्यथेति—परिभाषाया असत्त्व इत्यर्थः । अकिद्ग्रहणमस्यां ज्ञापकमिति–नचाकिद्ग्रहणाभावे यंयम्यत इत्यादौ दीर्घम्बाधित्वा नुक्यपि पश्चाद्दीर्घवारणायाऽकिद्ग्रहणं चरितार्थमिति वाच्यम् ? तक्रकौण्डिन्यन्यायेन दीर्घबाधे जाते पुनर्दीर्घाप्रवृत्त्या ज्ञापकत्वसौष्ठवात् ।

नच दीर्घे कृतेऽत इति तपरकरणेन नुकोऽप्राप्त्या कृते चारितार्थ्यन्नास्तीति न तक्रकौण्डिन्यन्यायप्रवृत्तिरिति वाच्यम् ? अभ्यासे सर्वत्र ह्रस्वे तपरकरणवैयर्थ्यापत्त्या तस्यौपदेशिकदीर्घे सत्येव व्यावृत्त्यर्थं सार्थक्यात् । अत एव वामीम्यतइत्यादौ कृते चारितार्थ्यं स्पष्टमेव ।

अथ खण्डनप्रकारः ।

नायं कैयटग्रन्थो युक्तः ? धर्मिग्राहकमानविरोधात् । "गुणोयङ्लुकोरि"ति भाष्योदाहरणाऽसङ्गतिश्चेति शेखरग्रन्थो न युक्तः ? अचीकरत मीमांसत इत्यादौ बाध्येत्वप्रवृत्त्युत्तरं बाधकदीर्घप्रवृत्तिः, पापच्यत इत्यत्र बाध्ययोरत्वाभ्यासयोः प्रवृत्तौ बाधकदीर्घप्रवृत्त्यसम्भवात् । कैयटाशयस्तु—बाध्यप्रवृत्त्युत्तरं बाधकप्रवृत्तिसम्भवस्थले इयम्परिभाषा प्रवर्त्तत इति । अत एव न धर्मिग्राहकमानविरोधोऽपि । अकिद्ग्रहणाऽभावे बाध्यदीर्घप्रवृत्तौ सत्यामपि बाधकस्य नुको ।भूतपूर्वगत्यात्वमाश्रित्य पश्चात्प्रवृत्तिसम्भवात् । तत्र दीर्घाऽप्रवृत्तये क्रियमाणस्याऽकिद्ग्रहणस्य परिभाषाज्ञापकत्वसम्भवाच्च । शेखरकारस्य तु "अत एक" इति सूत्रस्थभाष्यविरोध इति प्राज्ञाः ।

सूत्रे कैयटस्तन्न ? नुकि कृते दीर्घाप्राप्त्या धर्मिग्राहकमानविरोधान्मानु-बधादीनां दीर्घे कृते ह्रस्वाप्राप्त्या गुणोयङ्लुकोरिति सूत्रस्थभाष्योक्त-तदुदाहरणासंगतेश्चेत्यन्यत्र विस्तरः ॥ ६७ ॥

ननु तच्छीलादितृन्विषये ण्वुलपि स्यात् । न च तृन्नपवादोऽसरू-पापवादस्य विकल्पेन बाधकत्वात् । अत आह—

ताच्छीलिकेषु वासरूपविधिर्नास्ति ॥ ६८ ॥

ण्वुलि सिद्धे निन्दहिंसादिसूत्रेणैकाज्भ्यो वुञ्विधानमत्र ज्ञापकं, तत्र ण्वुल्वुञोः स्वरे विशेषाभावात् ।

ताच्छीलिकेष्विति विषयसप्तमी । तेन ताच्छीलिकैरताच्छीलिकैश्च वासरूपविधिर्नेति बोध्यम् ।

---

अभ्यासविकारेषु बाध्यबाधकभावो नास्ति अभ्यासविकाराधिकरणक-बाध्यबाधकभावकर्तृकसत्ताप्रतियोगिकोऽभावः ।

स्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्नाऽभ्यासविकारत्वावच्छिन्ना-भ्यासविकारनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता बाध्यबाधकभाव-निष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशे-ष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना प्रकारता ता-दृशप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यता-समानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना भेदनिष्ठा विशेष्यता तादृ-शविशेष्यताविशिष्टश्शाब्दबोधः ।

अपवादप्रस्तावादाह ननु तच्छीलादीति । ण्वुलपि स्यादिति—सा-मान्यरूपेण कर्तरि विधीयमानस्य ण्वुलस्ताच्छील्यादिविशिष्टे कर्तरि प्रवृ-त्तौ सत्याम्बाधकाभावादिति तत्त्वम् । स्वरे विशेषाभावादिति । निन्दक इत्यादौ "ञ्नित्यादिर्नित्यमि"ति आद्युदात्तत्वे "लिती"ति प्रत्ययात्पूर्वस्योदा-त्तत्वे विशेषो नास्तीति तात्पर्यम् ।

ननु ताच्छीलिकेषु वाऽसरूपविध्यभावे निराकर्ता निराकरिष्णुरिति रूप-द्वयन्न सिद्ध्येदत आह—विषयसप्तमीति ।

केचित्तु—ताच्छीलिका अपवादा अताच्छीलिकानुत्सर्गांस्ताच्छीलिकांश्च नित्यम्बाधन्ते इति परिभाषाऽकारः । प्रथमांशे निन्दहिंसादिग्रहणं ज्ञापकम् , द्वितीयांशे लषपतेत्युकञ्विषये "जुचंक्रम्ये"ति पदधातोर्युज्विधानं ज्ञाप-कम् । यदि वासरूपविधिस्स्यात्तर्हि "अनुदात्तेतश्च हलादेरि"ति युचि सिद्धे तद् व्यर्थं स्यात् । प्रथमोदाहरणं तच्छीलार्थे अलंकृञ इष्णुजेव भवति अ-

नन्वेवं कम्रा कमनेत्याद्यसिद्धिर्नमिकम्पीति रेणानुदात्तेतश्च हलादेरिति युचो बाधादिति चेत्, न ? सूददीपदीक्षश्चेत्यनेन दीपेर्यज्निषेधेनोक्तार्थस्यानित्यत्वात् ॥ ६८ ॥

नन्वेवं हसितं छात्रस्य हसनमित्यादौ घञ्, इच्छति भोक्तुमित्यत्र लिङ्लोटावीषत्पानः सोमो भवतेत्यत्र खल्प्राप्नोतीत्यत आह—

क्तल्युट्तुमुन्खलर्थेषु वासरूपविधिर्नास्ति ॥ ६९ ॥

इदं च वासरूपविधेरनित्यत्वात्सिद्धम्। तदनित्यत्वे ज्ञापकं चाह कृत्यतृचश्चेति, तत्र हि चकारसमुच्चितलिङ्गा कृत्यतृचोर्बाधा मा भूदिति कृत्यतृज्ग्रहणं क्रियत इत्यन्यत्र विस्तरः। वासरूपसूत्रे भाष्ये स्पष्टा।

ननु श्वः पक्तेत्यत्र वासरूपविधिना लृडपि प्राप्नोति कृते आदेशे वैरूप्यादत आह—

---

लंकरिष्णुः नतु "ण्वुल्तृचौ"। द्वितीयोदाहरणम् अस्मिन्नेव वुञ्विषये तृन्न भवति यथा "स्थेसभास" इति वरज्विषये "अनुदात्तेतश्चे"ति युज् न भवति न शेखरोक्तपरिभाषाऽकार इति ब्रुवन्ति।

ताच्छीलिकेषु वासरूपविधिर्नास्ति—ताच्छीलिकाधिकरणकवाऽसरूपविधिकर्तृकसत्ताप्रतियोगिकोऽभावः।

तच्छीलाधिकारविषयीभूतपदार्थनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता याऽधिकरणत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्ववृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या वासरूपविधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वप्रतियोगिकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

क्तल्युट्तुमुन्निति १ लादेशेष्विति २ उभयनिर्देशे पञ्चमीति।

घञिति—नच घञन्तपरिहास इत्यादीनां सिद्धिर्न स्यादिति वाच्यम् ? हस्धातोरचाद्यच् तदन्तात्तद्धितीय "प्रज्ञादिभ्योऽणि"ति अणि रूपसिद्धेः, घञर्थकान्ताण्णिजन्तात्पचाद्यचि वा रूपसिद्धेश्च। अत एव परिहास इत्यत्र परीपाकव"दुपसर्गस्य घञी"ति न दीर्घः।

विधेरनित्यत्वादिति—अनेनैव पूर्वोत्तरपरिभाषयोस्सिद्धौ पृथग् ज्ञापकान्तरवर्णनं प्रपञ्चार्थमिति केचित्।

क्तल्युट्तुमुन्खलर्थाधिकरणकवासरूपविधिकर्तृकसत्ताप्रतियोगिकाभावः।

कृते आदेशे वैरूप्यादिति—वाऽसरूपशास्त्रेऽसरूपपदेन स्वाऽवृत्तिरूप-

**लादेशेषु वासरूपविधिर्नास्ति ॥ ७० ॥**

आदेशकृतवैरूप्यवत्सु लकारेषु स नास्तीत्यर्थः। अत्र च हशश्वतो-र्लङ् चेति लङ्विधानं ज्ञापकम्। अन्यथा परोक्षे लिडिति लिटा लङः समावेशोऽसारूप्यात्सिद्ध इति किं लङ्विधानेन। शत्रादिभिस्तिङां समावेशार्थं शतृविधायके विभाषाग्रहणानुवृत्तिर्लिटः कानज्वेति वा ग्रहणं च कृतम्। तज्ज्ञापयति वासरूपसूत्रेऽपवाद आदेशत्वानाक्रांतः प्रत्यय एव गृह्यत इति कैयटादौ ध्वनितम्। तत्फलं तु सदादिभ्यो भूत-सामान्ये लिटः क्वसुरेव न तु पक्षे तिङ् इति बोध्यम् ॥ ७० ॥

ननु ङमो ह्रस्वादित्यादौ ङमः परस्याचोऽपि परतो ङम इति वेति सन्देहः स्यादत आह—

**उभयनिर्देशे पञ्चमीनिर्देशो बलीयान् ॥ ७१ ॥**

---

वान् गृह्यते स्वपदेनाविशेषादादेशरूपस्यापि स्वस्य ग्रहणादिहादेशरूपः स्वं-लृट्स्थानिकतिशब्दस्तत्र स्थानिवद्भावमहिम्ना लृट्त्वम् तद्वृत्तिरूपवान् डा-शब्दत्वरूपवान् लुडस्ति इति लुटो वैकल्पिकविधिना लृड्बाधकत्वापत्तिः। आदेशकृतवैरूप्यवत्स्विति—वाऽसरूपसूत्रेऽपवादशब्देन लादेशत्वानाक्रा-न्तस्य ग्रहणमेवञ्च वाऽसरूपसूत्रे लादेशभिन्नो यस्त्वं तद्वृत्तिरूपवान् एवा-सरूपपदेन गृह्यते, इति पुरस्स्पष्टम्।

लादेशाधिकरणकवासरूपविधिकर्त्तृकसत्ताप्रतियोगिकाभावः।

परनित्यान्तरङ्गापवादानामुत्तरोत्तरम्बलीय इति पूर्वोक्तपरिभाषाङ्गभूत-व्याख्याम्विधाय बलीयऽपदघटितसाधर्म्येणोपस्थितामुभयनिर्देश इति प-रिभाषां व्याचिख्यासुराह नन्विति। सन्देह इति—ननु एकस्मिन् धर्मिणि विरुद्धकोटिद्वयावगाहिज्ञानस्यैव संशयपदार्थत्वेन ह्रस्वादिति पञ्चमीनिर्दे-शादुत्तरांशोपस्थितिः, अचीति सप्तमीनिर्देशात्पूर्वांशोपस्थितिः, ङमऽपरा-भिन्नो योऽचऽपूर्वस्तस्य ङमुट् इत्यर्थः, अचऽपूर्वाभिन्नो यो ङम उत्तर-स्तस्य ङमुडित्यर्थो वा। प्रत्यङ् आत्मेत्यादौ सूत्रसार्थक्याभावेऽपि प्रत्यङ्ङप-रम आत्मेत्यादौ सूत्रसार्थक्यमिति न सन्देह इति चेन्न? ङमूपदार्थस्यैव श्रुतत्वात्तत्रैवोभयोरन्वये ङमऽपरो योऽच् ततऽपूर्वस्य ङमुडित्यर्थ इति ङमो ङमुट् प्राप्नोति। अचऽपूर्वो यो ङम् ततऽपरस्य ङमुडित्यर्थेऽचः ङमुट् प्राप्नोति, तथाच विभिन्नविषयत्वात्सन्देहोपपत्तेः। एतयोः परिभाष-योर्मध्ये यस्या बलवत्त्वन्तयैव पूर्वं स्वविधेयमुपस्थाप्यं "ङमो ह्रस्वादि"त्यत्र पञ्चमीनिर्देशस्यानवकाशत्वेन "तस्मादित्युत्तरस्ये"त्यस्या एव बलवत्त्वम्। "शितुगि"त्यादौ सप्तमीनिर्देशस्यानवकाशत्वेन तस्मिन्निति परिभाषयैव प्रथमं स्वविधेयमुपस्थाप्यमिति व्याख्याम्प्रकटयन्नाह—उभयनिर्देश इति।

अचीति सप्तमीनिर्देशस्य मय उञ इत्युत्तरत्र चारितार्थ्यात्पञ्चमीनिर्देशोऽनवकाश इति तस्मादित्युत्तरस्येत्यस्यैव प्रवृत्तिः ।

यत्र तु ङः सिधुडित्यादावुभयोरप्यचारितार्थ्यं तत्र तस्मिन्निति सूत्रापेक्षया तस्मादित्युत्तरस्येत्यस्य परत्वात्तेनैव व्यवस्था । एवमुभयोश्चारितार्थ्येऽपि, यथामि सर्वनाम्न इत्यादौ । तत्रामीति सप्तमी त्रेस्त्रय इत्यत्र चरितार्था । आदिति पंचम्याज्जसेरसुगित्यत्र चरितार्थेति स्पष्टं तस्मिन्निति सूत्रे भाष्ये कैयटे च ॥ ७१ ॥

इति बाधबीजाख्यन्द्वितीयन्तन्त्रम् ।



---

अयम्भावः, यत्र हि पञ्चमीसप्तमीनिर्देशयोर्मध्येऽन्यतरोऽन्यत्र कुत्रचिच्चरितार्थः तत्राऽचरितार्थविभक्तिबलेन निर्णयः, यत्र तूभावप्यन्यत्र चरितार्थौ तत्राप्येनया निर्णयः । "ङमो ह्रस्वादची"ति सूत्रेऽचीति सप्तमीनिर्देशो "मय उञो वो वे"त्यत्र चरितार्थस्सन् ङम इति पञ्चमीनिर्देशेन बाध्यते । यथा "आमि सर्वनाम्नस्सुडि"ति सूत्रे "आज्जसेरि"ति पञ्चमीनिर्देशस्य पूर्वत्र चारितार्थ्येऽपि आमीति सप्तमीनिर्देशस्य "त्रेस्त्रय" इत्यत्र परत्र चारितार्थ्येऽपि पञ्चमीनिर्देशादेव व्यवस्था । तस्मिन्निति सूत्रे वार्तिककारेण विप्रतिषेधसूत्रस्य फलमेतत् इत्युक्तमिति ।

केचित्त्वित्थं सन्देहार्थम्वर्णयन्ति । तस्मिन्निति परिभाषयांऽशत्रयोपस्थितिः अव्यवहितांशः, पूर्वत्वांशः, षष्ठ्यंशश्चेति । प्रकृते कस्य षष्ठ्यंश उपस्थापनीयः पूर्वस्येत्यस्य विशेषणत्वे तत्षष्ठ्यंशवैयर्थ्यम् । उत्तरस्येत्यस्य विशेषणत्वे तद्वैयर्थ्यञ्चेति सन्देहः ।

एवं तस्मादित्यनेनापि परत्वांशः, अव्यवहितांशः, षष्ठ्यंशश्चेति । तत्रादग्धदहनन्यायेन यत्र योंशस्सिद्धस्तस्य तत्रानुपस्थितिरेव फलाभावात् इकोयणचीत्यत्र षष्ठ्यंशः पद्दन्नित्यत्रांशत्रयोपस्थिति⁀कस्याप्यंशस्याऽसिद्धेरिति व्याख्यां केचिदाहुः ।

उभयनिर्देशाभिन्नशास्त्राधिकरणकपञ्चमीनिर्देशाभिन्नबलीय⁀कर्तृकसत्ता ।

इति बाधबीजनिरूपकन्द्वितीयम्प्रकृतम् ।



## अथ शास्त्रशेषाख्यन्तृतीयन्तन्त्रम्।

नन्वतः कृकमीति सत्वमयस्कुम्भ्यत्यत्र न स्यात्कुम्भशब्दस्यैवोपादानादत आह—

प्रातिपदिकग्रहणे लिंगविशिष्टस्यापि ग्रहणम् ॥ ७२ ॥

सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्यापि तेन ग्रहणं बोध्यम्। अपिना केवलस्यापीत्यर्थः। अस्याश्च ज्ञापकं समानाधिकरणाधिकारस्थे कुमारश्र-

---

अथ तृतीयन्तन्त्रम्।

अथेदानीम्बाधबीजनिरूपकाख्यम्प्रकरणम्व्याख्यायावशिष्टतन्त्रशेषाख्यप्रकरणमधिकरिष्यन्नादौ शास्त्रत्वसम्पादकप्रकरणशेषभूताम्परिभाषामवतारयति नन्विति। अयस्कुम्भीति—कुम्भादावुत्तरपद इत्यर्थाद्विसर्जनीयस्य कुम्भरूपोत्तरपदपरत्वाभावादयस्कुम्भीति समासे क्वचन्तस्यैव तत्त्वात्। प्रातिपदिकग्रहणे प्रातिपदिकबोधकपदे उच्चारिते सति प्रत्यासत्तिन्यायेन तेनैव पदेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं कोऽर्थो बोधनं भवतीत्यर्थः। नन्वेवमाशयेऽत इञित्यादावत्पदस्यापि अदन्तप्रातिपदिकबोधकत्वेन रमा गौरीत्यादिलिङ्गविशिष्टबोधकत्वापत्तिरित्याशयेनाह सामान्यरूपेणेत्यादि। प्रातिपदिकत्वतद्व्याप्यानुपूर्वीप्रकारेण बोधके सतीत्यर्थः। अत्पदमिह अदन्तत्वप्रकारेण बोधकम्। तच्च न प्रातिपदिकत्वतद्व्याप्यरूपम् स्वनिष्ठोद्देश्यतानिरूपितविधेयताश्रयस्त्रीप्रत्ययान्ततदादौ प्रातिपदिकत्वतद्व्याप्यधर्माणामतिदेश इति फलति।

ननु स्वाभाववद्वृत्तित्वमेव व्याप्यत्वम् कुमार क्रीडायामिति धातौ कुमारत्वस्य विद्यमानत्वेन तद्व्याप्यत्वाभावेन ज्ञापकत्वभङ्ग इति प्रश्नः। नच प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकधर्मपुरस्कारेणेत्यर्थ इति ज्ञापकत्वसिद्धिरिति वाच्यम्? "अतइनिठनावि"ति सूत्रेऽत्पदप्रतिपाद्यतावच्छेदकादन्तत्वातिदेशेन मालीत्यादिसिद्धौ "मालादीनाञ्चे"त्यस्य वैयर्थ्याऽपत्तेः। उत्तरम्—प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकपदप्रतिपाद्यतावच्छेदकवर्णत्वव्याप्यधर्माऽघटितधर्मपुरस्कारेणेति तदर्थवर्णनेनादन्तत्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन प्रातिपदिकग्रहण इति परिभाषाऽप्रवृत्त्या मालीत्यादिसिद्धये "मालादीनाञ्चे"त्यस्य सार्थक्यात्।

नन्वेवमपि 'विभक्तौ लिङ्गविशिष्टाऽग्रहणमि'ति परिभाषावैयर्थ्याऽपत्ति- "श्वयुवे"तिसम्प्रसारणविधायके नान्तान्नन्तानामित्यर्थस्याभिमतत्वेन नान्तान्नन्तयुवन्शब्दत्वस्य वर्णत्वव्याप्यधर्मघटितत्वेनातिदेशाभावाद् युवती-

मणादिभिरिति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः । स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तदेतज्ज्ञापकम् ।

---

रित्यादौ तदप्राप्तिरिति चेन्न ? स्त्रीप्रत्ययान्तसख्यादौ तथा सखिशब्दत्वानतिदेशेनानङाद्यप्रवृत्ते–परिभाषायास्सफलत्वात् ।

केचित्तु—प्रातिपदिकमात्रवृत्तिविषयताप्रयोजकत्वञ्च प्रातिपदिकवृत्तिविषयताप्रयोजकत्वे सति प्रातिपदिकेतरवृत्तिविषयताप्रयोजकत्वाभाववत्त्वम् । अत्राभावश्च सामानाधिकरण्यसम्बन्धेन पदार्थान्तरान्वयाप्रयोज्यो विवक्षणीयः । कुमारश्रमणेत्यादौ कुमारपदं कुमारप्रकृतिकसुबन्ते लाक्षणिकमिति न तत्र क्षतिरिति वदन्ति ।

मान्यास्तु—"युवाखलती"ति सूत्रे जरतीति स्त्रीलिङ्गनिर्देश एव परिभाषायां ज्ञापक इत्याहुः ।

अस्मद्गुरवस्तु परिभाषार्थमेवम्वर्णितवन्तः कुमारत्वस्य कुमारक्रीडायामिति धातौ विद्यमानत्वेन ज्ञापकत्वसन्देहेऽपि प्रातिपदिकत्वव्याप्यशाब्दबोधीयविषयताप्रयोजकस्यैव प्रातिपदिकग्रहणपदेन ग्रहणात् । प्रातिपदिकग्रहणत्वञ्च प्रातिपदिकत्वव्याप्यशाब्दबोधीयविषयताप्रयोजकत्वम् ।

नच प्रातिपदिकाधिकारात् "अत इञि"त्यस्यापि प्रातिपदिकग्रहणत्वेन रमादिशब्दादपि इञ्प्रत्ययापत्तिरिति वाच्यम् ? प्रातिपदिकत्वावच्छिन्नविशेष्यतानिरूपिताऽभेदसम्बन्धावच्छिन्नप्रकारताभिन्नविषयताप्रयोजकत्वं प्रातिपदिकग्रहणत्वम् । अदन्तत्वावच्छिन्नविषयतायास्तादृशप्रकारताभिन्नत्वाभावादिति वर्णनात् ।

अत्र सरयूपारीणशङ्काः । अनल्विधाविति व्याख्यावसरे प्रातिपदिकनिर्देशात्सिद्धम्प्रातिपदिकनिर्देशाश्चार्थतन्त्रा भवन्ति विधिग्रहणन्न कार्यमिति तत्रत्यां भाष्यरीतिमनुसृत्य कुमारश्रमणादिभिरित्यत्र कुमारेत्यविभक्तिको निर्देशः प्रातिपदिकनिर्देशः तन्त्रावृत्त्येकशेषेषु तन्त्रनिर्देश इति फलति । तथाच कुमारशब्देन कुमारीशब्दस्यापि ग्रहणं स्यादेवैवं युवाखलतीति सूत्रेऽपि युवपदेन समेषां ग्रहणम् । नचैवं स्वीकारे "श्वयुवमघोनामि"ति सूत्रेऽपि सर्वग्रहणापत्तौ युवती–पश्येत्यत्रापि सम्प्रसारणापत्तिरिति वाच्यम् ? घटघटीग्रहणयोरुपादानेन प्रातिपदिकनिर्देशरूपतन्त्रत्वस्य सर्वत्राऽविवक्षितत्वात् ।

इयमनित्यत्वाद् यत्र यत्र न प्रवर्त्तते तानि परिगणयति "द्विषत्परयोरि"त्यादीति । द्विषत्पदे अस्या अप्रवृत्त्या द्विषतीताप इत्यत्र खश् न । समासान्तविधावप्रवृत्त्या मद्राणां राज्ञीत्यादौ समासे मद्रराज्ञीत्यादौ "राजाहस्सखिभ्य" इति टच् न । महदात्वेऽप्रवृत्त्या महती प्रिया यस्य स महतीप्रिय इत्यत्रान्मह-

इयं च त्रिषत्परयोरित्याद्युपपदविधौ समासान्तविधौ महदात्वे ङित्स्वरे राजस्वरे ब्राह्मणकुमारयोर्बहोर्नञ्वदुत्तरपदभूम्नि इत्यादौ समाससंघातग्रहणेषु च न प्रवर्त्तत इति ङ्याप्सूत्रे भाष्ये स्पष्टम् । विभक्तिनिमित्तककार्ये च नेत्यपि तत्रैव ।

तत्र समासान्तविधाववयवग्रहण एव न, समाससङ्घातग्रहणे तु प्रवर्त्तत एव । स्वरविधावेव समाससंघातग्रहणे तत्र दोषोक्तेः । "बहुव्रीहेरूधस" इति सूत्रस्थभाष्याच्च । एतावत्स्वेवानित्यत्वादप्रवृत्तिः "दोषाः खल्वपि साकल्येन परिगणिता" इति भाष्योक्तेः ।

नन्वेवं बहुव्रीहेरूधसो ङीषिति सूत्रस्थभाष्यासङ्गतिः ? तत्र हि कुण्डोध्नीत्यत्र नद्यृतश्चेति कबापादितो नद्यन्तबहुव्रीहेरित्यर्थात्, नद्यन्तस्य बहुव्रीहित्वाभावात्तदसङ्गतिः । नद्यन्तानां यः समास इत्यर्थेन च परिहृतम् ।

नद्यन्तप्रकृतिकसुबन्तोत्तरपदकः समास इति चेत् न ? अनया परिभाषया स्त्रीप्रत्ययसमभिव्याहारे तद्रहिते दृष्टानां प्रातिपदिकत्वतद्व्याप्यधर्माणां विशिष्टेऽपि पर्याप्तत्वमतिदिश्यत इत्याशयात् ॥ ७२ ॥

---

त इत्यात्वन्न । ञित्स्वरेऽप्रवृत्त्या इञ्प्रत्ययान्तदाक्षिशब्दान्ङीषि दाक्षीत्यत्र ञित्प्रत्ययान्तत्वमादायाद्युदात्तत्वन्न इत्यादि ।

विभक्तिनिमित्तककार्य्ये च नेतीति–अत एव बहुगोमतीत्यादा "वुगिद्चामि"ति नुम् न । साकल्येन परिगणिता इति । सकला॒परिगणिता इति तदर्थः । नन्वेवमिति । प्रातिपादिकत्वतद्व्याप्यानुपूर्वीप्रकारेण प्रातिपदिकग्रहण एवास्या॒प्रवृत्ताविर्त्यथः । तदसङ्गतिरिति । "नद्यृतश्चे"ति सूत्रे पूर्वोक्तप्रकारेण प्रातिपदिकबोधकपदाऽभावात्प्रातिपदिकग्रहण इत्यस्या अप्रवृत्तेरिति तात्पर्यम् । प्रातिपदिकत्वव्याप्यधर्ममात्रग्रहणन्नत्वानुपूर्व्या एवेत्याग्रह इति हि निष्कर्षः । तथाच बहुव्रीहित्वस्य तद्व्याप्यत्वेन तत्परिभाषाप्रवृत्तिर्युक्तैवेति भावः ।

एकेन पदेन शक्यलक्ष्ययोर्युगपद् बोधस्याऽदर्शनादाह—अतिदिश्यत इति । स्वविशिष्टे स्ववृत्तीनां वर्णत्वव्याप्यधर्माऽघटितधर्माणामारोपोऽनया बोध्यते । वैशिष्ट्यञ्च स्वनिष्ठावयवतानिरूपकत्व स्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन । सम्बन्धघटकवैशिष्ट्यञ्च स्वपर्याप्तत्व स्वघटितपर्याप्तत्वान्यतरसम्बन्धेन । कुमारशब्दविशिष्ट॒कुमारीशब्दः, स्वपदेन कुमारशब्दस्य ग्रहणम्, तदवयवकत्वस्य स्वपर्याप्तोद्देश्यताघटितपरसम्बन्धस्य च विद्यमानत्वेन

स्ववृत्तिकुमारत्वारोपेण सूत्रस्थकुमारपदेन कुमारीशब्दस्य कुमारशब्दस्य च विना लक्षणां ग्रहणोपपत्तिः ।

केचित्तु—लक्षणयापि तत्त्वमिच्छन्ति । शक्यतावच्छेदकारोपस्यैव लक्षणापदार्थत्वात् ।

केचित्तु—स्वविशिष्टे स्वगतधर्मारोप इति परिभाषातत्त्वम् । वैशिष्ट्यञ्च स्वावयवकत्व स्वोद्देश्यकप्रत्ययान्तत्वोभयसम्बन्धेन । अत एव दीर्घमुखमानिनीति भाष्यादनर्थकस्यापि मानिनीशब्दस्य ग्रहणम् । अर्थवत⁀कणाशब्दस्याऽभावादनर्थकस्यापि कर्णीशब्दस्य ग्रहणम् इति वदन्ति ।

इयं स्वरूपग्रहणे प्रातिपदिकसामान्यग्रहणे प्रातिपदिकविशेषग्रहणे च, प्रथमोदाहरणम् "कुसूलकूप" इति सूत्रेण स्वरो यथा कुसूलबिलमित्यत्र भवति । तथा कुसूलीबिलमित्यत्रापि भवति । द्वितीयोदाहरणम् "सर्वनाम्नस्तृतीया च" भवत्या हेतुना भवत्या हेतोः । तृतीयोदाहरणम् "सर्वप्रातिपदिकेभ्यः क्विब्वा वक्तव्यः" गौरीवाचरति गौर्यतीति । इयमनित्या, अत एव मद्रराज्ञीत्यत्र "राजाहस्सखिभ्य" इति टच् न । अनित्यत्वे प्रमाणन्तु "शक्तिलाङ्गलांकुशे"ति वार्त्तिके घटग्रहणात्पृथक् घटीग्रहणम् । एतदनित्यत्वप्रपञ्च एव "विभक्तौ लिङ्गविशिष्टाऽग्रहणमि"ति परिभाषा ।

प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणम् । प्रातिपदिकबोधकपदे उच्चारिते सति प्रत्यासत्त्या तेनैव पदेन लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणं, बोधनं भवतीति फलति ।

पाणिनीयसङ्केतसम्बन्धावच्छिन्ना प्रातिपदिकत्वावच्छिन्ना प्रातिपदिकनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विभक्त्यर्थकर्मत्वत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता या बोधकत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या पाणिनीयसङ्केतसम्बन्धावच्छिन्नपदत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या उच्चारितत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या सदर्थकनिमित्तत्वावच्छिन्नसप्तम्यर्थत्वावच्छिन्नप्रकारतानिरूपिता लिङ्गत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या बोधकत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या विशिष्टत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्न प्रकारतानिरूपिता ग्रहणत्वावच्छिन्ना विशेष्यता अपिशब्दार्थविशिष्टा तादृशविशेष्यताविशिष्टो बोधः ।

नन्वेवं यूनः पश्येत्यत्रेव युवतीः पश्येत्यत्रापि श्वयुवेति सम्प्रसारणं स्यादत आह—

विभक्तौ लिंगविशिष्टाग्रहणम् ॥ ७३ ॥

स्पष्टा चेयं युवोरनाकावित्यत्र भाष्ये। घटघटीग्रहणेन लिङ्गविशिष्टपरिभाषाया अनित्यत्वात्तन्मूलेयमित्यन्ये ॥ ७३ ॥

ननु तस्यापत्यम् इत्येकवचननपुंसकाभ्यां निर्देशाद्‌ गार्ग्यो गार्ग्या-

---

नन्वेवमिति। प्रातिपदिकग्रहण इति परिभाषायास्स्वीकार इत्यर्थः। युवती—पश्येति तिप्रत्ययान्ते युवनशब्दत्वस्यानयाऽतिदेशादित्यर्थः।

केचित्तु—युवती—पश्येति न फलम्? "श्वयुवे"ति सूत्रेऽन इत्यस्य सम्बन्धेनान्नन्तानां श्वादीनामित्यर्थे तात्पर्य्याऽभिधानात्, अन्नन्तत्वस्य वर्णत्वव्याप्यधर्मघटितत्वेन 'प्रातिपदिकग्रहण' इति परिभाषयाऽसिद्धेरप्राप्तेर्वा। अयम्भावस्तत्र नकारप्रश्लेषः, नकारान्तानामन्नन्तानामिति भाष्यतात्पर्य्यम्।

विभक्तौलिङ्गेति—विषयसप्तमी, विभक्तिसम्बन्धिकार्य्ये कर्त्तव्ये प्रातिपदिकग्रहण इति परिभाषा न प्रवर्त्तते इत्यर्थः। तथाच विभक्त्युद्देश्यकविभक्तिनिमित्तकानां सर्वेषां ग्रहणम्। शुन्या शुन्ये इत्यादौ गौरादिङीषृथानिकयणमाश्रित्यो "दात्तयणो हल्पूर्वादि"ति विभक्त्युदात्तत्वस्य विभक्तिसम्बन्धिकार्य्यत्वात्। सख्याविस्यादौ "सख्युरसम्बुद्धावि"ति णिद्वद्भावश्च न। चित्रगवीणामित्यत्र "कुमति चे"ति णत्वमपि तु "अट्कुप्वाङ्नुमि"त्यनेनैवेति न तत्र परिभाषाप्रवृत्त्यप्रवृत्तिविवेकः।

विभक्तौलिङ्गविशिष्टाऽग्रहणम्, विभक्तिशब्दो विभक्तिनिमित्तककार्यपरः लिङ्गविशिष्टस्य लिङ्गबोधकप्रत्ययविशिष्टस्य ग्रहणन्नेत्याशयः। विभक्तिनिमित्तककार्यलिङ्गबोधकप्रत्ययविशिष्टकर्मकग्रहणप्रतियोगिकाभावः।

पाणिनीयसङ्केतसम्बन्धावच्छिन्ना विभक्तित्वावच्छिन्ना विभक्तिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विभक्त्यर्थनिमित्तकार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या लिङ्गत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या विशिष्टत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

अस्य प्रकरणस्य हि तन्त्रशेषत्वात्परस्परं सङ्गत्यभावेऽपि सूत्रोपयोगिनीं परिभाषामवतारयति। नन्वेति। ननु द्वित्वपुंस्त्वादिविवक्षाऽभावे नपुंसकैक-

वित्याद्ययुक्तमत आह—

सूत्रे लिंगवचनमतन्त्रम् ॥ ७४ ॥

वचनप्रवृत्तिरत एव 'क्रियाविशेषणानां कर्मत्वमेकत्वन्नपुंसकत्वञ्चे'ति सिद्धान्तसङ्गतिरेवञ्चापत्यमिति युक्तमिति चेन्न ? "पञ्चिमत्स्यमृगान्हन्ति" समवायान्समवैती"त्यादीनामुपलक्षकत्वेनात्तते: ।

अतन्त्रमिति—अविवक्षितमित्यर्थः । तत्पदजन्यशाब्दबोधीयविषयतानाश्रयमिति तात्पर्य्यम् । लिङ्गस्य संख्यायाश्च सूत्रघटकशब्दजन्यबोधविषयत्वेन तात्पर्य्यविषयत्वन्नास्तीति यावत् । तथाच केवलापत्यत्वावच्छिन्नबोधकत्वमेव यञादीनां विशेष्यगतलिङ्गसंख्यानुसारेणैव व्यवस्था ।

नन्वेवमर्थे "तस्माच्छसो न" इति विहितनकारश्रुतिर्दुर्लभेति चेन्न ? अतन्त्रमित्यस्य शक्तौ अविवक्षितमित्यर्थः । किञ्चिद्विशेषणं किञ्चिदुपलक्षणमिति सार्वत्रिको नियमः । यथा तत्पदं बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तमित्याकारके स्वरूपे बुद्धिविषयतावच्छेदकत्वमुपलक्षणन्तु विशेषणम्, तथा "तस्यापत्यमि"त्यादावपि लिङ्गवचनयोरुपलक्षणत्वमेव न विशेषणत्वम् । घटो द्रव्यपदशक्य इति ज्ञाने द्रव्यत्वमुपलक्षणमेव न प्रकारतया भासते ।

नन्वविवक्षायामपत्यशब्दात्सुविभक्तौ "अतोऽमि"त्यमादि न स्यादिति चेन्न ? नपुंसकत्वशक्तिमत्प्रातिपदिकात्परस्य सोरमित्यर्थेनात्तते: ।

ननु किंविशेषणं किमुपलक्षणमिति प्रश्नः ? आश्रयत्वसम्बन्धावच्छिन्नबोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयविशेषणानां बोधविषयतायां धर्मिपारतन्त्र्येण विशेषणत्वम्, तानि हि विशेषणानि भवन्ति । येषां बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यताश्रयविशेषणता तेषां बोधविषयतायां धर्मिपारतन्त्र्येण विशेषणत्वम्, तान्यपि विशेषणानि । येषां हि बोधविषयतासामानाधिकरण्यमात्रं तान्युपलक्षणानीति भेदः । धर्मिपारतन्त्र्यञ्च स्वविशेष्ये यद्विशेषणान्तन्निरूपितं यद्विशेषणन्तत् । घटपदाद् घटो बोद्धव्य इत्याकारिकाया भगवदिच्छाया बोधविषयतात्वेन बोधविषयतात्वावच्छिन्नप्रकारतानिरूपितविशेष्यता घटत्वे तदवच्छिन्नविशेष्यतानिरूपितप्रकारता बोधविषयतायाम् ।

अत्र सरयूपारीणशङ्काः, धर्मिपारतन्त्र्यञ्च स्वविशेष्ये यद्विशेषणान्तन्निरूपितं यद्विशेषणन्तत्, घटपदजन्यबोधविषयतावान् घटो भवत्विति इच्छायां स्वं घटत्वम् तद्विशेष्यो घटः तत्र विशेषणत्वबोधविषयता तन्निरूपितविशेषणत्वाद् घटस्य घटपदशक्यतावच्छेदकबोधविषयतायां धर्मिपारतन्त्र्येण यद्विशेषणं घटत्वं तदेव शक्यतावच्छेदकम्, अत एव गुणत्वेन द्रव्यं बोद्धव्य-

अर्द्धं नपुंसकम् इति नपुंसकग्रहणमस्यां ज्ञापकम्। नित्यनपुंसकत्वार्थं तु न तदित्यन्यत्र निरूपितम्। धान्यपलालन्यायेन(१) नान्तरीयकतया तयोरुपादानमिति तस्यापत्यमित्यत्र भाष्ये स्पष्टम्। अत एवाकडारसूत्रे एकेति चरितार्थमित्यन्यत्र विस्तरः ॥ ७४ ॥

---

मितीच्छायां गुणवत्त्वमेव शक्यतावच्छेदकम्। बोधविषयत्वे तस्यावच्छिन्नत्वसम्बन्धेन अन्वये धर्मिपारतन्त्र्येण बोधविषयत्वे विशेषणत्वात्। बुद्धिविषयतावच्छेदकत्वोपलक्षिततत्तद्धर्मावच्छिन्नस्तत्पदजन्यबोधविषयतावान् भवत्विवतीच्छायां बोधविषयत्वे धर्मिपारतन्त्र्येण विशेषणं तत्तद्धर्मविशेष एव शक्यतावच्छेदकः नतु बुद्धिविषयतावच्छेदकत्वन्तस्योपलक्षणमेवेत्यलम्।

प्रकृते च एकत्वविशिष्टनपुंसकत्वविशिष्टापत्यत्वावच्छिन्नमण्पदात्प्रत्येतव्यमिति शक्तौ तव्यप्रत्ययार्थविषयतायामपत्यत्वस्य यथा स्वनिष्ठस्वरूपसम्बन्धावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतासम्बन्धेन विशेषणत्वम न तथा नपुंसकत्वैकत्वयोः। अविवक्षिते उपलक्षणम् विवक्षिते विशेषणम्।

नच "तस्यापत्यमि"ति शक्तिग्राहकशास्त्रेण एकत्वविशिष्टनपुंसकत्वविशिष्टापत्यत्वावच्छिन्नोऽण्पदवाच्य इति शक्तिज्ञानस्य जातत्वेन पुंस्त्वादिपुरस्कारेण शाब्दबोधो न स्यादिति वाच्यम्? अपत्यत्वावच्छिन्नोऽण्पदवाच्यइत्येवं शक्तिग्रहेण केवलस्य नपुंसकत्वादिरहितस्यापत्यत्वावच्छिन्नस्य बोधोपपत्तेः।

नपुंसकग्रहणमस्यां ज्ञापकमिति—ननु नपुंसकग्रहणाऽभावे पुम्बोधकार्द्धशब्दो यत्र ग्रामार्द्ध इति तत्रार्ध्यनेन समासाऽपत्तिरिति चेन्न? नपुंसकग्रहणाऽभावेऽर्द्धमित्यस्य नपुंसकत्वविशिष्ट इत्यर्थे पूर्वापरेत्यत्रैवार्द्धशब्दस्य पाठेन सिद्धे पृथग् योगकरणसामर्थ्यात् नपुंसकत्वबोधक इत्यर्थलाभेन नपुंसकग्रहणम्व्यर्थं सज् ज्ञापकम्।

नन्वर्द्धमित्यर्द्धशब्दे नपुंसकत्वस्य सत्वे पुनर्नपुंसकग्रहणं द्विर्बद्धं सुबद्धमिति न्यायेन नित्यनपुंसकत्वार्थमित्यत आह—नित्यनपुंसकत्वार्थमिति। "एओङ्"सूत्रे भाष्ये समांशतात्पर्य्येणापि अर्द्धं एकारः अर्द्धओकार इत्येवं पुंस्त्वाभिधानान्नित्यनपुंसकत्वे प्रमाणाऽभावात्। धान्यपलालन्यायेनेति—केवल-

---

(१) सूत्रे लिङ्गवचनमतन्त्रमिति—"कर्मणा यमभिप्रेती"ति सूत्रे यमितिपुंल्लिङ्गस्यैकवचनस्य चातन्त्रत्वाल्लिङ्गान्तरे वचनान्तरे च संज्ञाविधानं ब्राह्मण्यै ददाति ब्राह्मणेभ्यो ददाति।

न्यायसिद्धोऽयमर्थः। सूत्रे धान्यपलालन्यायेनोभयोर्लिङ्गवचनयोर्ग्रहणम्। ज्ञापकमपि—"आकडारादेके"त्यत्रैकाग्रहणम् "अर्द्धं नपुंसकमि"त्यत्र नपुंसकग्रहणञ्च। "युवयोर्लुकी"त्यत्रैकवचनेन निर्देशे कर्त्तव्ये बहुवचनग्रहणसामर्थ्यान्नेयम्प्रवर्त्तत इति।

ननु भृशादिभ्यो भुव्यच्वेरित्यादौ विधीयमानः क्यङ् क्व दिवा भृशा भवन्तीत्यत्रापि स्यादत आह—

**नञिवयुक्तमन्यसदृशाधिकरणे तथा ह्यर्थगतिः ॥ ७५ ॥**

नञ्युक्तमिवयुक्तं च यत्किंचिद् दृश्यते तत्र तस्माद् भिन्ने तत्सदृशेऽधिकरणे द्रव्ये कार्यं विज्ञायते हि यतस्तथार्थगतिरस्ति ।

---

धान्यमात्रार्थिनापि धान्यमात्रमानेतुं न शक्यतेऽतः पलालोऽप्यानीयते तथा लिङ्गसंख्ये विना केवलापत्यार्थकप्रातिपदिकार्थबोधाऽसम्भव इति तात्पर्य्यम् । नान्तरीयकतयेति—आवश्यकतयेति फलितम् । अन्तरा विना भव इत्यर्थे "गहादिभ्यश्छ"इति छः, पश्चान्नशब्देन "सुप्सुपे"तिसमासे कप्रत्यये सिद्धयति । नान्तरीयकतया यस्य यस्योपादानं तत्सर्वमविवक्षितम्बोध्यम् । यथा "तदधीते"इत्यत्र वर्त्तमानकालस्तथान्यत्रापि बोध्यमित्यलम् ।

मुनित्रयसंकेतसम्बन्धावच्छिन्ना सूत्रत्वावच्छिन्ना सूत्रनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विभक्त्यर्थाधिकरणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या लिङ्गवचनान्यतरत्वावच्छिन्नाविशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या अतन्त्रत्वावच्छिन्ना अतन्त्रनिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

स्यादिति—भृशशब्दस्य च्व्यन्तभिन्नत्वादिति भावः । अन्यसदृशेति—नञ्समभिव्याहृतमिवसमभिव्याहृतञ्च पदं स्वविशिष्टबोधकम् नञ्पदमिवपदञ्च तात्पर्यग्राहकम् । वैशिष्टयञ्च स्वसादृश्यस्वभिन्नत्वोभयसम्बन्धेन । अब्राह्म(१)णःचन्द्र इवेत्यादौ ब्राह्मणभिन्नः क्षत्रियादिः चन्द्रभिन्नश्चन्द्रसदृशो मुखादिः नतु लोष्टादिः, भेदविशिष्टसादृश्यम् सादृश्यविशिष्टभेदश्चार्थः । अत एव "तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता । अप्राशस्त्यम्विरोधश्च नञर्थाः षट् प्रकीर्त्तिता" इति वाक्ये सादृश्यभेदयोः पृथक् कथनम् ।

केचित्तु—"नञिवयुक्तमन्यत्सदृशाधिकरण" इति पाठं योजयन्ति । तत्र अन्यदिति अन्यस्मिन्नित्यर्थेऽव्ययम् इति वदन्ति । ननु नञिव युक्तमित्यत्र योगपदार्थस्सम्बन्ध एव स च यद्येकवाक्यघटकत्वरूपश्चेत्तर्हि ब्राह्मणस्य विधेव

---

(१) नञिवयुक्तमन्येति–अब्राह्मणइत्युक्ते ब्राह्मणप्रतियोगिकसादृश्यसामानाधिकरण्येन भेदप्रत्ययः । चन्द्र इवेत्युक्ते चन्द्रप्रतियोगिकभेदसामानाधिकरण्येन सादृश्यप्रत्ययः । नचैवं लोकव्यवहारे 'तत्सादृश्यमभावश्च तदन्यत्वन्तदल्पता । अप्राशस्त्यं विरोधश्च नञर्थाःषट्प्रकीर्त्तिता" इति शिष्टोक्तौ सादृश्यभेदयोः पार्थक्येनोपादानमनुपपन्नमिति वाच्यम् ! भेदविशिष्टे सादृश्ये सादृश्यविशिष्टे भेदे च नञशक्तौ कल्पितायां प्रधानाप्रधानभावमूलकेन भेदेन तथा कथने क्षतिविरहात् । न च भेदविशिष्टसादृश्यबोधकत्वमप्रसिद्धमिति वाच्यम् ! मृगो न भीम इत्यादिवेदवाक्ये तदर्थप्रसिद्धः ।

नह्यब्राह्मणमानयेत्युक्ते लोष्टमानीय कृती भवति । अतद्भ्यन्त-भिन्ने ऽत्यन्तसदृशे अभूतद्भावविषये कथं ऽइति नोक्तदोषः ।

ओषधेश्च विभक्तावप्रथमायामित्यादौ विभक्तिग्रहणाद्येतन्न्यायसिद्धार्थानुवाद एव । एतेन विभक्तावित्याद्यस्यानित्यत्वे ज्ञापकमिति वदन्तः परास्ताः । अनित्यत्वे भाष्यसंमतफलाभावात् । अत एवाकर्त्तरि च इति सूत्रे कारकग्रहणं भाष्ये प्रत्याख्यातमिति वोध्यम् ।

स्पष्टा चेयं भृशादिभ्य इति सूत्रे भाष्ये । अत्रान्यसदृशेत्युक्त्या सादृश्यस्य भेदाघटितत्वं सूचयति । निरूपितं चैतन्मञ्जूषायाम् ॥ ८५॥

---

क्षत्रियस्येति वाक्यात् क्षत्रियनिष्ठब्राह्मणसादृश्याप्रतीतिः, एकवाक्यघटकत्वरूपस्य तस्याश्रयणे तु कदाचित्तस्यापि प्रतीतिरिति चेदयमर्थः स्वार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थतात्पर्यकत्वरूपः । नञिवार्थनिष्ठविशेष्यतानिरूपितप्रकारतावदर्थप्रतिपादकं यच्छब्दस्वरूपन्तत्स्वाभिधेयातिरिक्ते सदृशेऽधिकरणे वर्त्तते ।

अभूततद्भावविषय इति—ऽत्यन्तसादृश्यमभूततद्भावविषयत्वेनेति भावः । विभक्तिग्रहणेन—अप्रथमापदेनैव विभक्तित्वेन तत्सदृशतद्भिन्न इत्यर्थात् विभक्तिपदार्थलाभादिति तत्त्वम् । भाष्यसम्मतफलाभावादिति—नञो भेदबोधकत्वम् अत्यन्ताभावबोधकत्वञ्च सर्वसम्मतमेव । भेदस्थले सादृश्यमात्रं लोकसिद्धमेव परिभाषया सिद्ध्यति ।

भेदाऽघटितत्वमिति – तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वस्य सादृश्यलक्षणत्वे सादृश्यकथनेनैव भेदलाभेऽन्येत्यस्य वैयर्थ्यापत्तेः ।

अत्र सरयूपारीणशुक्लाः–अथ किं सादृश्यमिति प्रश्ने (१)तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वमिति मीमांसकाः । "नञिवयुक्त"न्यायेऽन्यसदृशे-

---

(१) वस्तुतस्तु—तद्भिन्नत्वे सति तद्गतभूयोधर्मवत्त्वं तत्सादृश्यम् इति धर्मिपदार्थे सादृश्यान्तर्भाव उपाधौ वा । यथा हि चन्द्रवन्मुखमित्यादौ चन्द्रप्रतियोगिकसादृश्याश्रयो मुखमिति वोधः । तत्र हि चन्द्रभिन्नत्वमपि मुखे चन्द्रगता ये भूयांसो धर्मा आह्लादकत्वादयस्तद्वत्त्वमपि मुखे इति । चन्द्रत्वादिस्तु न भूयान्धर्मश्चन्द्रमात्रवृत्तित्वात् । फलतश्चन्द्रत्वव्यापकीभूतस्य आह्लादकत्वादेरेव तत्त्वमिति न कश्चिद् दोषः इति तार्किकाणां सिद्धान्तः ।

शाब्देतु "नञिवयुक्तमन्यसदृश" इति वचनेऽन्यपदापोदानेन भेदाघटितं सादृश्यम् ।

अत्र मीमांसकमतम्—सादृश्यन्न द्रव्यादिषड्भावविभाजकोपाधिमत षड्भावानऽन्तर्गतत्वात् । नापि अभावविभाजकोपाधिमत् सत्त्वेन प्रतीतिविषयत्वादित्यनुमानाभ्यामर्थाऽपत्त्या वा सादृश्यमितिरिक्तः पदार्थ इति ।

नचैतन्मते प्रथमानुमाने सादृश्यम् द्रव्यादिषड्भावविभाजकोपाधिमत् षड्भावान्तर्गतत्वादित्यनेन सत्प्रतिपक्ष इति वाच्यम् ? हेत्वसिद्धेः । तदसिद्धौ किम्प्रमाणमिति चेत् ? सादृश्यन्न षड्भावान्तर्गतं सामान्यवृत्तित्वात् अभाववदित्यनुमानस्यैव प्रमा-

त्युक्त्या सादृश्यलक्षणे तद्भिन्नत्वे सतीति निवेशो नास्ति शाब्दिका एतत्। अनुयोगितासम्बन्धेन तद्गतभूयोधर्मवत्त्वं सादृश्यमिति लक्षणाऽऽकारे तु न्यायमीमांसकमतेऽपि तद्भिन्नत्वनिवेशो नास्तीति।

ननु तद्गतभूयोधर्मवत्त्वमित्येव सादृश्यलक्षणमास्ताङ्किमनुयोगितासम्बन्धनिवेशेन तद्भिन्नत्वे सतीतिनिवेशेन वेति चेन्न? सादृश्यनिरूपके चन्द्रादावतिव्याप्तेः।

नन्वेवमपि तद्गतभूयोधर्मवत्त्वं कथन्नाम संघटते, तद्गता ये भूयांसो धर्माश्चन्द्रत्ववर्तुलत्वमन्मथोद्दीपकत्वादयस्तेषाम्मुखेऽवृत्तित्वात् चन्द्रवन्मुखमित्यादौ कथं लक्षणसङ्गतिरिति चेन्न? धर्मवत्त्वमेव सादृश्यम्, तत्त्वं सादृश्यमिति वा। तत्पदेन धर्मस्य ग्रहणात्।

नच धर्मवत्त्वघटकधर्मपदेन साधारणधर्मो गृह्यतेऽसाधारणधर्मो वा? साधारणश्चेत्तर्हि वृक्षचन्द्रयोस्सादृश्यमापद्येत। असाधारणश्चेत्तर्हि चन्द्रवन्मुखमित्यत्राऽव्याप्तिरिति वाच्यम्? चन्द्रादिनिरूपिताह्लादकत्वत्वावच्छिन्नाऽधेयतावच्छेदकधर्मावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वमाह्लादकत्वे चन्द्र-

---

णत्वात्। तथाहि यथा गोत्वन्नित्यन्तथाऽश्वत्वमपीति प्रतीत्या तस्य सामान्यवृत्तित्वं स्फुटमेव। स्फुटतरञ्च द्रव्यादिसामान्यवृत्तौ षट्पदार्थाभावे षड्भावान्तर्गतत्वमपि।

अत्र वैशेषिकादयः सादृश्यत्वस्य पदार्थविभाजकोपाधित्वे मानाभावेन तद्घटितहेतुना सादृश्ये षड्भावानन्तर्गतत्वासिद्ध्या सत्प्रतिपक्षस्वरूपासिद्धिसाम्राज्यादुपदर्शितानुमानान्न सादृश्यस्यातिरिक्तत्वसिद्धिः।

नच यथा गोत्वन्नित्यं तथाश्वत्वमपि आकाशोऽपीति प्रतीत्या नित्यत्वरूपसादृश्यनिष्ठायाः स्वेतरनिरूपितत्वसम्बन्धेन सामान्यविशिष्टसामान्यनिरूपिताधेयताया नित्यत्वावच्छिन्नतया तद्घटकतया अभाववत्त्वरूपपदार्थविभाजकोपाधेरेव निरुक्ताधेयतावच्छेदकतया तद्घटितहेतुना षड्भावानन्तर्गतत्वं सेत्स्यतीति वाच्यम्? मुखनिष्ठचन्द्रसादृश्यादावुक्तहेत्वभावेन भागासिद्ध्यापत्तेः।

आलङ्कारिकमतानुसारिणस्तु–सादृश्यस्य भेदघटितत्वेन गगनं गगनाकारमित्यत्र भेदे सादृश्यन्नास्त्येव। अत एवात्रानन्वयालङ्कारः, अतएव स्वस्मिन् स्वासादृश्यं यत्रेति अन्वर्थंसङ्गच्छते। अन्यथात्र मुख्यसादृश्यसत्त्वे उपमालङ्कारएव स्यात् नत्वनन्वयः। अस्मन्मते च भेदघटितसादृश्याभावात् तत्संस्कारप्रवृत्तोपमाया अविषयत्वात्।

अत एव सादृश्यमुपमाभेद इति उपमालक्षणे भेदग्रहणमनन्वयव्यवच्छेदायेति काव्यप्रकाशिकोक्तिरपि सङ्गच्छते।

केचित्तु सादृश्यस्यातिरिक्तत्वेऽपि तस्याश्रयभेदेन निरूपकभेदेन च नानात्वादनुगताकारप्रतीत्यनुपपत्तिरिति सादृश्यत्वमवश्यमतिरिक्तं स्वीकार्यम्। तथाच व्यञ्जकत्वेन क्लृप्तत्तद्धर्मेचातिरिक्तसादृश्यत्वाङ्गीकारेणोपपत्तौ कृतमतिरिक्तसादृश्येनेति वदन्ति? निरुक्तसादृश्यत्वैनैव निर्वाहे अतिरिक्तसादृश्याङ्गीकारे मानाभावादिति दिक्।

इतोऽधिकस्सादृश्यशास्त्रार्थंशास्त्रार्थकलाकारकृतसादृश्यशास्त्रार्थकलानामकग्रन्थेऽवलोक्यः।

ननु व्याघ्री कच्छपीत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट्टाप्यदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादत आह—

**गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक् सुबुत्पत्तेः ॥७६॥**

सदृशमुखमित्यर्थः ।

तद्भिन्नत्वे सति तन्निरूपिताऽधेयतावच्छेदकधर्मावच्छिन्नाधेयतानिरूपिताधिकरणताश्रयत्वम् वा आह्लादकत्वे चन्द्रसदृशमुखमित्यर्थः । आह्लादकत्वन्नाम सुखविशेषजनकत्वम् ।

ननु चन्द्रस्य कथं सुखविशेषजनकत्वं कार्य्याधिकरणे कारणसत्त्वनियमेन चन्द्रस्य तत्राऽविद्यमानत्वात् इति चेन्न ? सुखविषयकदर्शनवत्त्वसम्बन्धेन चन्द्रस्यात्मनि सत्त्वात् सामानाधिकरण्यमुपपन्नम् ।

ननु जनकतावच्छेदकभेदेन जनकता नाना, चन्द्रवृत्तिजनकता भिन्नेति चेत्तर्हि ? चन्द्रादिनिरूपिताह्लादकत्वनिष्ठाधेयतानिरूपिताधिकरणताश्रयत्वम् । तत्सादृश्येन सह तत्सादृश्यस्याऽभेदः "अहमिव बहवो भवतो मम तु भवानिव भवानेव" कति कुमुदवनानि सन्तीन्दोर्विधुरिव विधुरेव कुमुद्वतीनाम् । गगनं गगनाकारं सागरस्सागरोपमः । रामरावणयोर्युद्धं रामरावणयोरिवे"त्यादावभेदेऽपि सादृश्यम् इति वदन्ति ।

नन्विवयुक्तमन्यसदृशाधिकरणे तथेति—नञ्युक्तमिवयुक्तञ्च यत्किञ्चिद् वस्तु दृश्यते तत्र तस्माद् भिन्नेति, नञ्युक्तेवयुक्तान्यतरत्वावच्छिन्ना या प्रकारता तादृशप्रकारतानिरूपिता या यत्किञ्चिद्वस्तुत्वावच्छिन्ना विशेष्यता आचार्यादिनिष्ठकर्तृतानिरूपकदृश् धात्वर्थव्यापारजन्यफलाश्रया तन्निष्ठाधारतानिरूपिताधेयतावती या तद्भिन्नत्वावच्छिन्ना विषयता तादृशविषयतानिरूपिता या तत्सदृशाभिन्नाधिकरणाभिन्नद्रव्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कार्य्यत्वावच्छिन्ना आधेयत्वावच्छिन्ना विशेष्यता आचार्यकर्तृकविज्ञानानुकूलव्यापारजन्यफलाश्रया यच्छब्दार्थविशिष्टहेतुत्वावच्छिन्नविषयतानिरूपिततथार्थ—गतित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता याऽस्त्यर्थसत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यता वक्ष्यमाणहेतुत्वावच्छिन्ना । अत्राह्मणनिष्ठकर्मतानिरूपकानयनमितिप्रश्नाव्यवहितोत्तरकालावच्छिन्न;लोष्ठकर्मकानयनोत्तरकालावच्छिन्नकृतिकर्तृकसत्ताप्रतियोगिकाभावः ।

ननु व्याघ्रीति । व्याङुपसृष्टघ्राधातो "रातश्चे"ति के आतो लोपे जाति-

उपपदमिति सूत्रे ऽतिङ्ग्रहणेन कुगतीत्यत्र तदपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुप्सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च सिद्धेयं, तेनाश्वक्रीती सिद्धा । अन्यथा पूर्वं टाप्यदन्तत्वाभावात् क्रीतात्करणपूर्वात् इति ङीष् न स्यात् ।

---

लक्षणा ङीष् । कच्छपीति । कच्छेन पिबतीति विग्रहे "सुपि स्थ" इत्यत्र सुपीति योगविभागात्के आलोपे ङीष् । स्वार्थद्रव्यलिङ्गसंख्याकारकाणां क्रमेणोपस्थितिर्येन क्रमेणोपस्थितिस्तेन क्रमेणैव तत्तन्निमित्तककार्योत्पत्तिरिति शाब्दिकाः । तथाच सुबुत्पत्तेः प्रागेव स्त्रीत्वनिमित्तकटापि ततस्सुपि ततस्समासेऽदन्तत्वाभावान्ङीष् न स्यादिति ह्यवतरणाशयः ।

ननूपसञ्जनिष्यमाणन्यायादेव टापोऽप्राप्तौ सुपि समासे जातिलक्षणङीषैव भाव्यम् । यदि टाप् न स्यात्तर्हि समासे सुपो लुकि ङीष् स्यादिति सम्भावनायास्सत्त्वादिति प्रश्नः ।

नचोपसञ्जनिष्यमाणन्यायेना "जातेः" इति सूत्रीयप्रातिपदिकपदार्थे जातिवाचकातिरिक्तत्वेन सङ्कोचाद् अ इत्यस्य तत्त्वाभावात् कथन्न टाबिति वाच्यम् ? "स्वाङ्गाच्चोपसर्जनादि"ति सूत्रभाष्यप्रामाण्येनापवादविषयघटकातिरिक्तत्वेन सङ्कोचेन अ इत्यस्य तथात्वात् । तत्र च 'स्वाङ्गादिकमशिखे'ति भाष्यम्, तत्र विशिष्टस्यापवादविषयत्वेऽपि शिखेत्यस्य तत्त्वाभावात् टाप्यदन्तत्वाभावान्ङीषोऽप्राप्तौ भाष्यमसङ्गतं स्यात् ।

नन्वेवमप्यजाक्रीतेत्यादावपि "क्रीतात्करणपूर्वादि"ति शास्त्रापवादविषयघटकाजशब्दादपि टाप् न स्यादिति चेन्न ? भविष्यदपवादविषयान्तातिरिक्तत्वेन सङ्कोचेऽसत्तेः ।

अत्रकिञ्चित्—घन इव कपिलेति प्रयोगे "तत्पुरुषे तुल्ये"ति पूर्वपदप्रकृतिस्वरे शेषनिघातात्कपिलेत्यस्यानुदात्तत्वे "अन्यतो ङीषि" त्यपवादविषयान्ततया ङीषापत्तेर्भविष्यदपवादविषयातिरिक्तत्वेनैव सङ्कोचः । अशिखेतिभाष्यस्य शिखेत्यत्रैव तात्पर्य्यम् । प्राक्सुबुत्पत्तेरिति-उत्तरपदे प्राक्सुबुत्पत्तेरित्यर्थः । पूर्वपदे तु सुबुत्पत्त्यनन्तरमेव समासः । अत एव राजदृशी चर्मक्रीतीत्यादौ नलोपादिसिद्धिः । सुबितिप्रत्ययमात्रोपलक्षणमत एव माषवापिणी सांकूटिनमित्यादौ स्त्रीप्रत्ययादीनामनुत्पत्तिरिति तत्त्वम् ।

कुगतीत्यत्रेति—"गतिश्चे"तिविभक्ते सूत्र इत्यर्थः ।

वस्तुतस्तु—समकालिकापवादविषयातिरिक्तत्वेन सङ्कोचेऽपि यत्रापवादस्य वैयर्थ्यमेव तत्रैवायन्न्यायो दधतीति यथा । प्रकृते तु समकालिकापवादविषयातिरिक्तत्वेन सङ्कोचेऽपि ब्राह्मणीत्यादौ "जातेरस्त्रीविषयादि"त्यस्य चारितार्थ्यान्न्यायप्रवृत्तिरित्यवतरणं युक्ततरमेवेति । कारकांशे चेति—स्थालीपुला-

अस्या अनित्यत्वात् क्वचित्सुबुत्पत्त्यनन्तरमपि समासो यथा सा हि तस्य धनक्रीतेति ।

---

कन्यायादिति भावः । सुपेत्यस्य निवृत्त्येति—सुपेति तृतीयान्तस्यैव निवृत्त्येत्यर्थः । प्रथमान्तस्याऽपि निवृत्तौ तु चर्मच्छेद इत्यादौ चर्मप्रकृतिकसुबुत्पत्तेः पूर्वमेव समासे नलोपानापत्तेर्विभक्तिश्रवणापत्तेश्च । परिभाषाया अंशद्वयम्फलति । अनित्यत्वादिति । "अम्बाम्बे"तिसूत्रे गवादिग्रहणमत्र मानम् । तच्च "सात्पदाद्यो"रिति षत्वनिषेधे प्राप्ते षत्वार्थं, गोष्ठ इत्यादावनया सुपᳶपूर्वं समासे निषेधाऽप्राप्तौ वैयर्थ्याभिधानश्रुतेः ।

कृदन्तेन समासे षत्वं चेदेभ्य एवेति नियमार्थन्तदिति, अतएव हृदिस्थइत्यादौ न षत्वम् इति परे ।

वस्तुतस्तु दधिसेचावित्यत्र प्रत्ययोत्पत्तेᳶपूर्वं समासे षत्वनिषेधो न स्यादतᳶपदादादिरिति पञ्चमीसमासस्यावश्यकत्वेन गोष्ठ इत्यत्राप्येवं षत्वनिषेधप्राप्त्या षत्वार्थं गोष्ठग्रहणमिति विध्यर्थमेव "नपदान्ते"त्यत्र पदग्रहणं पदत्वयोग्यपरम् तेन गोचेत्यस्य सिद्धिः । इयञ्च समासविधायकशास्त्रे यत्र कृद्ग्रहणन्तत्रैव, अत एव "द्वितीयाश्रिते"ति सूत्रे श्रितादिप्रकृतिकसुबन्तैरित्यर्थः । "प्राप्ताऽपन्नेचे"ति शास्त्रेणाकारविधानमपां स्रष्ट्रीत्यत्र ङ्यन्तत्वेन तृजकाभ्यामित्यस्याऽप्राप्तिमाशङ्क्य लिङ्गविशिष्टपरिभाषया सामाधानसङ्गतिश्चान्यथा सुप्टापूङीब्भ्यᳶपूर्वं समासे तद्वैयर्थ्यं स्पष्टमेव ।

नन्वेवं कुम्भकार इत्यादावुपपदसमासषष्ठीसमासयोᳶप्राप्तौ विप्रतिषेधाश्रयणं भाष्योक्तमयुक्तं स्यादुपपदसमासस्य सुबुत्पत्तेᳶपूर्वमेव विधानात् षष्ठीसमासाऽप्राप्तेरिति चेन्न ? एतद्भाष्यप्रामाण्यात्कथञ्चित्सामान्यरूपेण विशेषरूपेण(१) वा कारकोपादाने परिभाषेयम्प्रवर्त्तते नतु समासविधावेवेति तदेवो-

---

(१) गतिकारकोपपदानामिति–अत्र केचित्, यत्र विशेषरूपेण कारकमुपादीयते तत्रैवेयम्परिभाषा नतु षष्ठीत्यादौ कथञ्चित्कारकग्रहणे । कारकाणां कृदन्तेन समास इत्युक्ते प्रत्यासत्तिन्यायेन कारकोपादानेन विधीयमानसमासविषयताया औचित्येन तद्व्यतिरिक्ते तत्प्रवृत्तौ मानाऽभावात् । अतएव अपां स्रष्ट्रीत्यादौ लिङ्गविशिष्टपरिभाषया षष्ठीसमासनिषेधस्सुगतः । अन्यथा ङीबन्तेन समासाऽप्रसक्त्या ग्रन्थाऽसङ्गतिः । ङ्याप्सूत्रभाष्यतात्पर्य्यविरोधादुपपदमतिङिति सूत्रभाष्यमेकदेशिनः, उपपदसमासविषये षष्ठीसमासस्य बहिरङ्गत्वादप्रवृत्तिरिति वार्त्तिककारमतमेव युक्तियुतम् । किञ्च कथञ्चित्कारकत्वमाश्रित्य सम्बन्धसामान्यषष्ठीविषये प्रकृतपरिभाषया सुबुत्पत्तेᳶपूर्वं समासव्यवस्थाऽयुक्ता । उपपदांशे परिभाषोदाहरणत्वेन सर्वसम्मतकच्छपीत्यस्याऽसिद्धेः, तत्राधिकरणस्य सम्बन्धसामान्यविवक्षया कारकत्वाभावात्तस्य तदुदाहरणत्वम्, पूर्वोक्तरीत्या कारकत्वसादाय्यैतत्परिभाषाप्रवृत्तौ तदसङ्गतिः । तथा दधिसेचावित्यादौ सम्बन्धसामान्यषष्ठ्यन्तसमासस्यापि सुबुत्पत्तेᳶपूर्वं प्रवृत्तावुत्तरपदे प्रत्ययलक्षणेन पदत्वायोगात्सात्पदाद्यो-

अन्ये त्वनित्यत्वे न मानं तत्राजादित्वात् टाबित्याहुः। अत एव कुम्भकार इत्यादौ षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव। षष्ठीसमासाभावे चोपपदसमासकृत एकार्थीभाव इति न तत्र वाक्यमिति भाष्ये स्पष्टम्। तत्र हि षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति वार्त्तिकम्। अथवा विभाषा षष्ठीसमासो, यदा न षष्ठीसमासस्तदोपपदसमास इति तत्प्रत्याख्यानं च।

यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं न वा षष्ठीसमासाभावादुपपदसमास इति वार्त्तिककृतोक्तं तथापि तदुभयप्रत्याख्यानपरमथवेत्यादि भाष्यं, परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिः समासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात्।

एतेनैषा कारकतद्विशेषयोरुपादान एवेति परास्तम्। अन्यथा विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थालाभाच्च॥ ७६॥

---

पपादयति उपपदमित्यादिना।

अत्र किञ्चिद्विलक्षणम्—"स्त्रीप्रत्यये चानुपसर्जने न" ति परिभाषायामुक्तप्रकारेण कारकत्वतद्व्याप्यधर्मावच्छिन्नबोधकं पदं यत्र तच्छास्त्रं सुबुत्पत्तेः पूर्वमेव प्रवर्त्तत इति युक्ता कल्पना। कुम्भकारइत्यत्रोपपदसमासषष्ठीसमासविप्रतिषेधविचारपरकभाष्यन्त्वेकदेश्युक्तिरेव।

किञ्च "षष्ठी" ति सूत्रमनुवर्त्तते न वा ? यद्यनुवर्त्तते कुम्भकार इत्यादावपि सुबन्तेन समासापत्तिः। यदि नानुवर्त्तते राजपुरुष इत्यादावपि सुबुत्पत्तेः प्राक् समासापत्तिः। अत एव षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति। अथवा विभाषा षष्ठीसमासः। यदा न षष्ठीसमासस्तदोपपदसमास इति वार्त्तिकद्वयं नवा षष्ठीसमासाभावादुपपदसमास इति सिद्धान्तिना प्रत्याख्यातम्।

अत्र सरयूपारीणशुक्लाः—कारकांशे प्रमाणन्तु "कर्त्तृकरणे कृता बहुलमि" त्यत्र कृद्ग्रहणम् तच्च तिङन्तेन समासवारणार्थन्न कर्त्ता करणमिति कारकं क्रियानिरूपितम्, क्रियावाची च धातुः, ततश्च द्वये प्रत्ययाः तिङः कृतश्च। सुपेत्यनुवृत्त्या तिङन्तेन समासो वारणीय इति कृदन्तेनैव सिद्धे समासेऽतिरिच्यमानं कृद्ग्रहणं कृदवस्थायामेव सुबुत्पत्तेः प्राक् समासविधानाय। अतः एवो "पपदमतिङि" ति सूत्रे कैयटः। तथा च "कर्त्तृकरण" इति समास एव कारकग्रहणस्योदाहरणमिति ध्वनितम्।

---

रिति णत्वनिषेधानापत्तिः। रामभामिनीत्यादौ प्रातिपदिकान्तलक्षणणत्वप्रसङ्गः, गोपालिकेत्यादौ अणन्तात्स्वार्थिकः कप्रत्यय इति तदन्ताट्टापि तस्य सुप्परत्वाभावादुक्तमेवेत्वमिति सुफलमित्यूचुः।

ननूगिदचामित्यत्र धातोश्चेदुगित्कार्यं तर्ह्यञ्चतेरेवेति नियमेना-

---

अपरोऽपि खण्डनप्रकारः। कारकांशे प्राचीनव्याकरणस्य एकदेशानुमति-द्वारा स्थालीपुलाकन्यायेनाश्रयणमिति मूलन्तु न युक्तम्? निरुक्तरीत्या कृद्ग्रह-णज्ञापकत्वस्य सम्वर्णनात्। यदपि कारकांशे कारकविभक्तिमात्रस्य कृदन्तेन स-मासः अतएवोपपदमतिङिति सूत्रे षष्ठीसमासादुपपदसमासो विप्रतिषेधेनेति नत्रा षष्ठीसमासाभावादुपपदसमासः उपपदसमासो हि कृदन्तेन भवति षष्ठीसमासस्तू-त्पन्ने सुपि भवन्बहिरङ्ग इति वार्त्तिकोक्तस्य षष्ठीसमासविषये उपपदसमासनिय-मस्य प्रयोजनाभावेन भाष्येप्रत्याख्यानं कृतम्, इतितदपि न युक्तिवहम्? उपपद-समासनियमस्य वार्त्तिकोक्तप्रयोजनप्रत्याख्यानपरत्वात्,भाष्यस्यषष्ठीसमासस्यापि कृदन्तेन सह प्रवृत्तिरित्यत्राऽप्रमाणत्वात्। अतएव तत्र कैयटेन प्रयोजनाऽभावा-द्विप्रतिषेधो न पठितव्य इत्युक्तभाष्यस्य तात्पर्य्यम्वर्णितम् नतु षष्ठीसमासोऽपि सुबुत्पत्तेः प्राग्भवतीति। अत एव नलुमताङ्गस्येति सूत्रे उत्तरपदत्वे च पदादि-विधौ लुमता लुप्ते प्रत्ययलक्षणम्भवतीति वक्ष्यामि तन्नियमार्थं भविष्यति-पदा-दिविधावेव न तु पदान्तविधौ, तेन दधिसेचौ दधिसेच इति सात्पदाद्योरिति षत्त्वनिषेधो भवति इति भाष्ये सिद्धान्तितम्, तत्र च कैयटेन दध्नस्सेचाविति षष्ठी-समासः, उपपदसमासे तु प्राक्सुबुत्पत्तेस्समासविधानात् सेच्शब्दस्य पदसं-ज्ञाया अभावात् सकारस्य पदादित्वन्न स्यात्। अनभिधानाच्च सोपपदाद्विजभावः इत्युक्तम्। यदि षष्ठीसमासोऽपि सुबुत्पत्तेः प्रागेव स्यात्तर्हि सात्पदाद्योरिति षत्त्व-निषेधो नैव स्यादित्युक्तभाष्यविरोधः। तथा हरिसेवनं गुरुसदनमित्यादावपि षत्वप्रसङ्गः यदि कृदन्तेन षष्ठ्यास्समासस्स्यात् न च षष्ठीसमासस्य प्राक्कृदन्ते प्रवृत्तौ भाष्यसम्मतं प्रयोजनमस्ति येनैवं कल्प्येतेत्यास्ताम्। कर्त्तृकरण इति सूत्रे कृद्ग्रहणेन ज्ञाप्यमानेयम् बहुलग्रहणात्क्वचिन्न भवति, तेन धनक्रीतेति, एतदर्थ-मजादावयं पाठ्य इत्यलम्।

गतिकारकोपपदानां कृद्भिस्सह समासवचनं प्राक् सुबुत्पत्तेः—पाणिनीयसंकेत-सम्बन्धावच्छिन्ना गतिकारकोपपदान्यतमत्त्वावच्छिन्नाऽन्यतमनिष्ठा या प्रका-रता तादृशप्रकारतानिरूपिता या कृत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्य-तासमानाधिकरणसहशब्दार्थसाहित्यावच्छिन्ना विशेष्यता तादृशविशेष्यत्वा-वच्छिन्ना स्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या समा-सवचनत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना तादृशविशेष्यत्वा-भिन्ना तादृशविशेष्यतासमानाधिकरणा वा या प्रकारता तादृशप्रकारतानिरूपिता या सुबुत्पत्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वाव्य-वहितपूर्वकालावच्छिन्नत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या प्राक्शब्दार्थपूर्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

अञ्चतेरेवेति। नन्वञ्चतेरेवेति वाक्यस्याञ्चतेर्लुप्तनकारस्यैवेति नियम-

धातोरेव नुमि सिद्धेऽधातुग्रहणं व्यर्थमत आह—

साम्प्रतिकाभावे भूतपूर्वगतिः ॥ ७७ ॥

तत्तद्वचनसामर्थ्यान्न्यायसिद्धेयम् । तत्सामर्थ्यादधातुभूतपूर्वस्या-पीत्यर्थेन गोमत्यतेः क्विपि गोमानित्यादौ नुम्सिद्धिः । नामीत्यादिसूत्रेषु भाष्ये स्पष्टा ॥ ७७ ॥

बहुव्रीहौ तद्गुणसंविज्ञानमपि ॥ ७८ ॥

अपिनाऽतद्गुणसंविज्ञानम् । तेषां गुणानामवयवपदार्थानां संवि-

---

शरीरेऽधातुग्रहणं धातोर्नुमभावार्थञ्चरितार्थम् इति चेन्न ? अलुप्तनकारस्या-ञ्चतेर्नुम्यपि ( वर्णग्रहणे जातिग्रहणम् ) द्वयोरनुस्वारे फलाभावात् , "नपुंसकस्य झलच" इत्यतो झलनुवृत्त्याऽच॒परझलन्तस्यैव नुम्विधानेनालुप्त-नकारे तदप्राप्त्योक्तनियमाऽसम्भवाच्च । सम्प्रतिभवं साम्प्रतिकं 'कालाट्ठञ्'ति ठञ् शास्त्रप्रवृत्तियोग्यकाले शास्त्रप्रवृत्तियोग्यनिमित्ताभावेऽपि तत्पूर्वभूतं निमित्तमादाय शास्त्रेण कार्यम्विधेयमिति परिभाषार्थः । तत्तद्वचनेति । "ह्रस्वनद्यापः" उगिदचामि"त्यादौ ह्रस्वधातुग्रहणादिति भावः । भाष्ये स्पष्टेति—"नामी"त्यत्रामीति न्याये पूर्वन्नित्यत्वाद्दीर्घे ह्रस्वान्तत्वाभावान्नुटोऽप्राप्तिमाशङ्क्य भूतपूर्वह्रस्वान्तत्वान्नुडिति तत्रोक्तमिति ।

अत्र किञ्चित्—औपदेशिकधातुत्वविशिष्टानां चेदञ्चतेरेवेति नियमेन गोमत्यते॒क्विपि न परिभाषाफलमिति कल्पनेऽपि तत्रैव स्त्रीत्वविवक्षाया-"मुगितश्चे"ति ङीबापत्तेः ।

साम्प्रतिकाभावे भूतपूर्वगतिः-साम्प्रतिकशब्द इदानीम्भव इत्यर्थे ठगन्तः, एतत्कालावच्छिन्नतत्तद्धर्मप्रतियोगिकाभावभूतपूर्वगतिकर्तृकसत्ता—एतत्कालनिष्ठा याऽधारता तादृशाधारतानिरूपिता याऽधेयता तादृशाधेयतावती या स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशविषयतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता याऽभावत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतायां सत्यां भूतपूर्वगतित्वावच्छिन्नाभेदसम्बन्धावच्छिन्नकर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नवृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या क्रियात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

ननु सर्व आदिर्येषामिति विग्रहेऽन्यसमुदायप्रतीत्या सर्वशब्दस्य सर्वनामसंज्ञा न स्यादत आह—बहुव्रीहाविति । तस्य गुणस्य वर्त्तिपदार्थस्य सम्यग् विज्ञानं कार्य्यसम्बन्ध इत्यर्थः । अपिशब्देन कार्यानन्वयोऽपि बोध्यते यत्र हि संयोगसमवायान्यतरसम्बन्धेन वर्त्तिपदार्थोऽन्यपदार्थविशेषणम्

ज्ञानं विशेष्यान्वयित्वमिति तदर्थः । यत्र समवायसम्बन्धेन संबन्ध्य-न्यपदार्थस्तत्र प्रायस्तद्गुणसंविज्ञानम् । अन्यत्र प्रायोऽन्यत् । लम्ब-कर्णश्चित्रगू उदाहरणे । सर्वादीनि जक्षित्यादय इति चोदाहरणे । सर्व-नामसंज्ञासूत्रे भाष्ये स्पष्टा ॥ ७८ ॥

---

तत्र तद्गुणसम्विज्ञानम् । अन्यत्राऽतद्गुणसम्विज्ञानम् । तेन अत्रादि-शब्दस्यावयववाचित्वात्समवायसम्बन्धः । सर्वादीनि सर्वनामानीति सर्वश-ब्दस्याऽपि सर्वनामसंज्ञा सिद्ध्यति । अत्रादिशब्दस्य पूर्ववाचित्वात्संयोगस-म्बन्धः । जक्षित्यादयः षडिति सूत्रे जक्षपदेनैव जक्षेरभ्यस्तसंज्ञायासिद्धत्वात् "कण्वादिभ्यो गोत्र" इत्यत्रेव आदिपदस्य पूर्ववाचित्वेन परिच्छेद्यपरिच्छे-दकभावसम्बन्धेनान्यपदार्थविशेषणत्वान्न तद्गुणसम्विज्ञानम् । शाकल्य-स्येदं शाकलमिति रूपसिद्धये कण्वस्य आदिः कण्वादिरितिषष्ठीसमास उक्तः ।

ननु कण्वशब्दस्य कलशशब्दोऽवयवो भवतीति सामर्थ्यादादिशब्दोऽत्र पूर्ववाची । तथा च वार्त्तिकम् "कण्वात्तु शकल⌣पूर्व⌣कतादुत्तर इष्यते" एतेनोभयत्र प्राय⌣पदप्रक्षेपो हि शेखरकृतो निरर्थकः । संयोगसम्बन्धस्थले चित्रवाससमानय लम्बकर्णमानय लोहितोष्णीषा ऋत्विजश्चरन्तीति भाष्ये दर्शनात्तदनुक्त्यैव नव्यस्य महती न्यूनतेति मान्या⌣खण्डकाः ।

"तद्गुणोऽतद्गुणश्चैव बहुव्रीहिर्द्विधा मतः । लम्बकर्णश्च कार्णाटो दृष्ट-सागरपूरुष" इति कारिकानुरोधेनातद्गुणसम्विज्ञानबहुव्रीहेरुदाहरणम् दृष्टसा-गरमानय चित्रगुमानयेति । नत्वत्र सागरस्य गोश्चानयनक्रियायामन्व-यः । केचित्तु यत्रावयवावयविभावस्तत्र तद्गुणसम्विज्ञानमन्यत्रान्य-दिति तत्त्वम् ।

अत्र किञ्चिद्विलक्षणम्—ननु घटपटौ संयुक्तौ इमौ संयुक्ताविति प्रती-त्यनुरोधेन संयोगस्य स्वत⌣पदार्थत्वेन पदार्थप्रयोजनमात्रस्यैव सम्बन्ध-त्वेन च संयोगो न सम्बन्ध इति कथम् मूलसङ्गतिरिति प्रश्नः ।

नच घटवद्भूतलमित्यादौ संयोगसम्बन्धावच्छिन्नप्रकारतानिरूपित-घटत्वावच्छिन्नविशेष्यताकशाब्दबोध इति व्यवहारे संयोगस्य सम्बन्धत्वं प्रतिभातीति कथं संयोगस्य सम्बन्धत्वाभावो मञ्जूषायामुक्त इति वाच्यम् ? उभयाश्रितत्वरूपधर्मवत्त्वेन गौणसम्बन्धव्यवहारसत्त्वेऽपि प्रथमसम्बन्ध-व्यवहाराभावात्, संयोगम्पश्येति व्यवहाराच्च । अत एव मतुप्सूत्रे भाष्ये वृक्षो विद्यतेऽस्मिन्निति वृक्षवान् पर्वत इति सप्तमीविभक्तेः गौरस्यास्ये-ति गोमान्देवदत्त इति षष्ठ्याश्चोपादानं सङ्गच्छते । एवञ्च संयोगो न स-म्बन्ध इति ।

नच समवायोऽपि सम्बन्धस्तार्किकाभिमतो न शाब्दिकाभिमत इति वा-

ननु वदः सुपि क्यप् च इति चेनानुकृष्टस्य यतो भुवो भावे इत्य-त्राप्यनुवृत्तिः स्यादत आह—

चानुकृष्टं नोत्तरत्र ॥ ७६ ॥

णमुल्यनुवर्तमानेऽव्ययेऽयथाभिप्रेतेति सूत्रे पुनर्णमुल्ग्रहणमस्यां ज्ञा-पकम् । अन्यथा क्त्वा चेति वदेत् । तद्धि उत्तरत्रोभयोः सम्बन्धा-र्थम् । उदाहरणानि स्फुटानि ।

इदमनित्यम् । अत एव तृतीया च होरित्यत्र चानुकृष्टाया अपि द्वितीयाया अन्तरान्तरेण इत्यत्र सम्बन्धः ।

लुटि च क्लृप इति सूत्रस्थेनानुवृत्त्यर्थकसकलचकारप्रत्याख्यानेन

---

व्यम् ? "समवायान्समवैती"ति सूत्रे समवायस्य पाणिनिप्रयुक्तत्वात् । "नि-मित्तात्कर्मयोग" इति सूत्रे योगस्सम्बन्धस्समवायात्मक इत्युक्त्या समवा-यस्यापि शाब्दिकसम्प्रदायसिद्धत्वात् । अत एव "समवायोऽपृथग्भावो द्र-व्यादीनां गुणैर्मतः।स नित्यो यत्र हि द्रव्यं न तत्राऽनियतो गुण" इति चर-के पतञ्जलिः । द्रव्यादीनामाधारभूतानां गुणैराधेयैस्समवायसम्बन्धो मत-स्तेन पृथिवीत्वगन्धयोर्न समवाय आधाराधेयत्वाभावात् हरिणाऽपि "ततस्तु समवायाख्या शक्तिर्भेदस्य बाधिका।एकत्वमिवता व्यक्तीरापादयतिकारणैरि" त्युक्तम् । पुनरपि चरके पतञ्जलिर्विमानखण्डे वादमार्गे जयाय द्रव्यगुणकर्म-सामान्यविशेषसमवाया ज्ञातव्या इति समवायप्रतिनिधिस्तादात्म्यमिति शाब्दिकाभिप्राय इतोऽधिकम्मञ्जूषायां द्रष्टव्यम् ।

बहुव्रीहौ तद्गुणसंविज्ञानमपि—पाणिनीयसङ्केतसम्बन्धावच्छिन्नवि-षयतासम्बन्धावच्छिन्नबहुव्रीहित्वावच्छिन्नप्रकारतानिरूपिततद्गुणसम्विज्ञा-नत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिताऽपिशब्दार्थविशेष्यता-विशिष्टो बोधः ।

समुच्चयार्थकापिशब्दोपादानप्रसङ्गादाह—नन्विति । चकारेणानुवर्त्त-मानमुत्तरत्र न सम्बध्यत इति भावः । अनित्यमिति । क्वचित्प्रवर्तते क्व-चिन्नेति फलति । पाणिनीयशास्त्रे चकारो द्विविधोऽस्ति, प्रथमस्तावत् वि-धेयघटितसूत्राऽव्यवहितसूत्रस्थः, द्वितीयश्च व्यवहितसूत्रस्थः । एवञ्च द्वि-तीये चकारे परिभाषेयम्प्रवर्त्तते । यथा "कर्मणि द्वितीये"ति विधेयघटित-सूत्राद्व्यवहितम् "तृतीया च होरि"ति तत्रत्यचकारे परिभाषाया अप्रवृत्त्या चकारेणानुकृष्टा द्वितीया "अन्तराऽन्तरेणे"त्यत्र सम्बध्यते । "भुवो भावे" इत्यत्र त्वेतत्परिभाषाप्रवृत्त्या "अचोयदि"ति यतो "वदस्सुपी"ति विद्यमाने चकारे न सम्बन्ध इति ब्रह्मभूयमिति सिद्ध्यति । यतस्सम्बन्धे तु गुणा-

विरुद्धेयम् ।

व्याख्यानादेवानुवृत्तिनिवृत्त्योर्निर्वाह इति तदाशयः । कुलिजाल्लुक्खौ च इति सूत्रस्थभाष्यविरुद्धा च । तत्र हि द्विगोः ष्ठंश्च इति सूत्रात् ष्ठनस्तत्र चेनाप्यनुकृष्टस्य खोऽन्यतरस्यामित्यस्य चानुवृत्तिं स्वीकृत्य लुक्खौ चेति भाष्ये प्रत्याख्यातम् ॥ ७६ ॥

---

पत्तिरिति निष्कर्षः । विरुद्धेयमिति । एवं सर्वे चकाराः प्रत्याख्यायन्ते अनुवृत्त्यर्थकास्सर्वे चकारा इति तदर्थः । व्यवहितसूत्रस्थयोश्चकारयोः पूर्वसूत्रस्थपदानुवृत्तिसूचकत्वेनानुवृत्त्यर्थत्वाविशेषादनुवृत्त्यर्थकसकलचकाराभावे परिभाषेयं क्व प्रवर्त्तेतेति भाष्यविरोधस्स्पष्टः । व्याख्यानादिति । "स्वरितेनाधिकार" इति स्वरितत्वमेव विलक्षणं तेन सूत्रप्रवर्तनेन कार्यद्वयम्प्रवृत्तिनिवृत्त्याख्यं सिद्ध्यति ।

वस्तुतस्तु अव्यवहितसूत्रस्थचकारविषयकमेव चकारप्रत्याख्यानभाष्यम् इति तेन भाष्येण व्यवहितसूत्रस्थचकारविषयिणीयं परिभाषा न प्रवर्त्तते विरुद्धा सतीति। भिन्नविषयत्वात् । एवं "कुलिजाल्लुक्खौ चे"ति सूत्रस्यापि अव्यवहितसूत्रस्थचकारविषयकत्वेन न तत्सूत्रस्थभाष्यविरुद्धापि, व्याख्यानमेतद् युक्तम् । "ठँश्चे"ति चकारस्तु समुच्चायक इति योग्याः ।

केचित्तु परिभाषेयमनित्या । प्रमाणन्तु "तृतीया च होरि"ति सूत्रे चानुकृष्टद्वितीयायाः उत्तरत्र "अन्तरान्तरेणे"ति सूत्रे सम्बन्धदर्शनम् । अनुवृत्त्यननुवृत्ती तु 'व्याख्यानैकगम्ये "व्याख्यानतो विशेषप्रतिपत्तिरि'ति परिभाषाबलात् "स्वरितेनाधिकार" इति पाणिनीयाच्चेति संक्षेपमाहुः । "लुटि च क्लृप" इति सूत्रे 'एवं सर्वे चकाराः प्रत्याख्यायन्त, इति भाष्यस्यानुवृत्त्यर्थकास्सर्वे चकाराः प्रत्याख्यायन्त इत्यर्थः । ये व्यवहितसूत्रस्थाश्चकारास्ते निवृत्त्यर्थका येऽव्यवहितसूत्रस्थाश्चकारास्तेऽनुवृत्त्यर्थकाः । अत एव "लुक् खौ चे"ति प्रत्याख्यानेन विरोधो नास्तीति युक्ततरो निष्कर्ष इति परममान्याः ।

चानुकृष्टं नोत्तरत्र–चकारेणानुवर्त्तमानमुत्तरत्र न सम्बध्यत इति तत्त्वम् । स्वनिष्ठकर्तृतानिरूपकत्वसम्बन्धावच्छिन्नचकारत्वावच्छिन्नप्रकारतानिरूपितानुवर्तमानत्वावच्छिन्नस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपितोत्तरसूत्रनिष्ठविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या सम्पूर्वकबन्धधात्वर्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाचार्यनिष्ठकर्तृतानिरूपिता तादृशधात्वर्थव्यापारजन्यफलाश्रयं पदमिति ।

नन्वनुदात्तादेरन्तोदात्ताच्च यदुच्यते तद्व्यञ्जनादेर्व्यञ्जनान्ताच्च न प्राप्नोतीत्यत आह—

स्वरविधौ व्यञ्जनमविद्यमानवत् ॥ ८० ॥

स्वरोद्देश्यकविधावित्यर्थः। नात्तरपदेऽनुदात्तादावपृथिवीरुद्र-पूषमन्थिषु इति सूत्रे पृथिव्यादिपर्युदासोऽस्या ज्ञापकः। अन्यथा पृथिव्यादीनामनुदात्तादित्वाभावादप्राप्तौ तद्वैयर्थ्यं स्पष्टमेव।

धर्मिग्राहकमानादेव च स्वरोद्देश्यकविधिविषयमिदम्। अत एव शतुरनुमो नद्यजादी अचः कर्तृयकीत्यादावजादी अच इत्यादेश्चारितार्थ्यम्।

अत एव राजवतीत्यादौ नलोपस्यासिद्धत्वादन्वतीशब्दत्वादन्तोऽवत्या इति स्वरो न, उदश्वित्वानित्यत्र ह्रस्वनुड्भ्यामिति मतुबुदात्तत्वं च नेत्याकरः। स्पष्टं चेदं समासस्येति सूत्रे भाष्ये।

उच्चैरुदात्त इति सूत्रे कैयटस्त्वियमनावश्यकी समभिव्याहृतानुपरागेण हलोऽप्युदात्तादिवदवभासात्तदुपपत्तेरित्याह। तत्र भाष्येऽपि ध्वनितमेतत् ॥ ८० ॥

नन्वेवमपि राजदृषदित्यादौ समासस्येत्यन्तोदात्तत्वं षकारोत्तराकारस्य न स्यादत आह—

---

प्रसङ्गसङ्गत्या बहुव्रीहिप्रसङ्गादाह नन्वनुदात्तादेरिति। स्वरोद्देश्यके इति-स्वरत्वव्याप्यधधर्मघटितधर्मनिमित्तताके, ह्रस्वनुड्भ्यामिति-नन्वन्तोदात्तादित्यनुवृत्त्या ह्रस्वान्तादन्तोदात्तान्नुटश्च परो मतुबुदात्त इति सूत्रार्थेन स्वरोद्देश्यकत्वमस्त्येवेति चेन्न? स्वरत्वव्याप्यो यो धर्मस्तद्धर्मघटितधर्मावच्छिन्नविषयताप्रतिबन्धकत्वं व्यञ्जनस्य नेत्यर्थेन कापोतं मायूरमित्यादावविद्यमानवद्भावो ननु उदश्वित्वानित्यादावपीति वैलक्षण्याश्रयणात् उदात्तान्तत्वोदात्तादित्वघटकवर्णे व्यञ्जनातिरिक्तत्वन्निवेश्यमिति परिभाषातत्त्वम्। अनुपरागेणेति—स्वरविशिष्टाच्सान्निध्येनेति फलितम्। अवभासादिति-जपासन्निधानेन स्फटिकस्य रक्तत्ववदित्यर्थः।

नन्वतिदेशशास्त्रवद्व्यञ्जनस्योदात्तवदवभासमात्रत्वमेव नतूदात्तत्वमिति चेन्न? पृथिव्यादिपर्युदासेनाभासात्मकाहार्यज्ञानस्य शास्त्रप्रवृत्तिप्रयोजकत्वकल्पनेनाक्षतेः।

स्वरविधौ व्यञ्जनमविद्यमानवत्। स्वरनिष्ठोद्देश्यतानिरूपितविधेयताश्रयनिष्ठाधारतानिरूपिताधेयतावद्भिन्नं व्यञ्जनत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिताविद्यमानप्रतियोगिकसादृश्याश्रयं भवतीत्यर्थः।

नन्वेवमपीति—स्वरोद्देश्यकविधौ व्यञ्जनस्याऽविद्यमानवद्भावेऽपी-

हल्स्वरप्राप्तौ व्यञ्जनमविद्यमानवत् ॥ ८१ ॥

अस्याश्च यतोऽनाव इति सूत्रेऽनौप्रतिषेधो ज्ञापकः । नाव्यमित्यत्रादिर्नकारो न स्वरयोग्यो यश्चाकारस्तद्योग्यो नासावादिरिति स प्रतिषेधोऽनर्थकः ।

न चादिरेव नकार उदात्तगुणविशिष्टान्तरतमाज्रूपोऽस्त्विति वाच्यम् ? तथा सति निमित्तभूतद्व्यच्कत्वस्य विनाशादुपजीव्यविरोधेनाद्युदात्तत्वाप्राप्तेरित्यन्यत्र विस्तरः । स्पष्टा चेयं समासस्येति सूत्रे भाष्ये ॥ ८१ ॥

ननु पूरणगुणेति निषेधस्तव्यत्यपि स्यात् । दिव औत् इत्यौत्त्वं दिवेः क्विप्यपि स्यात् । तथा यतोऽनाव इति स्वरो ण्यत्यपि स्यात्, ऋदृशोऽङि गुण इति चङ्यपि स्यात्, अत आह—

---

त्यर्थः । हल्स्वरप्राप्ताविति—स्वरविधायकशास्त्रीयोद्देश्यतावच्छेदकाक्रान्तस्य हल्स्वरे विधातव्ये व्यञ्जनमविद्यमानवदिति । यतोऽनाव इति । यत्प्रत्ययान्तस्य द्व्यच आदिरुदात्तो नावम्विनेति तदर्थः । तथासतीति—अज्द्वयघटितशब्दघटकव्यञ्जनस्य स्थानेऽपरस्याचो विधानेऽचश्चित्त्वेन निमित्तभूततन्निष्ठद्वित्त्वस्य नाशस्स्यादुत्तरा संख्या पूर्वां संख्याम्बाधत इति सिद्धान्तात् । एवञ्चोपजीव्यविरोधस्यान्याय्यत्वेन सूत्रन्नाव्यमित्यत्र न प्रवर्त्ततेति नौग्रहणम्व्यर्थमेवेति ग्रन्थाशयः ।

ननु स्वनिमित्तविघातकस्य स्वातिरिक्तस्य स्वयमनिमित्तमिति भावस्य सन्निपातपरिभाषाया वक्ष्यमाणत्वेन स्वे स्वनिमित्तविनाशो न दोषाधायकोऽत एव स्वनिमित्तभूतह्रस्वत्वसमानाधिकरणात्त्वस्य विनाशेऽपि न दोषः इति चेन्न ? स्वनिमित्तविनाशम्विना यस्य न चारितार्थ्यन्तेनैव स्वनिमित्तविनाशो न दोषायेति, चारितार्थ्ये तु दोष एवोपजीव्यविरोधो न न्याय्य इति न्यायमूलकत्वं परिभाषाया इति प्रकृतेऽजादौ चारितार्थ्यसम्भव इति निष्कर्षः।

दिवेः क्विप्यपीति—अक्षद्यूरित्यादौ । ण्यत्यपीति—कार्य्यमित्यादौ। चङ्यपि स्यादिति । नन्वेतेभ्यः केवलेभ्यो न चङ् सम्भवति णिजन्तेभ्यः एव चङ् वाच्यस्तत्र णिचा व्यवधानान्नाङ्परत्वमिति चेन्न ? "ऋदृशोङी"त्यत्र ऋदृशोङीत्यतोऽङीत्यनुवर्त्तमाने "श्वयतेर"इत्यत्त्वं चङ्यपि स्यादिति तात्पर्यवर्णनात् ।

न च श्वयतेश्चङोऽभावः "विभाषाधेट्श्व्योः" जॄस्तम्भु" इति सूत्राभ्यां चङोविधानात् । तद्धीति—ङित्त्वं हीत्यर्थः । अव्ययपूर्वपदप्रकृतिस्वरः—"तत्पुरुषे तुल्यार्थ" इति विहितस्स्वरः तव्यत्यपि स्यादिति । तकारस्येत्संज्ञालोपाभ्यामपहाराल्लक्ष्ये श्रवणाऽभावेन तव्यरूपस्य तत्रापि विद्यमानत्वा-

## निरनुबन्धकग्रहणे न सानुबन्धकस्य ॥ ८२ ॥

## तदनुबन्धकग्रहणे नातदनुबन्धकस्य ॥ ८३ ॥

वामदेवाड्ड्यड्ड्यौ इति सूत्रे ड्यड्यतोर्डित्वमनयोर्ज्ञापकम् । तद्धि ययतोश्चातदर्थे इत्यत्र तयोरग्रहणार्थम् । नञः परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति तदर्थः ।

एवं चावामदेव्येऽव्ययपूर्वपदप्रकृतिस्वर एव भवति । तन्मात्रानुबन्धकग्रहणे सोऽचान्यश्चानुबन्धो यस्य तद्ग्रहणं नेत्यन्त्याथः ।

एते च प्रत्ययाप्रत्ययसाधारणे, दिव औत् इत्यादौ सञ्चारितत्वात् । वर्णग्रहणे चानयोरप्रवृत्तिरिति स्पष्टमोङ्आप इत्यत्र भाष्ये ।

येनानुबन्धेन सानुबन्धकत्वं द्व्यनुबन्धकत्वादि वा तदनुच्चारण एवैषा, धर्मिग्राहकमानात्, तेन जश्शसोरित्यत्र नैषेति निरनुबन्धकत्वात्तद्धितशस एवात्र ग्रहणं स्यादिति न शङ्क्यम् । एवमन्त्या अन्यतरानुबन्धोच्चारण एव । तेन वनोरचेत्यादौ ङ्वनिप्क्वनिपोर्ग्रहणसिद्धिः । एकानुबन्धकग्रहणे सम्भवतीति त्वर्थो न भाष्यादिसम्मत इत्यन्यत्र विस्तरः ॥ ८२–८३ ॥

---

दिति भावः । तद्धीति ङित्त्वं हीत्यर्थः । तयोरिति—वामदेवप्रकृतिकययतोरित्यर्थः । ययतोश्चेति—नञ्परस्य ययदन्तस्योत्तरपदस्यान्त उदात्त इति हि तदर्थः । ङकाररूपानुबन्धस्य बोधके विद्यमानत्वेऽपि लक्ष्ये यमात्रस्यैव तत्रापि सत्त्वादिति भावः । तच्च न टिलोपार्थं "यस्येति" लोपेन सिद्धेः । अवामदेव्ये इति—वामदेव्यशब्दस्य नञ्समास इत्यर्थः । वर्णग्रहणे चानयोरप्रवृत्तिरिति तेनाधीत इत्यादौ ङितीकारेऽपि दीर्घसिद्धिः । "औङ आप इत्यत्र भाष्य इति-तत्रहि निरनुबन्धकपरिभाषया द्वितीयाद्विर्वचनेऽप्रवृत्तिमाशङ्क्य वर्णग्रहणे नैषेति समाधानं कृतम् । धर्मिग्राहकमानादिति—"ययतोश्चाऽतदर्थे"इत्यत्र यप्रत्यये ङकारेण सानुबन्धकत्वं यत्प्रत्यये ङकारेण द्व्यनुबन्धकत्वन्तस्यानुच्चारणमस्तीति भावः । तद्धितशसोऽग्रहणन्तु जश्साहचर्याद् बोध्यम् । "वनोरचे"ति इह कस्याप्यनुबन्धस्योच्चारणं नास्तीति न भाष्यादिसम्मत इति । तेन "अणिनुण" इत्यत्र घिनुण्प्रत्ययस्याऽग्रहणम् । अन्यथा एकानुबन्धकस्याभावेन उक्तपरिभाषाया अप्राप्तौ घिनुण्प्रत्ययस्य ग्रहणं दुर्वारं स्यादिति तत्त्वम् । "झय" इति सूत्रे मतुप्पदेन ड्मतुपो ग्रहणाऽभावश्च सिद्ध इति ।

निरनुबन्धकग्रहणे न सानुबन्धकस्य—निरनुबन्धकत्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्य

ननु कुटीर इत्यादौ स्वार्थिकत्वात्स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्तत्वात्पुंस्त्वानुपपत्तिरपूकल्पमित्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यत आह—

क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते ॥ ८४ ॥

णचः स्त्रियामितिसूत्रे स्त्रियामित्युक्तिरस्या ज्ञापिका । अन्यथा "कर्मव्यतिहारे णच् स्त्रियाम्" इति स्त्रियामेव विधानात्किं तेन । स्पष्टा चेयं बहुज्विधायके भाष्ये ॥ ८४ ॥

---

तासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या सानुबन्धकत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपिताऽवच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टः । एवदन्तदनुबन्धकग्रहण इत्यस्या अपि ।

पूर्वपरिभाषायास्तद्धितीयप्रत्ययविधायकसूत्रज्ञाप्यत्वात्तत्प्रसङ्गेनाह ननु कुटीरइति । "कुटीशमीशुण्डाभ्यो र"इतिसूत्रविहितस्येति शेषः । स्वार्थिकत्वादनिर्दिष्टार्थाः प्रत्ययास्स्वार्थे कोऽर्थस्स्वप्रकृत्यर्थे भवन्तीति न्यायेन स्वार्थिकत्वात् । प्रकृतित इति—प्रकृतिशब्दात् षष्ठयन्तादाद्यादित्वात्तसिः ।

क्वचित्स्वार्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्तन्ते ।

षष्ठयन्तात्तसिः, अतिपूर्वकवृत्धातुस्त्यागार्थकः क्वचित्स्थलत्वावच्छिन्नाधिकरणतानिरूपिताधेयतावदभेदसम्बन्धावच्छिन्नस्वार्थिकत्वावच्छिन्नप्रकारतानिरूपिता या प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता सती प्रकृतिनिष्ठप्रकारतानिरूपिता या लिङ्गवचनान्यतरत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्मत्वत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठजन्यतानिरूपितजनकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अतिवृत्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

ननु सुपथी नगरीति "युवोरनाकावि"ति सूत्रभाष्योदाहृते "इनः स्त्रियाम्" इति कप्स्यादत आह—

समासान्तविधिरनित्यः ॥ ८५ ॥

"प्रतेरंश्वादयस्तत्पुरुषे" इत्यन्तोदात्तत्वायांश्वादिषु राजन्शब्दपाठोऽस्यां ज्ञापकः । अन्यथा टचैवान्तोदात्तत्वे सिद्धे किं तेन । "द्वित्रिभ्यां पाद्न्मूर्द्धसु" इति स्वरविधायके (१)भाष्ये स्पष्टेयम् ॥ ८५ ॥

ननु शतानीत्यादौ नुमि कृते षट्संज्ञा प्राप्नोति ततश्च लुक् स्याच्च-

---

किन्तेनेति—ननु लिङ्गविशिष्टपरिभाषायास्समासान्तविधौ प्रवृत्त्यभावात् राज्ञीम्प्रति गतः प्रतिराज्ञिरित्यत्र स्वरार्थमश्वादिषु राजन्शब्दपाठ आवश्यकः ।

नच स्वरविधावपि लिङ्गविशिष्टपरिभाषाया अप्रवृत्तिः ? स्वरविधौ संघातग्रहणे भाष्ये दोषदानेन अवयवग्रहणेऽप्रवृत्तौ प्रमाणाऽभावादित्यत आह द्वित्रिभ्यामिति । केचित्तु—अवयवग्रहणेऽपि न प्रवर्तत इति वदन्ति । मान्यास्तु—द्वित्रिभ्यामितिसूत्रात्ष इत्यनुवर्त्तमाने "बहुव्रीहौ सक्थ्यक्ष्णोरि"तिषच्ग्रहणमेव ज्ञापकमिति वदन्ति ।

समासान्तविधिरनित्यः—

समासान्तविधित्वावच्छिन्नप्रकारतानिरूपिता या अनित्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

निमित्तापाये नैमित्तिकस्याऽप्यपाय इति—निमित्तेन(२) निर्मितन्नैमित्तकम्वुन्छणादौ कुमुदादित्वात्वाठ्क् । कारणाऽपाये तत्कार्यमप्यपैति इति यावत् । पटुभार्य इत्यादौ ङीब्निवृत्तौ यणादेशोऽपि निवर्त्तते । ज्ञापकञ्चास्या "मुदस्स्थास्तम्भोरि"त्यादौ षकारनिवृत्तौ ठस्य थकारोच्चारणम् । इयमकृतव्यूहपरिभाषाप्रपञ्चात्मिका ।

ननु शतानीति—ननु षान्तसाहचर्य्यादौपदेशिकनान्तस्यैव ग्रहणान्नात्र

---

(१) समासान्तविधिरनित्य इति-भाष्ये तु द्वित्रिभ्यां पाद्न्मूर्द्धसु बहुव्रीहावित्यत्र मूर्द्धस्विति नकारान्तनिर्देशो ज्ञापकः, अन्यथामूर्द्धस्वित्येव वदेत् । केचित्तु ऋक्पूरब्धूःपथामानक्ष इति अकृतसमासान्तनिर्देशो ज्ञापक इति ।

(२) निमित्तापाये नैमित्तिकस्याप्यपायः-इयं सर्वत्र पुस्तके न दृश्यतेऽतः परिभाषेन्दुशेखरीयत्वेन नाद्रियते पण्डितैः । लोकसिद्धार्थानुवादिनी ज्ञापकादिभिः परिपोष्य जिज्ञासूनां कृतेऽत्र बृहच्छात्रार्थंकलाकारै व्याख्याता । लौकिकोऽयन्न्याय इति परे व्याचक्षते । अत एव महानुभावैष्टीकाकारैरपि "अकृतव्यूहपरिभाषाप्रपञ्चात्मिकेयमि"ति फलितार्थ उक्तः । अकृतव्यूहपरिभाषयैव गतार्था न पृथग् व्याख्यादिकमपेक्षते इति हृदयम् ।

थोपादाऽस्तेत्यत्रास्वे कृते स्थाऽध्वोरिच्च इतीत्वं प्राप्नोत्यत आह—

संनिपातलक्षणो विधिरनिमित्तं तद्विघातस्य ॥ ८६ ॥

सन्निपातो द्वयोः सम्बन्धस्तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम्। उपजीव्यविरोधस्यायुक्तत्वमिति न्यायमूलैषा। अत एवात्र सन्निपातशब्देन न पूर्वपरयोः सम्बन्ध एव किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते। अत एव ग्रामणि कुलमित्यादौ नपुंसकह्रस्वत्वेऽपि पिति कृति इति तुग्न? प्रातिपदिकाजन्तत्वसन्निपातेन जातस्य ह्रस्वस्य तद्विघातकत्वात्। तुक्यजन्तत्वविघातः स्पष्ट एव। न चार्थाश्रयत्वेन ह्रस्वस्य बहिरङ्गतयाऽसिद्धत्वम्? अर्थकृतबहिरङ्गत्वानाश्रयणस्योक्तत्वात्। किं च "षत्वतुकोरसिद्ध" इत्येतद्बलात् कृति तुग्ग्रहणाच्च तुग्विधौ बहिरङ्गपरिभाषाया अप्रवृत्तेः।

---

दोष इत्यत आह—उपादाऽस्तेति। ननु विभक्तिसापेक्षस्य नुमो बहिरङ्गत्वेनाऽसिद्धत्वान्न षट्संज्ञेति चेन्न? संज्ञाया विधिनिमित्तनिमित्तकत्वेन षट्त्वस्यापि लुग्निमित्तविभक्तिनिमित्तकत्वेनोभयोस्तुल्यत्वात्। केचित्तु—"उद्देशश्च प्रातिपदिकानां नोपदेश" इत्युक्त्या उपदेशे नान्तस्य षट्संज्ञेत्यर्थं खण्डयन्ति, तन्न? निरुक्तरीत्या षकारसाहचर्य्येण तादृशार्थकरणे क्षतिविरहात्। अकृतव्यूहपरिभाषया नुमभावस्तु वक्तुमशक्यः, तस्या असत्त्वात्। एतद्दोषवारणाय सन्निपातपरिभाषाया कर्त्तव्यत्वाच्च। उपजीव्यविरोधस्याऽयुक्तत्वमिति—उपजीवयतीत्युपजीव्यः ण्यन्तात्कर्त्तरि बाहुलकाद्यत्। तस्य यो विरोधो नाशानुकूलो व्यापारस्स उपजीवकेन कर्त्तुमशक्य इत्यर्थः। उपजीवतीत्युपजीवकः। शतानीत्यत्र नुमम्प्रत्युपजीव्या विभक्तिस्तन्नाशो लुक् तज्जनको व्यापारः षट्संज्ञाप्राप्तिस्सा उपजीवकेन नुमा कर्त्तुमशक्येति। अतएवेति—उपजीव्यविरोधस्याऽयुक्तत्वमूलकत्वादेवेत्यर्थः।

अत्र केचित्—न्यायमूलैषेतिप्रतीकमादायेत्थम्व्याख्यान्ति "ङितिह्रस्वश्चे"त्यस्य स्थाने "वाचि ह्रस्वश्चे"ति विन्यस्य "वामी"ति सूत्रं व्यर्थं सदत्र ज्ञापकम्। ज्ञापिते त्वजादित्वोपजीव्यं नदीत्वन्नुड्द्वाराऽजादित्वविघातकमिति नुटोऽप्राप्त्या "नाऽमी"ति चरितार्थम्। वर्णग्रहणे यदागमपरिभाषाया अप्रवृत्त्या तेन न्यायेन नुड्विशिष्ट आमि अजादित्वन्नातिदेष्टुं शक्यम्।

ननु मतिश्च उमा चेति विग्रहे "वाची"ति न्यासेऽजादित्वेन नदीत्वे "द्वन्द्वे घी"ति यस्य पूर्वपदत्वे घित्वं भावीत्यर्थकस्य विषयाभावेन मतिशब्दस्य पूर्वनिपातानापत्तिः। अङ्गाधिकारीयत्वाभावेन "वाचि प्रत्यय" इत्यपि वक्तुमशक्यम्। यथाश्रुतन्यासे तु "वाऽमी"ति साहचर्य्येण ङित्प्रत्ययस्यैव ग्रहणेन मतिश्च चित्रङ् चेति विग्रहे न दोषः। "वापि ह्रस्वश्चे"त्येव सिद्धे पार्थ-

सर्वविधसन्निपातग्रहणादेव वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तं स्यादित्येतत्परिभाषादोषनिरूपणावसरे वार्तिककृतोक्तम् । न हि प्रत्ययः पूर्वपरसन्निपातनिमित्तकः स एव च सन्निपातशब्देन गृह्यत इति मत्वा न प्रत्ययः सन्निपातनिमित्तक इति शङ्कायां तदभ्युपेत्यैवाङ्गसंज्ञा तद्धनिमित्तं स्यादित्येकदेशिनोक्तमिति न तद्भाष्यविरोधः ।

किं चैवं शैवो गार्ग्यो वैनतेय इत्यादावप्यङ्गसंज्ञाया लोपनिमित्तत्वापत्त्या वर्णाश्रय इत्यस्य वैयर्थ्यम् । ग्रामणिकुलं ग्रामणिपुत्र इत्यादावुत्तरपदनिमित्तके ह्रस्वत्वे यथाकथञ्चिद् बहिरङ्गपरिभाषयापि वारणं सम्भवतीति ङमो ह्रस्वादचि ङमुण्नित्यमिति ङ्मेजन्त इत्यत्र ह्रस्वस्य पिति इति सूत्रे चैकदेशिना तथा परिभाषया तुग्वारितो भाष्ये । अत एव परिभाषाफलत्वेनेदमुक्तं "कृन्मेजन्त" इति सूत्रे वार्तिककृतेति केचित् ।

---

कथेन योगविभागस्सिद्धान्तेऽपि व्यर्थ एव । "ङिति ह्रस्वश्चे"तिशास्त्रे स्त्र्याख्यपदं नित्यस्त्रीलिङ्गावित्यर्थकम् । "वाऽमी"त्यत्र अतिश्रीणामतिश्रियाम्ब्राह्मणानामित्येतदर्थं स्त्रीवाचकावित्येतदर्थकमेवेति पृथग्योगकरणमावश्यकमेव ।

वस्तुतस्तु सुष्ठु मतिर्ययोस्सुमती इत्यत्र नदीत्वादन्तर्वर्त्तिविभक्त्या "न्यृतश्चे"ति कबापत्तेरेवञ्च भाष्यमेव प्रमाणीभूतम् । वस्तुतस्तु "न तिसृचतसृ" इति सूत्रं सन्निपातपरिभाषाज्ञापकम् । तिसृणामिति स्थिते स्वस्रादिगणे तिसृचतसृपाठस्यानार्षत्वा"न्नषडि"त्यप्राप्तयाऽन्तरङ्गत्वान्ङीपि दीर्घाऽप्राप्त्या तज्ज्ञापकम् । ज्ञापितायान्तु त्रिशब्दविभक्त्यानन्तर्य्यनिमित्तस्तिस्रादेशः । ऋदन्तत्वसम्पादनद्वारा नानया ङीप्निमित्तमिति । नन्वतितिसृणामित्यत्र "नामी"तिह्रस्वापेक्षया प्रकृतिमात्रापेक्षत्वेनान्तरङ्गत्वान्ङीपि तदन्तस्योपसर्जनतया "गोस्त्रियोरि"तिह्रस्वे पुनः प्राप्तदीर्घवारणार्थं सूत्रं चरितार्थमिति चेन्न ? "नामी"तिसूत्रस्य प्रतिपदविधितया ह्रस्वात्पूर्वं प्रवृत्त्या ततो ह्रस्वे सूत्रवैयर्थ्यसौष्ठवात् इति ब्रुवन्ति ।

न तद्भाष्यविरोध इति—उपरिष्टादेतत्स्फुटीकरिष्यते । बहिरङ्गपरिभाषयाऽपीति–सर्वविधसन्निपातग्रहेऽनयाऽपीत्यपिशब्दार्थः । ईधातो क्विपि नपुंसकत्वेऽनयैव तुग्वारणम्बोध्यम् । नाजानन्तर्य्यपरिभाषाविषयेऽन्तरङ्गपरिभाषाप्रवर्त्तनमयुक्तमित्याह एकदेशिनेति । परिभाषा—सन्निपातपरिभाषा । इदम्-तुग्वारणम् । विधिस्त्वमिति–विधीयतेऽनेनेति करणे किप्रत्ययान्तविधिशब्दस्य शास्त्रमित्यर्थः । तथा च शास्त्रत्वसम्पादकत्वाभावात्त्रिपाद्यासप्रवृत्तिः । प्रमाणन्तु "ब्रुवः पञ्चानामि"ति निर्देशः "मय उञो वे"तिवकारविधानञ्च । अत एव नर्तिष्यतीत्यादौ षत्वं सिद्ध्यति ।

सर्पिष्टममित्यत्र तादितद्धितनिमित्तकषत्वस्य ष्टुत्वम्प्रति निमित्तता च

सन्निपातलक्षणविधित्वमस्या लिङ्गम् । स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यस्सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति ।

नन्वेवं रामायेत्यादौ सुपि च इति दीर्घानापत्तिः । अदन्ताङ्गङेसन्निपातेन जातस्य यादेशस्य तद्विघातकत्वात् । न च यञादित्वलापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्? आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेः । किं चान्तरङ्गे कर्त्तव्ये बहिरङ्गस्यासिद्धत्वेऽपि तत्र कृते तस्यासिद्धत्वे मानाभावः । किं चातिदेशिकसन्निपातविघाताभावमादायैतदप्रवृत्तौ गौरीत्यादौ सम्बुद्धिलोपे स्थानिवत्त्वेन ह्रस्वनिमित्तसन्निपातविघाताभावात्त्वेतस्यातिव्याप्तिपर "कृन्मेजन्त"इति सूत्रस्थभाष्यासङ्गतिः । सन्निपातस्याशास्त्रीयत्वान्नात्र स्थानिवत्त्वमिति चेत्तर्ह्यत्रासिद्धत्वमपि कथमिति विभावय । अशास्त्रीयेऽसिद्धत्वाप्रवृत्तेरीदूदेत् इति सूत्रे कैयटेन स्पष्टमुक्तत्वात् । एवं च पूर्वत्रासिद्धीयेऽपि कार्ये एतत्परिभाषाप्रवृत्तिर्भवत्येवेति चेत् न ? कष्टाय इति निर्देशेनैतस्या अनित्यत्वात् ।

ययोः सन्निपातस्य विघातकं शास्त्रं तयोः सन्निपातनिमित्तकविधावुपादानमपेक्षितमिति तु नाग्रहः । अत एव दात्तिरित्यत्राकारान्तप्रकृतीङ्सन्निपातनिमित्ताङ्गसंज्ञानया परिभाषयाल्लोपस्य निमित्तं न स्यादित्याशङ्क्यानित्यत्वेन समाहितं "कृन्मेजन्त" इति सूत्रे भाष्ये, न ह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेत्युक्तमस्ति । न च कुम्भकारेभ्य आधय इत्यादावव्ययसंज्ञाया अनया परिभाषया वारणपरभाष्यासङ्गतिः । अनया परिभाषया लुग्मा भूत् । अव्ययत्वं तु स्यादेव । लुका हि तदीयसन्निपातस्य विघातः नाव्ययसंज्ञया । संज्ञाफलं त्वकच् स्यादिति वाच्यम् ? एतदुदाहरणपरभाष्यप्रामाण्येन साक्षात्परम्परया वा स्वनिमित्तसन्नि-

---

सिद्ध्यति । अनिमित्तमिति—वर्णाश्रयः-वर्णनिमित्तकः, विचालस्य-नाशस्येति । सन्निपातलक्षणविधित्वमस्या लिङ्गमिति—अत्र विघातकशास्त्रत्वमस्या लिङ्गमिति तु युक्तम्, निरुक्तरीत्या अभ्यनुज्ञावाक्ये सङ्कोचे नीतिशास्त्रमेवानुसरणीयन्न धर्मशास्त्रमित्युपजीव्यविरोधो न न्याय्य इति न्यायमूलकत्वव्याघातापत्तेः ।

अत्र मान्याः—विघातकशास्त्र एव सङ्कुचितसङ्कोचः । एवञ्च "सुपि च"-तिशास्त्रे "ङेर्य"इत्येतदतिरिक्तं यत्स्वोपजीव्यं तद्विघातकत्वाभावविशिष्टः भवतीति प्रकारेणार्थ इति वदन्ति । तयोरिति—तद्रूपावच्छिन्नयोरिति । नाग्रह इति—इदं हि चिन्त्यम् ? तादृशोदाहरणाऽसम्भवात् । परम्परयेति-

पातविघातकस्य स्वयमनिमित्तमित्यर्थेनादोषात् ।

एतेनात्राकच् स्यादित्यपास्तम् । न च कार्यकालपक्षे लुगेकवाक्यतापन्नसंज्ञाबाधेऽकजेकवाक्यतापन्ना स्यादिति वाच्यम् ? अन्तरङ्गायां तदेकवाक्यतापन्नसंज्ञायां बहिरङ्गगुणादेरसिद्धत्वात् , लुगेकवाक्यतापन्ना तु न, गुणादितोऽन्तरङ्गोभयोरपि शब्दतः सुबाश्रयत्वात् ।

न यासयोरिति निर्देशाच्चैषाऽनित्या तेन नातिप्रसङ्गः । स्पष्टा चेयं "क्नमेजन्त" इति सूत्रे भाष्ये । अस्या अनित्यत्वे फलानि भाष्ये परिगणितानि, वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम् दाक्षिः, आत्वं पुग्विधेः क्षापयति, पुग्ह्रस्वस्य अदीदपत , त्यदाद्यकारष्टाब्विधेः या सेति, इड्विधिराकारलोपस्य पपिवान् , ह्रस्वनुड्भ्यां मतुप्-अन्तोदात्तादुत्तरपदात् इति मतुब्विभक्त्युदात्तत्वं पूर्वनिघातस्य । अग्निमान् , परमवाचा, नदीह्रस्वत्वं सम्बुद्धिलोपस्य नदि कुमारीत्यादि । यादेशो दीर्घत्वस्य कष्टाय, इतोऽन्यत्र प्रवृत्तिरेव, दोषाः खल्वपि साकल्येन परिगणिता इति भाष्योक्तेरित्यन्यत्र विस्तरः॥ ८६ ॥

---

परम्परा च संज्ञामात्रघटितैव । इतोऽन्यत्रेति—एतेन सन्धिकार्य्ये सन्निपातपरिभाषाऽनित्यैेति ध्वन्यते । अन्यथेह पररूपन्न स्यात् । अत एव च सोऽस्यादिरित्यादिनिर्देशस्सङ्गच्छते तथा "इकोऽचि विभक्ता"वित्येतद्विषयेऽप्यनित्यत्वं ज्ञेयम् ।

नच "कष्टाये"ति निर्देशोऽनित्यतायां ज्ञापक इति वाच्यम् ? यञीति यकारेण प्रत्याहाराश्रयणसामर्थ्याद्दीर्घसिद्धावेतद्ग्रन्थस्याऽयुक्तत्वात् ।

पुनरपि खण्डनप्रकारः, इतोऽन्यत्र प्रवृत्तिरेव दोषाः खल्वपि साकल्येनेतिशेखरोऽनुपपन्नः ? बाभ्रवीया माण्डवीया इत्यादावपरिगणितस्थलेऽपि सन्निपातपरिभाषाया अप्रवृत्तिदर्शनात् । अत एवा "चऽपरस्मिन्नि"ति सूत्रे बाभ्रवीया इति भाष्यप्रतीकमादाय सन्निपातपरिभाषाया अनित्यत्वेन यशब्दसन्निपातनिमित्तो वान्तादेशो यलोपनिमित्ततांप्रतिपद्यत इति कैयटेनोक्तम् ।

नच "दोषाः खल्वपी"तिभाष्यमनुपपन्नमिति वाच्यम् ? दोषाल्पत्वाभिप्रायमिति तात्पर्य्यात् । "नयासयोरि"तिनिर्देशोऽनित्यताज्ञापकः । नच सन्निपातविघातकम्प्रति निमित्तत्वाभावेऽपि उद्देश्यतावच्छेदकावच्छेदेन शास्त्रप्रवृत्तिप्रामाणिकतया प्रवृत्तिर्भवत्येवेति वाच्यम् ? स्वविधेयघटितस्साधुरित्येव "इको यणची"त्यादिशास्त्राणामर्थात् । नच समासे सुपो लुकि "सुपोधातुप्रातिपदिकयोरि"ति शास्त्रेण सुधी उपास्य इत्यस्य साधुत्वबोधनात् कदाचित् यण्रहितस्यापि प्रयोगस्स्यादिति वाच्यम् ? अत्र गुरवः—शास्त्राणां स्वविधेयघ-

टित॒पुण्यजनकः, स्वविधेयाऽघटितस्वोयोद्देश्यतावच्छेदकावच्छिन्न॒पापजनक इति व्यापारद्वयम्भवतीति। सुधी उपास्य इत्यस्य यणरहितस्य तु न प्रयोगः ? तस्याऽपरिनिष्ठितत्वेन "अपपदन्न प्रयुञ्जीते"तिभाष्यात्।

अथ शेखरखण्डनप्रकार॒पुनरपि प्रस्तूयते।

स्वप्रवृत्ते॒प्रागित्ययुक्तम् ? स्वप्रवृत्ते॒प्राक् स्वनिमित्तभूतङेऽकारान्तसम्बन्धस्य यादेशेनैव विहिततया दीर्घस्य तद्विघातकत्वेन तद्प्रवृत्तिशङ्काया अयोगात्। आतिदेशिकाऽसिद्धत्वेऽपि वास्तवविघातस्य सत्त्वादिति समाधानमशुद्धम् ? बहिरङ्गस्य हि अन्तरङ्गे कर्त्तव्ये असिद्धत्वम्। "दीधीवेवीटामि" त्यत्र इट् इडेव यथा स्यादिति यदन्यत् प्राप्नोति तन्माभूदित्युक्त्वा यद्येवं पिपठिषतेरप्रत्ययः पिपठीरिति दीर्घत्वन्न प्राप्नोति आङ्गं यत्कार्य्यन्तन्नियम्यते नचैतदाङ्गम् अथवा असिद्धं दीर्घत्वम् तस्याऽसिद्धत्वान्नियमो न भविष्यति इति समाहितम्। प्रकृते किमन्तरङ्गम्प्रति दीर्घस्याऽसिद्धत्वमाशङ्क्यते सन्निपातपरिभाषाम्प्रतीति चेत् न ? सा हि सनिमित्तं यादेशं दोर्घं चापेक्षमाणा दीर्घाद्बहिरङ्गा। नापि अन्तरङ्गमनपेक्ष्यैवासिद्धत्ववर्णनं युज्यते ? असिद्धं बहिरङ्गमिति न्यायेऽन्तरङ्गपदवैयर्थ्यापत्तेः। सर्वत्र बहिरङ्गस्याऽसिद्धत्वे तद्विघातकवैयर्थ्यापत्तेः। तथाच दोर्घे कृते वास्तवविरोध इति समाधानमप्यशुद्धम् ? पिपठीरित्यत्र वास्तवदोर्घस्य विद्यमानत्वेनोदाहृतभाष्यविरोधापत्तेः। आतिदेशिकसन्निपाताविघातमादाय एतत्परिभाषाया अप्रवृत्तौ हे गौरीत्यत्र नदीह्रस्वत्वं सम्बुद्धिलोपस्याऽनिमित्तं स्यादिति शङ्कापरभाष्याऽसङ्गतिः। सम्बुद्धिलोपस्य स्थानिवद्भावेन ह्रस्वनिमित्तसन्निपाताऽविघातादित्यप्ययुक्तम् ? तयोर्वस्तुस्थित्या निमित्तत्वे त्यदादिभिस्सन्निपातनिमित्तकत्यदाद्यत्वस्य तद्विघातकैसम्प्राप्त निमित्तत्वाभावापत्तेः, ऐस्विधे चौरित्यत्र चरितार्थत्वात्।

यत्तु अस्या॒परिभाषाया दोषकथनपरम् "कन्मेजन्त" इति सूत्रे वार्त्तकम् "यस्य दोषो वर्णाश्रय॒प्रत्ययो वर्णविचालस्ये"ति तस्यायमर्थः—"अत इञ्" इत्यकारप्रातिपदिकसम्बन्धनिमित्तक इञ् दाक्षिरित्यत्र तद्विघातकस्य "यस्ये"ति लोपस्याऽनिमित्तं स्यादित्येव।

यत्तु तत्र भाष्यम् "न प्रत्ययस्सन्निपातलक्षणः, अङ्गसंज्ञा तर्ह्यनिमित्तं स्यादि"ति तत् काका योज्यम्। तथाहि अत्र सन्निपातशब्देन पौर्वापर्य्यसम्बन्ध एव गृह्यत इति केषाञ्चिन्मतन्तदनेन भाष्येण दूष्यते प्रत्ययः किं सन्निपातलक्षणो न भवति भवत्येवेत्यर्थः। अङ्गसंज्ञा तर्ह्यनिमित्तं स्यात् अङ्गसंज्ञापि निमित्तम्भवत्येवेति तदर्थः। अयमाशयः—पौर्वापर्य्यमेव सम्बन्ध इति न नियमः ? सङ्कोचे प्रमाणाऽभावात्। तथात्वे वार्त्तिकोक्तदूषणासाङ्गत्यमापद्येत।

नचाङ्गसंज्ञाया निमित्तत्वाभावो वार्त्तिकतात्पर्य्यविषय इति वाच्यम् ?

ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ "द्विगोर्लुगि"त्यणो लुकि "लुक्तद्धित" इति स्त्रीप्रत्ययलुकयानुकः श्रवणापत्तिरत आह—

सन्नियोगशिष्टानामन्यतरापाय उभयोरप्यपायः ॥ ८७ ॥

अत्र च "बिल्वकादिभ्यश्छस्य लुक्" इति सूत्रस्थं छग्रहणं ज्ञापकम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुकोऽनिवृत्तिर्यथा स्यादित्यर्थम् । कृतकुगागमा नडाद्यन्तर्गणबिल्वादय एव तत्र निर्दिष्टा बिल्वकादिशब्देन।

---

तस्याः सन्निपातलक्षणत्वाभावात् । अङ्गसंज्ञायास्सन्निपातलक्षणत्वे शैवो गाङ्ग इत्यादौ "यस्येति चे"ति लोपानापत्तेः । एवञ्च वर्णाश्रय^प्रत्यय इति वार्त्तिके वर्णाश्रयग्रहणमनर्थकं स्यादिति शेखरे । केचित्तु सन्निपातलक्षणविधित्वमस्या लिङ्गमिति स्वप्रवृत्ते^प्रागिति चारभ्य नह्यङ्गसंज्ञायामदन्तस्याङ्गसंज्ञेति युक्तमित्यन्तमन्थोऽयुक्तः ? केचिदित्युक्त्यैवाऽस्वरसप्रत्ययात् । सन्निपातलक्षणः विधिरिति सामान्यशब्दस्य सङ्कोचे मानाभावात् इति पुरस्स्फोटः ।

सन्निपातलक्षण इति —सन्निपातत्वावच्छिन्नप्रकारतानिरूपिता लक्षणत्वावच्छिन्नप्रकारतानिरूपिता च या बहुव्रीह्यर्थान्यपदार्थनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या विधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या तद्विघातत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या निमित्तत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना नञर्थभेदनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

अन्यतराऽपाय इति—सम्भाविते इति शेषः । स्थानिनिवृत्त्यादेशस्थित्योरित्येवोभयोरित्यस्यार्थः । सिद्ध इति । विधानम्विधिरितिभावसाधनोऽपि विधिशब्द इत्याशयः । अनया परिभाषया प्रधानस्य विधेयस्याऽपाये तत्सन्नियोगशिष्टाऽप्रधानस्यापाय इत्येव परिभाषार्थः । तार्त्तीयिकमित्यत्र छप्रत्ययस्य प्राधान्यात्तस्याऽपायाभावेनाक्षतेः ।

लुगितरविषयेऽपि वातकीशब्दादपत्यप्रत्यये "वातातीसाराभ्यामि"ति विहितेनोलोपेन निवृत्तौ कुकोऽप्यनया निवृत्तौ वात इत्यादिफलानाम्विद्यमानत्वेनायुक्तमेवैतदिति सूक्ष्मदर्शिनः ।

मान्यास्तु—भावप्रत्ययान्तविधिशब्देन पूर्वस्माद्विधिरिति पञ्चमीसमासाश्रयणात्फौल्लिखेयमित्यादौ पूर्वदृष्टफकारात्परलकारस्थितावपि स्थानिवद्भावेनैव सिद्धिः । हे गौरित्यत्र निरुक्तरीत्या स्थानिवद्भावेन एङन्तत्वा "देङ्ह्रस्वादि"ति सम्बुद्धिलोपस्तु न ? "निष्ठायां सेटी"ति सेटिग्रहणेन पञ्चमीसमासस्याऽनित्यत्वात् । कृतकुगिति—अत एव कप्रत्ययान्तबिल्वशब्दान्न

नचैवमपि लुग्ग्रहणं व्यर्थं कृतकुगागमानुवादसामर्थ्यादेव तद्-निवृत्तिसिद्धेः। अन्यथा विल्वादिभ्य इत्येव वदेत्। लक्षणप्रतिपदोक्त-परिभाषया बिल्वादिपुरस्कारेण विहितप्रत्ययस्यैव लुग्विधानान्नाति-प्रसङ्ग इति वाच्यम्? ततोऽपि प्रतिपदोक्तत्वेन बिल्वादिभ्योऽण् इति विकाराद्यर्थस्य लुगापत्तिवारणार्थं कुगनुवादचारितार्थ्यात्। समुच्च-यार्थकचशब्दयोगे तु विधेययोरेककालिकत्वैकदेशत्वनियमान्न्यायसि-द्धापीयम्।

यत्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतदनित्यत्वज्ञापनार्थमन्यथै-तयतीत्यादौ टिलोपेनैव ङीपि निवृत्ते सन्नियोगशिष्टपरिभाषया नस्या-पि नि स्यैतयतीत्यादिसिद्धौ पुंवत्ववैयर्थ्यं स्पष्टमेवेति टेरिति सूत्रे कैयटस्तन्न? इडबिडमाचष्ट ऐडबिडयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात्। ऐनेयः श्यैनेय इत्यादि तु स्थानिवत्त्वेन सिद्धमित्यन्यत्र विस्तरः॥८७॥

---

छस्य लुक्। ततोऽपि प्रतिपदोक्तेति—नडादिगणान्तर्गततत्तद्रूपेणोपस्थि-त्यपेक्षया गणज्ञानानपेक्षतत्तदुपस्थितेरन्तरङ्गत्वमिति भावः।

कुगनुवादेति। नच कुगनुवादसामर्थ्यादेव कुको निवृत्तिरिति वाच्यम्? उत्करादिगणे तृणवेतसशब्दयोः पाठेन तद्विहितस्यापि लुगापत्तेः। आवश्य-कत्वादिति—इडविडोऽपत्यमित्यर्थे "जनपदे"त्यञि स्त्रियामतश्चेति लुकि ततो णिचि पुंवद्भावे इडविडेतिरूपेऽकारलोपे प्रत्ययलक्षणन्यायेन वृद्धिः फ-लम्। एवं दरदमाचष्टे दारदयतीत्यपि फलम्।

स्थानिवत्त्वेनेति—पूर्वविधिशब्दे तन्त्राश्रयणादिति भावः। केचित्तु—अनया परिभाषया प्राप्तनिवृत्तेरभावरूपविधिमाश्रित्य प्रथमार्थेनैव सिद्धेस्त-न्त्राश्रयणमनार्षम् इति वदन्ति। इयम्परिभाषाऽनित्या। तेन श्यैनेयः श्रौत्रमि-ति सिद्ध्यति।

अथ शेखरखण्डनप्रकारः—मूले णाविष्ठवदित्यनेन पुम्वत्त्वविधानमेत-त्परिभाषाऽनित्यत्वज्ञापकमन्यथा एतयतीत्यत्र टिलोपेनैव ङीपि निवृत्ते सन्नि-योगशिष्टपरिभाषया नस्यापि निवृत्त्या एतयतीति सिद्ध्या पुम्वत्त्ववैयर्थ्यं स्प-ष्टमेवेति कैयटोक्तमयुक्तम्। श्यैनेय इति रूपं स्थानिवद्भावेन सिद्धमिति नागे-शप्रकारो मुधा? तथाहि—स्थानिवद्भावप्रत्ययलक्षणाऽसिद्धत्वैर्हि स्थानिका-र्यमादेशे सत्यपि क्रियते नतु स्थानी सन्निधाप्यते येन तस्यापायो न स्यात्। तथाच श्यैनेय इत्यत्र नकारश्रवणार्थमुक्तपरिभाषाया अनित्यत्वमेव युक्तम्।

न "चाचःपरस्मिन्नि"ति स्थानिवद्भावोऽशास्त्रीयेऽपि भवति घटयती-त्यादावशास्त्रीयोऽप्युपधावृद्ध्यभाव एवञ्चाशास्त्रीयनकारनिवृत्तावपि स्थानिव-द्भावप्रवृत्त्या नकारनिवृत्तिवारणं सम्भवतीति वाच्यम्? एवमपि श्रौत्रमित्यत्र

ननु चुरा शीलमस्याः सा चौरीत्यादौ "शीलम्, छत्रादिभ्यो ण" इति णे ङीप् न प्राप्नोतीत्यत आह—

ताच्छीलिके णेऽणकृतानि भवन्ति ॥ ८८ ॥

"अन्"इत्यणिविहितप्रकृतिभावबाधनार्थं "कार्मस्ताच्छील्ये"इति निपातनमस्या ज्ञापकम्। ताच्छीलिकणान्तादणो द्वयच इति फिञ्निवृत्तिरप्यस्याः प्रयोजनमिति नव्याः। ताच्छीलिक इत्युक्तेस्तदस्यां प्रहरणम् इति णे दाण्डेत्येव। "कार्म"इति सूत्रे भाष्ये स्पष्टा ॥ ८८ ॥

युवादिगणे श्रोत्रियस्य यलोपश्चेति पाठेन घे निवृत्तेऽपि तत्सन्नियोगशिष्टः श्रौत्रभावो न निवर्त्यते। "अचःपरस्मिन्नि"ति स्थानिवद्भावस्तु न? अनजादेशत्वात् बिल्वकादिगणे श्रौत्रमित्यनित्यत्वफलस्य कैयटेन विस्पष्टोक्तेश्चेत्यलम्।

सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपायः—अवयवत्वं षष्ठ्यर्थः, स्वनिष्ठावयवितानिरूपकत्वसम्बन्धावच्छिन्ना सन्नियोगशिष्टत्वावच्छिन्नप्रकारतानिरूपिता यावयवत्वावच्छिन्ना षष्ठ्यर्थत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणसमवायसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता याऽन्यतरत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अपायत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या उभयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना षष्ठ्यर्थत्वावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अपायत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः। पूर्ववदत्र निरवच्छिन्नत्वनिवेशोऽपि निध्येयः।

पूर्वपरिभाषायास्तद्धितलुक्स्य लुग्विधानज्ञाप्यत्वात्तस्य तत्प्रसङ्गेन तद्धितविषय एवाह ननु चुराशीलमिति—ङीप् न प्राप्नोतीति—अणन्तान्ङीपो विधानात्। इदं हि णान्तमेव तत्त्वणान्तमेव। ताच्छीलिक इति। तच्छीलमित्यर्थे जातस्ताच्छीलिकः। ननु "छत्रादिभ्य" इति सूत्रे शीलमित्यस्यैवाधिकारो नतु तच्छीलमित्यस्येति चेन्न? प्रथमान्ताच्छीलमित्यर्थे विधानादस्य ताच्छीलिकत्वात्। अण् कृतानीति—अण्निमित्तकानीत्यर्थः।

ननु लाघवानुरोधेन "छत्रादिभ्योऽण्" इत्येव कुतो न सूत्रयाञ्चकारेति चेन्न? "ज्ञापकसिद्धन्न सर्वत्रे"ति परिभाषासूचनाय तथोक्तत्वात्। अत एव छात्रा इत्यपि रूपं सिद्ध्यति। नव्या इति—दीक्षितादय इत्यभिप्रायः।

अथ खण्डनम्—अयुक्तोऽयं ग्रन्थः? सामान्यातिदेशे विशेषानतिदेश इति न्यायेन तत्रापत्यार्थस्याणोऽग्रहणात्।

ननु कंसपरिमृड्भ्यामित्यादौ मृजेर्वृद्धिर्दुर्वारेत्यत आह—

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति ॥ ८६ ॥

भ्रौणहत्ये(१) तत्वनिपातनमस्या ज्ञापकम् । धातोः स्वरूपग्रहणे तत्प्रत्यये कार्यविज्ञानमिति पाठस्तु प्रसृड्भिरित्यादावनुदात्तस्य चर्दुपधस्य इत्यमापादनेन भाष्ये दूषितः ।

---

ताच्छीलिके णेऽणकृतानि भवन्ति—तच्छीलमित्यधिकारनिष्ठोद्देश्यता-निरूपिता याणप्रत्ययत्वावच्छिन्ना विशेष्यता विधेयता वा तादृशविशेष्यता-समानाधिकरणस्वविषयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरू-पिता या अणकृतत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणा-भेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छि-न्ना प्रकारता तादृशप्रकारतानिरूपिता या भूधात्वर्थसत्तात्वावच्छिन्ना विशे-ष्यता तादृशविशेष्यताविशिष्टो बोधः ।

धातोः कार्यमुच्यमानमिति—धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताक-कार्य्यं तत्प्रत्यये अर्थात् धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रये प्रत्यये भवतीत्यर्थः । "मृजेर्वृद्धिरि"ति वृद्धिर्धातुत्वव्याप्यमृजत्वावच्छिन्नोद्दे-श्यताकं कार्य्यं धातुत्वावच्छिन्नोद्देश्यताकप्रत्यये एव स्यादिति कंसपरिमृड्-भ्यामित्यत्र भ्यामस्तादृशप्रत्ययत्वाभावात् । ननु क्विपस्तादृशप्रत्ययत्वेन प्रवृ-त्तिरिति चेन्न ? "क्ङिति चे"तिवृद्धिप्रतिषेधात् ।

भ्रौणहत्ये तत्वनिपातनमिति—"हनस्तोऽचिण्णलोरि"ति तत्वे सिद्धे निपातनं व्यर्थमितिभावः । ननु "हो हन्तेरि"ति कुत्वाभाव एव निपात्यत इति

---

(१) धातोः कार्यमुच्यमानं तत्प्रत्यये भवति, तत्वनिपातनमिति-ननु होहन्ते-रिति कुत्वाभावाय तत्वनिपातनमस्तु । नच तावन्मात्रफलकत्वे कुत्वप्रकरणे नयीत्येव ब्रूयादिति वाच्यम्-वार्त्रघ्न्यमित्यादावपि कुत्वाऽसिद्धेरिति चेन्न, एकैकप्रयोजनसम्पाद-कत्वे तत्तत्प्रकरण एव निपातनीयतया प्रकरणविशेषानादरेण तन्निपातनमनेकप्रयोजन-सम्पादकं सत् तकारनिपातनार्थमपीति ज्ञापकत्वसिद्धेः । अत एव कैयटेनोक्तमनेकप्रयो-जनत्वान्निपातनमिति टिलोपाभावार्थन्निपातनमिति न ज्ञापकत्वसिद्धिरिति केषाञ्चि-दुक्तिः परास्ता । मान्यास्तु तादेशस्य कृताऽकृतप्रसङ्गत्वेन नित्यत्वात्तद्विषये टिलोप-स्याऽप्राप्तिरेव । न यीति न्यासेऽपि यादिप्रत्ययनिमित्तकस्यैव प्रत्यासत्तिन्यायेन तेन निषेधस्वीकारान्नकारनिमित्तकस्य वार्त्रघ्न्यमित्यादावभीष्टस्य कुत्वस्य तेन निवृत्त्य-योगाद् भौणहत्ये कुत्वाभावसिद्धिरिति तादेशमात्रप्रयोजनकत्वान्निपातनस्य ज्ञापकत्वं सुवचमिति तन्न ? नयीतिन्यासे हन्तेर्ण्यति घात्य इत्यसिद्ध्यापत्तेः । केचित्तु होहन्ते-रित्यत्र विहितविशेषणाश्रयणात्कुत्वाभावसिद्धिरिति ज्ञापनाभिप्रायमाहुस्तदत्यन्तम-समञ्जसम् ? हनस्त इत्यत्रापि तुल्यत्वात् ।

यत्कार्यं प्रत्ययनिमित्तकं तत्रेयं व्यवस्थापिका। तेन पदान्तत्वनिबन्धनं "नशेर्वा"इति कुत्वं प्रणङ्भ्यामित्यादौ भवत्येव।

इयङादिविधौ तु नैषा "न भूसुधियोरि"ति निषेधेनानित्यत्वात्। "मृजेर्वृद्धिरि"त्यत्र भाष्ये स्पष्टा॥ ८९॥

ननु सर्वक उच्चकैरित्यादौ सर्वनामाव्ययसंज्ञे न स्यातामत आह—

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते॥ ९०॥

'नेदमदसोरकोरि"ति सूत्रेऽकोरिति निषेधोऽस्या ज्ञापकः। तदे-

---

न तत्त्वनिपातनं व्यर्थमिति चेन्न? तत्त्वन्निपात्यत इति भाष्यप्रामाण्येन तत्रैव पाणिनेर्भगवतस्तात्पर्य्यात्। धातोस्स्वरूपग्रहण इति—धातुत्वव्याप्यानुपूर्व्यवच्छिन्नोद्देश्यताकं कार्य्यमित्यर्थः। अभापादनेनेति—अनुदात्तत्वविशिष्टऋदुपधत्वस्य धातुत्वव्याप्यत्वात्सिद्धान्ते दोषाभावः। यत्कार्य्यं प्रत्ययनिमित्तकमिति—धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यताककार्य्ये निमित्तत्वेनाश्रीयमाणः प्रत्ययः धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय एव गृह्यत इत्याशयः। नशेर्वेतिकुत्वे प्रत्ययस्य निमित्तत्वेनाश्रयणाऽभावान्नास्याः प्रवृत्तिरिति तत्त्वम्।

मान्यास्तु—प्रनगृभ्यामित्यादौ धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयक्विप्प्रत्ययस्य विद्यमानत्वेन "नशेर्वे"ति शास्त्रे परिभाषाप्रवृत्तावपि क्षतिविरहः। इयङादिविधौ—अभिश्नुधात्वित्यादौ। "नभूसुधियोरि"ति निषेधेनेति—तत्र सुपीत्यर्थेनै "रनेकाच" इत्यत्र परिभाषाप्रवृत्तौ व्यर्थं स्यात् तत्र प्रवृत्तौ सुधियोरिति निर्देशाऽनुपपत्तिश्च।

धातोः कार्यमुच्यमानं तत्प्रत्यये भवति-व्याप्यधर्मावच्छिन्नोद्देश्यत्वं षष्ठ्यर्थः, धातुत्वव्याप्यधर्मावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रयकार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या उच्यमानत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या तत्प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या कार्यत्वावच्छिन्ना कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना वृत्तित्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता या भूधात्वर्थसत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः।

प्रत्ययप्रसङ्गादाह ननु सर्वक इति—अकच्सहितस्य सर्वनामत्वाद्यभावेन परिभाषामन्तरेण दोषस्य जागरूकत्वात्। गङ्गाप्रविष्टा नदी गङ्गाग्रहणेन गृह्यते, देवदत्तास्थो गर्भो देवदत्ताग्रहणेन गृह्यते इति लोकन्यायेनायमर्थों न सिद्धयति, सर्वनामत्वादेरक्तपरिमाणत्वात् शास्त्रसाहाय्यमन्तरेण तादृशबुद्ध्यभाव इति

कदेशभूतं तद्ग्रहणेन गृह्यते इति "येन विधि"रिति सूत्रे भाष्ये पाठः॥ ६०॥

ननु "गातिस्थाघुपाभूभ्य"इति सिचो लुगपासीदित्यादौ पातेरपि स्यादत आह—

## लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य ॥ ६१ ॥

अस्याश्च ज्ञापकः "स्वरति सूति"इति सूत्रे सूङिति वक्तव्ये सूतिसुयत्योः पृथङ् निर्देश इति कैयटः । तन्न ?

साहचर्यादलुग्विकरणस्यैव ग्रहणे प्राप्ते पृथङ्निर्देशस्य तज्ज्ञापकत्वासम्भवात् । ध्वनिता चेयं परिभाषा "यस्य विभाषे"त्यत्र भाष्ये । तत्र हि विदित इति प्रयोगे निषेधमाशङ्क्य यदुपाधेर्विभाषा तदुपाधेर्निषेधो "विभाषा गमहनविदविशाम्"इति सूत्रे शविकरणस्य ग्रहणं लुग्विकरणश्चायमित्युक्तम् । तत्र चो हेतौ । यतोऽयं लुग्विकरणोऽतो विशिसाहचर्याच्छविकरणस्य ग्रहणं ननु हनिसाहचर्यादस्यापि, एतत्परिभाषाविरोधादिति तदाशयः ।

अतएव परिभाषायां लुग्विकरणस्यैवेति नोक्तम् । कण्ठतस्तु भाष्ये एषा क्वापि न पठिता । "गातिस्था"इति सूत्रे पिबतेर्ग्रहणं कर्तव्यमिति वार्तिककृता, सर्वत्रैव पाग्रहणेऽलुग्विकरणस्य ग्रहणमिति भाष्यकृता चोक्तम् । "स्वरतिसूति"इति सूत्रे कैयटेन च स्पष्टमुक्ता ॥ ६१ ॥

---

ज्ञापकापेक्षा गरीयसी । तदाह "येन विधिरि"तिसूत्रे भाष्य इति । भाष्यकृता तु "इदमदसोरकादि"तिन्यस्य "अतो भिस"इत्यनेन सिद्धे नियमार्थमेतत् इदमदसोर्भिस ऐस्स्याच्चेत्तर्हि कादेवेति । अकोरिति प्रत्याख्यातम् । "एतत्तयोरि"ति सूत्रेऽकोरिति उपलक्षणमित्यपि प्रकारस्साधीयान् ।

तन्मध्यपतितस्तद्ग्रहणेन गृह्यते—तद्ग्रहणत्वावच्छिन्नप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना कर्त्तृत्वावच्छिना विशेष्यता तादृशविशेष्यतानिरूपिता या धात्वर्थपरिच्छिन्नत्वसम्बन्धावच्छिन्ना वर्त्तमानत्वावच्छिन्ना ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या तन्मध्यपतितत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतावान् शाब्दबोधः ।

ननु गातिस्थेति—इण्पिबत्योर्ग्रहणं कर्त्तव्यमिति भाष्यवार्तिकम् । साहचर्य्यादिति—स्वरतिधूञोस्साहचर्य्यादिति भावः । ननु हन्साहचर्य्यादिति ? लुग्विकरणत्वात् । हन्साहचर्य्यन्तु हेयमेव । तथाच अलुग्विकरणस्यैव सति सम्भवे ग्रहणम् । तेनैव निबन्धेन परिभाषा ध्वनिता ।

लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य—लुग्विकरणत्वावच्छिन्नालु-

ननु प्रजिघाययिषतीत्यादौ हेरचङीति विधीयमानं कुत्वं न स्यादत आह—

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम् ॥ ६२ ॥

अचङीति प्रतिषेधं एवास्या ज्ञापकः । इयं च कुत्वविषयैव । "हेरचङीति सूत्रे भाष्ये स्पष्टेयम् ॥ ६२ ॥

ननु युष्मभ्यमित्यादौ भ्यस इत्यत्र भ्यमिति च्छेदे भ्यसो भ्यमि कृतेऽन्त्यलोपे एत्वं स्यादत आह—

अङ्गवृत्ते पुनर्वृत्तावविधिः ॥ ६३ ॥

अङ्गेऽङ्गाधिकारे वृत्तं निष्पन्नं यत्कार्यं तस्मिन्सति पुनरन्यस्याङ्गकार्यस्य वृत्तौ प्रवृत्तावविधानं भवतीत्यर्थः । एषा च "ज्यादादीयसः" इत्याद्विधानेन ज्ञापिता । अन्यथेकारलोपेनाकृतसावं इति दीर्घेण च सिद्धे तद्वैयर्थ्यं स्पष्टमेव । अत एव भिन्नस्थानिकाङ्गकार्यविषयाप्येषा ।

इयं चानित्या द्वयोरिति निर्देशात् । अनित्यत्वबललभ्यार्थमादाधेव "भ्यसोभ्यम्"इति सूत्रे भाष्ये निष्ठितस्येति पठितम् ।

केचित्त्वनया परिभाषया न किञ्चिल्लक्ष्यं साध्यते । अत एव "ज्ञाजनोर्जा(१)ज्यादादीयसः" इति सूत्रयोरेनां ज्ञापयित्वा किं प्रयोजनमिति

---

ण्विकरणत्वावच्छिन्नप्रकारतानिरूपिता या अलुग्विकरणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

ननु प्रजिघाययिषतीति—कुत्वन्न स्यादिति—संज्ञोद्देश्यककार्य्याणां संज्ञानिमित्तप्रत्ययाऽव्यवहितपूर्वत्वन्निमित्तमिति वार्णपरिभाषोक्तेरिह णिचाव्यवधानाद्धिनोतेस्सन्प्रत्ययाऽव्यवहितपूर्वत्वाभावादिति तत्त्वम् ।

प्रकृतिग्रहणे ण्यधिकस्यापि ग्रहणम्—प्रकृतिग्रहणत्वावच्छिन्नप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वविषयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या ण्यधिकत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणत्वनिष्ठकर्मतानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अपिशब्दार्थविशिष्टग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताकशाब्दबोधः ।

अङ्गवृत्त इति—अतएवेति—ज्ञापकपरभाष्यप्रामाण्यादेवेत्यर्थः । द्वयोरिति—त्यदाद्यत्व ओसिचेति सूत्रेणैत्वन्न स्यात् । निष्ठितस्येति—परिनिष्ठितस्येत्यर्थः ।

---

(१) अङ्गवृत्ते पुनर्वृत्तावविधिः-ज्ञाजनोर्जेति-फलान्तराभावात्त्वादीनामिति ह्रस्वनिवृत्तये दीर्घनिर्देशसाफल्यात् । एवञ्च ज्ञापनपरं भाष्यमेकदेशिनाम् ।

प्रश्ने पिबतेर्गुणप्रतिषेधः उक्तः स न वक्तव्य इत्येव प्रयोजनमुक्तम् न तु लक्ष्यसिद्धिरूपम् । तदुक्तम् "भ्यसेभ्यमि"त्यत्राभ्यमिति च्छेदः, शेषे-लोपश्चान्त्यलोप एवातो गुणे इति पररूपेण सिद्धं युष्मभ्यमित्यन्यत्र निरूपितम् । एवं च सूत्रद्वयस्थमेतज्ज्ञापनपरं भाष्यं भ्यसो भ्यमिति सूत्रस्थं च भाष्यमेकदेश्युक्तिरित्याहुः ॥ ६३ ॥

यन्त्वोरोदिति वाच्ये "ओर्गुण" इति गुणग्रहणात्—

संज्ञापूर्वकविधेरनित्यत्वम् ॥ ६४ ॥

इयं च विधेयकोटौ संज्ञापूर्वकत्व एव। तेन (१)स्वायम्भुवमित्यादि सिद्धम् ।

---

पिबतेर्गुणेति—पिबतीत्यादौ शब्निमित्तकलघूपधगुणप्रतिषेध इत्यर्थः । भाष्ये पिबादेशोऽदन्त इति ।

अङ्गवृत्ते पुनर्वृत्तावविधिः—पाणिनीयसङ्केतसम्बन्धावच्छिन्नाङ्गत्वाव-च्छिन्नप्रकारतानिरूपिता वृत्तत्वावच्छिन्नप्रकारतानिरूपिता या शास्त्रत्वाव-च्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणवृत्तित्वसम्बन्धावच्छि-न्नप्रकारतानिरूपिता या पुनर्वृत्तित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतास-मानाधिकरणप्रकारतानिरूपिता या अविधानत्वावच्छिन्ना विशेष्यता तादृ-शविशेष्यताविशिष्टशाब्दबोधः ।

ओरोदिति—"ओर्गुण" इत्यस्य स्थाने ओरोदिति वाच्ये गुणग्रहणं ज्ञापकमिति तात्पर्य्यम् । फलञ्च स्वायम्भुवमित्यत्र गुणाऽभावः । विधेयको-टाविति—विधेयताप्रयोजकसंज्ञाशब्दघटितं शास्त्रमनित्यमिति भावः । एत-त्तात्पर्य्याभावे शास्त्रमात्रे स्वंरूपमिति शास्त्रबलेनातिप्रसक्तिस्स्यात् ।

संज्ञापूर्वकविधेरनित्यत्वम्—संज्ञानिष्ठप्रकारतानिरूपिता पूर्वत्वनिष्ठप्र-कारतानिरूपिता च या बहुव्रीह्यर्थान्यपदार्थनिष्ठविशेष्यता तादृशविशेष्यता-समानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या

---

(१) स्वायम्भुवमिति-स्वपूर्वकाद्भुधातोर्डन्तादकारप्रत्यये पत्पशाशब्दोऽत्र दीर्घोऽकित इति दीर्घ<sup></sup>कृतोनेति । अहितुण्डेन चरतीत्यर्थे प्राग्वहतीये ठकि अहितुण्डिक इत्यत्र तद्धितेष्वचामिति वृद्ध्यभावः, उरुशब्दादाचक्षाणणिचीष्ठवद्भावे वरादेशे वरयतीत्यत्रोप-धावृद्ध्यभावः । नच पृषोदरादित्वेनैषु तत्तत्संज्ञाऽभावो वाच्यः तदपेक्षया परिभाषाश्रय-णस्यैव गरीयस्त्वात् । न च भाष्यकृता न पठितेति वाच्यम् ? श्वादेरिञीति सूत्रभाष्ये शौवादंष्ट्रः मणिरिति श्वादंष्ट्रायां भव इत्यर्थे वृद्धाच्छ इत्यस्य प्रसक्तेरणप्रत्ययान्तप्रयो-गाऽसङ्गतेः । ननु परिभाषाश्रयणे क्वचिद्दोष आपतेदिति चेन्न ? ज्ञापकसिद्धन्नसर्वत्रेति परिभाषाश्रयणेन लक्ष्याऽसिद्ध्यसम्भवात् । तथाच संज्ञापूर्वक इति परिभाषाऽश्रय-णीया, स्वायम्भुवादिशब्दो लोकेऽपि साधुरिति दिक् ।

तथा निलोडित्येव सिद्धे आनिग्रहणात्—

आगमशास्त्रमनित्यम् ॥ ९५ ॥

तेन सागरं तर्तुकामस्येत्यादि सिद्धम् ।

तथा तनादिपाठादेव सिद्धे "तनादिकृञ्भ्य" इति सूत्रे कृञ्ग्रहणात्—

गणकार्यमनित्यम् ॥ ९६ ॥

तेन न विश्वसेदविश्वस्तमित्यादि सिद्धम् ।

तथा चक्षिङो ङित्करणात्—

अनुदात्तेत्त्वलक्षणमात्मनेपदमनित्यम् ॥ ९७ ॥

तेन स्फायन्निर्मोक इत्यादि सिद्धम् ।

तथा विनार्थनञा समासेनानुदात्तं पदमनेकमित्येव सिद्धे वर्जग्रहणात—

नञ्घटितमनित्यम् ॥ ९८ ॥

तेन नेयङुवङ् इत्यस्यानित्यत्वाद्धे सुभ्रु इति सिद्धमिति तन्न ?

---

विधित्वावच्छिन्ना विधिनिष्ठा विशेष्यता तादृशविशेष्यतासमानाधिकरण-प्रकारतानिरूपिता या अनित्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

तर्तुकामस्येति—सागरन्तर्तुकामस्येति । अस्याः फलमत्रेडभावः ।

आगमशास्त्रमनित्यम्—पाणिन्यादिसङ्केतसम्बन्धावच्छिन्नागमत्वावच्छिन्नागमनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या अभेदसम्बन्धावच्छिन्ना शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वरूपसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या अनित्यत्वावच्छिन्ना अनित्यनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

एवमेव गणकार्यमित्यारभ्य आतिदेशिकमनित्यमित्यासां चतसृणां शाब्दबोधो ज्ञेयः ।

गणकार्येति—गणनिर्देशेन विधीयमानं कार्यमित्यर्थः । विश्वसेदिति । अत्र आदादिकशपो लुग् नेत्यर्थः ।

चक्षिङो ङित्करणादिति—इदित्वान्नुम् तु न, चक्षेति अकारान्तपाठात् । गोः पदान्त इत्यतोऽन्त इत्यनुवृत्त्या अन्तेदित इत्यर्थाश्रयणात् ।

हे सुभ्रु इति—नेयङुवङित्यस्यानित्यत्वेन नदीत्वादम्बार्थेति ह्रस्वः तथा "विमानना सुभ्र पितुर्गृहे कुत', इति फलम् ।

अत्र परममान्याः—"अङ्गवृत्त इत्यारभ्य नञ्घटितमनित्यमित्यन्ता एताः षट् परिभाषा भाष्यानुक्तत्वादप्रयोजना इति शेखरोऽनुपपन्नः युक्तिविरो-

भाष्येऽदर्शनात् । भाष्यानुक्तज्ञापितार्थस्य साधुतानियामकत्वे मानाभावात् । भाष्याविचारितप्रयोजनानां सौत्राक्षराणां पारायणादावदृष्टमात्रार्थकत्वकल्पनाया एवौचित्यात् ।

किञ्च ज्ञापितेध्यानीत्यस्य न सार्थक्यमाडागमशून्यप्रयोगस्याप्रसिद्धेः । आड्ग्रहणं तु लोड्ग्रहणवदिति बोध्यम् । अत एव "घोर्लोपो लेटि वा"इति सूत्रे वेति प्रत्याख्यातम् । लोपेऽप्याट्पक्षे आटः श्रवणं भविष्यति अटि दधदिति । आगमशास्त्रस्यानित्यत्वे त्वाटयसति दधादित्यसिद्धया वाग्रहणस्यावश्यकत्वेन तत्प्रत्याख्यानासङ्गतिः स्पष्टैव ।

एतेन यत्कैयटेन केचिदित्यादिनास्यैव वाग्रहणस्य तदनित्यत्वज्ञापकतोक्ता सापि चिन्त्या ? प्रत्याख्यानपरभाष्यविरोधात् तनादिसूत्रे कृञ्ग्रहणस्य भाष्ये प्रत्याख्यानाच्च । चक्षिङो ङकारस्यान्तोदित्त्वाभावसम्पादनेन चारितार्थ्याच्च ।

---

धितश्चेति । तथाहि व्याकरणमिदं स्मृतिरूपम्प्रमाणम्वस्तुतः पूर्वव्याकरणस्मृतिमूलमित्याशयः । तदाह हरदत्तः गवादिशब्दानामनादित्वमेव साधुत्वम् गव्यादीनान्तु वाचकाशक्तिजत्वादसाधुत्वम् प्रसाध्य कथं पुनराचार्येण पाणिनिनाऽवगतम् एते साधव इति । आपिशलेन व्याकरणेन, आपिशलिना तर्हि केनावगतम् तत‿पूर्वेण व्याकरणेन, यद्येवमन्धपरम्परा स्यादित्याशङ्क्य नैष दोषः सर्व एव हि स्वे स्वे काले गाव्यादिभ्यो विभक्तान् गवादिशब्दान्प्रत्यक्षेणोपलभन्ते पूर्वकालसत्ताञ्च पूर्वव्याकरणादिति नान्धपरम्परेति व्याकरणस्य समूलत्वम् । अत एव "स्मृतेः स्मृत्यन्तरं मूलं साधुरूपनिरूपणे । प्रत्यक्षव्यवधानाच्च नान्धवाक्यसमानते"ति श्लोकः ।

किञ्च आदौ शेखरकृतोक्तम्प्राचीनवैयाकरणतन्त्रे वाचनिकानीति भाष्यवार्त्तिकानुक्तान्यपि प्राचीनव्याकरणसिद्धानि व्याख्यातृपरम्परयाऽभियुक्तैस्स्मर्यमाणानि सौत्रज्ञापकानुमोदितानि नाऽप्रमाणान्यत एव "मणीवादीनां प्रतिषेधो वक्तव्य"इत्यस्य मुनित्रयानुक्तत्वेऽपि कैयटादिभि‿प्रमाणीकृतत्वात् "मणीवोष्ट्रस्य लम्बेते प्रियौ वत्सतरौ मम । म्रियमाणौ तु तौ दृष्ट्वा मङ्क्षिर्वचनमब्रवीत्" इति । अत एव च "प्रमाणभूत आचार्यो दर्भपवित्रपाणिश्शुचाववकाशे प्राङ्मुखो महता प्रयत्नेन सूत्राणि प्रणयतिस्म, तत्राऽशक्यं वर्णेनाऽप्यनर्थकेने"ति सामान्यरूपेणाचार्यपदोपादानात्सर्वेषामेतच्छास्त्रीयविषयसंस्कारकाणाम्प्रामाण्यम् नतु त्रयाणाम् एव । प्रयोजनान्तरमभियुक्तै‿कथ्यमानं यदि भाष्यवार्त्तिकाभ्यान्न विरुध्यते तदा तदपि प्रमाणमेव ।

किञ्च प्रत्याख्यानमदृष्टपारायणादौ विनियोग इति कथनमपि शेखरीयन्न सयुक्तिकम् ? अदृष्टं हि वेदैकप्रमाणकम् , न च ईदृशानि पाणिनीयानि वा-

एवमेव । -

आतिदेशिकमनित्यम् ॥ ९९ ॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च(१) बलवान् ॥ १०० ॥

इत्यादि भाष्यानुक्तं बोध्यम् ।

---

क्यानि पठेत् इति वेदोऽस्ति पाणिनेस्सादित्वेन तत्पूर्वमेतद्वेदस्याऽबोधकत्वप्रसङ्गात् । नच ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चेति एकश्शब्दस्सम्यग् ज्ञातस्सुष्ठु प्रयुक्तस्स्वर्गे लोके च कामधुग्भवतीति प्रमाणमिति वाच्यम् ? सा श्रुतिर्दृष्टप्रयोजनेति तात्पर्य्यावधारणात् 'यस्य दृष्टं न लभ्येत स्यात्तस्याऽदृष्टकल्पने'ति न्यायात् युक्तिबलसिद्धो न्यायापेतश्चार्थोऽङ्गीक्रियतेऽनेकः । अत एव 'न कस्यचिद् ग्रन्थकृतो विपरीतलिखनं युक्तिबलाद्वस्तुसिद्धौ बाधकमि'ति गदाधरभट्टाचार्य्येणाऽप्युक्तम् ।

किञ्च 'संज्ञापूर्वको विधिरनित्य'इत्यस्यास्स्वायम्भुवमिति फलमसाधुत्वादेव न भवति तत्कथम् स्वायम्भुवन्नमस्कृत्य मनुस्स्वायम्भुवोऽब्रवीत् इत्याद्यनेकप्रयोगाणां साधुत्वम् । तथाच पूर्वव्याकरणनिश्चितानां युक्तिबलसिद्धानां लक्ष्यसाधिकानामेतासामुक्तषट्परिभाषाणामावश्यकताऽस्त्येवेत्यशेषाद्रिभट्टानां सरयूपारीणशुक्लानाञ्चाशयः ।

अत्र केचिद्विलक्षणाः—गणकार्य्यमनित्यमित्यस्या न विश्वसेदविश्वस्तमिति फलं कथम् "विष्वग्विश्वक्स्मृतम्बुधैरि"तिद्विरूपकोशः । विषु इति विशु इति अनेकार्थकमव्ययम् । विश्वसेदित्यत्र विशु असेदिति पदच्छेदः, अस गतिदीप्त्यादानेषु इति भौवादिकस्य रूपम् । एवञ्च यणि रूपसिद्धे किम्फलमिति विचार्य्यम् ।

आगमशास्त्रमनित्यमित्यस्यास्सागरं तर्तुकामस्य "उत्थातव्यं जागृतव्यं योक्तव्यं भूतिकर्मसु । भविष्यतीत्येव मनः कृत्वा सततमव्यथैरि"ति धर्मशास्त्रम् ।

आतिदेशिकमनित्यम्–सर्वविधिभ्यो लोपविधिरिड्विधिश्चबलवान् । अत्र ज्ञापकम् 'लोटो लङ्वदि'त्यतिदेशः । अन्यथा ङ्लोडित्येव सिद्धेः । का-

---

(१) सर्वविधिभ्यो लोपविधिरिति-अत्र मूलन्नास्ति । केचित्तु नाग्लोपीत्यत्र प्रत्याहारग्रहणं ज्ञापकन्तच्च वारि आव्यत् अववारदित्यत्र ह्रस्वाभावाय, परत्वाद्वृद्धौ सत्यां टिलोपे हि तदानर्थक्यं स्पष्टमेव । तेन पटुमाख्यत् अपीपटदित्यादौ सन्वद्भाव इत्यूचुस्तन्न ? तत्प्रत्याहारग्रहणस्य वृद्धेर्लोपो बलीयानित्यंशमात्रज्ञापकत्वस्य सप्तमे निर्णीतत्वेनाधिकार्थकल्पनाया अनौचित्यात् । इड्विधेर्बलवत्त्वे प्रमाणन्तु नेड्वशीत्यत इडित्यनुवर्तमाने आर्द्धधातुकस्येतीड्ग्रहणम् । तन्न ? आर्द्धधातुकस्येतीड्ग्रहणस्य नेड्वशीति सूत्रे प्रत्याख्यातत्वात् गुणरूपविकारनिवृत्तये दीधीवेवीटामिति सूत्रे समर्थनात् परिभाषाऽसिद्धेश्चेति दिक् ।

स्वायम्भुवमित्यादि लोकेऽसाध्वेवेत्यन्यत्र विस्तरः ॥ १०० ॥

यदपि ननु हन्तेर्यङ्लुक्याशीर्लिङि वधादेशो न स्यादत आह—

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम् ॥१०१॥

षाष्ठद्वित्वस्य द्विःप्रयोगत्वसिद्धान्तेन प्रयोगद्वयरूपे समुदाये प्रकृतिरूपत्वबोधनेनेदं न्यायसिद्धम्। अत एव जुहुधीत्यादौ द्वित्वे कृते धित्वसिद्धिरिति। तदपि न? भाष्येऽदर्शनात्। किञ्च तेन सिद्धान्तेन प्रत्येकं द्वयोस्तत्त्वबोधनेऽपि समुदायस्य तत्त्वबोधने मानाभावः। अत एव दयतेर्दिगीति सूत्रेऽस्तेः परत्वाद् द्वित्वे कृते परस्यास्तेर्भूभवे पूर्वस्य श्रवणं प्राप्नोतीत्याशंक्य विषयसप्तम्याश्रयणेन परिहृतं भाष्ये। अन्यथा त्वदुक्तरीत्यैकाजूद्विर्वचनन्यायेन समुदायस्यैवादेशापत्तौ तदसङ्गतिः स्पष्टैव। तस्मादुत्तरखण्डमादायैव यथायोगं तत्तत्कार्यप्रवृत्तिर्बोध्या। भूसुवोरित्यस्य तदन्ताङ्गस्येत्यर्थात् प्राप्तस्य गुणनिषेधस्य बोभूत्विति नियम इति न तद्विरोधः। तस्माद्धन्तेर्यङ्लुकि वध्यादित्यादि

---

निसन्तीत्यत्र यणादेशात्पूर्वं श्नसोरल्लोपः। जुहुत्वित्यत्र जुसनेति। सर्वविध्यपेक्षया लोपविधेर्बलवत्वे नाग्लोपीत्यत्र प्रत्याहाराश्रयणं ज्ञापकम्। अन्यथा पूर्वं वृद्धौ सत्यामकारातिरिक्तस्याको लोपाऽभावेन तद्वैयर्थ्यात्। अत्र ज्ञापकान्तरञ्च "प्रत्ययलोपे प्रत्ययलक्षणमि"ति सूत्रम्। यदीयन्न स्यात्तदा लोपात्प्रागेव प्रत्ययकार्यं कृत्वा पश्चात्प्रत्ययलोपादिष्टसिद्धौ सूत्रमनर्थकं स्यात्। इड्विधेर्बलवत्त्वे प्रमाणन्तु "नेड्वशी"त्यत इडित्यनुवर्त्तमाने "आर्द्धधातुकस्येडि"तिसूत्रे पुनरिड्ग्रहणम्। एतासां परिभाषाणां खण्डनमपि न युक्ततरं? पूर्वव्याकरणनिश्चितत्वात्।

इन्द्रश्चन्द्रः काशकृत्स्नः पिशली शाकटायनः। पाणिन्यमरजैनेन्द्रा इत्यष्टौ शाब्दिकामताः॥

सर्वविधिभ्यो लोपविधिरिड्विधिश्च बलवान्—निषेधपूर्वकत्वं पञ्चम्यर्थः, स्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना सर्वविधित्वावच्छिन्ना सर्वविधिनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या निषेधपूर्वकत्वावच्छिन्ना पञ्चम्यर्थत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या लोपविधित्वावच्छिन्ना इड्विधित्वावच्छिन्ना उभयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या बलवत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः।

खण्डनप्रकरणे खण्डनीयत्वादाह यदपीति। न स्यादिति—ढिङ्प्रकृतेस्समुदायस्य हन्रूपत्वाभावात्। प्रकृतिग्रहण इति। गृह्यते यस्मिन् तत् ग्रहणम्। प्रकृतेर्ग्रहणमिति षष्ठीसमासः। एकदेशे ग्रहधात्वर्थे षष्ठ्यर्थविषयत्व-

माधवाद्युदाहृतं चिन्त्यमेवेत्यन्यत्र विस्तरः ॥ १०१ ॥

स्यान्वयः । एवञ्च प्रकृतिबोधकशब्दो यङ्लुगन्तस्यापि बोधक इति परिभाषार्थः । इयं परिभाषा न्यायसिद्धेत्याह षाष्ठद्वित्वस्येति ।

अथ शेखरखण्डनप्रकारः—द्वयोःप्रत्येकन्तेन न्यायेन तत्त्वबोधनेऽपि संघाते तत्त्वबोधने मानाऽभावः । द्यतेर्दिगीति । बोभूत्विति नियम इति न तद्विरोध इत्यन्तग्रन्थौ न युक्ततरः ? समुदाये तत्त्वबोधने एकाज्द्विर्वचनन्यायस्य मानत्वात् । अन्यथा जुहुधीत्यादौ धित्वानापत्तेः । नचोत्तरभागस्य हुत्वाश्रयणेन धित्वप्रवृत्तिश्शक्या कर्त्तुम् ? धिविधेरङ्गाधिकारीयत्वेन तस्यानङ्गत्वात् ।

नचाङ्गाधिकारे तदन्तग्रहणात्सिद्धिः ? अलैवानर्थकेन तदन्तविधिरिति "येनविधिरि"ति भाष्यवार्त्तिकविरोधात्, हन्नादिग्रहणेऽहिन्नादेर्ग्रहणापत्तेश्च ।

नचोत्तरभागोऽर्थवानेवेति वाच्यम् ? विनिगमनाविरहेण पूर्वभागस्याऽप्यर्थवत्त्वापत्तौ "नानर्थकेऽलोऽन्त्यविधिरि"ति अलोऽन्त्यसूत्रभाष्यवार्त्तिकविरोधापत्तेः । शब्दस्याऽवृत्तिर्नार्थस्येति कैयटः । तथाचोत्तरखण्डस्यानर्थकत्वम् युक्तमेव ।

अत्र मान्याः-जुहुधीत्यत्र विधानसामर्थ्याद्धित्वसिद्धिः । एवमपि ममन्थ ननंष्ठ ररन्ध जजम्भ "मस्जिनशोरि"ति नुम् "रधिजभोरची"ति नुम् सस्रष्ठ दद्रष्ठेत्यादिषु "सृजिदृशोरि"ति अमागमो न स्यात् इति दोषाः । "द्यतेर्दिगी"ति सूत्रभाष्यविरोधस्तु न ? तस्य भाष्यस्यैकदेश्युक्तित्वात् । तदुपक्रमे दिग्यादेशस्य द्वित्ववारणाय साभ्यासस्य दिग्यादेश इति वक्तव्यम् इति परिचोद्य ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यतीति साभ्यासग्रहणप्रत्याख्यानपरभाष्यविरोधादुपपत्तिविरोधाच्चैकदेश्युक्तित्वन्तत्पक्षे हि पूर्वविप्रतिषेधेन प्रथमं द्विर्वचनेऽपि उत्तरभागस्यैव दिग्यादेशेन भाव्यतया ननु च द्विर्वचने कृते साभ्यासस्य दिग्यादेशो भविष्यतीति भाष्यविरोधस्स्पष्ट एव । दिग्यादेशेन द्वित्वबाधनमिष्यत इति वृत्तिः । अत्र ज्ञापकन्तु "हनस्तोऽचिण्णलोरि"ति सूत्रे जघानेत्यत्र तत्त्ववारणाय क्रियमाणणलपर्युदसनम्, प्रकृतिग्रहणे द्विरुक्तस्य ग्रहणम्भवतीति सर्वं सुस्थम् ।

प्रकृतिग्रहणे यङ्लुगन्तस्यापि ग्रहणम्—प्रकृतित्वावच्छिन्नप्रकारतानिरूपिता ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या यङ्लुगन्तत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणापिशब्दार्थविशिष्टप्रकारता तादृशप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

यदपि ननु वृद्धिर्यस्याचामादिरित्यत्रैकपरिभाषोपस्थितौ शालीयाद्यसिद्धिरत आह—

विधौ परिभाषोपतिष्ठते नानुवादे ॥ १०२ ॥

अनूद्यमानविशेषणेषु तन्नियामिका परिभाषा नोपतिष्ठत इति तदर्थः। विध्यङ्गभूतानां परिभाषाणां विधेयेनासिद्धतया सम्बन्धासम्भवेऽपि तद्विशेषणे व्यवस्थापकत्वेन चरितार्थानां तद्विशेषणव्यवस्थापकत्वे मानाभावः इति तर्कमूलेयम्।

किञ्चोदीचामातः स्थाने इति सूत्रे स्थानेग्रहणमस्या लिङ्गम्। अन्यथा "षष्ठी स्थाने"इति परिभाषयैव तल्लाभे तद्वैयर्थ्यं स्पष्टमेवेति। तन्न ? उदात्तस्वरितयोर्यण इत्यादौ "ष्यङः सम्प्रसारणमि"ति सूत्रभाष्योक्तरीत्याल्लोपोऽन इत्यादौ चैतस्या व्यभिचरितत्वात्। भाष्यानुक्तत्वाच्च। स्थानसम्बन्धो न परिभाषालभ्य इत्यर्थस्य "षष्ठी स्थाने"

---

परिभाषाखण्डनीयत्वसाधर्म्यादेवाह यदपीति। विधौपरिभाषेपतिष्ठत इति—परिभाषाप्रवृत्तौ प्रधानलिङ्गं कारणम्। प्राधान्यञ्च विधेयस्यैव, सति सम्भवे विधेयबोधकमेव लिङ्गं गृह्यते नोद्देश्यबोधकम्। परिभाषया प्रधानविधेयसंस्कारे कर्त्तव्ये यावती परम्परा नाप्राप्ता ततोऽधिकपरम्परा परिभाषाप्रवृत्तिन्न प्रयोजयतीति फलितार्थः। "मृजेर्वृद्धिरि"त्यादौ विधेयबोधकं वृद्धिपदमिती "क्ङिति च" "इको गुणवृद्धी" इत्युपतिष्ठते "वृद्धिर्यस्ये"त्यादौ तूद्देश्यबोधकं वृद्धिपदमिति न तत्रेगुपस्थितिरिति शालीयादिसिद्धिः। विधावित्यस्य प्रधान इत्यर्थः। अनुवाद इत्यस्याऽप्रधान इत्यर्थः। एवमपि विधेये साक्षाद्विशेषणं यत् तत्परम्पराविशेषणम्प्रति प्रधानमिति तत्रैव परिभाषाप्रवृत्तिर्नतु परम्पराविशेषणोभूते प्रधानाऽप्रधानन्यायात्। एवञ्च "इको यणची"त्यादौ यण्रूपविधेये साक्षाद्विशेषणे इक इत्यत्र "षष्ठी स्थान" इत्यस्य प्रवृत्तिर्नतु "उदीचामातस्स्थान"इत्यादौ, तत्रात इत्यादौ तस्य परम्परयेस्वरूपविधेयविशेषणत्वादेवञ्च तत्र स्थानेग्रहणं पाणिनीयं सङ्गच्छते। तच्चैतत्परिभाषाज्ञापकमिति यावत्। परिभाषायां सति सम्भवे विधेयगतं लिङ्गं गृह्यत इति भावात्। यच्च लिङ्गम्विधेयताप्रयोजकन्न सम्भवति तदुद्देश्यगतमपि प्रधानं गृह्यते नत्वप्रधानम्। एवञ्चौपश्लेषिकाधिकरणबोधकसप्तम्यन्तमेव तस्मिन्निति परिभाषाप्रवृत्तौ लिङ्गम्। "षष्ठीस्थाने योगा" इत्यस्या अनिर्द्धारितसम्बन्धविशेषा षष्ठी लिङ्गम् विधेयाऽसम्भवात्तच्चोद्देश्यगतमेवेति निष्कर्षः।

तर्कमूलेयमिति। प्रधानाऽप्रधानन्यायमूलेयमित्यर्थः। उदात्तस्वरितयोरिति—उदात्तस्वरितयोरित्यत्र परम्परया विधेयविशेषणे "षष्ठीस्थान" इत्यस्य प्रवृत्त्या व्यभिचार इत्यर्थः। एवमङ्गभसंज्ञाभ्यामाक्षिप्ताऽसर्वनामस्थाने

इति सूत्रे भाष्ये स्पष्टमुक्तत्वेन त्वदुक्तज्ञापकासम्भवाच्च । तत्र स्थाने-ग्रहणं तु स्पष्टार्थमेव ।

किञ्च विधौ परिभाषेति प्रवाद"इको गुणवृद्धी अचश्च"इत्यनयोर्विधीयत इत्यध्याहारमूलकोऽन्यत्र तु नास्याः फलमित्यन्यत्र विस्तरः ॥१०२॥

---

इति पदार्थे "तस्मिन्निति" परिभाषाया अप्रवृत्त्यै तस्या व्यभिचार इत्याशयोऽपि बोध्यः ।

विधीयत इत्यध्याहारमूलक इति—नन्वध्याहार एतत्परिभाषामूलक एवेति तात्पर्य्यं कुतो नेति चेन्न ? पूर्वसूत्राभ्यां गुणवृद्धिग्रहणानुवृत्त्यैव सिद्धे पुनर्गुणवृद्धिग्रहणसामर्थ्यात्तल्लाभसौष्ठवात् । इयम्परिभाषाऽनित्या "संख्याऽव्ययादेर्ङीबि"त्यत्रादिग्रहणात् तच्चादिग्रहणं द्विविधोध्नीत्यादौ ङीब्विधानार्थम्, यद्यनुवादे परिभाषा न स्या ह्रित्त संख्याऽव्ययादिति पञ्चम्या निर्देशेन "तस्मादित्युत्तरस्ये"त्यस्याभावात् संख्याऽव्ययात्परो य ऊधश्शब्दस्तदन्ताद्बहुव्रीहेर्ङीबिति सूत्रार्थाश्रयणाद् द्व्यूध्नीतिवद् द्विविधोघ्नीति व्यवहितस्थलेऽपि सिद्धे व्यर्थम् । अनुवादेऽपि परिभाषाप्रवृत्तौ व्यवहितस्थले द्विविधोघ्नीत्यादौ ङीब्विधानार्थमादिग्रहणम् । अनित्यत्वफलन्तु "अचोरहाभ्यामि"त्यत्र अचोऽव्यवहितपराभ्यां रेफहकाराभ्यामित्यर्थलाभस्तेन किं ह्वयतीत्यादौ न वकारादेरनेन द्वित्वमिति ।

अथ शेखरमूलखण्डनप्रकारः ।

"अल्लोपोऽन" इत्यादावेतस्या व्यभिचरितत्वादिति शेखरोऽनुपपन्नः भाष्यानुक्तत्वाच्च स्थानसम्बन्धो न परिभाषालभ्य इत्यपि न शेखरः । अनित्यत्वादेवेष्टस्थले परिभाषाया अप्रवृत्तिर्न तु व्यभिचारः । अन्यत्र तु नास्याः फलमित्यादिग्रन्थोऽनुपपन्नः । अनित्यत्वादेवोदात्तस्वरितयोः "अल्लोपोऽन" इत्यादौ दोषाभावः । भाष्यानुक्तत्वन्तु न दोषाधायकं ? प्राचीनवैयाकरणतन्त्रप्रसिद्धत्वात् । "उरण्रपर" इति सूत्रे 'सिद्धन्तु प्रसङ्गे रपरत्वात्' इति वार्त्तिकव्याख्यानावसरे भाष्यकृता"स्थान इत्यनुवर्त्तते, स्थानञ्च प्रसङ्गः, यद्येवमादेशोऽविशेषितो भवति आदेशश्च विशेषितः कथम् द्वितीयं स्थानग्रहणमनुवर्त्तते तत्रैवमभिसम्बन्ध करिष्यते उः स्थानेऽण् स्थाने" इति वदता एतद्वचनस्य विधौपरिभाषेत्यस्य सूचनात्, कैयटेन स्पष्टीकृतत्वाच्च । स्थानसम्बन्धस्य "षष्ठी स्थान"इति परिभाषालभ्यत्वाभावेऽपि 'व्याख्यानतो विशेषप्रतिपत्तिरि'ति परिभाषालभ्यत्वस्य तस्मिन्नेव सूत्रभाष्ये स्पष्टतया ज्ञापकत्वसम्भवाच्च । तथाच स्थानेग्रहणं स्पष्टार्थमित्यपास्तम् । "इको गुणवृद्धी" अचश्च" विधीयत इत्यध्याहारमूलक इति कथमपि न युक्तिसम्बद्धम् ? अध्याहारे गौरवात् प्रमाणाऽभावाच्च । अन्यत्र नास्याः फलमित्यपि शेखरो न सयुक्तिकः ? "क्ङिति

ननु नमस्करोति देवान्नमस्यति देवानित्यादौ "नमः स्वस्ती"ति च-तुर्थी दुर्वारेत्यत आह—

उपपदविभक्तेः कारकविभक्तिर्बलीयसी ॥ १०३ ॥

कारकविभक्तित्वं च क्रियाजनकार्थकविभक्तित्वं तच्च प्रथमाया अ-प्यस्तीति सापि कारकविभक्तिरिति "सहयुक्ते"इत्यादिसूत्रेषु भाष्ये ध्व-नितम् । इयं च वाचनिक्येव । अत एव यस्य च भावेन इति सप्तम्य-पेक्षयाधिकरणसप्तम्या बलवत्त्वमनेन न्यायेन तत्र च दीयते इति सूत्रे भाष्ये ध्वनितं कैयटेन स्पष्टमुक्तम् । एतेन क्रियान्वयित्वं कारकत्वमित्य-पास्तं यस्य च भावेनेति सप्तम्या अपि क्रियान्वयित्वात् ।

चे"ति सूत्रस्य व्यवहितेऽपि निषेधार्थं परिभाषाफलस्य जागरूकत्वात् । अन्य-थौपश्लेषिकाधिकरणसप्तमीत्वात्तस्मिन्नितिपरिभाषाप्रवृत्तावव्यवहित एव स्यात् "अचः परस्मिन्पूर्वविधावि"ति सूत्रस्य व्यवहितपूर्वाजादेशेऽपि स्था-निवद्भावाय फलस्य सत्त्वात् । अत एव पूर्वत्वञ्चेह व्यवहिताऽव्यवहितसाधा-रणं गृह्यते । स्वरे निषेधाच्चिचकीर्षक इति ग्रन्थस्सङ्गच्छते । अत एव प्रति-दीव्नेत्यत्र "च्छ्वोश्शूडि"त्यूठो ऽभावः । तथाच यत्र यत्र फलं तत्र तत्रेयमुप-तिष्ठते । यत्र २ न फलन्तत्र २ प्रवृत्तियोग्यतासत्त्वेऽपि अनित्यत्वान्न प्रवर्त्त-ते । "संख्याव्ययादेर्ङीबि"त्यादिग्रहणादिति अनित्यत्वप्रकारस्योक्तत्वात् । तथाचेयम्परिभाषा कर्त्तव्यैवेति नागेशकथनमयुक्तमिति सरयूपारीणशुक्लाः ।

विधौ परिभाषोपतिष्ठते नानुवादे-विधित्वनिष्ठा या निरवच्छिन्नाऽव-च्छेदकता तादृशावच्छेदकतानिरूपितावच्छेद्यतावती या स्वरूपसम्बन्धाव-च्छिन्ना विधिनिष्ठा प्रकारता तादृशप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्नस्वविषयकत्वसम्बन्धावच्छिन्नप्रकारता-निरूपिता या परिभाषात्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधि-करणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वा-वच्छिन्नविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्नप्रकारतानिरूपिता वर्त्त-मानत्वावच्छिन्नप्रकारतानिरूपिता च उपस्थितित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टः ।

नमस्करोतीति—ननु नमःपदार्थान्वयविवक्षायां हि "नमस्स्वस्ती"ति चतुर्थ्याः प्राप्तिः कृधात्वर्थान्वयविवक्षायां द्वितीयाप्राप्तिरिति विषयभेदः । किञ्च नमश्शब्दस्य स्वरादौ साक्षात्प्रभृतिषु पाठा"न्नमस्स्वस्ती"ति सूत्रे स्वस्त्या-दिसाहचर्यात्स्वरादेरेव ग्रहणे कृयोगे साक्षात्प्रभृतित्वेन चतुर्थ्याः प्राप्तिरेवात्र नास्तीति विशेषारुचेराह नमस्यतीति ।

मान्यास्तु—नमश्चकार देवेभ्यः पर्णशालाम्मुमोच चेति भट्टिः । रावणाय

ये तु प्रधानीभूतक्रियासम्बन्धनिमित्तकार्यत्वेन कारकविभक्तीनां बलवत्त्वं वदन्ति तेषामुभयोरपि क्रियासम्बन्धनिमित्तकत्वेन तदसङ्गतिः स्पष्टैव। एतेन नमोवरिव इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय भाष्ये उपन्यासस्यासङ्गतेश्च।

एतेन क्रियाकारकसम्बन्धोऽन्तरङ्ग इति तन्निमित्ता विभक्तिरन्तरङ्गोपपदार्थेन तु यत्किञ्चित्क्रियाकारकभावमूलकः सम्बन्ध इति तन्निमित्ता विभक्तिर्बहिरङ्गेत्यपास्तम्। नमस्यतीत्यत्र नमःपदार्थेऽपि क्रियाकारकभावेनैवान्वयात्। अत्र च नमःपदार्थस्यापि क्रियात्वं मुण्डयतौ मुण्डस्येव। "सहयुक्ते"इत्यादौ च प्रधाने प्रथमासाधनार्थमियं भाष्य उपन्यस्तेत्यन्यत्र विस्तरः॥ १०३॥

---

नम~कुर्यात्सीतेऽस्तु स्वस्ति ते ध्रुवमिति रामायणम्। निपातानां द्योतकत्वमिति पक्षे द्योतकवाचकोभयसमभिव्याहारस्थले विनिगमनावैकल्येन विषयताप्रयोजकत्वमुभयत्रैव वरीवर्त्यवश्च नम~प्रयोज्यविषयतानिरूपितविषयताप्रयोजकाच्चतुर्थ्या विधानम्। कृधात्वर्थान्वयविवक्षायां च द्वितीयाप्राप्तिरिति विषयविवेचनेत्याहुः। क्रियानिष्ठविशेष्यतानिरूपितक्रियाकारकभावसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं कारकविभक्तित्वम्। कारकत्वव्याप्यकर्मत्वादिबोधकविभक्तित्वं कारकविभक्तित्वमिति वा परिष्करणीयम्। क्रियान्वयिनि जायमानविभक्तित्वं कारकविभक्तित्वमिति लक्षणेन प्रथमाया अपि कारकविभक्तित्वम्।

अथ शेखरखण्डनप्रकारः—इयम्वाचनिकीति शेखरोऽनुपपन्नः? अस्याः न्यायसिद्धत्वात्। सर्वं वाक्यं सावधारणं भवतीति न्यायेन सर्वेषाम्पदानां प्रथमं क्रियायामन्वयः पश्चात्तद्द्वारक~परस्परसम्बन्ध इति पश्चाद्भावसम्बन्धापेक्षयोपपदविभक्त्यपेक्षया प्राथमिकक्रियासम्बन्धनिमित्तकविभक्तेरन्तरङ्गत्वेन तस्या एव प्राबल्यात् एतन्न्यायमूलिकैवा परिभाषा। नच "यस्य च भावेन भावलक्षणमि"ति विहितसप्तम्यपेक्षया अधिकरणसप्तम्या~प्राबल्यं भाष्योक्तंविरुध्येतेति वाच्यम्? यस्य भावेनेति अश्रुतलक्षणक्रियापेक्षसप्तम्यपेक्षया श्रुतक्रियामात्रापेक्षाधिकरणसप्तम्या अन्तरङ्गत्वेन प्राबल्योपपत्तावविरोधात्। नच नमस्यन्ति देवानित्यत्रैतत्परिभाषया चतुर्थीवारणं भाष्योक्तं विरुध्येतेति वाच्यम्? तत्र च नमस्येति क्यजन्तस्य पूजावाचित्वमनुसृत्य द्वितीया कर्मण्युपपादिता तत्र क्यजन्तार्थक्रियाद्वारक एव नमश्शब्दार्थेन सम्बन्ध इति विरोधलेशाऽसम्भवात्। अत एवाग्रे भाष्ये क्यजादीनामेव करणग्रहणानुवृत्त्या क्रियावाचित्वं साधितं सङ्गच्छते। अतो न नमश्शब्दस्य क्रियावाचित्वं शेखरोक्तम्। तथाच न्यायसिद्धैवेयमिति सिद्धम्।

अत्र श्रीगुरवः-प्रधाननिमित्तकत्वेन कारकविभक्तीनां बलवत्त्वमूलकोऽय-

नन्वदमुयङित्यादौ पूर्वस्यापि मुत्वापत्तिरत आह—

**अनन्त्यविकारेऽन्त्यसदेशस्य ॥ १०४ ॥**

अन्त्यसदेशानन्त्यसदेशयोरेकप्रयोगे युगपत्प्राप्तावन्त्यसदेशस्यैवेति तदर्थः। अन्यथा धात्वादेर्नत्वसत्वे नेता सोतेत्यादावेव स्यातां न तु नमतिसिञ्चतीत्यादौ। अनन्त्यविकार इति च लिङ्गम्। अन्त्येन समान देशो यस्य सोऽन्त्यसदेशः। तदेवं चान्त्यवर्णतद्वर्णयोरितराव्यवधानेन बोध्यम्। अत एव विद्ध इत्याद्यर्थं न सम्प्रसारणे इति चरितार्थम्।

न्यायः। नमस्यतीत्यादावपकृष्टत्वप्रकारकबोधानुकूलव्यापारात्मकनमस्कारघटकबोधान्वयमात्रं चतुर्थ्या अपेक्ष्यते। बोधापेक्षया प्रधानीभूतव्यापारनिमित्तकत्वं द्वितीयायाः। प्रधानीभूतव्यापारजन्यफलाश्रयस्य कर्मत्वात् द्वितीया बलवती। कर्मप्रत्ययस्थले कर्मण—प्राधान्येऽपि शाब्दबोधायविशेष्यतारूपे जन्यत्वेनाऽप्रतीयमानत्वलक्षणप्राधान्यस्य व्यापारे सत्त्वेनाक्षतेरित्याहुः। अन्यच्छेखरमूले सुगमम्।

उपपदविभक्ते—कारकविभक्तिर्बलीयसी—दौर्बल्यसम्पादकत्वं पञ्चम्यर्थः उपपदविभक्तित्वावच्छिन्नप्रकारतानिरूपिता या पञ्चम्यर्थदौर्बल्यसम्पादकत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारतानिरूपिता या कारकविभक्तित्वावच्छिन्ना सङ्केतसम्बन्धावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या बलीयसीत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

मुत्वापत्तिरिति—"अदसोऽसेरि"त्यनेनेति भावः। अनन्त्यविकार इति—न अन्त्यस्य विकारो येनासावनन्त्यविकारस्तत्र शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिरिति परिभाषार्थः। अत्र मत्वविधायकं मुत्वविधायकञ्च पृथगेव वाक्यम्। तेनोत्वस्यान्त्यवृत्तिविकारत्वेऽपि मत्वस्य तथात्वाभावेन परिभाषाप्रवृत्या पूर्वस्य मत्वाभावे सन्नियोगशिष्टन्यायेनोत्वाभावोऽपि बोध्य इत्यवतरणतत्त्वम्। अनन्त्यविकारेऽन्त्यवर्णवृत्तिविकाराऽप्रयोजके। तदर्थ इति—अत एव "र्वोरुपधाया"इत्यत्रोपधाग्रहणञ्चरितार्थम्। युगपत्प्राप्तिश्च काचित्की। तथाच अमी इत्यत्र तदसत्त्वेऽपि क्षतिविरहः।

ननु नमति नेतेत्यत्र युगपत्प्राप्तिसत्त्वेन तथा नमनं नयतीति आचारक्विबन्तात्कर्त्तरि क्विपि नमननीरित्यादौ सापादिकसर्वकार्यसिद्धौ आदिनकारान्त्यसदेशनकारयोर्युगपदेकप्रयोगे णत्वप्राप्तिसत्त्वेनान्त्यस्याऽप्राप्तेश्च "णो नः" इत्यत्रान्त्यसदेशस्येत्यस्योपस्थितिर्दुर्वारैवेति चेन्न? यत्किञ्चित्प्रयोगविशिष्टे शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिः। वैशिष्ट्यञ्च स्वपर्याप्तोद्देश्यताकत्व स्वान्त्योद्देश्यकविकाराऽप्रयोजकत्व स्वनिरूपितावयवत्वविशिष्टान्त्यसदेशाऽन-

श्नल्लोपो न इत्यादेरनस्तक्षणेत्यादावाद्याकारादावप्रवृत्तिरप्यस्याः फलं यजादिस्वादिपरान्नन्तांगस्याकारस्य लोप इत्यर्थस्यैवांगांशे प्रत्ययस्योत्थितकांक्षतयौचित्यादङ्गावयवयजादिस्वादिपरस्यान इत्यादिक्रमेणानेकत्रानेकक्लिष्टकल्पनापेक्षयास्या उचितत्वात् । न चैषा ष्यङः संप्रसारणम् इति सूत्रे भाष्ये प्रत्याख्यातेति भ्रमितव्यम् । वार्त्तिकोक्तफलानामनेकक्लिष्टकल्पनाभिरन्यथासिद्धिं प्रदर्श्यापि यान्येतस्याः परिभाषायाः प्रयोजनानि तदर्थमेषा कर्त्तव्या, प्रतिविधेयं दोषेषु, प्रतिविधानं चोदात्तनिर्देशात्सिद्धमित्युपसंहारात् ।

मिमार्जिषतीत्यर्थं चैषा । तत्र वृद्धेः पूर्वमन्तरङ्गत्वाद् द्वित्वे परत्वादभ्यासकार्यं ततोऽभ्यासेकारस्य वृद्धिवारणायावश्यकी । न च वृद्धौ पुनरभ्यासह्रस्वत्वेन सिद्धिः । लक्ष्ये लक्षणस्येति न्यायेन पुनरप्रवृत्तेः ।

यत्तु न सम्प्रसारण इति सूत्रे भाष्ये नैतस्याः परिभाषायाः प्रयोजनानीत्युक्तं, तस्यायमर्थः एतत्सूत्रे प्रयोजनान्येतस्याः परिभाषाया न भवन्ति व्यधादावन्त्यसमानदेशयणोऽभावादिति । नैतान्येतस्याः प्रयोजनानीति पाठोऽपि क्वचिद् दृश्यते । वाचनिक्येवैषा । स्पष्टा च ष्यङ इति सूत्रेऽदसोऽसेरिति सूत्रे च केचिदन्त्यसदेशस्येत्यनेन भाष्य इत्यन्यत्र विस्तरः ॥ १०४ ॥

---

न्त्यसदेशोभयवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकत्वैतत्त्रितयसम्बन्धेन । तत्र नमननीरिति प्रयोगवैशिष्ट्यमादाय "णो न" इत्यत्र दोषवारणार्थमाद्यसम्बन्धः । जुगुप्सतीत्यादौ हि गुप्स इति सकारान्तस्य प्रथमैकाचो द्वित्वे हलादिश्शेषेण पकारसकारयोर्लोपाय द्वितीयसम्बन्धः । नेतेति प्रयोगवैशिष्ट्यन्तत्र माभूदिति तृतीयसम्बन्धः । परमसु राजन्सु अ इति टजन्तसमुदायस्य "सुपोधात्वि"ति सूत्रवैशिष्ट्यवारणाय विषयतायां वर्णत्वव्याप्यधर्मावच्छिन्नत्वविशेषणम् । चलीक्लृप्यत इत्यत्र "कृपो रो लः" इति शास्त्रीयविषयतायास्समुदायपर्याप्ताया अभावान्न "कृपो रो लः" इत्यत्र परिभाषाप्रवृत्तिरिति तत्त्वम् ।

अथ शेखरखण्डनप्रकारः—अत्रान्त्यसदेशत्वमन्त्यवर्णतद्वर्णयोरितराऽव्यवधानेन बोध्यम् । अत एव विद्ध इत्याद्यर्थं "न्न सम्प्रसारणे" इति चरितार्थमित्यादिकं सर्वमयुक्ततरम् । अनन्त्यसदेशत्वमन्त्यवर्णतद्वर्णयोरव्यवहितत्वमित्यर्थोऽभ्युपगमे अदमुयङ्ङित्यत्र तकारस्य दकारस्य च मध्ये रेफस्य व्यवधानात् अदमुयङ्ङित्यसिद्धेः । नच रेफस्यैवान्त्यसदेशत्वमिति वाच्यम् ? दकारस्यान्त्यसदेशत्वाभावेन तत्रैतत्परिभाषाया अप्रवृत्तिप्रसङ्गात्, विद्ध इति परिभाषोदाहरणविरोधाच्च । अनस्तक्ष्णेति फलमपि न ? कार्यकालपक्षानु-

नन्वव्यक्तानुकरणस्यात इति पररूपं पटत् इति पटितीत्यादावलो-ऽन्त्यस्येत्यन्त्यस्य प्राप्नोतीत्यत आह—

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे ॥ १०५ ॥

अनभ्यासेत्युक्तेर्बिभर्तीत्यादौ "भृञामित्" इत्याद्यन्त्यस्यैव अभ्यासेऽनर्थकोऽर्थावृत्त्यभावात् किंतूत्तरखण्ड एवार्थवानित्यन्यत्र निरूपितम् ।

एषालोऽन्त्यात्सूत्रे भाष्ये स्पष्टा । फलानामन्यथासिद्धिकरणेन प्रत्याख्याता चेति तत एवावधार्यताम् ॥ १०५ ॥

---

रोधेनोपस्थितं यचोति पदं स्वसार्थक्याय अत एव विशेषणम्भवतीति भाष्याभिप्रायवर्णनात् । मिमार्जिषतीति फलमपि न ? प्रतिपदोक्तत्वात्कृतायामेव वृद्धौ अभ्यासह्रस्वप्रवृत्तेः । अदमुयङिति फलमपि न ? "अदसोऽद्रेः पृथङ्मुत्वं केचिदिच्छन्ति लत्ववत् । केचिदन्त्यसदेशस्येति" वचनेन सिद्धमधिकमन्वेष्यम् ।

अनन्त्यविकारेऽन्त्यसदेशस्य—अनन्त्यविकारे शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिः । अनन्त्यविकारत्वावच्छिन्ना अनन्त्यविकारनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता अभेदसम्बन्धावच्छिन्ना शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वविषयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिताऽन्त्यसदेशत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता उपस्थितित्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

प्राप्नोतीति—एवञ्च नाम्रेडितस्येति सूत्रेऽन्त्यग्रहणम्व्यर्थं स्यादिति भावः । अत्र केचित् विकारपदेन भावादेश एव गृह्यते तेनात्र "लोपोऽभ्यासस्य व्यसोरेद्धावभ्यासलोपश्चे"ति सर्वस्यैवाभ्यासस्य भवतीति वदन्ति । अत्र ज्ञापकं पूर्वोक्तमन्त्यग्रहणम् । अनभ्यासेत्यंशे ज्ञापकञ्च "अर्तिपिपर्त्योरि"ति निर्देशः । भाष्ये स्पष्टेति—वचनरूपेण पठितेत्यर्थः । प्रत्याख्याता चेति, "हलि लोप" इत्यनेनान एव लोप इति भावः । मीनादीनामनुवृत्त्यैव सिद्धेऽत्र ग्रहणसामर्थ्यात्सर्वादेशः । "घ्वसोरेद्धावि"त्यत्र पुनर्लोपग्रहणात् शित्करणाद्वा सर्वादेश इति न तत्रापत्तिः । "चतुरश्छयतावि"त्यत्रादेरित्येव सिद्धेऽन्त्यग्रहणात्सर्वादेशः । श्वेताश्वाश्वतरेत्यत्र पुनरश्वतरादिग्रहणात्सर्वादेश इति न तत्र तत्रालोऽन्त्यपरिभाषाप्रवृत्तिरित्यास्तांविस्तरः ।

नानर्थकेऽलोऽन्त्यविधिरनभ्यासविकारे—अभेदसम्बन्धावच्छिन्नानर्थकत्वावच्छिन्नप्रकारतानिरूपिता याऽनभ्यासविकारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिताऽलोन्त्यविधित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वस-

ननु ब्राह्मणवत्सा च ब्राह्मणीवत्सश्चेत्यादौ पुमान् स्त्रिया इत्येकशेषापत्तिः स्त्रीत्वपुंस्त्वातिरिक्तकृतविशेषाभावादत आह—

प्रधानाप्रधानयोः प्रधाने कार्यसम्प्रत्ययः ॥ १०६ ॥

तेन प्रधानस्त्रीत्वपुंस्त्वातिरिक्ताप्रधानस्त्रीत्वपुंस्त्वकृतविशेषस्यापि सत्त्वेन न दोषः ।

स्पष्टा चेयं "पुमान् स्त्रिया" नपुंसकमनपुंसकेने' त्यनयोर्भाष्ये । अन्तरङ्गोपजीव्यादपि प्रधानं प्रबलमिति हेतुमति च इत्यत्र भाष्यकैयटयोः॥ १०६॥

ननु स्वस्रादित्वप्रयुक्तो मातृशब्दस्य ङीब्निषेधः परिच्छेत्तृवाचकमातृशब्देऽपि स्यादत आह—

अवयवप्रसिद्धेः समुदायप्रसिद्धिर्बलीयसी ॥ १०७ ॥

---

स्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः ।

प्रधानाऽप्रधानयोरिति—प्रधानकार्य्यं सर्वतो बलवदिति न्यायमूलैषा । प्राधान्यञ्च स्त्रीत्वे तत्पदप्रयोज्यमुख्यविशेष्यतानिरूपितप्रकारताश्रयत्वम् । इह तु मुख्यविशेष्यतानिरूपितप्रकारतावच्छेदकत्वेन स्त्रीत्वावच्छिन्नमुख्यविशेष्यताकबोधजनकत्वेनोच्चारितेन सहोक्तौ पुंस्त्वावच्छिन्नमुख्यविशेष्यकबोधजनकं शिष्यत इत्यर्थक "पुमान्स्त्रिये"त्यस्य न प्रवृत्तिः । एवं ब्राह्मणकुमारीः कुलपुत्र इत्यादौ नत्वलुगभावः । अन्तरङ्गोपजीव्यादपीति—अत एव शत्रूनगमयत्स्वर्गं वेदार्थं स्वानवेदयदित्यादौ प्रयोज्यक्रियानिरूपितकर्तृत्वेऽन्तरङ्गत्वस्योपजीव्यत्वस्य च सत्त्वेऽपि तद्बाधित्वा प्रधानक्रियानिमित्तत्वेन प्राधान्यात्कर्मत्वसिद्धौ "गतिबुद्धी"ति सूत्रन्नियमार्थमिति "हेतुमतिचे"तिभाष्योक्तं सङ्गच्छते ।

प्रधानाऽप्रधानयोः प्रधाने कार्य्यसम्प्रत्ययः-प्रधानाऽप्रधानान्यतरनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या शुद्धप्रधानत्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वावच्छिन्ना स्वनिष्ठाधारतानिरूपिताधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कार्यसम्प्रत्ययत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

प्रधानकार्यस्य सर्वतो बलवत्त्वसिद्धान्तेनान्यत्रापि तत्प्रसङ्गेन बलवतस्स्वरूपमाह अवयवप्रसिद्धेरिति । अवयवशक्तिग्रहसहकृतसमुदायशक्तिग्रहात् । समुदायप्रसिद्धिरिति—अवयवशक्तिग्रहानपेक्षसमुदायशक्तिग्रहः । अर्थवद्ग्रहणपरिभाषया अर्थे गृह्यमाणे समुदायप्रसिद्धार्थो गृह्यते झटित्युप-

तेन शुद्धरूढस्य जननीवाचकस्यैव ग्रहणं न परिच्छेत्तृवाचकस्य। योगजबोधे तदनालिङ्गितशुद्धरूढिजोपस्थितिः प्रतिबन्धिकेति व्युत्पत्तिरेव तद्बीजम्।

रथकाराधिकरणन्यायसिद्धोऽयमर्थः। कश्चित्तु "दीधीवेवीटाम्" इत्यत्रानया परिभाषया दीधीङ्वेवीङोरेव ग्रहणं न दीङ्धीङ्वेञ्वीनामिति। तन्न ? तथा सति दीवेधीवीटामित्येव वदेदित्यन्ये ॥ १०१ ॥

---

स्थितिकत्वात्, नावयवप्रसिद्धार्थ इति निष्कर्षः। योगजबोध इति—अवयवशक्तिज्ञानाधीनसमुदायशक्तिज्ञानाधीनोपस्थितिजन्यशाब्दबोध इत्यर्थः। तदनालिङ्गितेति—अवयवशक्तिज्ञानानधीनसमुदायशक्तिज्ञानजन्योपस्थितिरित्यर्थः। अवयवशक्तिग्रहाधीनशक्तिग्रहजन्योपस्थितिप्रयोज्यशाब्दबोधं प्रतिअवयवशक्तिग्रहानधीनशक्तिग्रहजन्योपस्थिति प्रतिबन्धिकेतिग्र न्थाशयः। प्रतिबध्यप्रतिबन्धकभावरूपवस्तुस्थितिश्च रथकाराधिकरणन्यायेनापि निश्चिता भवति तत्र समुदायशक्तिज्ञानस्यैव तात्पर्यविषयत्वम्। वर्षासु रथकारोऽग्नीनादधीतेति—अत्र रथं करोतीति रथकार इति व्युत्पत्तिः, कश्चन ब्राह्मणो रथकारपदवाच्यः। अथवा रूढः सङ्करजातीयः, योगाद्रूढिर्बलीयसीति न्यायात्।

माहिष्योऽग्रौ प्रजायेते विट्शूद्राङ्गनयोर्नृपात्।
शूद्रायां करणो वैश्याद्विन्नास्वेष विधिस्स्मृतः॥
माहिष्येण करण्यान्तु रथकार प्रजायते।

करण्यां माहिष्येणोत्पन्नस्य रूढिरियं रथकारस्येति मनुना प्रदर्शितम्। श्रुतिसामर्थ्याच्छूद्रसङ्करजातेरपि वर्षास्वग्न्याधानाधिकारत्वसिद्धान्तस्तत्तात्पर्येणाह न्यायसिद्धोऽयमर्थः दीधीवेवीटामिति।

अत्र सरयूपारीणशुक्लाः १ दीङ्क्षये २ धीङनादरे ३ वेञ्तन्तुसन्ताने ४ वी गतिव्याप्तिप्रजनकान्त्यसनखादनेषु इति चत्वारो धातवः। दीङ्क्षय इत्यस्य धातोर्न ग्रहण "मीनातिमीनोतिदीङां ल्यपि चे"ति शास्त्रे दीङो ग्रहणं किमर्थमनेन निषेधे एज्निमित्तत्वाभावेन तदुपादानं व्यर्थमेव। तथाच स्थालीपुलाकन्यायेनैकदेशानुमत्या दीधीवेव्योरेव ग्रहणं नतु चतुर्णान्तथाच शेखरेऽयुक्ततर इति वदन्ति।

ननु चतुर्णां ग्रहणे दीङ्वेञ्वोर्ग्रहणमनर्थकं गुणप्रवृत्त्यभावात् इति द्वाभ्यां धातुभ्यां यति ईयतीतीत्वे कृते देयं वेयमिति शब्दे गुणप्राप्त्या प्रतिषेधसम्भवात्।

नन्वेवमपि वेञो ग्रहणमयुक्तं वीग्रहणेनैव गुणप्रतिषेधसम्भवात्। नच लाक्षणिकत्वम् ? चतुर्णां ग्रहणन्न भवति असन्देहार्थं "वीवेधीदीटामि"ति ब्रूयात् असन्दिग्धकरणादेवाभीष्टसिद्धावियन्न कार्येति केचित्।

अवयवप्रसिद्धेस्समुदायप्रसिद्धिर्बलीयसी—समवायसम्बन्धावच्छिन्ना-

ननु वातायनार्थ गवाक्षेऽवङो वैकल्पिकत्वाद् गोक्ष इत्याद्यपि स्यादत आह—

व्यवस्थितविभाषयापि कार्याणि क्रियन्ते ॥ १०८ ॥

लक्ष्यानुसाराद्व्यवस्था बोध्या । शाच्छोरिति सूत्रे लटः शत्रित्यादिसूत्रेषु च भाष्ये स्पष्टा ॥ १०८ ॥

---

वयवत्वावच्छिन्नप्रकारतानिरूपिता या प्रसिद्धित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतानिरूपिता या समुदायप्रसिद्धित्वावच्छिन्ना विशेष्यता तादृशविशेष्यत्वाभिन्ना या बलीयसीत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

रूढिप्रसङ्गादेवाह ननु वातायनेति—गवाक्षे गवाक्षशब्दे सामानाधिकरण्येन निर्देशस्तु वाच्यवाचकयोस्तादात्म्याश्रयणात् । व्यवस्थितविभाषयेति—व्यवस्था संजाता अस्यास्सा । सा व्यवस्था हि क्वचिदर्थविशेषे भावकार्यं कचिदभावकार्य्यं क्वचिद्भावाभावोभयकार्य्यम् । एवम्व्यवस्थानिर्णयो लक्ष्यैकचक्षुष्कसाध्य इति भाष्यकारीयव्याख्यानतो निर्णयः कार्य्यः। एवञ्च परिभाषायां कचित्पदनिवेशः, अथवा अपिशब्दः कचिदर्थकः । भाष्ये तु "देवत्रातो गलो ग्राह इति योगे च सद्विधिः । मिथस्ते न विभाष्यन्ते गवाक्षस्संशितव्रत" इति पद्यम् ।

व्यवस्थितविभाषात्वञ्च व्यवस्थितविभाषाशास्त्रीयोद्देश्यतावच्छेदकव्याप्यं यद्रूपं तद्रूपव्यापकभावाऽभावाऽन्यतरविधायकत्वम् । विभाषाशास्त्रं "सर्वत्र विभाषा गोरि"ति तदीयोद्देश्यतावच्छेदकमजव्यवहितपूर्वत्वविशिष्टैङन्तगोशब्दत्वम् तद्व्याप्यरूपम् वातायनबोधकघटकाजव्यवहितपूर्वत्वविशिष्टगोशब्दत्वम् तद्व्यापकभावविधायकत्वं "सर्वत्र विभाषे"तिशास्त्रस्येति ।

एवमेव विभाषाशास्त्रम् "अचि विभाषे"ति तदीयोद्देश्यतावच्छेदकमजव्यवहितपूर्वत्ववद् गृधात्ववयवत्वम् । तद्व्याप्यं रूपं विषयतात्पर्य्येणोच्चरितघटकाजव्यवहितपूर्वत्वविशिष्टगृधातुसम्बन्धिरत्वन्तद्व्यापकाभावविधायकत्वमचिविभाषेत्यस्यान्यत्राऽप्येवं समन्वयः ।

पूज्यचरणास्तु—व्यवस्थितविभाषात्वञ्च शास्त्रे स्वीयोद्देश्यतावच्छेदकव्याप्यो य उभयाऽवृत्तिधर्मव्यापको धर्मस्तन्निष्ठव्याप्यतानिरूपिता या विधेयतावच्छेदकधर्मावच्छिन्ना व्यापकता तद्वतोर्भावाऽभावविधायकत्वम् । यथा "अवङ्स्फोटायने"ति शास्त्रे उद्देश्यतावच्छेदकधर्मोऽजव्यवहितपूर्वत्वविशिष्टगोशब्दत्वम् । तद्व्याप्य उभयावृत्तिधर्मव्यापको वातायनार्थकत्वविशिष्टाक्षशब्दाव्यवहितपूर्वत्वविशिष्टगोशब्दत्वाख्यस्तद्व्यापकता विधेयतावच्छे-

विधिनियमसम्भवे विधिरेव ज्यायान् ॥ १०६ ॥

नियमे ह्यश्रुताया अन्यनिवृत्तेः सामर्थ्यात्परिकल्पनमुक्तानुवाददोषश्चेति लाघवाद्विधिरेवेति बोध्यम् । "यस्य हल" इत्यत्र "इजादेः सनुम" इत्यादौ च भाष्ये स्पष्टेयम् ॥ १०६ ॥

---

दकावच्छेदकत्वावच्छिन्ना तद्वानवच्छ् तद्विधायकत्वन्तत्रेति । क्वचिच्च अभावत्वावच्छिन्नमेव व्यापकत्वमिति समूचुः ।

व्यवस्थितविभाषयापि कार्याणि क्रियन्ते—स्वनिष्ठकर्त्तृतानिरूपकत्वसम्बन्धावच्छिन्ना व्यवस्थितविभाषात्वावच्छिन्ना व्यवस्थितविभाषानिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या क्रियात्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठजनकतानिरूपितजन्यतावत्त्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कार्यत्वावच्छिन्ना बहुत्वत्वसंख्यावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

विकल्पविधिप्रसङ्गादाह विधिनियमेति । ननु "यस्य हल"इति सूत्रेऽत इत्यनुवर्त्य नियामकत्वम् अननुवर्त्य सर्वलोपविधायकत्वम्वा । तथा "हेताвि"ति सूत्रे लौकिकहेतुग्रहे विध्यर्थमथवा शास्त्रीयहेतुग्रहे कर्त्तृसंज्ञकाद्धेतोरेवेति नियमार्थमत आह विधिनियमसम्भव इति । "विधिरत्यन्तमप्राप्तौ नियमः पाक्षिके सति । तत्र चान्यत्र च प्राप्तौ परिसंख्येति गीयत"इति मीमांसकाः । अत्यन्ताऽप्राप्तविधायकत्वम्विधित्वम्, यथा सोमेन यजेतेति । यागस्य केनाप्यप्राप्तेर्विधित्वम् ।

नियमस्तु व्रीहीनवहन्तीति । तण्डुलनिष्पत्तिस्तुषविमोकात् तुषविमोकश्च मुशलाद्यवघातेन नखेन च । तण्डुलार्थी मुशलाद्यवघातेन नखेन वा स्वेच्छया तुषविमोकं कृत्वा यागं कुर्यादिति नखनिष्पन्नतण्डुलकृतपुरोडाशसिद्धो यागो नाऽपूर्वसाधकः किन्तु मुशलाद्यवघात एवापूर्वसाधक इति पाक्षिकसिद्धोऽप्यवघातोऽनेन बोद्ध्यत इति पाक्षिकसिद्धावघातबोधकत्वेन नियमत्वम् । 'पञ्च पञ्चनखा भक्ष्या'इति परिसंख्योदाहरणम् । पञ्चनखानां भक्षणं यथा रागतःप्राप्तं तथाऽश्वादिमांसानामपीति तेषामभक्ष्यत्वबोधनाय लोकतस्सिद्धमपि पञ्चनखभक्षणमनेन विधीयते । पञ्चनखादौ श्वादौ च प्राप्तभक्षणविधायकत्वात्परिसंख्यात्वम् ।

ननु नियमपरिसंख्ययोःको भेद इति प्रश्नः? यथा भक्षणं क्षुन्निवृत्त्यर्थन्तत्र चान्यत्रच प्राप्तन्न तथावघातस्तण्डुलनिर्वृत्त्यर्थः, यथाऽवघातःपाक्षिकःप्राप्तस्तथा न भक्षणं पाक्षिकं क्षुन्निवृत्तेरुपायान्तराऽभावात् इति हि तयोर्भेदः । परन्त्वस्मिन् शास्त्रे नियमपदेन परिसंख्यैव गृह्यते । यथाऽर्थवत्सूत्रेण समासे वाक्ये च प्राप्ता प्रातिपदिकसंज्ञेति परिसंख्यात्वम् ।

नन्वाशंसायां भूतवच्चेत्यनेन लुङ इव लङ्लिटोरप्यतिदेशः स्यादत आह—

सामान्यातिदेशे विशेषानतिदेशः ॥ ११० ॥

सामान्योपस्थितिकाले नियमेन विशेषोपस्थापकसामग्र्यभावोऽस्याः बीजम् । तेनानद्यतनभूतरूपे विशेषे विहितयोस्तयोर्नातिदेशः ।

इयमनित्या "न ल्यपी"ति लिङ्गात् । तेन स्थानिवत्सूत्रेण विशेषातिदेशोऽपि । स्पष्टं चैतत् सर्वं स्थानिवत्सूत्रे भाष्ये ॥ ११० ॥

---

नियमः परिसंख्याऽस्मिन् शास्त्रे त्रिदोषिका मता ।
श्रुतार्थस्य परित्यागादश्रुतार्थस्य कल्पनात् ॥

प्राप्तस्य बाधादित्येवं परिसंख्या त्रिदोषिकेति कारिका सुगता ।

विधिनियमसम्भवे विधिरेव ज्यायान्—पाणिन्यादिसङ्केतसम्बन्धावच्छिन्नविधित्वावच्छिन्ननियमत्वावच्छिन्नान्यतरत्वावच्छिन्नप्रकारतानिरूपिता या सम्भवत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या विधित्वावच्छिन्ना एवशब्दार्थत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या ज्यायस्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः ।

सामान्यातिदेशे विशेषानेति—सादृश्यप्रतियोगितावच्छेदकधर्मव्यापकधर्मस्यैवातिदेशो नतु सादृश्यप्रतियोगितावच्छेदकधर्माऽव्यापकधर्मस्येत्यर्थः । तथाच भूतत्वव्यापकभूतत्वस्यैवातिदेशो नतु तदव्यापकभूतानद्यतनपरोक्षत्वस्य । विशेषातिदेशोऽपीति । खण्डनप्रकारः—स्थानिवत्सूत्रे तदादेशस्तत्स्थानिवद्भवतीति संग्राहकवाक्यत्वेन अयं ल्यप् एतत्क्त्वावद् भवतीति अतिदेशवाक्यकल्पनेन सादृश्यप्रतियोगितावच्छेदकैतत्क्त्वावृत्तितद्व्यक्तित्वव्यापकत्वस्य कित्त्वे सत्त्वेन तदतिदेशसौलभ्या "न्नल्यपी"त्यस्य वैयर्थ्याभावात्फलाभावाच्च ।

ननु येन रूपेण सूत्रे स्थानिता आदेशता च तेन रूपेणातिदेशवाक्यकल्पने च मूलन्नास्तीति चेन्न ? जजागरतुरित्यादौ गुणानापत्तेः । अतुस् तस्वद् भवति परस्मैपदवद् वा भवतीत्यतिदेशवाक्यकल्पने भवन्मते विशेषातिदेशसत्त्वेन आहतुरित्यादौ तसो ङित्त्वेन तस्य जजागरतुरित्यादावतिदेशे "अविचिण्णल्ङित्स्वि"ति पर्युदासादित्यलम् ।

सामान्यातिदेशे विशेषानतिदेशः—सामान्यातिदेशत्वावच्छिन्नप्रकारतानिरूपिता या विशेषत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता यातिदेशत्वावच्छिन्ना विशेष्यता तादृशविशेष्यता-

ननु तित्स्वरितमिति स्वरितत्वं किरतीत्यादौ स्यादत आह—

प्रत्ययाप्रत्यययोः प्रत्ययस्य ग्रहणम् ॥ १११ ॥

इयं चाङ्गस्येति सूत्रे भाष्ये पठिता । वर्णग्रहणे च न प्रवर्तते इति तत्रैव कैयटे स्पष्टम् । अत एव "सनाशंसभिक्ष उः" वले इत्यत्र सन्वलयोः प्रत्यययोर्ग्रहणम् ।

परे तु '·तित्स्वरितमि'ति सूत्र एषा परिभाषा लक्ष्यसंस्काराय भाष्ये क्वापि नाश्रितेति कैयटेनोक्तम् । अङ्गस्येति सूत्रे तत्प्रत्याख्यानायैषा भाष्य एकदेशिनोक्ता । अत एव तितिं प्रत्ययग्रहणं कर्तव्यमिति वार्त्तिककृतोक्तम् । उक्तसूत्रयोर्व्याख्यानात् प्रत्यययोरेव ग्रहणमित्याहुः ॥१११॥

---

समानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना भेदनिष्ठा विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

प्रत्ययप्रसङ्गादाह—प्रत्ययाप्रत्यययोरिति—शुक्लीभवतीत्यत्र प्रत्ययभिन्नाकारस्य "अस्य च्व्यावि"तीत्वं सिद्ध्यति । अत एवेति—परिभाषायास्सत्त्वादेवेत्यर्थः । अत्र मान्याः, इयं परिभाषाऽवश्यकी, अन्यथा "वनो रचे"ति शास्त्रे "वसोस्सम्प्रसारणमि"ति शास्त्रे च वन् च वसु स्तम्भ इत्यनयोर्धात्वोरपि ग्रहणापत्तेः । नच परिभाषासत्त्वे "तित्स्वरितमि"ति सूत्रेतितिप्रत्ययग्रहणं कर्तव्यमिति वार्तिकं व्यर्थं परिभाषयैवेष्टसिद्धेरिति वाच्यम् ? तस्य वार्त्तिकस्य परिभाषालब्धार्थानुवादकत्वात् ।

किञ्च "न पदान्ताट्टोरनामि"ति सूत्रे नमतीति नाम् इत्यस्य "वसुस्रंस्वि"ति सूत्रे वसु स्तम्भ इत्यस्य, वले इत्यत्र वल सम्बरणे इत्यस्य "सन्यत" इत्यत्र सनधातोश्च ग्रहणाऽपत्तौ परिभाषा कर्त्तव्यैव ।

नच "अङ्गस्ये"ति सूत्र एकदेशिनोक्तत्वेन नेयमिति वाच्यम् ? यदंशे एकदेश्युक्तित्वं तदंशे तस्य तत्त्वेऽपि एकदेश्युक्तत्वमात्रेण तस्यास्तत्त्वाभावात् अन्यथाऽन्तरङ्गपरिभाषाया अपि एकदेश्युक्तित्वेनाभावापत्तेः । नवा बहिरङ्गलक्षणत्वादित्याश्रयणात् । "तितिप्रत्ययग्रहणमि"ति वार्तिकन्तु प्रत्ययग्रहणमिति परिभाषामबुद्ध्वा प्रवृत्तम् । ईकारान्तं यद्द्विवचनं तदन्तमिति पक्षेऽन्तरङ्गानपीति न्यायमबुद्ध्वा अशुक्ले शुक्ले सम्पद्येते शुक्ली अभवतामित्यादौ प्रगृह्यसंज्ञाया अभावाय प्रगृह्यसंज्ञाप्रकरणे निषेधवचनवदेवञ्चेयम्परिभाषा कर्त्तव्यैवेत्यलम् ।

प्रत्ययाप्रत्यययो॒प्रत्ययस्य ग्रहणम्—प्रत्ययत्वावच्छिन्नाप्रत्ययत्वावच्छिन्नोभयत्वावच्छिन्नप्रकारतानिरूपिता या· प्रत्ययत्वावच्छिन्ना विशेष्यता

ननु "विपराभ्यां जे"रित्यात्मनेपदं परा सेना जयतीत्यर्थके पराजयति सेनेत्यत्र प्राप्नोतीत्यत आह—

सहचरितासहचरितयोः सहचरितस्यैव ग्रहणम् ॥११२॥

तेन विशब्दसाहचर्यादुपसर्गस्यैव पराशब्दस्य ग्रहणमिति तत्रैव भाष्ये स्पष्टम्। सहचरणं सदृशयोरेवेति सहचरितशब्देन सादृश्यवानुच्यते। रामलक्ष्मणावित्यादावपि सादृश्यमेव नियामकम्। सदृशयोरेव सहविवक्षा तयोरेव सहप्रयोग इत्युत्सर्गाच्च। ध्वनितं चेदं "कर्मप्रवचनीययुक्ते द्वितीये"ति सूत्रे भाष्ये। तत्र हि "पंचम्यपाङ्परिभिरि"ति सूत्रेण लक्षणादिद्योतकपरियोगे पञ्चमीमाशङ्क्य यद्यप्ययं परिर्दृष्टापचारो वर्जने चावर्जने चाऽयं खल्वपशब्दोऽदृष्टापचारो वर्जनार्थ एव कर्मप्रवचनीयस्तस्य कोऽन्यः सहायो भवितुमर्हत्यन्या वर्जनार्थाद्यथास्य गोः सहायेनार्थ इति गौरेवानीयते नाश्वो न गर्दभ इत्युक्तम्। तेन हि सदृशानामेव प्रयोगे सहायभावो बोधितः।

---

तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टश्शाब्दबोधः।

एवं सहचरितासहचरितयोः, श्रुतानुमितयोः, लक्षणप्रतिपदोक्तयोः इत्यादिशाब्दबोधाः।

प्रत्ययप्रसङ्गादेवाह ननु विपराभ्यां जेरिति—सहचरिताऽसहचरितयोरिति—विशब्दसाहचर्य्यात् सदृशाऽसदृशयोरित्यर्थः। ननु शास्त्रे पक्षिवाचकोऽपि विशब्द एवञ्च तत्साहचर्यादुपसर्गस्यैव कथं ग्रहणमिति चेन्न? परस्परसाहचर्याश्रयणात् पराशब्दसाहचर्यात्पक्षिवाचकभिन्नविशब्दग्रहणन्तद्भिन्नश्चोपसर्ग एव तत्साहचर्यादुपसर्गपराशब्दग्रहणमिति परस्पराश्रयणे तात्पर्याभिधानात्। रामलक्ष्मणावित्यत्र रामसाहचर्याद्दुर्योधनाऽपत्यभिन्नबोधको लक्ष्मणशब्दो दुर्योधनापत्यभिन्नश्च लक्ष्मणपदबोध्यो दाशरथिरेव। तथाच दाशरथिसाहचर्याद्रामबोध्योपि दाशरथिरेव न परशुरामादिरिति पारस्पर्य्यम्। अत एव।

संयोगो विप्रयोगश्च साहचर्य्यम्विरोधिता।
अर्थः प्रकरणं लिङ्गंवाक्यस्यान्यस्य सन्निधिः॥
सामर्थ्यमौचितीदेशः कालो व्यक्तिस्स्वरादयः।
शब्दार्थस्यानवच्छेदे विशेषस्मृतिहेतवः॥

इत्यभिहितम्। सहचरिते शक्तिज्ञानाधीनोपस्थितिः सादृश्यज्ञानाधीनोपस्थितिश्चेति उपस्थितिद्वयम्।

द्वित्रिश्चतुरिति सूत्रे साहचर्येणैव कृत्वोऽर्थस्य ग्रहणे सिद्धे कृत्वोऽर्थग्रहणादेषाऽनित्या। तेन दीधीवेवीटामित्यत्र धातुसाहचर्येऽप्यागमस्येटो ग्रहणमित्यन्यत्र विस्तरः॥ ११२॥

नन्वस्थीत्यनङ् प्रियसक्थना ब्राह्मणेनेत्यत्र न स्यादङ्गस्य नपुंसकत्वाभावादत आह—

श्रुतानुमितयोः श्रुतसंबन्धो बलीयान्॥ ११३॥

श्रुतेनैव सम्बन्धो नानुमितेन प्रकरणादिप्राप्तेनेत्यर्थः। प्रकरणादितः श्रुतेर्बलवत्त्वादिति भावः।

---

अनित्येति—अत्र खण्डनप्रकारः "दीधीवेवीटामि"त्यत्र दीधीवेव्यौ हलनुबन्धकौ अर्थात्तयोर्ङकार इत्संज्ञकस्तत्साहचर्येण हलनुबन्धकस्यैवेटो ग्रहणमागमस्य नतु इट्धातोस्तत्र हलनुबन्धकत्वाभावात् धातुत्वेन साहचर्याश्रयणे दृढतरभाष्यादिप्रमाणाभावात्।

एवञ्च हलनुबन्धकत्वेन साहचर्यादागमस्यैवेटो ग्रहणम् "द्वित्रिश्चतुरि"ति सूत्रीयकृत्वोऽर्थग्रहणन्तु सुजन्तत्वेनैव साहचर्यन्नान्यधर्मेणेति व्याख्यानबोधनाय स्पष्टार्थमिति न तदनित्यत्वे ज्ञापकमिति मान्याः।

अत्र केचित्, प्रत्ययाऽप्रत्यययोः प्रत्ययस्यैव ग्रहणमिति न्यायेन तत्प्रत्याहारीयेट्प्रत्ययस्य ग्रहणं कुतोनेति पचेइत्यादौ गुणनिषेध~फलम् इति। अल्पाच्तरत्वेनेटः पूर्वनिपाताकरणादागमस्यैवेटो ग्रहणमिति कल्पनात् इति वदन्ति। तन्न? प्रत्ययग्रहणपरिभाषा नास्ति पचे इत्यादौ गुणश्चाद्गुण इत्यनेन दीधीवेवीति निषेधश्च प्रत्यासत्तिन्यायेन पुगन्तादिसूत्रस्येत्यलम्। नचार्थवद्ग्रहण(१)परिभाषया धातोरिटो ग्रहणमिति वाच्यम्? आनिलोडिति लोड्ग्रहणेन तस्या अनित्यत्वात्।

साहचर्यप्रसङ्गादाह ननु अस्थीति। प्रत्यक्षानुमितयो~प्रत्यक्षम्बलीयः सामान्यश्रुतिम्विशेषश्रुतिर्बाधते, अत्र श्रुतत्वम् साक्षादुच्चरितत्वम्। अन्य(२)तराकाङ्क्षाजन्यसम्बन्धत्वम् वा। अङ्गस्य नपुंसकत्वाभावादिति—नह्युपाधेरुपाधिर्वा भवति विशेषणस्य वा विशेषणम्, प्रधानाऽप्रधानयो~प्रधाने कार्यसम्प्रत्यय इति न्यायाभ्यां नपुंसकत्वस्याङ्गविशेषणत्वौचित्यात् प्रियसक्थनेत्यसङ्गतमिति भावः। प्रकरणादितश्श्रुतेरिति—'श्रुतिलिङ्गवाक्यप्रकर-

---

(१) प्रसङ्गादत्र किञ्चिद्-"प्रादूहोढ" इत्यत्र प्रऊढ इति दर्शनेन समर्थपरिभाषोपस्थित्या उत्तरपदाक्षेपेण च सामर्थ्ये उत्तरपदे च वृद्धिरित्येकदेशे न प्रवृत्तिः। ऊढश्च वटश्चेत्यूढवटौ प्रकृष्टावूढवटौ प्रोढवटावित्यत्र वृद्धिवारणाय गौणमुख्यन्याय आश्रयितव्यस्सचार्थवत्परिभाषाप्रवृत्त्यधीन इति परिभाषासाफल्यम्।

(२) भेदकूटावच्छिन्नप्रतियोगिताकभेदवत्त्वमन्यतमत्वम्। भेदद्वयावच्छिन्नप्रतियोगितावच्छेदकत्वमन्यतरत्वम्।

एवं च तत्र लिङ्गमस्थ्यादीनामेव विशेषणं नाङ्गस्य, शिशीलुग्नुम्विधिषु तु गृह्यमाणस्याभावात् प्रकरणप्राप्ताङ्गस्यैव विशेषणम् । अत एव "वा नपुंसकस्ये"ति सूत्रे वा शाविति न कृतम् । तत्र नपुंसकग्रहणं हि गृह्यमाणस्य शत्रन्तस्यैव नपुंसकत्वे यथा स्याद् बहवो ददतो येषु तानि कुलानि बहुददतीत्यत्र मा भूद् , बहूनि ददन्ति येषु ते बहुददन्त इत्यत्र यथा स्यादित्येवमर्थम् । स्पष्टं चेदं स्वमोर्नपुंसकादित्यत्र भाष्ये ।

केचित्त्वचो रहाभ्यां द्वे इत्यत्र श्रुतेन रेफस्य निमित्तत्वेन यरन्तेभावादनुमितं कार्यित्वं बाध्यत इत्येतदुदाहरणमाहुः । तन्न ? तक्रकौण्डिन्यन्यायेन सिद्धेरित्यन्यत्र विस्तरः ॥ ॥ ११३ ॥

ननु तत्पुरुषे तुल्यार्थ इति स्वरः परमेण कारकेण परमकारकेणेत्यादौ स्यात्तथा "गातिस्थाघुपाभूभ्य" इति लुक् पैआवै शोषण इत्यतः कृतात्वात्परस्यापि स्यादत आह—

## लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणम् ॥ ११४ ॥

लक्षणं लाक्षणिकमुपचारात् । तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो

---

स्थानसमाख्यानां पारदौर्बल्यमर्थाविप्रकर्षादि"तिजैमिनिसिद्धान्तसिद्धःपन्थाः। न्यायसिद्धेऽर्थे ज्ञापकमप्याह अतएवेति—तक्रकौण्डिन्यन्यायेन सिद्धेरिति ।

ननु येननाऽप्राप्तन्यायनिरूपणाऽवसरे तक्रकौण्डिन्यन्यायोऽनवकाशविषयो विधेयविषयश्चेति । अत्र निमित्तत्वस्याऽविधेयत्त्वादिति चेन्न ? तक्रकौण्डिन्यन्यायस्थलीयो यो यो न्यायो युक्तिरनवकाशस्वरूपा तया सिद्धेरिति फलति । यत्र यत्र रेफस्य निमित्तत्वं तत्र सर्वत्र वाक्यान्तरेण कार्यित्वस्य प्रसक्त्या निमित्तत्त्वमनवकाशमिति तेन न्यायेन, तद्रीत्या इत्यर्थात् ।

साधारणशाब्दिकास्तु "ग्रामह्रदोत्तरपदादि"ति सूत्रे ग्रामह्रदादित्यत्र द्विर्वचनाकरणं ज्ञापकन्तन्न? सर्वत्रशाकल्यस्येति निषेधात् हलो यमां यमीतिरेफलोपाच्च ।

अथ खण्डनप्रकारः—मद्रह्रदः भद्रह्रद इत्यादौ रेफस्य द्वित्वापत्त्यादिदोषभयेन माठरपरिवेषणन्यायेन सिद्धेरिति वक्तव्यम् इति वदन्ति । "शिशीलुङनुम्विधिषु गृह्यमाणस्याभावात्प्रकरणप्राप्ताङ्गस्यैव नपुंसकमिति विशेषणमिति शेखरोऽनुपपन्नः । नपुंसकान्तं यदङ्गमित्यर्थापत्तौ प्रियत्रय् इत्यादौ दूषणापत्तेः ।

एवञ्च विशेष्यविशेषणभावे कामचारानुज्ञेति सिद्धान्तोऽत एव सिद्धन्तु विशेषणविशेष्ययोर्यथेष्टत्वादिति भाष्यवार्त्तिकं सुगतमिति ।

लक्षणप्रतिपदोक्तयोरिति-उपचारादिति—लक्षणशब्दादर्शआदिभ्योऽजित्यच् इति नोपचारापेक्षा । यस्य स्वरूपलक्षणानुसन्धानजन्यसाधुत्वप्रति-

हि समासादिः प्रतिपदोक्तस्तस्यैव ग्रहणं शीघ्रोपस्थितिकत्वात्। द्वितीयो हि विलम्बोपस्थितिकः। पै इत्यस्य पा इति रूपं लक्षणानुसन्धानपूर्वकं विलम्बोपस्थितिकं पिबतेस्तु तच्छीघ्रोपस्थितिकम्। इदमेव ह्येतत्परिभाषाबीजम्। इयं च वर्णग्रहणेऽप्येतत्सूत्रे भाष्ये संचारितत्वात्।

---

पत्तिविषयस्तल्लाक्षणिकम्। प्रतिपदोक्तत्वन्तु साक्षादुच्चरितत्वम्। मान्यास्तु प्रतिपदोक्तभिन्नं लक्षणपदवाच्यमित्यूचुः। प्रतिपदोक्तत्वञ्च स्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीसजातीयानुपूर्वीमत्पदघटितशास्त्रविधेयत्वम्। यथा "घुमास्थे"ति शास्त्रीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वी पात्वरूपा तादृशानुपूर्वीमत्पदघटितं शास्त्रं पा पान इति तद्विधेयत्वं पाशब्दादाविति प्रकारः।

नन्वेवं लक्षणे "गतिकारकेतर"इति शास्त्रीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वी गतित्वरूपा तादृशानुपूर्वीमत्पदघटितशास्त्रविधेयत्वं "कुगतिप्रादय" इति समासस्यैव प्रतिपदोक्तत्वेन ग्रहणन्त्व"नेकमन्यपदार्थे" इति विहितसमासस्येति। तथाच आढ्यचै प्रढ्चै इति नेयङुवङिति भाष्योदाहरणे यण न स्यात् इति चेन्न? लाक्षणिकत्वेनाभिमतं प्रतिपदोक्तत्वेनाभिमतं यच्छास्त्रद्वयं तादृशशास्त्रद्वयीयविधेयतावच्छेदकरूपावच्छिन्नोद्देश्यताकत्वमेतत्परिभाषाप्रवृत्तौ लिङ्गम्। यथा "तत्पुरुषे तुल्यार्थ" इत्यादौ लाक्षणिकत्वेन प्रतिपदोक्तत्वेनाभिमतं यच्छास्त्रद्वयं "विशेषणम्विशेष्येणे"ति "तृतीया तत्कृत" इत्यादि तदीयविधेयतावच्छेदकं यत्तत्पुरुषत्वं तद्रूपावच्छिन्नोद्देश्यताकत्वमस्ति। तथा "घुमास्थे"तिशास्त्रे पापान इत्यस्य विधेयतावच्छेदकमानुमानिकस्थान्यादेशकल्पनया "आदेच" इत्यस्य विधेयतावच्छेदकं च यदात्वं तद्रूपावच्छिन्नोद्देश्यताकत्वमस्ति इति दोषाऽभावेनाक्षतेः।

ननु "गतिकारक"इत्यत्र प्रतिपदोक्तत्वेन लाक्षणिकत्वेनाभिमतं यच्छास्त्रं "कुगति' अनेकमन्ये"ति तदीयविधेयतावच्छेदकसमासत्वावच्छिन्नोद्देश्यताकत्वमस्त्येवेति वाच्यम्? भाष्ये वार्त्तिकस्वरूपन्तु "गतिकारकपूर्वस्यैवे" स्येव पूर्वपदाभावेन समासाक्षेपाऽसम्भवात्।

किञ्च यत्किञ्चिच्छास्त्रविशिष्टत्वं प्रतिपदोक्तत्वम्। वैशिष्टचञ्च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वस्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वैतदुभयसम्बन्धेन। आनुपूर्वीवैशिष्टचञ्च स्वावच्छिन्नत्वस्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्वैतदन्यतरसम्बन्धेन। प्रथमसम्बन्धफलं "गतिकारक" इति।

द्वितीयसम्बन्धफलं "विशेषणं विशेष्ये"ति लाक्षणिके न दोषः। द्वितीयसम्बन्धान्तर्गतावच्छिन्नत्वफलन्तु पापान इत्यादौ नाऽव्याप्तिः। तदन्तर्गत-

यत्तु वर्णग्रहणे नैषा आदेच इत्यत्रोपदेशग्रहणादिति तत्तु तस्मिन्नेव सूत्रे शब्देन्दुशेखरे दूषितमिति तत एव द्रष्टव्यम् ।

अनित्या चेयं भुवश्च महाव्याहृतेरिति महाव्याहृतिग्रहणादित्यन्यत्र विस्तरः ॥ ११४ ॥

नन्वेवं देङो देधातोश्च कृतात्त्वस्य घुसंज्ञा न स्यात्तथा मेङ आत्त्वे प्रणिमातेत्यादौ "नेर्गदनदे"ति णत्वं न स्यात्तथा गैङ्त्यस्यात्वे घुमास्थेतीत्वं न स्यादत आह—

गामादाग्रहणेष्वविशेषः ॥११५॥

अत्र च ज्ञापकं दैपः पित्त्वम् । तद्धि दाधाध्वदाबिति सामान्यग्रहणार्थम् । अन्यथा लाक्षणिकत्वादेव विधौ तदग्रहणे सिद्धे किं निषेधे सामान्यग्रहणार्थेन पित्त्वेन, तेन चैकदेशानुमतिद्वारा संपूर्णा परिभाषा ज्ञाप्यते ।

---

स्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपितत्वसम्बन्ध फलन्तु "तृतीया तत्कृत"इत्यादावव्याप्तचभाव एवेति । ओत्सूत्रस्थभाष्यन्त्वेकदेश्युक्तिरेव । अगोऽभवदित्यादौ गौणमुख्यन्यायेन समाधानम्ववता भाष्यकृता ध्वनितमिति ।

पूज्यचरणास्तु—यदर्थे विशेषणतया प्रतिपदोक्तत्वम्विवक्षितन्तद्विशिष्टत्वम्प्रतिपदोक्तत्वम् । वैशिष्ट्यञ्च स्ववृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविधेयताश्रयाऽघटितत्वस्वार्थान्वय्यर्थकपदवृत्त्यानुपूर्वीमत्पदप्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वैतदन्यतरसम्बन्धेन । यथा स्वन्तत्पुरुषपदन्तदर्थान्वय्यर्थकं पदन्तृतीयेति पदन्तद्वृत्त्यानुपूर्वीमत्पदं "तृतीया तत्कृतार्थे"तिघटकन्तृतीयापदन्तत्प्रयोज्योद्देश्यतानिरूपितविधेयताश्रयत्वन्तत्सूत्रविहित एवेति । एवम् "विभाषा दिक्समासे" इति सूत्रेऽपि । एवम्प्रथमसम्बन्धनिवेशफलन्तु"ओदि"तिसूत्रभाष्ये अदोऽभवदित्यत्र प्रगृह्यत्ववारणमेव। उपदेशग्रहणादिति—उपदेशग्रहणफलन्तु चेता स्तोतेति, तस्य लाक्षणिकत्वादेवात्वाऽप्राप्त्या तद्व्यर्थं सद्वर्णग्रहणे तदप्रवृत्तौ ज्ञापकम् । दूषितमिति—"उदीचाम्माङ" इत्यत्रानुबन्धसहितस्य धातुत्वाभावेऽपि आत्त्वार्थन्तत्र धातोरित्यस्याऽसम्बन्धावश्यकत्वेन गोभ्यामित्यादौ प्रतिपदोक्ते आत्त्वाभावायोपदेशग्रहणस्यावश्यकत्वेन ज्ञापकत्वाभावादोत्सूत्रस्थभाष्यविरोधाच्चेति ।

ननु डुधान् धापयतीत्यादौ चरितार्थं पुक् घेट आत्वेन लाक्षणिके न स्यादित्याशयेनाह—अनित्येति । भूः भुवौ भुव इति जसन्तव्यावृत्त्यर्थन्तत् ।

नन्वेवमिति—प्रतिपदोक्तपरिभाषायास्सत्त्व इत्यर्थः । न स्यादिति—लाक्षणिकत्वादिति भावः । अदाबिति—सामान्यग्रहणार्थमिति—"दाधाध्वदाबिति" सूत्रस्थदाप्पदेन दैपो ग्रहणाय दैप्शोधन इत्यत्रेत्संज्ञकः पकारः

इयं च लक्षणप्रतिपदोक्तपरिभाषानिरनुबन्धकपरिभाषालुग्विकरण-परिभाषाणां बाधिका । दाधाघ्विति सूत्रे भाष्ये स्पष्टा । गातिस्थेति सूत्रे इणादेशगाग्रहणमेवेष्यत इति न दोष इत्यन्यत्र विस्तरः ॥ ११५ ॥

ननु वृद्ध्यादिसंज्ञाः समुदाये स्युरत आह—

प्रत्येकं वाक्यपरिसमाप्तिः ॥ ११६ ॥

देवदत्तादयो भोज्यन्तामित्यत्र भुजिवत् ॥ ११६ ॥

नन्वेवं संयोगसंज्ञासमाससंज्ञाभ्यस्तसंज्ञा अपि प्रत्येकं स्युरत आह-

क्वचित्समुदायेऽपि ॥ ११७ ॥

गर्गाः शतं दण्डयन्तामर्थिनश्च राजानो हिरण्येन भवन्तीत्यादौ

---

सच दापदेन प्रतिपदोक्तदारूपग्रहणे निरनुबन्धकपरिभाषया निरनुबन्धकस्य ग्रहणेति विचारः ।

ननु परिभाषया गामादाग्रहणेष्वविशेषेऽपि धेट आत्वे लाक्षणिकत्वाद् घुत्वन्न स्यादिति चेन्न ? गाश्च माश्च दाग्रहणञ्चेति बहुव्रीह्युत्तरपदकद्वन्द्वाश्रयणेन गाशब्दे माशब्दे दाघटितसूत्रेचाऽविशेष इत्यर्थनाक्षतेः ।

अत्र सरयूपारीणशुक्लाः—गामादाग्रहणेष्वविशेषो वा इति परिभाषाऽऽकारः । क्वचिद्विशेषः क्वचिदविशेषः । वेति विकल्पार्थकपदयोजनेन निर्वाहे यदागमपरिभाषावतरणं खण्डनीयम्फलान्तरमन्वेष्यं यदागमपरिभाषाया इति कल्पयन्ति ।

गामादाग्रहणेष्वविशेषः-गामादा एतदन्यतमत्वावच्छिन्नप्रकारतानिरूपिता या ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या शास्त्रत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या विशेषत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रतियोगितानिरूपकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टः ।

१ प्रत्येकं वाक्यपरिसमाप्तिः २ क्वचित्समुदायेऽपि, ३ अभेदका गुणाः, ४ बाधकान्येव निपातनानि, ५ पर्य्यन्यवल्लक्षणप्रवृत्तिः, ६ निषेधाश्च बलीयांसः, ७ अनिर्दिष्टार्था प्रत्ययास्स्वार्थे, ८ योगविभागादिष्टसिद्धिरित्यासां शाब्दबोधस्फुटः ।

प्रत्येकमिति—विधेये उद्देश्यतावच्छेदकप्रतियोगिकपर्याप्तचनुयोगितावच्छेदकधर्मावच्छिन्नानुयोगिताकपर्याप्तिप्रतियोगित्वस्य भानमौत्सर्गिकमिति फलति । समुदाये इति—उद्देश्यत्वेनाश्रीयमाणयावदारब्धसमुदायपर्याप्तसंख्यावच्छिन्नानुयोगिताकपर्याप्तिप्रयोगित्वम्विधेये भासत इति नियमात् अत

खण्डनवत् । लक्ष्यानुरोधेन च व्यवस्था ॥ ११७ ॥

ननु यूस्त्र्याख्याविित्यत्र व्यक्तिपक्षे दीर्घनिर्देशाद्गणत्वेन ग्राहकसूत्राप्राप्त्योदात्ताद्यन्यतमोच्चारणेऽन्यस्वरकस्य संज्ञा न स्यादत आह—

अभेदका गुणाः ॥ ११८ ॥

असति(१)यत्ने स्वरूपेणोच्चारितो गुणो न भेदको न विवक्षित इत्यर्थः । अत्र चास्थिदध्नीत्यादावनङादेरुदात्तस्यैवोच्चारणेन सिद्ध उदात्तग्रहणं ज्ञापकम् । स्वरूपेणोच्चारित इत्युक्तेरनुदात्तादेरन्तोदात्तादित्युदात्तादिशब्दोच्चारणे विवक्षैव । उञ ऊँ इत्यत्राननुनासिक एवोच्चारणीये यत्नाधिक्येनानुनासिकोच्चारणाद्विवक्षा बोध्या । पथिमथ्यृभुक्षामित्यादौ स्थान्यनुरूपतयानुनासिक एवोच्चारणीये निरनुनासिकोच्चारणात्तद्विवक्षा । एतदर्थमेवासति यत्न इत्युक्तम् ।

नचैवमस्थ्यादीनां नञ्विषयस्येत्याद्युदात्ततयान्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीय उदात्तोच्चारणं विवक्षार्थं भविष्यतीति कथमस्य ज्ञापकत्वमिति वाच्यम् ? परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात् । चतसर्याद्युदात्त-

---

एवाभ्यस्तसंज्ञासूत्रे उभेग्रहणप्रत्याख्यानं "सह सुपे"त्यत्र सहेति योगविभागश्च सङ्गच्छेते ।

अभेदका गुणा इति—स्वेतरगुणविशिष्टव्यावर्त्तका नेत्यर्थः । असति यत्न इति—स्वोच्चारणातिरिक्तोदात्तादिशब्दोच्चारणादिव्यापारमन्तरेणैव गुणस्य बोधन इति तत्फलितमाह—स्वरूपेणोच्चारित इति । अत्रोदात्तग्रहणं ज्ञापकम् ।

अथ शेखरखण्डनप्रकारः—परेस्त्विरस्याभ्यनिपातनं नाम अन्यादृशे प्रयोगे प्राप्तेऽन्यादृशकरणम् । व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुरिति शेखरो न युक्तः ?

एवं व्याख्यानेऽस्थ्याद्यनङ्यपि व्याख्यानबलेन गम्यमानमुदात्तत्वं विवक्षार्थमिति उदात्तग्रहणज्ञापनपरभाष्यविरोधस्स्यात् । किञ्च व्याकरणशास्त्रे

---

(१) अभेदका गुणाः—संज्ञाविषयकविशेषनिर्णायकत्वमिह सन्दर्भहेतुः। असति यत्न इति गुणराहित्येनोच्चारणाऽयोगाद्धान्यपलालन्यायेन केनचिद्गुणेनोच्चरितायां वर्णव्यक्तौ उपलभ्यमानो गुणस्तद्वाच्यकोटौ न प्रविशतीति फलितार्थः । स्वरूपेणोच्चारितत्वञ्च श्रावणज्ञानविषयवर्णवृत्तित्वम् । गुणत्वञ्च सजातीयवर्णनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति विजातीयवर्णवृत्तित्वम् । साजात्यञ्च उच्चारणकालावच्छेदेन । वैजात्यन्तु स्थानेनेति, विभिन्नस्थानजन्यैकारादिवृत्तिह्रस्वत्वादेर्गुणत्ववारणाय सत्यन्तम् । परस्परवृत्तिसमानकालवदकारादिभेदीयप्रतियोगितावच्छेदकीभूतानामत्वादीनां गुणत्ववारणाय विशेष्यदलम् । आनुनासिक्यन्नामगुण इति वृद्धिरादैजिति सूत्रभाष्यम् ।

निपातनं करिष्यते। वधादेश आद्युदात्तनिपातनं करिष्यते। पदादयो-ऽन्तोदात्ता निपात्यन्ते। सहस्य स उदात्तो निपात्यत इत्यादिभाष्यं त्वे-कश्रुत्याष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन। त्रैस्वर्येण पाठ इति पक्षे तु ज्ञापकपरं भाष्यमिति कैयटादयः।

परे तु निपातनं नामान्यादृशे प्रयोगे प्राप्तेऽन्यादृशप्रयोगकरणं तत्त-द्रूपाद्यत्नात्तत्रतत्रोदात्तादिविवक्षा। तिसृचतसृत्रित्यत्र द्वन्द्वप्रयुक्तेऽन्तो-दात्त उच्चारणीय आद्युदात्तोच्चारणमन्यत्र स्थान्यनुरूपे स्वर उच्चार-णीये तत्तदुच्चारणं विवक्षार्थम्। संपूर्णाष्टाध्याय्याचार्येणैकश्रुत्या पठि-तेत्यत्र न मानम्। क्वचित्पदस्यैकश्रुत्यापि पाठो यथा दाण्डिनायनादि-सूत्रे ऐक्ष्वाकेति। यद्यध्येतार एकश्रुत्यैवाङ्गानि पठन्ति ब्राह्मणवत्त-थापि व्याख्यानतोऽनुनासिकत्वादिवदुदात्तनिपातनादिज्ञानमित्याहुः।

विधेयाणुविषये त्वप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रह-णम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः। अत-एव तन्नानालामिति सूत्रनिर्देशः। अन्यथा प्रत्यये भाषायामिति नित्यम-नुनासिकः स्यात्। जातिपक्षे तु नास्योपयोग इति बोध्यम्। यू इत्या-दौ दीर्घमात्रवृत्तिजातिनिर्देशान्न क्षतिरित्यन्यत्र विस्तरः ॥ ११८ ॥

ननु सर्वनामानीत्यत्र णत्वाभावनिपातनेऽपि लोके सणत्वप्रयोग-स्य साधुत्वं स्यादत आह—

बाधकान्येव निपातनानि ॥ ११९ ॥

तत्तत्कार्यं नाप्राप्ते निपातनारम्भात्। पुराणप्रोक्तेष्विति निपातितपु-राणशब्देन पुरातनशब्दस्य बाधः प्राप्तोऽपि पृषोदरादित्वान्नेति बोध्यम्।

---

यावत्कार्यजातं तत्सर्वमन्यथा प्रयोगे प्राप्ते क्रियते इति सर्वत्र तदुच्चारणम्वि-वक्षार्थं स्यात्। तिसृचतसृत्रित्यत्र द्वन्द्वप्रयुक्तान्तोदात्ते कर्त्तव्येऽन्यथोच्चारणं विवक्षार्थमित्यपि न युक्तश्शेखरः? अध्याद्यन्तञ्चपि "फिषोऽन्त" इत्य-न्तोदात्ते कर्त्तव्ये आद्युदात्तोच्चारणं विवक्षार्थं स्यादिति ज्ञापनपरभा-ष्यविरोधः।

एवञ्च कैयटोक्तमेव तत्त्वञ्ज्यायः। विधेयाण्विषयेऽप्रत्यय इति निषेधात् "मादुपधायाः" इति वत्वमनुनासिकन्नेत्यपि शेखरो न युक्तः? स्थानिनिष्ठ-गुणानुसारेणानुनासिक एवोच्चारणीये अननुनासिकस्य विवक्षाऽसम्भवात्।

बाधकान्येवेति—सर्वनामशब्दे णत्वाकरणेन पाणिनिना सर्वनामशब्दे णत्वन्नेति वचनम्बोधितम्। तथाच "पूर्वपदात्संज्ञायामगः" इति सूत्रविहित-कार्यस्य बाधः। नच तादृशनिर्देशेन सूत्रे सर्वनामशब्दे णत्वन्नेत्यत्र लाघवा-त्कल्प्यतामिति वाच्यम्? सर्वनामशब्दे णत्वन्नेत्यत्रैव विशिष्टलाघवात्।

पुराणेति पृषोदरादिः पुरातनेति चेत्यन्ये । इयं सर्वादिसूत्रे भाष्ये स्पष्टा अबाधकान्यपि निपातनानीति तु भाष्यविरुद्धम् ॥ ११९ ॥

ननूखधातोर्द्वित्वे स्वत एव ह्रस्वत्वात्पूर्वमभ्यासह्रस्वाप्रवृत्तौ हलादिः शेषे सवर्णदीर्घे ह्रस्वापत्तिरत आह—

पर्जन्यवल्लक्षणप्रवृत्तिः ॥ १२० ॥

[ लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते ]

एवं च ह्रस्वस्यापि ह्रस्वे कृते लक्ष्येलक्षणस्येति न्यायेन न पुनर्ह्रस्वः । तदुक्तमिकोझलिति सूत्रे भाष्ये । कृतकारि खल्वपि शास्त्रं पर्जन्यवदिति । सिद्धेऽपि ह्रस्वादिकारीत्यर्थः ।

---

भाष्यविरुद्धमिति—सर्वादिसूत्रस्थभाष्यविरुद्धमित्यर्थः । तत्र हि बाधकत्वस्यैवोक्तत्वात् । रघुनाथशब्दे णत्वाभावाय कृतणत्वेन यत्र संज्ञा गम्यते तत्रैव णत्वमिति व्याख्यानस्यावश्यकत्वेन सर्वनामसंज्ञायां णत्वाऽप्रवृत्तिरिति न रघुनाथेति संज्ञाया अनादित्वेन णत्वाभावः "छन्दोवत्सूत्राणि भवन्ती"तिवचनञ्चानुकूलतर्ककम् ।

पर्जन्यवल्लक्षणप्रवृत्तिरिति—'यथा जले स्थले चैव मेघो वर्षति सर्वदे'तिन्यायस्वरूपम् । तत्तच्छास्त्रं स्वीयोद्देश्यतावच्छेदकावच्छेदेन प्रवर्तेत इति न्यायोऽप्यनुगमकः । नहि प्रयोजनमुद्दिश्य मन्दोऽपीति न्यायावसरस्तु न ? दीर्घश्रवणरूपप्रयोजनस्य सत्त्वेन तत्त्वोपवर्णनात् ।

अथ पूर्वान्तावच्छेखरखण्डनप्रकारः—लक्ष्ये लक्षणं सकृदेवेत्यत्र "समस्सुटी"ति सूत्रम्मानमिति ग्रन्थो न युक्ततरः ? भाष्यवचनेन सूत्रवैयर्थ्यं सम्पाद्य ज्ञापकत्ववर्णनस्याऽयुक्तत्वात् । स एवायं सकार इति तत्त्वप्रत्यभिज्ञया तत्र सकारव्यक्तिभेदाऽभावेन पुनर्द्वित्वशास्त्राऽप्रवृत्त्या त्रिसकारकरूपार्थन्तस्यावश्यकत्वाच्च प्रवृत्तिसामग्रीसत्त्वात्पुनर्द्वित्वं पुनर्द्वित्वं पुनर्द्वित्वमिति प्रवाहस्तु नानवस्थादोषप्रसङ्गादिति सरयूपारीणशुक्लाः ।

नच स्थानिसकारादन्य एवादेशसकार इति वाच्यम् ? एवं द्वित्वशास्त्रप्रवृत्तेरविरामप्रसङ्गात् । व्यक्त्यन्तरपदेन वैरूप्यविशिष्टव्यक्तेरेव ग्रहणौचित्यात् "सम्प्रसारणाच्चे"ति सूत्रभाष्ये "सम्प्रसारणपूर्वत्वे समानाङ्गग्रहणं कर्त्तव्यं शकहर्थमि"त्यत्र संप्रसारणपूर्वत्वं भवति तस्य प्रयोजनमुक्त्वा कार्यकृतत्वाद्वा सिद्धमिति प्रतिज्ञाय सकृत् शास्त्रं कृतमिति कृत्वा पुनर्न भविष्यतीत्युपपाद्य विषम उपन्यास इत्यादिना तस्मादपरिहार इत्यन्तेन सकृत् कार्यस्य कृतत्वादिति समाधानं दूषितमेव । कैयटोऽपि शास्त्रस्याऽस्मिन्विषये प्रवृत्तत्वात् पुनः प्रवृत्त्यभाव इति परिहाराभिप्रायमुक्त्वा फलभेदे पुनश्शास्त्रं प्रवर्त्तत एवेति दूषणग्रन्थाशयमुक्तवान् । "सहिवहोरोदवर्णस्ये"ति वर्णग्रहणमप्यत्रांशे बीज-

न च लक्ष्ये लक्षणस्य सकृदेव प्रवृत्तिरित्यत्र न मानमिति वाच्यम्? समो वा लोपमेक इति लोपेनैकसकारस्य द्वित्वेन द्विसकारस्य पुनर्द्वित्वेन च त्रिसकारस्य सिद्धौ समः सुटीति सूत्रस्यैव(१) मानत्वात् । "सम्प्रसारणाच्च' सिचि वृद्धि"रित्यादौ भाष्ये स्पष्टमुक्तत्वाच्च ।

---

न्तथाहि—वर्णग्रहणं प्रागेव वृद्धिप्रवृत्त्यर्थम् । यदि आत्वे कृते "सम्प्रसारणाच्चे"ति सूत्रभाष्योक्तरीत्या व्यक्तिभेदात्पुनर्वृद्धि॰ प्रवृत्ता स्यात्तर्हि प्राक् प्रवृत्तो॰ प्रयोजनाभावाद् व्यर्थमेव तत्स्यात् । यदि च व्यक्तिभेदेऽपि नियमेन सकृदेव शास्त्रप्रवृत्तिस्स्यात्तर्हि "न संप्रसारणे" इति सूत्रं "ष्यङस्सम्प्रसारणमि"ति सूत्रभाष्यं "सम्प्रसारणाच्च"इति सूत्रभाष्यं "चिणोलुगि"ति सूत्रभाष्यं "शदेश्शित" इति सूत्रभाष्येऽस्तु शब्दान्तरस्याकृत आडिति कृत्वा पुनराड् भविष्यतीति भाष्यञ्च विरुद्ध्येत । एवञ्च प्रमाणाऽभावाद् भाष्यविरोधाच्च लक्ष्ये लक्षणं सकृदेव प्रवर्त्तत इति सर्वथा विशेषसिद्धान्तविरुद्धः ।

अथ स्वीकारपक्षे लक्ष्ये लक्षणं सकृदेवेत्यस्यार्थः—एकस्मिन् स्वीयलक्ष्ये

---

(१) पर्य्यन्यवल्लक्षणप्रवृत्तिरिति, सूत्रस्यैव मानत्वादिति-सूत्रेष्वेव हि तत्सर्वं यद्वृत्तौ यच्च वार्त्तिक इत्यभियुक्तवाक्याद्वार्त्तिकमपि सूत्रकाराभिप्रेतमेव । अत्र केचित्, ढ्रयोरहति सूत्रीयद्विर्वचनग्रहणं ज्ञापकन्तच्च दध्र इत्यादाविरयोरेभावे क्रादिनियमप्रापितेडागमविशिष्टस्य पुनारेभावार्थम्, परिभाषाया असत्त्वे रेभावस्येडागमोत्तरं पुनः प्रवृत्तेरयत्नत एव रूपसिद्धौ तद्वैयर्थ्यापत्तेस्सौष्ठवात् । नच रेभावे कृते हीडागमे रेभावविधानसामर्थ्यादिटोऽप्रवृत्त्या द्विवचनस्य चारितार्थ्याभावात् कथमुक्तार्थज्ञापकत्वमिति वाच्यम्? इडविषये चक्र इत्यादौ चारितार्थ्येन क्रादिनियमप्रापितेडागमविषये दध्र इत्यादौ प्रसक्तस्य तस्य निवृत्त्युपायाभावेन द्विवचननिर्देशचारितार्थ्यात् । नच द्विवचनाभावे रेभावोत्तरमिडागम इडागमोत्तरं रेभाव इति चक्रकदोषाद् व्यवस्था न स्यात् द्विवचने तु ढ्रयोरेभावस्यापीडागमविशिष्टस्य प्रसङ्गे रेभाव इति व्याख्यानादिडागमाऽप्रवृत्त्या चक्रकनिवर्तने सामर्थ्योपक्षयात्कथं ज्ञापकत्वमिति वाच्यम् ।
शास्त्राणां हि व्यवस्थाकारित्वनियमसिद्धाच्चक्रकेष्विष्टतो व्यवस्थेति भाष्यकृत्सिद्धान्तादिडागमनिवृत्तेस्सत्यां पुनः प्रवृत्तौ द्विवचनमन्तरेणाऽपीष्टसिद्धेरिति तन्न? स्वविधेयस्य स्वकीयवाक्यार्थबोधवेलायामसिद्धत्वेन सिद्धधर्मोद्देश्यतायास्तत्र बाधितत्वात्सामर्थ्यात्संग्रहार्थमावश्यकस्य द्विवचनग्रहणस्य निरुक्तार्थज्ञापकत्वाऽयोगात । नच स्वविधेयस्य स्वस्मिन्नुद्देश्यत्वाभावे षट्त्सन्त इत्यादौ चर्त्वंनिष्पन्नं तकारमादाय डकारस्य चर्त्वं न स्यादिति वाच्यम्? डकारस्य चर्त्वविधानार्थं यल्लक्षणन्तत्र तकारस्याविधेयत्वाभावेनोद्देश्यत्वसिद्धेः । किञ्च रेभावस्येडागमविशिष्टस्य लाक्षणिकत्वेन पुनारेभावाऽप्रवृत्त्या द्विवचनावश्यकत्वेन ज्ञापकत्वाऽसम्भवात् । न च आनन्त्यापत्तिरेव परिभाषायाम्मानमिति अन्यथाऽनवस्थादोषेण शास्त्राणामव्यवस्थापकत्वं स्यादिति वाच्यम्? उदवोढामित्यादौ प्रकृतपरिभाषया वृद्धिनिवारणपरभाष्यविरोधापत्तेः। न च आनन्त्यापत्तिरित्यस्य अपरिनिष्ठितत्वापत्तिरितिभाव इति द्वित्वस्य वैकल्पिकत्वेन यावच्छक्तित्वघटितप्रयोगस्य परिनिष्ठितत्वसम्भवेन तद्विषये न परिभाषाप्रवृत्तिरिति मूलं युक्ततरमिति चन्द्रिकाकाराः

अत्र विकारकृतो (१)लक्ष्यभेदो नेति सिचि वृद्धिरिति भाष्यात्प्रतीयत इत्यन्यत्र विस्तरः ॥ १२० ॥

एवं सकृदेव प्रवर्त्तेत इति तात्पर्य्यम् । "वदव्रजे"त्यस्य लक्ष्यमुदवहसतामिति तदभिन्नमेवोदवोढामिति तत्र चेत्प्रवृत्तं तदभिन्ने तस्मिन्न पुन प्रवर्त्तेत इति । ननु तत्तत्कालोच्चरितस्य भेदात्कथमभेदः ? नच लक्ष्ये लक्षणं सकृदेव प्रवर्त्तेत इति चेत् राम इति लक्ष्ये लक्षणमर्थवत्सूत्रं प्रवृत्तं पुना रामावित्यत्र न प्रवर्त्ततेति, अथवा राम इति लक्ष्ये प्रवृत्तमर्थवत्सूत्रं सर्व इत्यत्र न प्रवर्त्ततेति प्रश्नः ? तल्लक्ष्ये तल्लक्षणं सकृदेवेत्यर्थात् । नचैवमपि तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षितवक्तृजिज्ञासितधर्मावच्छिन्ने शक्तं तत्पदमिति विशेषविवरणेन व्यक्तिभेदोऽस्त्येवेति वाच्यम् ? स्वविशिष्टं स्वतो भिन्नन्न भवतीति । वैशिष्ट्यञ्च स्वाऽघटकत्वस्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वसम्बन्धेन । स्वविशिष्टाऽघटितत्वसम्बन्धेन । स्वपदेन उदवहसतामिति लक्ष्यम् तद्विशिष्टमुदवोढामिति ओकारस्य पूर्वलक्ष्यघटकत्वाभावेऽपि द्वितीयसम्बन्धाऽभावात्, वकारे द्वितीयसम्बन्धसत्त्वेऽपि आद्याभावात् । एवम्विध उदासीनो वर्ण उभयसम्बन्धेन तद्विशिष्टस्तदघटितत्वात्तदभिन्नत्वेन सिद्धिः । यूनः लिट्त्स्विति दोषवारणाय तल्लक्ष्यत्वञ्च स्वीयप्रथमप्रवृत्तावुद्देश्यत्वेनाश्रीयमाणसमुदायविशिष्टाऽघटितत्वस्वघटकोद्देश्यकप्राप्तिविशिष्टप्राप्तिविषयाऽघटितत्वमित्युभयसम्बन्धेन । प्रथमवैशिष्ट्यञ्च स्वाऽघटकत्व(२)स्वघटकमात्रोद्देश्यकविकारा·

(१) पर्य्यन्यवल्लक्षणप्रवृत्तिः—नन्वपूर्वकारित्वं हि शास्त्रस्य लक्षणम् स्वरूपम्वा । एवञ्च यत्र प्रवृत्तावप्रवृत्तौ वा विशेषाभावस्तत्र स्वरूपविघातादयोग्यत्वेन तस्याऽप्रवृत्तिरेव युक्ता । तदुक्तम्भाष्ये अकृतकारि खल्वपि शास्त्रमग्निवत् तद्यथा अग्निर्यददग्धन्तद्दहति यत्तु दग्धं पुनर्न दहति तस्मात्कथं पर्य्यन्यवच्छास्त्रप्रवृत्तिरिति प्रश्नः ? मोराजिसमः क्वाविति सूत्रे यथा स्वरूपावस्थापनेन रूपान्तरनिवर्त्तकत्वम्, अपूर्वकारित्वन्न केवलरूपान्तरसम्पादकत्वमपि तु रूपान्तरनिवर्त्तकत्वमपि विनिगमनाविरहात् । तथाचापूर्वकारित्वं रूपान्तरनिवर्त्तकत्वमपि । किञ्च शास्त्राणामसति निषेधे प्रयोजनमेव प्रधानं प्रवृत्तिबीजम् । ततश्च खट्वानामित्यादौ नामीति दीर्घप्रवृत्तेस्सुतरां प्रयोजनाभावस्तत्र न नामीत्यस्य प्रवृत्तिः यत्र तत्पूर्वं प्रवृत्तस्य ह्रस्वादे पश्चादप्रवृत्तिलक्षणमूलतुरित्यादौ प्रयोजनं सम्भवति तत्र ह्रस्व इति शास्त्रप्रवृत्ति केन वारणीया । एवञ्च सति प्रयोजने प्रवृत्तिकालिकस्वरूपविशेषाभावेऽपि पर्य्यन्यवल्लक्षणप्रवर्त्तनम्, तदाह ह्रस्वे कृते इति । दीर्घात्पूर्वमाङ्गत्वादिति भावः ।

(२) घटकत्वम्—तद्विषयताव्यापकविषयतावत्त्वम् । स्वभिन्नत्व स्वव्यापकत्वमित्येतदुभयसम्बन्धेन विषयताविशिष्टविषयतावत्त्वम् इत्यर्थः । यथा वह्न्यभावज्ञानीयविषयताव्यापकत्वस्य वह्निविषयतायां सत्त्वेन वह्नेर्वह्न्यभावघटकत्वम् । केचित्तु अवच्छेदकत्वनाम्ना वदन्त्येतत्, यथा साध्याभावाधिकरणत्वञ्च साध्यवत्ताग्रहविरोधिताघटकसम्बन्धेन विवक्षणीयम् । साध्याभावप्रतियोगित्वञ्च साध्यताघटकसम्बन्धेन विवक्षणी·

ननु स्यन्दूधातोः स्यन्त्स्यतीत्यादावात्मनेपदनिमित्तत्वाभावनिमित्तत्वा"न्न वृद्भ्यश्चतुर्भ्य"इति निषेधस्य बहिरङ्गत्वेनान्तरङ्गत्वादूदिल्लक्षणस्येड्विकल्पस्यापत्तिरत आह—

निषेधाश्च बलीयांसः ॥ १२१ ॥

अन्तरङ्गादुपजीव्यादपि बलीयांस इत्यर्थः। चतुर्भ्य इति तु स्पष्टार्थमेव। अत एव तत्प्रत्याख्यानं भाष्योक्तं सङ्गच्छते।

अत एव सवर्णसंज्ञादेर्निषेधविषये न विकल्पः। अन्यथा मीमांसकरीत्या विधेरुपजीव्यत्वेन प्राबल्यात्तस्य सर्वथा बाधानुपपत्त्या दुर्वारः स इति मञ्जूषायां विस्तरः। अत एव "द्वन्द्वे च" विभाषा जसीति" चरितार्थम्। विध्युन्मूलनाय प्रवृत्तिरस्या बीजम्। "न लुमता" कमेर्णिङि" त्यनयोर्भाष्ये स्पष्टैषा ॥ १२१ ॥

---

तिरिक्तत्वोभयसम्बन्धेन। द्वितीयवैशिष्ट्यञ्च स्वभिन्नत्वस्वानुत्तरकालिकत्वस्वनिरूपकशास्त्रनिरूपितत्वमिति त्रितयसम्बन्धेन।

नच या सेत्यादौ एकादेशे काण्ड इतिवत्तल्लक्ष्यत्वाभावात् "त्यदादीनाम" इति अत्वापत्तिरिति वाच्यम्? मात्रग्रहणेन स्वोद्देश्यकविभक्त्यनुद्देश्यकत्वं गृह्यते "नयासयोरि"ति सूत्रनिर्देशेनानित्यत्वात्। दीव्यतीत्यत्र श्यन् दध्यत्रेत्यत्र द्वित्वे द्वित्वं द्वित्वे द्वित्वमिति धारा तु न? अनवस्थापातात्, विकरणविशिष्टे कर्त्रर्थत्वाभावेन विकरणाप्राप्तेश्च।

ननु स्यन्दू इति—निषेधाश्च बलीयांस इति—वृद्भ्य इति बहुवचन निर्देशेन वृतादिषु सर्वेषु "नवृद्भ्य"इति निषेधेन प्रवर्त्तनीयमेवेतिकल्पनेन अन्तरङ्गस्याऽपि विकल्पस्य प्रतिषेधसिद्धेः। अत एव हि चतुर्ग्रहणप्रत्याख्यानपरभाष्ये क्रुपेरनन्तरम्वृत्करणात् इत्ययमर्थ कैयटेन विवृतः। अतो न प्रथमम्प्रयोजनम्। द्वितीयमपि न? अपौरुषेये हि वाक्ये तात्पर्य्यस्य शास्त्रैकगम्यतया प्राप्तिं विना निषेधाऽयोगात्। प्राप्तिश्च शास्त्रातिरिक्तप्रमाणेन असम्भवाऽप्रापकशास्त्रस्याप्रामाण्यायोगात्। तत्र विकल्पतो मीमांसकैः विध्युन्मूलनाय प्रवृत्तिरस्या बीजम्।

नन्वत्यन्तस्वार्थिकप्रत्यये कथं प्रत्ययत्वम्, प्रत्येत्यर्थम्बोधयतीति प्रत्ययः स्वीयमर्थम्प्रत्याययतीति प्रत्ययइति भाष्यञ्चेति प्रश्नः। भाष्यप्रामाण्यात्स्वस्वप्रकृत्यन्यतरार्थप्रत्यायकत्वं प्रत्ययत्वमिति लक्षणम्। प्रत्यय इति महासंज्ञाकरणादर्थजिज्ञासायामन्यानुपस्थितिरस्या बीजम्। "यावादिभ्यः कन् गुप्तिज्कि-

---

यम् इत्यादौ घटकत्वम्। तान्त्रिकास्तु योजकत्वमिति नाम्नाऽभिदधति। तद्भेदाश्च—

भावको भावकश्चैव योजकश्चांशकस्तथा।
तूषकः स्तावकश्चैव षडेते घटकाः स्मृताः॥ इति।

नन्वत्यन्तस्वार्थिकानामर्थप्रत्यायकत्वरूपप्रत्ययत्वानुपपत्तिरत आह–

**अनिर्दिष्टार्थाः प्रत्ययाः स्वार्थे ॥ १२२ ॥**

यस्यार्थः प्रकृत्या प्रत्याय्यते सोऽपि प्रत्यय इत्यस्याप्यङ्गीकारात्तस्य प्रत्ययत्वमिति न दोषः। स्वार्थ इत्यस्य स्वीयप्रकृत्यर्थ इत्यर्थः। महासंज्ञाबलादर्थाकाङ्क्षायामन्यानुपस्थितिरस्या बीजम्। "सुपि स्थ" इत्यादिसूत्रेषु भाष्ये स्पष्टैषा ॥ १२२ ॥

**योगविभागादिष्टसिद्धिः ॥ १२३ ॥**

इष्टसिद्धिरेव(१)न त्वनिष्टापादनं कार्यमित्यर्थः। तत्तत्समानविधेयकद्वितीययोगेन विभक्तस्यानित्यत्वज्ञापनमेतद्बीजम् ॥ १२३ ॥

---

ञ्चस्सनि"त्युदाहरणम्। यावक इत्यत्रापि कन्प्रत्ययसंज्ञा। तथाहि त्रिविधा अर्थवत्ता लौकिकी १ अन्वयव्यतिरेकसमधिगम्या २ प्रतिज्ञाप्रापिता च ३। तत्र लौकिकी तावत् पद एव नास्ति किं पुनस्तदेकदेशस्य प्रवृत्तिनिवृत्तिभ्यां लोके शब्दोऽर्थवान् भवति प्रवृत्तिनिवृत्ती च वाक्ये दृष्टे तस्यैव लौकिकी। अन्वयव्यतिरेकसमधिगम्या यथा ण्वुलादीनां कर्त्रादिः। प्रतिज्ञाप्रापिता यथा क्विबादीनां कर्त्रादिः नह्यसावन्वयव्यतिरेकसमधिगम्या क्विबादीनां व्यतिरेक एव नान्वयः? श्रवणाभावात्। तथा च प्रतिज्ञाप्रापितायाः अर्थवत्तायाः तत्फलमेवानिर्दिष्टार्थाः प्रत्यया इति यस्मात्तेऽप्यर्थं प्रतियन्तीति तेऽपि प्रत्यया एव। विकारागमयोस्तु न प्रत्ययत्वम्? सविकारागमायाः प्रकृतेरेवार्थवत्त्वान्न केवलायाः। यत्र प्रकृतिः पृथगर्थमाह तत्रैव नष्टपितृधनन्यायेन विघातव्यस्याप्यर्थवत्त्वम्। विकारागमयोस्तु प्रवृत्तयोः प्रकृतेः पृथङ्नार्थवत्त्वं सविकारागमायाः प्रकृतेरर्थवत्त्वात्।

ननु "गुप्तिज्किद्भ्यस्सनि"त्यत्र गुपेर्निन्दायाम् गुपादिषु निन्दादेस्स्वार्थस्याऽप्रतीतेः। गुपादीनां निन्दादयस्स्वार्था विद्यन्त एव वार्तिकारम्भसामर्थ्यात् इति।

योगविभागादिति–योगविभागस्य भाष्यमूलकत्वेन लक्ष्यसाधकत्वादनिष्टापादनन्निरर्थकमित्याशयः।

---

(१) योगविभागादिष्टसिद्धिः–विश्वतोमुखत्वात्सूत्राणां योगविभागेऽपि आचार्यतात्पर्यकल्पनमविरुद्धम्, तदुक्तमभियुक्तैः–अल्पाक्षरमसन्दिग्धं सारवद् विश्वतो मुखम्। अस्तोभमनवद्यञ्च सूत्रं सूत्रविदो विदुः॥ अल्पाक्षरत्वञ्च प्रतिपिपादयिषितार्थविषयकप्रतिपत्तिजनकप्रकारान्तरापेक्षया न्यूनवर्णकत्वम्। असन्दिग्धत्वञ्च स्वगतसन्देहनिवर्तकप्रमाणान्तराऽनपेक्षत्वम्। सारवत्त्वञ्च साक्षात्प्रवर्तकत्वम्। विश्वतोमुखत्वञ्च योगविभागादिभिरनेकार्थबोधकत्वम्। अस्तोभत्वञ्च अनर्थकपदरहितत्वम्। अनवद्यत्वञ्च पारायणेनापि फलजनकत्वम्। सुपिस्थ इति सूत्रभाष्ये ध्वनितमेतत्। तत्रहि स्थ इति योगविभागेन विधीयमानकप्रत्ययस्य भावार्थकत्वमेव नत्वन्यार्थकत्वम् इत्युक्तम्।

पर्यायशब्दानां लाघवगौरवचर्चा नाद्रियते ॥ १२४ ॥

तत्रतत्रान्यतरस्यां विभाषा वेति सूत्रनिर्देशज्ञापितमिदम् ॥ १२४ ॥

ज्ञापकसिद्धं न सर्वत्र ॥ १२५ ॥

स्पष्टमेव पठितव्येऽनुमानाद् बोधनमसार्वत्रिकत्वार्थमित्यर्थः। तेन ज्ञापकसिद्धपरिभाषयानिष्टं नापादनीयमिति तात्पर्यम्। भाष्येऽपि ध्वनित(१)मेतत् ङ्याप्सूत्रादौ।

ज्ञापकेति न्यायस्याप्युपलक्षणम्। न्यायज्ञापकसिद्धानामपि केषाञ्चित्कथनमन्येषामनित्यत्वबोधनायेति भावः। यथा तत्स्थानापन्ने तद्धर्मलाभ इति न्यायसिद्धं स्थानवत्सूत्रं, ज्ञापकसिद्धं च तत्रानल्विधाविति ॥ १२५ ॥

ननु द्रोग्धा द्रोग्धा द्रोढा द्रोढेत्यादौ घत्वादीनामसिद्धत्वात्पूर्वं द्वित्वे एकत्र घत्वमपरत्र ढत्वमित्यस्याप्यापत्तिरत आह—

पूर्वत्रासिद्धीयमद्वित्वे ॥ १२६ ॥

---

पर्यायशब्दानामिति—अन्यतरस्याम्विभाषावेति सूत्रनिर्देशः—प्रमाणम्।

निष्ठत्वं षष्ठ्यर्थः, पर्य्यायशब्दनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या लाघवगौरवान्यतरत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या चर्चात्वावच्छिन्ना विशेष्यता आचार्यत्वावच्छिन्नकर्तृत्वावच्छिन्नप्रकारतानिरूपिता च आदृतत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठप्रकारतानिरूपितविशेष्यताश्रयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता चर्चात्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

ज्ञापकसिद्धमिति—विद्यमानं सदितरोपस्थापकत्वमुपलक्षणत्वमिति ज्ञापकेति न्यायस्याऽप्युपलक्षणमिति लक्ष्येऽनिष्टापादनं यथा नस्यात्तदर्थमयन्न्यायः।

ज्ञापकसिद्धं न सर्वत्र—ज्ञापकनिष्ठकर्तृतानिरूपिता या सिद्धत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वप्रतियोगिकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यता सर्वविषया।

पूर्वत्रासिद्धीयमिति-पूर्वत्राऽसिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम्।

---

(१) ज्ञापकसिद्धन्न सर्वत्र-पूर्वपरिभाषया आद्रियते इत्यस्यानुवृत्तिः, ज्ञापकसिद्धं सर्वत्र नाद्रियत इति परिभाषार्थः। ननु स्पष्टपाठे गौरवन्तथाहि पाठश्च शब्दोच्चारणप्रयोजककण्ठताल्वोष्ठपुटव्यापार एव नतु ज्ञानजनकमनोव्यापार इत्यनुशासनादनुभवाच्चेत्येतत्सर्वमभिप्रेत्याह भाष्ये ध्वनितमिति। जग्धिविधौ ल्यब्ग्रहणमत्र ज्ञापकमन्यथा स्थानिवद्भावेन तादित्वमादाय ल्यप्यपि जग्धिभावसिद्धौ किन्तेनेत्यन्यत्सुगमम्।

द्वित्वभिन्ने पूर्वत्र कर्तव्ये परमसिद्धमित्यर्थः । पूर्वत्रासिद्धमित्यधिकारभवं शास्त्रमस्या लिङ्गम् । यत्र च सिद्धत्वासिद्धत्वयोः फले विशेषस्तत्रैवेयम् । कृष्णर्द्धिरित्यादौ जश्त्वात्पूर्वमनन्तरं वा द्वित्वे रूपे विशेषाभावेन नास्याः प्रवृत्तिरित्यन्यत्र विस्तरः । "सर्वस्य द्वे" इति सूत्रे भाष्ये (१)स्पष्टेयम् ॥ १२६ ॥

ननु गोष्वश्वेषु च स्वामीत्यादिवद् गोष्वश्वानां च स्वामीत्यपि स्यात्स्वामीश्वरेति सूत्रेण षष्ठीसप्तम्योर्विधानादत आह—

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति ॥ १२७ ॥

यत्रान्याकृतिकरणे भिन्नार्थत्वसम्भावना तद्विषयोऽयं न्याय इत्यन्यत्र विस्तरः । "कृञ्चानुप्रयुज्यते" इति सूत्रे भाष्ये स्पष्टेयम् ॥१२७॥

---

फलविशेषेऽस्याः प्रवृत्तिः । कृष्णर्द्धिरित्यत्र जश्त्वात्पूर्वं पश्चाद्वा द्वित्वे रूपे विशेषाभावेन तत्र नेयम्प्रवर्त्तते । द्वित्वभिन्ने पूर्वत्र कर्त्तव्ये परमसिद्धमित्यर्थः । "नमुने"इति सूत्रे योगविभागादियं सिद्धा । योगविभागस्य भाष्यानुक्तत्वेऽपि लक्ष्यानुरोधादियम्माननीयेति । फलन्द्रोग्धा द्रोढेत्यादीनां सिद्धिरेव ।

पूर्वत्रासिद्धीयमद्वित्वे—द्वित्वभिन्नत्वावच्छिन्नप्रकारतानिरूपितकार्यत्वावच्छिन्नविशेष्यत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नप्रकारतानिरूपिता पूर्वत्रासिद्धीयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः ।

कार्यद्वयविधानप्रसङ्गादाह—ननु गोषु अश्वेष्विति । एकस्या आकृतेरिति—आकृतिर्नाम श्रावणप्रत्यक्षविषयतावच्छेदकधर्मः, चरितः प्रयोग इत्यर्थः । तेन स्वस्वामिभावलक्षणे सम्बन्धे गवां स्वामीति षष्ठ्या प्रतिपादयितुमुपक्रान्ते अश्वस्वामित्वप्रतिपादनाय षष्ठ्येव भवति । उपस्थितिलाघवम्मूलम् ।

एकस्या आकृतेश्चरितः प्रयोगो द्वितीयस्यास्तृतीयस्याश्च न भविष्यति—समवायसम्बन्धावच्छिन्नैकत्वावच्छिन्नैकनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या आकृतित्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता चरितत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रयोगत्वावच्छिन्ना

---

(१) पूर्वत्राऽसिद्धीयमद्वित्वे—वाचनिकानामसार्वत्रिकत्वं वचनैकसाध्यमिति द्योतनार्थमिहैतस्या उपन्यासः पूर्वत्राऽसिद्धशब्दोऽधिकारपरः, गहादेराकृतिगणत्वेन भवार्थे छप्रत्ययः, एवञ्च पूर्वत्राऽसिद्धमित्यधिकारे यच्छास्त्रं तत्राऽद्वित्व इत्युपतिष्ठत इति वर्णार्थः । अत्र षाष्ठं धातुद्वित्वम् । आष्टमिकं पदद्वित्वम् । वर्णद्वित्वञ्च विनिगमनाविरहाद् गृह्यते ।

नतु विव्याधेत्यादौ परत्वाद्धलादिः शेषे वस्य सम्प्रसारणं स्यादत आह—

सम्प्रसारणं तदाश्रयं च कार्यं बलवत् ॥ १२८ ॥

तदाश्रयं "सम्प्रसारणाच्चे"ति पूर्वरूपम्। वस्तुते "लिट्यभ्यासस्ये"ति सूत्रे उभयेषांग्रहणस्योभयेषां सम्प्रसारणमेव यथा स्यादित्यर्थकत्वेनेदं सिद्धमित्येषा व्यर्थेति लिट्यभ्यासस्येति सूत्रे भाष्ये स्पष्टम्। फलान्तरान्यथासिद्धिरपि तत्रैव भाष्ये स्पष्टा। "णौ च संश्चङो"रित्यादौ संश्चङोरित्यादि विषयसप्तमीति तत्रापि न दोष इत्यन्यत्र विस्तरः ॥ १२८ ॥

यत्तु—

क्वचिद्विकृतिः प्रकृतिं गृह्णाति ॥ १२९ ॥

तेन "निसमुपविभ्यो ह्व" इत्यत्र ह्वाग्रहणेन ह्वेञो ग्रहणसिद्धिः।

---

विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता द्वितीयाकृतित्वावच्छिन्नतृतीयाकृतित्वावच्छिन्नविशेष्यत्वावच्छिन्ना कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नपरिच्छिन्नत्वसम्बन्धावच्छिन्नभविष्यत्कालत्वावच्छिन्नप्रकारतानिरूपिता या सत्तात्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वप्रतियोगिकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या नञर्थभेदत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः।

पूर्वत्रासिद्धीयमित्यत्र द्वित्वस्य प्रतियोगितया निषेधात् तत्प्रसङ्गेन द्वित्वसामान्योपस्थितिसत्त्वात् "लिटिधातोरि"त्युपस्थितम्। यथा द्वित्वे सति "हलादिश्शेष" इत्यस्य प्रवृत्तिर्भवति तथान्यत्रापि शास्त्रप्रवृत्तिक्रममाह—नतु विव्याधेति। "लिट्यभ्यासस्योभयेषामि"ति सूत्रे उभयेषामित्यस्यार्थमूलेयम्। वच्यादिग्रहाद्यनुवृत्त्यैव सिद्धेः। फलञ्च विव्यथे इत्यादौ हलादिश्शेषात्पूर्वमेव सम्प्रसारणे रूपसिद्धिः। एवम्विव्याधेत्यपि।

सम्प्रसारणं तदाश्रयञ्च कार्यम्बलवत्—पाणिनीयसङ्केतसम्बन्धावच्छिन्नप्रकारतानिरूपिता या सम्प्रसारणत्वावच्छिन्ना विशेष्यता तदाश्रयत्वावच्छिन्ना विशेष्यता च अन्यतरत्वावच्छिन्नविशेष्यत्वावच्छिन्नाभेदसम्बन्धावच्छिन्नप्रकारतानिरूपिता या कार्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता या बलवत्त्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टो बोधः।

यत्तु क्वचिद्विकृतिरिति—"प्रकृतिर्विकृतिर्वापि यत्रास्तित्वं द्वयोरपि। गृह्णाति प्रकृतेस्संख्याम्वाचको विकृतेर्नतु"एको वृत्त⌒पञ्च नौका भवति उदीचाम्माङो व्यतिहार" इतिवत् ह्वे इत्यस्यैवानुकरणमेवञ्च निष्फलेयम्।

तथा—

औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम् ॥ १३० ॥

[ पूर्वत्रासिद्धीये न स्थानिवत्। तस्य दोषस्संयोगादिलोपलत्वणत्वेषु। ]

तेन दादेर्धातोरित्यत्रौपदेशिकधातोरेव ग्रहणमिति, तन्न ? तयोर्नि-र्मूलत्वाद् भाष्याव्यवहृतत्वाच्च। न च विकृतिः प्रकृतिं गृह्णातीति "ग्रहिज्ये"ति सूत्रस्थभाष्येणाद्यायाहितरस्काराच्च। "निसमुपविभ्यो ह्वः" इत्यादौ ह्वेञोऽनुकरणे सौत्रः प्रयोगः। भाष्वविषय एवात्मने-पदं प्रयोगस्थानामेवानुकरणस्य घुसंज्ञासूत्रे भाष्ये स्पष्टमुक्तत्वादित्यन्ये।

अन्त्यापि तत्रतत्रोपदेशग्रहणं कुर्वतः सूत्रकृतो वार्त्तिककृतश्चास-म्मता। इह हि व्याकरणे सर्वस्वेव सानुबन्धकग्रहणेषु रूपमाश्रीयते य-त्रास्यैतद्रूपमिति रूपनिर्ग्रहश्च शब्दस्य नान्तरेण लौकिकं प्रयोगम्। तस्मिंश्च लौकिके प्रयोगे सानुबन्धकानां प्रयोगो नास्तीति कृत्वा द्वितीयः प्रयोग उपास्यते। क उपदेशो नामेति घुसंज्ञासूत्रस्थभाष्येण प्रायोगिकास-म्भवे तद्ग्रहणमित्यर्थस्य लाभेन भाष्यासम्मता च।

भाष्ये सानुबन्धकेत्यादि प्रकृताभिप्रायेण। दादेरिति सूत्रे दादिपद-स्यौपदेशिकदादित्ववति लक्षणेति न दोष इत्यन्यत्र विस्तरः॥ १३० ॥

---

क्वचिद्विकृतिः प्रकृतिं गृह्णाति— क्वचित्स्थलत्वावच्छिन्नविकृतित्वा-वच्छिन्नप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना कर्तृत्वावच्छिन्ना कर्तृनिष्ठा विशेष्यता तादृशविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता प्रकृतित्वावच्छिन्नप्रकारतानिरूपिता या कर्मत्वावच्छिन्नाश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिक-रणस्वनिष्ठजन्यतानिरूपितजनकत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रका-रतानिरूपिता या ग्रहधात्वर्थव्यापारत्वावच्छिन्ना विशेष्यता तादृशविशे-ष्यताविशिष्टो बोधः।

औपदेशिकप्रायोगिकयोरिति—फलञ्च दामलिडित्यत्र "दादेर्धातोर्घ" इति न प्रवर्त्तते। इयमपि निष्फला आदेच उपदेश इत्यादिषूपदेशग्रहणात्।

(१)पूर्वत्राऽसिद्धीये न स्थानिवत्—अत्र "नाग्लोपिशास्वृदिताम्" इति सूत्रेऽग्लोपिप्रतिषेधो ज्ञापकः। स च मालामाख्यत् अममालादित्यत्र ह्रस्ववा-रणाय यदि स्थानिवद्भावस्स्यात्तर्हि अनुपधात्वादाकारस्य ह्रस्वाऽप्राप्तौ व्यर्थः स्यात्। भाष्ये ज्ञापककथनात् वार्त्तिकत्वेऽपि परिभाषेति व्यवहारः। फलञ्च

---

(१) पूर्वत्रासिद्धीये न स्थानिवत्, तस्य दोषस्संयोगादिलोपलत्वणत्वेष्विति परिभाषाद्वयमपि सर्वासम्मतत्वात् शेखरमूलेऽव्याख्यातमपि कैश्चित् सम्मतमिति स्फु-रदन्तस्तात्पर्यं श्रीमद्भिष्टीकाकारैर्व्याख्यातमिति।

यद्यपि नन्वजर्घा बेभिदीतीत्यादौ तत्तद्गणप्रयुक्ता विकरणा यङ्लुकि स्युस्तथा यङ्लुकि बेभिदितेत्यादावेकाचइतीण्निषेधः स्यादत आह—

शितपा शपानुबन्धेन निर्दिष्टं यद् गणेन च।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥ १३१ ॥

अनुबन्धनिर्देशो द्विधा—स्वरूपेण ङित इत्यादिपदेन च। हन्ति याति वाति, स्नीवन्तेति सूत्रे भरेति, दीङो युडचि, अनुदात्तङितः, दिवादिभ्यः श्यन्, एकाच उपदेशे, इत्युदाहरणानि। द्वित्वे सनाद्यन्ता इति भूवादय इति धातुत्वं च भवत्येव, गुणो यङ्लुकोरित्यादिभिर्निषेधानित्यत्वकल्पनात्। तेन भष्भावोऽप्यजर्घा इत्यादौ भवति। अत एव इवीदित ईदि सूत्रे कैयटे यत्रैकाज्ग्रहणं किञ्चिदिति पाठः।

---

यायष्टिः पापक्तिः अल्लोपणिलोपयोस्स्थानिवत्त्वाभावात्कुत्वषत्वे सिद्धचतः।

तस्य दोषस्संयोगादिलोपलत्वणत्वेष्विति—तद्यते क्विपि तक् निगाल्यते माषवपनीत्यादि फलम्।

औपदेशिकप्रायोगिकयोरौपदेशिकस्यैव ग्रहणम्—औपदेशिकत्वावच्छिन्नप्रायोगिकत्वावच्छिन्नोभयत्वावच्छिन्नप्रकारतानिरूपिता या औपदेशिकत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणप्रकारतानिरूपिता ग्रहणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताविशिष्टशाब्दबोधः।

यदपि ननु अजर्घा बेभिदीतीति—हन्ति याति वातीत्यादयः "भरज्ञपिसनाम्" शीङस्सार्वधातुके गुणः, अनुदात्तङित इति "दिवादिभ्यश्श्यनि"ति "एकाच उपदेशेऽनुदात्तादि"ति एतानि पञ्च कार्याणि यङ्लुकि न भवन्ति। इयम्पू वैयाकरणैः पठिता सूत्रकृत्पाठानुरोधेन भाष्याऽविरुद्धा च एकदेशानुमतिद्वारैकाज्ग्रहणेनेयं ज्ञाप्यते।

अथ शेखरखण्डनप्रकारः—वधिव्यावृत्त्यर्थमेकाज्ग्रहणमिति शेखरोऽनुपपन्नः प्रमाणरहितश्च? तथाहि "एकाच" इति सूत्रभाष्यम्। वध इट्प्रतिषेधः प्राप्नोतीति वधिषीष्टेति नैष दोषः आद्युदात्तनिपातनं करिष्यते। अत्र कैयटः, आद्युदात्तनिपातनसामर्थ्यात् हन्त्युपदेशविषयोऽनुदात्तत्वाश्रय इट्प्रतिषेधो न भवति, नह्येतदाद्युदात्तनिपातनं प्रयोगसमवायि, सतिशिष्टस्वरेण बाधात् इति विवेचना।

एकाज्ग्रहणमुत्तरार्थमित्यप्ययुक्ततरम्? जागरितवानिति "श्र्युकः किती"ति जागरितवानित्यत्र "जाग्रोऽविची"तिगुणपरत्वयोरुपगन्तव्यत्वाभावान्निषेधाऽप्रवृत्तेः।

नचात्रोपदेशाधिकारः फलाभावात्प्रयोजनाभावाच्च। नच स्तीर्णमित्या-

एकाच उपदेशेऽनुदात्तादिति सूत्रे एकाज्ग्रहणेनैकदेशानुमत्यैषा ज्ञाप्यते । अन्यथोपदेशेऽनेकाचामुदात्तत्वस्यैव सत्त्वेन तद्वैयर्थ्यं स्पष्टमेवेति । तदपि न ? भाष्यानुक्तत्वात् । एकाज्ग्रहणस्य वधिव्यावृत्त्यर्थमावश्यकत्वाच्च । न च वधिस्स्थान्युपदेश एकाजेवेति वाच्यम् ? साक्षादुपदेशसम्भवेनैतद्विषये स्थान्युपदेशाग्रहणादुपदेशत्वावच्छेदेनैकाजित्यर्थाच्च । किञ्चोत्तरार्थमेकाज्ग्रहणम् । अत एव जागरितवानित्यादावुपदेश उगन्तत्वमादाय श्र्युकः कितीतीण्निषेधो न । तत्रोपदेश इत्यनुवृत्तिश्च स्तीर्णमित्यादाविण्निषेधायेत्याकरे स्पष्टम् ।

न च भाष्ये यङ्लोपे बेभिदितेत्यादाविट्प्रवृत्त्यर्थमुपदेशेऽनुदात्तादेकाचः श्रूयमाणादङ्गादित्यर्थं सनीट्प्रतिषेधो वक्तव्यो बिभित्सतीति दोषोपन्यासवद्यङ्लुकि दोषानुपन्यासेन तत्रेडिष्टः । यङ्लोपेत्यादिभाष्यं तूपक्रमोपसंहारबलेन न यङ्लुग्विषयम् । किंच तस्य तद्विषयकत्वे यङ्लोपे स्थानिवत्त्वस्यैव यङ्लुक्युपायाप्रदर्शनेन न्यूनतापत्तिरिति वाच्यम् ? इड्विषये यङ्लुको लोकेऽनभिधानेन छन्दसि सर्वविधीनां वैकल्पिकत्वेन च तत्र दोषानुपन्यासेनादोषात् । अन्यथैकाज्ग्रहणं किमर्थमिति प्रश्नस्योत्तरत्र जागर्त्यर्थमिह वध्यर्थमित्युत्तरस्य च भाष्ये निरालम्बनत्वापत्तः ।

न चार्धधातुकाक्षिप्तधातोरेकाच इति विशेषणम् । एवं च बिभित्सतीत्यादावुत्तरखण्डस्य धातोरेकाच्त्वमस्त्येव उत्तरखण्डेऽस्तित्ववत् । एतच्च दयतेरिति सूत्रे भाष्ये स्पष्टम् । एवं च प्रकृतभाष्यासङ्गति-

---

दाविण्निषेध⌒प्रयोजनमिति वाच्यम् ? "इट्सनि वे"तिविकल्पविधानात् "यस्य विभाषे" तीट्प्रतिषेधाश्रयणात् । उत्तरार्थमेकाज्ग्रहणान्न कर्त्तव्यमिति हि कैयटः । यत्रैकाज्ग्रहणं यङ्लुगन्ते बेभिदितेति । अङ्गत्वम्विशिष्टस्य धातुत्वन्तु उत्तरखण्डस्येत्यप्ययुक्ततरम् । सन्प्रत्ययस्य धातोरेव विधानम् पूर्वभागस्य धातुत्वाभावे विभित्स इत्यस्य यस्मात्प्रत्ययविधिस्तदादित्वाभावेनाङ्गसंज्ञाया अभावप्रसङ्गात्, अङ्गसंज्ञा पदसंज्ञा च एकाज्द्विर्वचनन्यायेन समुदाये प्रवर्त्तते भाष्यानुक्तत्वेनेयम्पूर्ववैयाकरणसिद्धान्ताद्विरुद्धेति नाभिप्रायः । प्राचीनवैयाकरणतन्त्रो वाचनिकानीति ग्रन्थारम्भे प्रतिज्ञाविरोधात् । इयमनित्या "गुणो यङ्लुकोरि"ति ज्ञापकात् एकाजन्यपदिष्टं हि द्वित्वं यङ्लुकि न प्रवर्त्तते । तर्हि अभ्यासाभावात् अभ्यासस्य विधीयमानो गुणो न स्यात् । अत एव जङ्घनीतीत्यत्र "अभ्यासाच्चे"ति "हन्तेरि"ति श्तिपा निर्देशेन कुत्वम्भवत्येव । अन्यान्यपि परिभाषाफलान्यूह्यानि । तथाच्चेयम्परिभाषा भाष्यानुक्तापि लक्ष्यसंस्काराय पूर्ववैयाकरणाभिमतत्वेन क-

रिति वाच्यम् ? आक्षेपे (१)आक्षिप्तस्यान्वये च मानाभावात् । अङ्गत्वं तु विशिष्टएवेत्येकाचो द्वे इति सूत्रे भाष्ये स्पष्टम् । निरूपितं च तनादिशेषे शब्देन्दुशेखरे । धातुत्वं तूत्तरखण्ड एव । अत एवैकाचो बशो भषिति सूत्रे धातोरवयवस्यैकाच इति वैयधिकरण्येनान्वये गर्धप्सिद्धिः प्रयोजनमुक्तं भाष्ये न तु प्रसिद्धमजर्घा इति । अजर्घा बेभिदीतीत्यादौ श्नमश्यनादयस्तु चर्करीतं चेत्यस्यादादौ पाठन यङ्लुगन्ते गणान्तरप्रयुक्तविकरणस्याप्राप्त्या न भवन्ति । छान्दसत्वादेव कार्यान्तराणामपि छन्दसि दृष्टप्रयोगेष्वदृष्टानामभावो बोध्यः । भाषायां तु तादृशानामभाव एव, श्तिपृशबादिनिर्देशास्तु "भवतेर"इत्यादिसूत्रस्थतन्निर्देशवन्नार्थसाधका इत्यन्यत्र विस्तरः ॥ १३१ ॥

ननु जभोचि, रधेश्च, नेट्यलिटीत्येव सूच्यतां किं द्वोरधिग्रहणेनेत्यत आह—

पदगौरवाद्योगविभागो गरीयान् ॥ १३२ ॥

---

र्थ्येति शेखरप्रकारः कथङ्कारमिति विचारयन्तु धीधना वैयाकरणम्मन्या इति दिक् ।

श्तिपा शपानुबन्धेन निर्दिष्टं यद् गणेन च ।
यत्रैकाज्ग्रहणं चैव पञ्चैतानि न यङ्लुकि ॥

श्तिप्त्वावच्छिन्नप्रकारतानिरूपितं शप्त्वावच्छिन्नप्रकारतानिरूपितं अनुबन्धत्वावच्छिन्नप्रकारतानिरूपितं गणत्वावच्छिन्नप्रकारतानिरूपितं यन्निर्दिष्टत्वावच्छिन्नं यत्रैकाज्ग्रहणत्वावच्छिन्नप्रकारतानिरूपितं यत् बहुत्वत्वावच्छिन्ना कार्यत्वावच्छिन्नैतत्वावच्छिन्ना पञ्चत्वसंख्यावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाऽभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्नविशेष्यत्वावच्छिन्नाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता यङ्लुक्त्वावच्छिन्नविषयताधिकरणकप्रवृत्तित्वावच्छिन्नप्रतियोगिताकाभावः ।

पदगौरवाद्योगविभागो गरीयान्—पाणिनिसङ्केतसम्बन्धावच्छिन्नपद-

---

(१) आक्षेपे आक्षिप्तस्यान्वये चेति–एकसम्बन्धिज्ञानमपरसम्बन्धिस्मारकमितिन्यायेन अक्षिप्तस्यापि पदार्थस्य शाब्दबोधे भानमिति सम्प्रदायः । अत एव 'गम्यमानापि क्रिया कारकविभक्तीनां निमित्तम्' इत्यत्र गम्यमानत्वं स्ववाचकशब्दप्रयोगं विना बोध्यमानत्वमिति"ल्यब्लोपे कर्मण्यधिकरणे च" ल्यब्लोपित्वञ्च "ल्यबर्थो दृश्यते यत्र ल्यबन्तन्नव दृश्यते। तदेव ल्यब्लोपित्वं ज्ञातव्यं हि सदा बुधैः॥ इत्यादावाक्षिप्तस्य शाब्दबोधे भानानङ्गीकारे कथं सङ्गतिरिति नाशङ्कनीयमिति ।

प्रतिवाक्यं भिन्नवाक्यार्थबोधकल्पनेन गौरवं स्पष्टमेव । परन्तु भाष्यासम्मतेयम् । "टाङसी"ति सूत्रस्थभाष्यविरुद्धा च । तत्र च इ-नादेशे इकारप्रत्याख्यानं योगविभागेनैव कृतमिति बहवः ॥ १३२ ॥

अर्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः ॥ १३३ ॥

एओङ्ऐऔच्सूत्रयोर्ध्वनितैषा भाष्ये । तत्रानेकपद(१)घटितसूत्रे प्रा-येण पदलाघवविचार एव नतु मात्रालाघवविचार इति ऊकालोच्, अपृक्त एकालित्यादि सूत्रेषु भाष्ये ध्वनितम् । तत्र हि सूत्रे अल्ग्रहणहल्ग्रहण-योर्विशेषविचारे संज्ञायां हल्ग्रहणे एयक्षत्रियेतिसूत्रे अणिञोरिति वाच्य-मिति त्रीणि पदान्यल्ग्रहणे तदेकं स्वादिलोपे हल्ग्रहणं एयेतिसूत्रे अ-णिञोरिति न वाच्यमपृक्तस्येति वाच्यमिति त्राण्येव पदानीति नास्ति लाघवकृतो विशेष इत्युक्तम् । अचि श्नुवति सूत्रे इण इत्येव सिद्धे य्वो-रिति संभूय ग्रहणान्न पूर्वेणाग्रहणं तत्र विभक्तिनिर्देशे संभूय ग्रहणे

त्वावच्छिन्नप्रकारतानिरूपितगौरवत्वावच्छिन्नविशेष्यत्वावच्छिन्नप्रकारता-निरूपिता या योगविभागत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमाना-धिकरणप्रकारतानिरूपिता याऽभेदसम्बन्धावच्छिन्ना गरीयस्त्वावच्छिन्ना गरीयोनिष्ठा विशेष्यता तादृशविशेष्यताविशिष्टो बोधः ।

अर्द्धमात्रालाघवेन पुत्रोत्सवं मन्यन्ते वैयाकरणाः । तृतीयार्थः प्रयो-ज्यत्वम्, वैयाकरणशब्दस्य वैयाकरणत्वेन वैयाकरणरूपोऽर्थः । प्रातिपदि-कार्थे प्रथमाविधानात् पुत्रोत्सवशब्देन पुत्रजन्मोत्सवरूपोऽर्थः । अम्प्रत्य-यस्याश्रयोऽर्थः, फलाश्रयत्वं कर्मत्वमित्यभिधानात् फलस्य धातुलभ्यत्वात् तत्र आश्रयमात्रे कर्मप्रत्ययार्थः अनन्यलभ्यो हि शब्दार्थः इति न्यायात्, झप्रत्ययस्य आश्रयोऽर्थः, लः कर्मणीति कर्त्तरि तद्विधानात् । जस्विभ-क्तेर्बहुत्वमर्थः, वर्तमानकालोऽप्यर्थः, तत्र बहुत्वसंख्यायास्समवायेन कर्त्त-र्य्यन्वयः, स्वनिष्ठपरिच्छेदकतानिरूपितपरिच्छेद्यतासम्बन्धेन वा वैयाकरण-पदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन झप्रत्ययाश्रयेऽन्वयः, आश्रयस्य च स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन धात्वर्थव्यापारेऽ-न्वयः, पुत्रोत्सवपदार्थस्य स्वनिष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धेन अम-र्थाश्रयेऽन्वयः, आश्रयस्य च स्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धेन धात्व-र्थफलेऽन्वयः, फलस्य च स्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धेन धात्वर्थ-

(१) घटितत्वम्—तद्विषयताव्याप्यविषयतावत्त्वम् । यथा वह्न्यभावविषयताया वह्निविषयताव्याप्यत्वेन वह्न्यभावस्य वह्निघटितत्वम् । यथा वा विशिष्टान्तराघटित-त्वम्, विशिष्टद्वयाघटितत्वम्, प्रतियोगिवैयधिकरण्यघटितत्वम् इत्यादौ घटितत्वम् ।

च सार्धास्तिस्रो मात्रा इण्ग्रहणे तिस्रो मात्रा इति लण्सूत्रे भाष्योक्तेः, तथा "ओतश्श्यनि"ति सूत्रे शितीति वक्तव्यम् । तत्रायमर्थः । ष्ठिवुक्लम्विति सूत्रे शितीति न कर्तव्यं भवतीति भाष्ये । न केवलं मात्रालाघवं यावद्यमप्यर्थं इति कैयटोक्तेः प्रायेणेति शिवम् ॥ १३३ ॥

इति तृतीयन्तन्त्रम् ।

इति श्रीमन्महामहोपाध्यायशिवभट्टसुतसतीगर्भजनागोजीभट्टकृतः
परिभाषेन्दुशेखरः समाप्तः ॥

---

व्यापारेऽन्वयः । तथाच अर्द्धमात्रालाघवत्वावच्छिन्ना अर्द्धमात्रालाघवनिष्ठा या प्रकारता तादृशप्रकारतानिरूपिता या विभक्त्यर्थप्रयोज्यत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या वैयाकरणत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाभेदसम्बन्धावच्छिन्नप्रकारता तादृशप्रकारतानिरूपिता या कर्तृत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणाधेयत्वसम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता सती पुत्रोत्सवत्वावच्छिन्नप्रकारतानिरूपिता या आश्रयत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठाधारतानिरूपिताधेयतासम्बन्धावच्छिन्ना प्रकारता तादृशप्रकारतानिरूपिता या फलत्वावच्छिन्ना विशेष्यता तादृशविशेष्यतासमानाधिकरणस्वनिष्ठजन्यतानिरूपितजनकतासम्बन्धावच्छिन्नतादृशप्रकारतानिरूपिता या मनधात्वर्थव्यापारत्वावच्छिन्ना विशेष्यता सा च परिच्छिन्नत्वसम्बन्धावच्छिन्नवर्तमानकालत्वावच्छिन्नप्रकारतानिरूपिता मन्धात्वर्थव्यापारत्वावच्छिन्ना विशेष्यता तादृशविशेष्यताशालिशाब्दबोधः ।

इति श्रीकाशीप्रयागावधमध्यभूमि-गोमतीदक्षिणसतीनद्युत्तरक्रोशत्रयमित-जौनपुर-
बदलापुर-उदयपुर-जन्मसरयूपारीणशुक्लघटिकाशतकशतावधानाशुकविवै-
याकरणशिरोमण्याद्यनेकपदवीक-प्रायश्शतग्रन्थनिर्मातृगर्ग वंशोद्भव-
पण्डितराजशुक्लश्रीवेणीमाधवशास्त्रिरचिता परि-
भाषेन्दुशेखरबृहच्छास्त्रार्थकला समाप्ता ।

# परिशिष्टम् ।

## अथ वैयाकरणानामुपकारकाः केचित् प्रश्नाः ।

### [ प्रथमः ]

ननु तत्तत्पदनिष्ठवृत्तिज्ञानाधीनवृत्तिविषयज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतानिरूपितनिरूपकत्वसम्बन्धावच्छिन्ना यावच्छेदकता तादृशावच्छेदकतानिरूपिता यावच्छेद्यता तादृशावच्छेद्यतावती या विषयता तादृशविषयताश्रयत्वस्यैव पदार्थत्वेन वाक्यार्थबुद्धित्वावच्छिन्नं प्रति पदार्थज्ञानस्यैव कारणत्वाद् घटवद्भूतलम्, घटभूतलसंयोगाः, सुवर्णघटवान् रजतघटः, रजतघटवान् सुवर्णघट इत्यादिवाक्यानां शाब्दबोधः कथम्परस्परभेदोऽभेदो वेति विचिकित्सायां "जात्याकृतिव्यक्तयः पदार्थः" इति गौतममहामुनिसूत्रम् । घट–घटत्व–समवाय–इति त्रिषु शक्तिः ।

शाब्दिकनये पञ्चकं प्रातिपदिकार्थः, पञ्चकन्धात्वर्थः । जातिव्यक्तिलिङ्गसंख्याकारकभेदात्, क्रियात्वक्रियाकालकारकसंख्याभेदात्, तत्र शक्तित्रयवादिमते घटत्वनिष्ठप्रकारतानिरूपित–अवच्छेदकत्वनिष्ठसांसर्गिकविषयतानिरूपित निरूपकत्वनिष्ठसांसर्गिकविषयतानिरूपितविशेष्यत्वावच्छिन्न-घटादिपदजन्यबोधविषयत्वनिष्ठप्रकारतानिरूपितसङ्केतीयविशेष्यतावान् घट इति शक्तिज्ञानाकारः ।

तत्र च घटत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतदुभयावच्छिन्न-सांसर्गिकविषयतानिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतदुभयावच्छिन्न–सांसर्गिकविषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपितनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–विशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–घटपदनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–विशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–जन्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नैतदुभयावच्छिन्न–प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपितत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–विशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न–निरूपितत्वनिष्ठप्रकारतानिरूपि-

तविशेष्यत्वावच्छिन्न-विशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-बोधनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतदुभयावच्छिन्न-प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-विशेष्यत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-अवच्छेदकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निरूपकत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-विषयत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-निष्ठत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वैतत्त्रितयावच्छिन्न-प्रकारत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्न-सङ्केतीयविशेष्यत्वनिष्ठप्रकारतानिरूपितघटत्वावच्छिन्न-विशेष्यताशालित्वन्तत्प्रयोजकम्। तस्मात्त्रिषु शक्तिस्सिध्यति।

घटो घटपदजन्यबोधविषयो भवतु, घटत्वं घटपदजन्यबोधविषयतावच्छेदकं भवतु, समवायो घटपदजन्यबोधविषयतावच्छेदकतावच्छेदको भवत्विति शक्तिज्ञानाकारः।

ननु घटवद्भूतलमितिवत्, घटभूतलसंयोगा इतिवत् भूतलवान् घट इति न भवति? संयोगस्योभयनिरूपितत्वेऽपि अनुयोगित्वं प्रतीतिबलाद् भूतल एव न घटे तथापि एकस्सुवर्णघटः एको रजतघटः, द्वयोस्संयोगेऽप्याधाराधेयभावप्रतीतिः कुतो नेति प्रश्नः?

संयोगो द्विविधः, एकश्च विशिष्टबुद्धिनियामकः द्वितीयस्साधारणः। इमौ घटौ संयुक्काविस्यत्र संयोगस्साधारण इति सुवर्णघटवान् रजतघट इति न भवति, किन्तु संयुक्तौ घटाविस्येवेत्यलम्।

[ द्वितीयः ]

नन्वस्यां विद्वत्परिषन्महामण्डलमण्डिताखण्डप्रचण्डप्रपण्डझंझायमानदोर्दण्डझङ्कोरझझरीकृतझलकझकोरलामलल्लालालित्यलवलालिमलीनलायककलाधवलमौलमालमाकिलमरालतालशालविशालकरालकालतालितछालितछटाछविविभवविवेकनैपुण्यधर्मकसंधारानिभरनशुद्धधामरामनामकामकलाकुसुमकल्लोलकलितकीलकवचकलनकरालभालभव्यभस्मभरणभवभारहारहरणचरणशरणनलिनपुलिनविशदमतिलरङ्गतारतरणीतरणसमस्तौहिकानन्दकन्दशुभवृन्दानिन्दचन्द्रचपलचकोरचलायमानचञ्चरीकचालचलनचलितचापलयाद्युपचोपचामरछत्रछात्रक्षौत्यमण्डलीयविशिष्टगुणग्रणग्रामाभिरामादशास्त्रसिद्धान्तरागानुरागरमणीयरसोपरसविभवविशेषानुभवभवनभव्यमालचालचञ्चलचित्तचिदानन्दघनघोरघाटघटितघटाघहरायमाणस्तात्तीयापरनामबहुभाषणरामसंख्यावच्छिन्नवाच्यतानिरूपितवाचकतावत्तुरीयाङ्कापरपर्यायवेदोपवेदयुगसंख्यावच्छिन्नवाच्यतानिरूपितवाचकतावद्यत्किञ्चिन्निष्ठविधेयतानिरूपकत्वसम्बन्धावच्छिन्नोद्देश्यतावद्घटितापच्चयविवक्षासम्पन्नानादिवाक्छटाच्छादितगुणत्रयोपस्कृतभवमूलभूतलक्ष्यप्रक्रियातरङ्गताररतारकतरणीतरणीघटितानूक्तनिष्ठोद्देश्यतानिरूपितविधेयतावत्त्वसम्बन्धावच्छिन्नचत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नतत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नसुत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नतित्वावच्छिन्नविषयतावच्छेदकावच्छिन्नसुत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नतत्तदव्यवहितोत्तरत्वसम्बन्धावच्छिन्नतत्तदानुपूर्व्यवच्छेदकावच्छिन्नशास्त्रततिरस्काराभप्रफुल्लिताधनेकगुणगणालङ्कृताष्टकान्तर्गतविलक्षणप्रणयनक्तिमर्थमिति प्रश्नः।

[ तृतीयः ]

नन्वस्यां विद्वत्परिषत्पण्डितमण्डलमण्डितसमस्तदिङ्मण्डलाखण्डलप्रचण्डवादीभपरमपञ्चाननसन्मतरहस्यविरोधिमतविद्रावणसमग्रसंस्कृतसाहित्यरङ्गभङ्गतरङ्गप्रभञ्जकनिखिलशास्त्रसूक्ष्मातिसूक्ष्मगतिप्रगतिविशिष्टप्रवाहोपप्रवाहधाराधरधर्मोपधर्मकलानिधितरङ्गततिप्रततिवीचीप्रवीचीप्रभवविभवसुधाधृतिध्येयध्यानधारणाधामधवलधौतधावनानुधावनधीरधौर्य्यधावितसन्धावितविविधव्यवस्थापटुपाटवसदातनप्रसिद्धमर्यादापरिपालदत्तावधाना नूत्नतर्कवितर्ककुतर्ककुकोटिकलाकामगौरवगम्भीरातिशयमनोविनोदचमत्कृतनवनवोन्मेषान्तःकरणावच्छिन्नविमलभवविभवभावभावनाभव्यभवनभूतभौतिकभावकातिभावकविभूतिभालसुशोभितानन्दकन्दशुभवृन्दसच्चिदानन्दामन्दनन्दनन्दनसरोजपुञ्जचञ्चञ्चरीकचकचकायमानचकितीकृतसकलविपक्षवृन्दाः शास्त्रसुधाकाननरसोपरसपानपरायणपक्षिपुञ्जगुञ्जसन्निभसन्देहनिरसननिरपेक्षनिरवच्छिन्नवृत्तिधवलितान्तःकरणाः पाणिनिशास्त्रसङ्केतविषयतावच्छेदकावच्छिन्नानन्तपदार्थविचारधाराधारणां दाधर्त्ति तद्रसिकः वर्णसमुदायः पदम्, पदसमुदायो वाक्यम्, वाक्यसमुदाय ऋक्, ऋक्समुदायस्सूक्तमिति हि क्रमः ।

वर्णत्वावच्छिन्ना या वर्णत्वनिष्ठा निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपिता यावच्छेद्यतावती स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशविषयतावती या शास्त्रस्थपदसङ्केतविषयतावच्छेदकावच्छिन्ना पदत्वावच्छिन्ना पदनिष्ठा विषयता तादृशविषयताक्रान्ततवर्गचतुर्थवर्णत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नान्तस्थयुगवर्णत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नप्रतियोगितासम्बन्धावच्छिन्नत्वावच्छेदकावच्छिन्नकर्मत्वत्वावच्छेदकावच्छिन्नछेदनकर्त्तृत्वावच्छिन्नप्रयोजकत्वसम्बन्धावच्छिन्नविषयतावच्छेदकावच्छिन्नाव्यवहितपूर्वत्वसम्बन्धावच्छिन्नस्वस्वरूपसम्बन्धावच्छिन्नौपश्लेषिकाधिकरणसप्तम्यर्थत्वावच्छिन्नविषयतावच्छेदकावच्छिन्ननिखिलभावभावितद्वियोगलक्षणपञ्चम्यर्थप्राथमिकपदार्थत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नोद्देश्यतानिरूपितषष्ठीत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नवाचकसम्बलितभगवद्वाचकशब्दघटितटवर्गचतुर्थवर्णान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमन्निष्ठोद्देश्यतानिरूपितषष्ठीप्रत्ययत्वावच्छिन्नविधेयतावच्छेदकावच्छिन्नशब्दविशिष्टद्विमात्रत्वावच्छिन्नपदार्थत्वावच्छिन्नवाच्यतानिरूपितवाचकतावद्दीत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नकवर्गचतुर्थवर्णत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नपाणिनीयसङ्केतसम्बन्धावच्छिन्नापूर्वविवेकनैपुण्यधारधारिप्रतिभोदधिनिमग्नयत्किञ्चिल्लक्ष्यप्राणभूताद्यनेकगुणगणविलसिताष्टकान्तर्गतम्विक्लिष्टप्रणयनङ्क्रिमर्थमिति प्रश्नः ।

[ चतुर्थः ]

तत्तदर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति तत्तत्पदनिष्ठवृत्तिज्ञानाधीनोपस्थितिः कारणमेवञ्च सत्त्वरजस्तमस्त्वावच्छिन्नान्यतमत्वावच्छिन्नान्यतमनिष्ठा या निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशविषयतारूपा या साम्यगुणगणत्वावच्छिन्नविलक्षणावस्थात्वावच्छिन्नदृश्यमानसकलपदार्थत्वावच्छिन्नमूलत्वावच्छिन्नावच्छेदकतात्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकत्रित्वत्वावच्छिन्नावच्छेदकतात्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नानादित्वावच्छिन्ना चैतन्याद्यनेकगुणगणालङ्कारत्वावच्छिन्नापूर्वत्वावच्छिन्नसांख्यराद्धान्तत्वावच्छिन्नप्रधानत्वावच्छिन्नत्वावच्छि-

श्यत्किञ्चिन्निष्ठविधेयतानिरूपितोद्देश्यतावत्त्वसम्बन्धावच्छिन्नतत्त्वत्त्वावच्छिन्नसामा-न्यरूपावच्छिन्नतत्तन्निष्ठोद्देश्यतानिरूपितसामान्यरूपावच्छिन्नविधेयत्वावच्छिन्नार्थत्वा-वच्छिन्नबोधत्त्वावच्छिन्नाष्टकाचार्यसङ्केतसम्बन्धावच्छिन्नतत्त्वत्त्वावच्छिन्नस्वनिष्ठप्रति-योगितानिरूपकत्त्वसम्बन्धावच्छिन्नाष्टकप्रणेतृसङ्केतसम्बन्धावच्छिन्नदर्शनत्वावच्छिन्नप्र-तियोगिताकाभाववत्त्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्ननिमित्तसप्तम्यर्थत्वावच्छिन्नप्र-कारतासम्बन्धावच्छिन्नानुक्तसङ्केतसम्बन्धावच्छिन्नतत्त्वत्त्वावच्छिन्नविधेयतासम्बन्धाव-च्छिन्नतदाश्रितकार्यत्वावच्छिन्नसमर्थकत्वावच्छिन्नलक्ष्यसाधकत्वावच्छिन्नविषयतासम-र्पकत्त्वावच्छिन्नाद्यनेकतत्त्वोपस्कृतं यदष्टकन्तच्छाब्दबोधवर्णनपुरस्सरतत्सत्त्वसम्पादक-म्प्रमाणम्प्रवाच्यमिति प्रश्नः।

[ पञ्चमः ]

ननु "पदज्ञानन्तु करणं द्वारन्तत्र पदार्थधीः। शाब्दबोधःफलन्तत्र शक्तिधीस्सहका-रिणी"शक्तिविषयकज्ञानत्त्वावच्छिन्नविषयतात्त्वावच्छिन्नप्रकारतानिरूपितयत्किञ्चिद्धर्मा-वच्छिन्नविशेष्यकश्शाब्दबोधो जायते। वाक्यार्थबुद्धित्वावच्छिन्नं प्रति पदार्थज्ञानं कार-णम्पदार्थबुद्धित्वावच्छिन्नं प्रति पदज्ञानं कारणम्पदबुद्धित्वावच्छिन्नं प्रति तत्तदव्यवहि-तोत्तरत्त्वसम्बन्धावच्छिन्नघटकत्त्वसम्बन्धावच्छिन्नतत्तद्वर्णसमुदायःकारणम्। वर्णविषय-कबुद्धित्वावच्छिन्नम्प्रति अनादिसिद्धाम्नायसमाम्नायचिरन्तनसदाचारमर्यादापरिपालक-शिवसनकाद्युपदिष्टपारम्पर्यक्रमागतविशिष्टव्यवहारःकारणम्। पातञ्जलमहाभाष्येत्त्वे-वन्धर्मधारणा वर्णसमुदायः पदम्, पदसमुदायो वाक्यम्, वाक्यसमुदाय ऋक्, ऋक्समु-दायस्सूक्तमिति चकास्ति। तथाच सूक्तार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति ऋक्स-मुदायः कारणम्, ऋगर्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति वाक्यसमुदायः कारणम्, वा-क्यार्थविषयकशाब्दबुद्धित्वावच्छिन्नं प्रति पदज्ञानं कारणम्, पदविषयकनिश्चयत्त्वाव-च्छिन्नं प्रति पारम्पर्यक्रमागतविशिष्टव्यवहारःकारणम्। ऋक्सूक्तयोरनुपादानेन व्यवहा-रीया न्यूनतैव। एवञ्च शास्त्रस्थपदसङ्केतविषयतावच्छेदकाक्रान्तवर्णत्वनिष्ठनिरवच्छिन्ना-वच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्नसमुदायत्वावच्छिन्नकारणतानि-रूपितकार्यत्त्वावच्छिन्न-पाणिनीयत्त्वावच्छिन्न-पत्त्वावच्छिन्नदत्त्वावच्छिन्नजिज्ञासावि-षयत्त्वावच्छिन्नविधेयतानिरूपितत्त्वसम्बन्धावच्छिन्नस्वादिपान्तत्त्यादिङान्तसमुदायघ-टकवर्णवृत्तिजात्यवच्छिन्नशक्तिमन्निष्ठप्रकारतानिरूपितविशेष्यतासम्बन्धावच्छिन्नचरम-त्वावच्छिन्नोद्देश्यतात्त्वावच्छिन्नप्रतियोगिताकपर्याप्त्यनुयोगितावच्छेदकान्यतरत्त्वाव-च्छिन्नविषयतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता ताह-शावच्छेदकतानिरूपितक्रियात्त्वावच्छिन्नविशेष्यतादिनिखिलगुणगणालङ्कृतशास्त्रस्थ-पदसंकेतविषयतावच्छेदकावच्छिन्नमष्टकान्तर्गतं शाब्दबोधपुरस्सरं प्रमाणनीयमिति प्रश्नः।

[ षष्ठः ]

ननु प्रश्नशब्दे प्रच्छ ज्ञीप्सायामिति धातुः ज्ञीप्सा तु ज्ञातुमिच्छा, इच्छातु ज्ञानज-न्या भवेदिच्छा हीच्छाजन्या भवेत्कृतिः। व्यापारः कृतिजन्यो हि तज्जन्यं फलमुच्यते" इत्यनुशासनात् ज्ञानजन्या। ज्ञानन्तु सविषयकन्निर्विषयकं ज्ञानन्न भवति। ज्ञानस्य विषये नित्यसाकाङ्क्षत्वात्। प्रश्नशब्दस्तु अज्ञातार्थविषयकज्ञानानुकूलव्यापाररूपार्थको व्यवहारबलेन प्रविद्ध एव परन्तु तद्विषयकज्ञानम्बिना नेच्छोदेति। यदि तद्विषयकज्ञान-न्तदा प्रश्नो निरर्थकः, सिद्धसाधनपिष्टपेषणन्यायप्रपातः।

[ सप्तमः ]

ननु सर्वत्र किमर्थमेतत् किमर्थमेतदिति कथ्यते । तत्र किं शब्दार्थः क इति विचारः । किम्पदस्य जिज्ञासिते शक्तिः, ज्ञातुमिच्छा जिज्ञासा, साचोद्देश्यवाचकविधेयवाचकशब्दभेदाद् द्विविधाः । यथा स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकत्त्वोपलक्षितधर्मावच्छिन्नविधेयतानिरूपितोद्देश्यतावच्छेदकत्त्वप्रकारतानिरूपकवक्तृजिज्ञासानिरूपितविशेष्यताको धर्मः प्रवृत्तिनिमित्तम् । कः पचतीति प्रश्नानन्तरं ब्राह्मणःपचति देवदत्तनामकःपचतीत्याद्युदाहरणं युक्तियुक्तम् । परन्तु तादृशप्रश्नानन्तरं प्रमेयःपचति मनुष्यः पचतीत्याद्युत्तरवारणाय स्वसमभिव्याहृतपदोपस्थाप्यतावच्छेदकधर्मावच्छिन्नविधेयतानिरूपितार्थाऽभेदान्वयितावच्छेदकत्त्वोपलक्षितधर्मावच्छिन्ना योद्देश्यता तन्निरूपिताभेदसंसर्गावच्छिन्नावच्छेदकताकत्त्वेन जिज्ञासाविषयस्वार्थाऽभेदान्वयितान्वयितावच्छेदकत्त्वोपलक्षितधर्मन्यूनवृत्तिधर्मावच्छिन्नेतादृशकिंपदस्य शक्तिरिति फलति ।

[ अष्टमः ]

ननु तद्धर्मप्रकारकतद्धर्मावच्छिन्नविशेष्यकशाब्दबुद्धित्त्वावच्छिन्नं प्रति वृत्तिज्ञानाधीनापस्थितेःकारणत्त्वन्तथाच सामान्यलक्ष्यत्त्वनिष्ठा या निरवच्छिन्नावच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशविषयतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितबहुत्त्वत्त्वनिष्ठनिरवच्छिन्नाऽवच्छेदकतानिरूपितावच्छेद्यतावतीस्वरूपसम्बन्धावच्छिन्ना या बहुत्त्वत्त्वनिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितकमत्त्वत्त्वावच्छिन्नावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितपरिभाषणत्त्वावच्छिन्नापरपर्यायत्त्वावच्छिन्ना करणत्त्वार्थत्त्वावच्छिन्नविशेष्यत्त्वावच्छिन्नावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपिताष्टकप्रणेतृसङ्केतसम्बन्धावच्छिन्नझादिलान्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिमन्निष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितमात्राद्वयन्यूनकालिकत्त्वधर्मावच्छिन्नात्त्वावच्छिन्नावच्छेदकतानिष्ठाऽवच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितविधेयतानिरूपकत्त्वसम्बन्धावच्छिन्नात्त्वावच्छिन्ना विशेष्यतानिरूपितौत्त्वावच्छिन्नप्रकारतानिष्ठावच्छेदकतानिष्ठावच्छेदकतानिष्ठावच्छेदकता तादृशावच्छेदकतानिरूपितानुक्तसमस्तगुणगणत्त्वावच्छिन्नाश्रयीभूतं यत्पाणिनीयन्तच्छाब्दवोधपूर्वकम्प्रमाणनीयमिति प्रश्नः ।

[ नवमः ]

धीरःकीदृग्वचो ब्रूते को योगी कश्च नास्तिकः ।
कीदृक्चन्द्रश्च पश्यन्ति तत्सूत्रम्पाणिनेर्वद ॥ १ ॥

ननु समस्तनिगमागमतरङ्गततितरणतार्य्यतरुणीतरणीरङ्गरागोपरागपरागपरिपूरितपराऽपरपर्य्यङ्कपारणपरायणपतितपातित्यपवनपलायमानपालपलालपावितपवित्रपोपूयमानपारपारावारपारीणपूतपौतपाठ्यपालितपलाशकुसुमकेलिकलाकविकलङ्ककञ्जलकालिमकलिकालकरालविकरालकल्लोलकीर्त्तिकटकटकटायमानकामविकामनिष्कामकमकलीकोलाहलकललकितकेतकैत्यकलनकलाकलायमानकालिन्दीरम्यरममाणकौलकुतपकुटुम्बलवलाबचाकक्यमानचकितीकृतजगत्त्रितया गीर्वाणवाणीप्रणयानुनयविनयतर्कोपतर्कवित-

र्कुतर्ककर्कोटिकोटकाटनकटकटायमाननवनवप्रयत्नपारिजातजानकीजनकजीवनानन्दकन्द-सन्दोहसच्चिदानन्दचरणसरोजपरागपरिपूरणचञ्चरीकचञ्चूर्यमाणचकचाकचाक्यचकन-चाचल्यसन्निभवभवभव्यभाव्यमानविजितीकृतरजस्तमसः धर्मविज्ञानमानतानलानध्या-नधानधनिकानिधानधवलधौतधारधामध्वनिधकधकायमानवेदोपवेदनिवदप्रथसम्वेदनाद-विवादविशिष्टवादकलाकलकल्लोललतालमालशालिताखिलभारतीयाः सुप्त्वत्वाव-च्छिन्ना सुप्त्वनिष्ठा या निरवच्छिन्नाऽवच्छेदकतातादृशावच्छेदकतानिरूपिता याव-च्छेद्यता तादृशावच्छेद्यतावती या स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशविषयता-निष्ठा या निरूप्यता तादृशनिरूप्यतानिरूपिता या परममूलनिदानभूता निरूपकता ताद-शनिरूपकतावदर्त्तिनिष्पन्नौणादिकथत्वावच्छिन्नविशिष्टार्थवैभवाअपीतिविशिष्टोक्तवा-क्यादिसामर्थ्येन शक्याऽपरपर्य्यायनिष्ठोद्देश्यतानिरूपितविधेयताश्रयप्राथमिकार्थ्यर्थ-घटितविहितणौशिष्ट्यावच्छिन्नसम्वलितसमवाक्यसमाप्रयाश्रयात्यन्तमूलभूतैतच्छास्त्र-सङ्केतितावच्छेदकावच्छिन्नप्रत्याहारपदशक्यतावच्छेदकावच्छिन्नतित्वावच्छिन्नविषयता-वच्छेदकावच्छिन्नङत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धाव-च्छिन्नविषयतावच्छेदकावच्छिन्नविधेयतानिरूपितोद्देश्यताश्रयत्वसम्बन्धावच्छिन्नपा-णिनीयसङ्केतसम्बन्धावच्छिन्नाव्यवहितोत्तरत्वसम्बन्धावच्छिन्नघत्वावच्छिन्नविषयता-वच्छेदकावच्छिन्नत्वावच्छिन्नविषयतावच्छेदकावच्छिन्नाव्यवहितोत्तरत्वसम्बन्धावच्छिन्न-तुत्वनिष्ठनिरवच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्ना विषयता तादृशानुपूर्व्यवच्छिन्नविषयतावच्छेदकावच्छिन्नस्वरूपसम्बन्धावच्छिन्नत्वनिष्ठप्रतियो-गितानिरूपकत्वसम्बन्धावच्छिन्नतत्वावच्छिन्नभेदत्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्न तद्वत्त्वावच्छिन्नणौशिष्ट्योपलक्षितपाणिनीयसङ्केतसम्बन्धावच्छिन्नत्रिगुणात्मकसाम्यावस्था-पन्नापरपर्यायनिष्ठोद्देश्यतानिरूपपितविधेयत्वेनाश्रीयमाणस्वीयार्थबोधनक्षमपदार्थनिष्ठ-प्रतियोगितानिरूपितभेदत्वावच्छिन्नस्वरूपसम्बन्धावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्न-भेदवत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नत्वालङ्कृतपूर्वाचार्य्यसङ्केतसम्बन्धावच्छिन्ना पूर्वत्वावच्छिन्नक्षीणकलकलङ्ककालकालिमतमोवृतङ्कलङ्कर्त्तविलक्षणामृतद्रावकसमस्तच-राचरनिदानविश्वभावतिथिवाचकशब्दनिष्ठोद्देश्यतानिरूपितोत्त्वत्त्यर्थकठग्विशिष्टप्रा-त्वावच्छिन्नविषयताविशिष्टकत्वावच्छिन्नविषयतावच्छेदकावन्निानूक्तच्छामर्थ्येन निखि-लगुणगणग्रामाभिरताष्टकान्तर्गतं यल्लम्बायमानन्तत्किमर्थमिति प्रश्नः ।

## [ दशमः ]

यद्यपि प्रमाणभूत आचार्य्योदर्भपवित्रपाणिश्शुचाववकाशे प्राङ्मुखो महता प्रयत्नेन सूत्राणि प्रणयतिस्म। तत्राशक्यं वर्णेनाऽप्यनर्थकेन न भवितव्यमिति तथापि तत्तत्पदनि-ष्ठवृत्तिज्ञानाधीनवृत्तिविषयकज्ञानत्वावच्छिन्नजनकतानिरूपितजन्यतानिरूपितनिरूपक-त्वसम्बावच्छिन्नायाऽवच्छेदकता तादृशावच्छेदकतानिरूपिता याऽवच्छेद्यता तादृशाव-च्छेद्यतावती या विषयता तादृशविषयताश्रयत्वस्यैव पदार्थत्वेन समव्यापकत्वेन स्वा-धीनीकृतसमस्तव्यवहारच्छटात्वावच्छिन्नत्वेन गीर्वाणवाग्वल्लिललिताल्वालकल्पा-न्तःकरणावच्छिन्नाखण्डहृन्मण्डलप्रचण्डपण्डदोर्दण्डसण्डमण्डझण्डझङ्कोरझलकितझलाक-झङ्खलीकृततत्त्वमानसमरालकरालशुभनालतालालक्षाल्व्याळभुवनकिलकालकुलकाला-सुमधवलप्रबलबलसरलतरलदाडिमडिण्डिमडमरुडीयमानविमलच्छविचकोरचकितीकृतचा-रुचामरचामीकरणचरणचितिचिदाकारचयचिदानन्दीकृतविश्वविमलतरलविषयत्वेन वक्तृ-

प्रत्यक्षज्ञाननिरूपितलौकिकविषयतात्त्वावच्छिन्नत्वावच्छेदकावच्छिन्नत्वसम्बन्धाक्रान्तप्रतियोगितासम्बन्धावच्छिन्नाभाववत्त्वावच्छिन्नाभेदसम्बन्धावच्छिन्नचाक्षुषप्रत्यक्षत्वावच्छिन्नप्रतियोगिकाभाववद्दोनिष्ठोद्देश्यतानिरूपितविधेयताश्रयतात्तीयटानिष्ठस्थानितानिरूपितादेशतावन्नाप्रतिबन्धकोत्त्वप्रतियोगिकसिद्धत्वाभाववन्निष्ठप्रतिबन्ध्यतानिरूपितप्रतिबन्धकतावद् यदष्टकन्तत्किमर्थमिति प्रश्नः ।

[ एकादशः ]

नन्वस्ति शास्त्रे क्रमद्वयमारोहणक्रमोऽवरोहणक्रमश्च । नीचादूर्ध्वंगमनमारोहणम् , ऊर्ध्वादधोगमनम्पतनम्वाऽवरोहणम् ।

वर्णज्ञानं पदज्ञानम्वाक्यज्ञानमृग्ज्ञानं सूक्तज्ञानमेवमारोहणम् । सूक्तज्ञानमृग्ज्ञानम्वाक्यज्ञानं पदज्ञानं पदज्ञानं वर्णज्ञानमवरोहणम् । द्वितीयमवरोहणक्रममवलम्ब्य दीक्षितैः कौमुदीरचना कृता, ऋक्सूक्तयोर्वैदिक्यां प्रक्रियायाम्विवेकः । देवदत्तो गच्छति हरिम्वन्दे सुद्ध्युपास्योऽस्ति दध्यानय इत्त्यादिषु संहिताधिकारीयसन्धिकार्य्यसंसिद्धये संहितायामित्त्यधिकृत्त्ये "को यणची"त्यादिनिरूपणम्' तदनन्तरं पदज्ञानार्थं "सुप्तिङन्तं पदमि"ति सूत्रावश्यकता । तत्र सुपःप्राथम्येनोपादानात्सुप्त्वसम्पादका "र्थवत्सू"त्रारम्भ इति कथङ्कारमेवं क्रमतरणी । अइउणादिसूत्रैर्वर्णज्ञानानन्तरमेव पदज्ञानार्थं "सुप्तिङन्तं पदमर्थवदधातुरप्रत्त्ययः प्रातिपदिकम् तिप्तस्झिसिप्थस्थे"त्त्यादिसूत्रावश्यकता ।

धात्त्वधिकारीयकृत्प्रत्त्ययप्रकरणं परिसमाप्य पदज्ञानाव्यवहितोत्तरकालावच्छेदेन संहिताधिकारीयसन्धिकार्य्यन्तन्निष्ठावश्यकसंज्ञापरिभाषज्ञानाय संज्ञापरिभाषप्रकरणन्तत्पूर्वमनन्तरम्वा यथेच्छमिति शुद्धः प्रकारोऽत एवार्थबोधनाय लोके वाक्यप्रयोगः पूर्वमेव, श्लोककाव्यादिरचनापि वाक्यानुसन्धानादेव'छन्दश्शास्त्रप्रवृत्तिरपि वाक्यानुरोधेनव पुरातनवैयाकरणैश्च वाक्यस्यैव प्राधान्यामदर्शितम् भर्तृहरिणाऽपि वाक्यपदीयादिमहानिबन्धे वाक्यस्फोटोऽतिनिष्कर्षं तिष्ठतीति मतस्थिति"रितिन्यगादि । अखण्डवाक्यस्फोटो मुख्य इति तत्र बहुधोल्ललेखाच्च द्वितीयावरोहणक्रमस्य सर्वनाहतत्त्वाच्च तस्मादवरोहणक्रमानुरोधिनीरचना दीक्षितैःकथंकृतांविद्वद्वरेण्यैरिति । किञ्च यत्तदोर्नित्त्याकांक्षा यथा तथा संज्ञासंज्ञिनोरपि संज्ञाविधायकशास्त्रनिरूपणानन्तरमेव संज्ञिविधायकसूत्रनिरूपणमुचितमुदाहरणप्रत्त्युदाहणाभ्यान्तयोःसूत्रयोराकाङ्क्षानिवृत्तिरेव फलमेवमेव व्यवहारःपूर्ववैयाकरणैश्शाकटायनादिभिर्दर्शितः ।

कौमुद्यान्तु संज्ञाप्रकरणमन्यत्र संज्ञिप्रकरणमन्यत्र संज्ञापरिभाषे कार्यकालपक्षो यथोद्देशपक्षश्च विशेषाभ्यासात्स्मरणाद्वा संज्ञासंज्ञिनोःक्वचिदैक्यम् प्रथमाध्यायप्रथमपादाष्टमहावाक्यजन्यशाब्दवृद्धित्त्वावच्छिन्नं प्रति संज्ञिशास्त्रजन्यवाक्यार्थबोधःकारणमन्यथाऽकाङ्क्षाशान्तिर्न स्यात् तथा चान्तस्थादिवर्णद्वयत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नपाणिनीयसङ्केतसम्बन्धावच्छिन्नतदादितदन्तसमुदायघटकवर्णवृत्तिजात्यवच्छिन्ननिरूपितशक्तिअन्निष्ठोद्देश्यतानिरूपितत्त्वसम्बन्धावच्छिन्नस्वनिष्ठस्थानितानिरूपकत्त्वसम्बन्धावच्छिन्नग्रहणकसूत्रघटकोदित्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नपञ्चमवर्णत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नविधेयतावच्छेदकावच्छिन्नविधेयतावच्छेदकावच्छिन्नसाधुत्त्वसम्पादकाष्टमाध्यायपञ्चमपादपञ्चचत्वारिंशत्त्वत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नाव्यवहितपूर्वत्त्वावच्छिन्नौपश्लेषिकाधिकरणसप्तम्यर्थत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नोदित्त्वावच्छिन्नपञ्चमवर्णत्त्वावच्छिन्नपाणिनीयसङ्केतसम्ब-

न्धावच्छिन्नविलक्षणविधेयतावच्छेदकावच्छिन्नाद्यनेकविशेषणवैशिष्ट्यावच्छिन्नाष्टकान्तर्गतापूर्वप्रणयनङ्किमर्थमिति प्रश्नः।

## [ द्वादशः ]

ननु "इत्थन्निष्कृष्यमाणं यच्छब्दतत्त्वन्निरञ्जनम्। ब्रह्मैवेत्यक्षरम्प्राहुस्तस्मै पूर्णात्मने नमः। नामरूपे व्याकरवाणीति" श्रुतिसिद्धा द्वयी सृष्टिस्तत्र रूपस्येव नाम्नोऽपि तत्त्वम्। प्रक्रियांशस्त्वविद्याविजम्भणमात्रम्। "शास्त्रेषु प्रक्रियाभेदैरविद्यैवोपवर्ण्यते। समारम्भस्तु भावानामनादिब्रह्म शाश्वतम्" शाब्दिकमते शब्दा नित्या अनादिसिद्धा नियतानुपूर्वीकाः। ब्रह्मा बृहस्पतये प्रोवाच बृहस्पतिरिन्द्रायेन्द्रो भरद्वाजाय भरद्वाज ऋषिभ्य ऋषयो ब्राह्मणेभ्यस्तं खल्विममक्षरसमाम्नायमित्याचक्षत इति पारम्पर्यक्रमागतस्य कानि पुनरस्य योगानुशासनस्य प्रयोजनानि "रक्षोहागमलघ्वसंदेहाःप्रयोजनम्" शब्दानां सूत्रैस्साधुत्वप्रदर्शनं प्रक्रियाभेदेन शिष्यबुद्धिवैशद्यार्थमेव नातिरिक्तमन्यत्किमपि। तथाच प्रक्रियासाम्राज्ये प्रथमाध्यायप्रथमपादपञ्चषष्टित्वसंख्यावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावद्दुत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नपत्त्वावच्छिन्नविषयतावच्छेदकावच्छिन्नद्विमात्रत्वावच्छिन्नतवर्गचतुर्थवर्णत्वावच्छेदकावच्छिन्नाऽपूर्वसङ्केतविषयतावच्छेदकावच्छिन्नपाणिनिमुन्यभिप्रायविषयाक्रान्तत्वावच्छिन्नैतद्गुणवैशिष्ट्यघटितत्वावच्छिन्नषष्ठाध्यायतुरीयपादसप्तत्वसंख्यात्वावच्छिन्नावच्छेदकावच्छिन्नतवर्गपञ्चमवर्णाद्यवयवविशिष्टगुणपुञ्जगुञ्जकेलिकलाकुसुमसौरभप्रपन्नाष्टकान्तर्गतलक्ष्यसाधनपूर्वकशिष्यबुद्धिवैशद्यार्थं प्रणयनं किमर्थमिति प्रश्नः।

## [ त्रयोदशः ]

यथाविधं यद्विषयान्नजस्य प्रश्नस्य निर्वक्ति परो यथोक्त्या।
वाच्यस्तथैवोत्तरवादिनाऽपि तथैव वाचा स तथाविधोऽर्थः॥
प्रश्नस्य यस्त्याद्विषयस्स वाच्यो वाचान्यथा व भवेन्निरुक्तः।
इदन्त्वयाप्यास्थितमेतयैव गिरा स्वपृच्छा विषयस्य वक्त्रा॥

इति शिष्टोक्त्या यद्विषयतावच्छेदकावच्छिन्नःप्रश्नस्तद्विषयतावच्छेदकावच्छिन्नमेवोत्तरं येन प्रष्टॄणां सन्तुष्टिर्भवेत्। तथाच तत्तत्सभायां शास्त्रार्थप्रचारःपुरातनः। एवञ्च शास्त्रार्थशब्दस्य कार्थे शक्तिः, को धातुः, कःप्रत्ययः, धात्वर्थः कः, प्रत्ययार्थःकः, विशिष्टार्थःकः, रूढयोगरूढयौगिकयौगिकरूढभेदाच्चतुर्विधशब्दस्तत्र कोऽयं शब्दः, कश्चाक्यः, किं शक्यतावच्छेदकम्, किञ्च शक्यतावच्छेदकतावच्छेदकमिति कृत्स्नमवष्टभ्य सञ्चकाद्य किन्तावच्छास्त्रार्थत्वमिति सपरिकरं लक्षणं परिष्कृतं समुद्भाव्यताम्।

शासु अनुशिष्टाविति धातुः करणे त्रप्रत्ययः शिष्यन्ते पदार्था अनेनेति शास्त्रम्। अर्थशब्दः प्रयोजनवाची शास्त्रस्यार्थश्शास्त्रार्थः, शास्त्रमेवार्थः प्रयोजनं यत्र स शास्त्रार्थः। भवद्भिस्साकं शास्त्रार्थं करिष्यामीति लोकव्यवहारात् "अभिव्यक्तपदार्था ये स्वतन्त्रा लोकविश्रुता शास्त्रार्थस्तेषु कर्त्तव्यश्शब्देषु न तदुक्तिषु" इति। तेन त्वया शास्त्रार्थःकर्त्तव्य इति दर्शनाच्च शास्त्रमर्थयते याचत इति शास्त्रार्थं इतिव्युत्पत्तिः। शास्त्राणामर्थः प्रयोजनं यत्र विचारे स शास्त्रार्थं इत्यपि।

सन्देग्धृहृदयसन्तोषकत्वं शास्त्रार्थत्वम्।

नच सन्देग्धॄणां सन्तोषस्तु भूम्या द्रव्येण मानेन त्वौकिकपदार्थान्तरणान्येन चेति

तेषामपि शास्त्रार्थत्वापत्तिरिति वाच्यम् ? इदन्तत्त्वम्वा किं हेयं किं ग्राह्यमित्येवम्विधसन्देहे तन्निरासाय युक्तिप्रमाणाभ्यां सन्देग्धृहृदयसन्तोषकत्वं शास्त्रार्थत्वम् इति लक्षणात् । ननूत्तरे ज्ञातेऽपि पाण्डित्यपरीक्षार्थमामोदावाप्त्यर्थम्वा परिषत्सु प्रयोज्यः करोति प्रश्नन्तत्रानेके विचारास्स्फुरन्ति तादृशे कथं सन्देग्धृत्वसंघटनमिति वाच्यमितिचेन्न ? सम्पूर्वकदिहधातोश्शङ्काकरणेऽर्थे शक्तिर्यदि ज्ञातोत्तरोऽपि शङ्कते तदा सन्देग्धृत्वन्निर्विवादं संघटते । तथाचाऽव्याप्त्यभावात् तदसंघटनेऽपि ऐहलौकिकपारलौकिकानेकविधानन्दवर्षकत्वं शास्त्रार्थत्वमिति योजनाच ।

वस्तुतस्तु शास्त्राणामर्थःशास्त्रार्थःअर्थो वाच्यःशक्यो वा । शास्त्रपदेन च न्यायवैशेषिकसांख्ययोगमीमांसावेदान्तव्याकरणज्यौतिषकाव्यादिविषयाणां तत्तन्नामधेयानां ग्रहणम् । शास्त्रपदेन तत्तच्छास्त्रप्रतिपादितग्रन्थास्तद्घटितवाक्यानि च गृह्यन्ते । लक्ष्यार्थो वातश्शक्यार्थस्संम्पद्यते । तथाच यौगिक एवायं शास्त्रार्थशब्द इति न विशेषपरिष्कारधारावश्यकता वरीवर्त्तीति सरयूपारीणशुक्लाः ।

## [ चतुर्दशः ]

ननु अनाहार्य्याऽप्रामाण्यज्ञानानास्कन्दितलक्ष्यधर्मिकसाधुत्वप्रकारकबाधजनकत्वमपि शास्त्रत्वमेवञ्च क्त्व इत्यादिलक्ष्यधर्मिकसाधुत्वोपपत्तये प्रथमाध्यायप्रथमपादीयत्रयश्चत्वारिंशत्सूत्रसङ्केतिताऽपूर्वसञ्ज्ञानिष्ठा या विषयता तादृशविषयतात्वावच्छिन्नयत्किञ्चिन्निष्ठावच्छेदकतानिरूपितावच्छेदकता तादृशावच्छेदकतावच्छेदकतावच्छेदकताद्यनेकतत्त्वघटितद्वितीयाध्यायतृतीयपादैकोनचत्वारिंशच्छास्त्रविहितसञ्ज्ञानिष्ठप्रतियोगितानिरूपितनञर्थाभावत्वावच्छिन्नावच्छेदकावच्छिन्नतद्वत्त्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नसप्तम्यर्थघटितत्वावच्छिन्नत्रिमात्रत्वावच्छिन्नापूर्वसङ्केतसम्बन्धावच्छिन्नविषयतानिष्ठविधायकत्वधर्मावच्छिन्नषष्ठाध्यायचतुर्थपादाष्टमसंख्यात्वावच्छिन्नावच्छेदकतानिरूपितावच्छेद्यतावत्स्वरूपसम्बन्धावच्छिन्नानेकविधतत्तद्धर्मावच्छिन्नबोधकत्वधर्मावच्छिन्नसाधुत्वासाधुत्वान्यतरनिर्णायकत्वधर्मावच्छिन्नैहलौकिकपारलौकिकोभयविधविलक्षणधर्मावच्छिन्नशब्दब्रह्मपरब्रह्मान्यतरमूलभूताखण्डदण्डायमाननिरवच्छिन्नसावच्छिन्नसमग्रशक्तिसाम्राज्यप्रवाहत्वावच्छिन्नाश्रयत्वसम्बन्धावच्छिन्नसकलशास्त्रपुराणेतिहासयावत्संस्कृतसाहित्यकलाकुतूहलकल्लोलकलननवनवदलदलनापूर्वशक्तिसम्वलननवनोन्मेषणज्योतिर्धरधाराधारधारणानिखिलप्रपञ्चनिरावरणनिर्वाणानन्दकन्दव्रजचन्द्रचरणपरागचञ्चलचञ्चरीकसौमनस्याद्यनन्तानन्तगुणगणोपस्कृताष्टकान्तर्गतापूर्वप्रणयनञ्चिमर्थमिति प्रश्नः ।

विशेषः—एवम्प्रकारेणान्येऽपि प्रश्ना विद्वद्भिस्सम्पाद्य प्रचारणीयाः ।

## पण्डितराज शुक्लश्रीवेणीमाधवशास्त्रिविरचितायां परिभाषेन्दु-शेखरस्य बृहच्छास्त्रार्थकलाटीकायां कृतानां शेखरीयतत्तत्स्थलखण्डनानां

## विशेषशाब्दबोधादीनां च पृष्ठसूची ।



परिभाषाणां शाब्दबोधास्तु–तत्तत्परिभाषाविषयकशेखरीयलेखविवेचनान्ते बृहच्छास्त्रार्थकलायां तत्तच्छाब्दबोधाः स्फुटन्दर्शिताःपरम् व्याख्यानत इत्यारभ्य व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यन्तपरिभाषाणां शाब्दबोधास्सौविध्यमनुरुद्ध्य २०४ पृष्ठतः २१४ पृष्ठपर्यन्तमेकत्रैवोपवर्णिता इत्यवधेयाः ।

---

प्राप्तिस्थानम्—

जयकृष्णदास हरिदास गुप्तः—

चौखम्बा संस्कृत सीरिज़ आफिस,

बनारस सिटी ।

॥ श्रीः ॥

# परिभाषेन्दु-प्रश्नपञ्जिका ।

श्रीप्रदं बुद्धिदं यावद्विघ्नप्रशमकारणम् ।
प्रणमामि मनोऽभीष्टदायिनं शुभवारणम् ॥ १ ॥
शब्दशास्त्रपरीक्षासु प्रविष्टानां हितेच्छया ।
प्रशस्तपरिभाषेन्दोस्तन्वे प्रश्नोत्तरावलीम् ॥ २ ॥
विश्वविश्रुतशास्त्रार्थश्रीवेणीमाधवात्मजः ।
गर्गान्ववायःश्रीराजनारायणसमाभिधः ॥ ३ ॥

अथ सर्वप्रान्तीयपरीक्षासु समागताः

## परिभाषेन्दुशेखरीयाः प्रश्नाः ।

१–यदागमपरिभाषाया अनित्यत्वे किम् प्रमाणम् ? तेन तस्या वर्ण-ग्रहणेऽप्रवृत्तिर्बोधयितुं शक्यते नवेति विविच्योच्यताम् ।

२–गौणमुख्यन्यायस्य पदकार्यत्वे का युक्तिः ? किञ्च फलं ? पदकार्य-त्वस्य च किं स्वरूपम् ? ।

३–जातस्य बहिरङ्गस्यासिद्धत्वे प्रमाणम्फलञ्चोपपाद्य फलांशेऽन्यथा-सिद्धिः सम्भवति न वेति सोपपत्तिकमुच्यताम् ।

४–अकृतव्यूहपरिभाषायाः फलं प्रमाणञ्च किम् ?, तस्याःखण्डनप्रकारश्च नागेशेन कथम् प्रदर्शितः, स च युक्तो न वेति विविच्योपपाद्याऽनन्य-थासिद्धं प्रयोजनमस्ति न वेति सोपपत्तिकमुच्यताम् ।

५–श्रुतानुमितयोरिति परिभाषायां प्रमाणम्फलञ्च किम् ।

६–अनुबन्धेष्वेकान्तत्वाऽनेकान्तत्वयोः कतरत् सुन्दरमिति नाऽतिवि-स्तरेण लिख ।

७–तमपः कथमनेकविधान्तर्थ्यगमकतेति विस्पष्टमुच्यताम् ।

८–पुनः प्रसङ्ग-सकृद्गतिन्याययोः कैयटोक्तबीजमुपपाद्योद्दूष्य च स्वयं सिद्ध्युपायं लिख ।

९–अन्तरङ्गपरिभाषायाम् अर्थकृतानादरः प्रसाध्यताम् ।

१०–वार्णपरिभाषायाः समानकार्यितावश्यी कस्य हेतोरस्ववधावि सा च केति निरूप्यताम् ।

११–गुणानां भेदकत्वतदभावयोः कतरस्मिन्निर्भर इति विस्तरेण लिख ।

१२–श्तिपाशपेति प्राचीनकोलाहलो निरूप्यताम् ।

१३–यद्यपीदं तत्रासिद्धमिति वाक्यं विवृत्य पूर्वन्धातुरुपसर्गणेति मते

यदागमपरिभाषावतरणफलान्यथासिद्धिस्परिहर ।

१४-अकच्सहितस्य निर्दिश्यमानता अस्ति न वेति विविच्याच्यताम् ।

१५-विकरणेभ्यो नियमो बलीयानिति सविस्तरं व्याख्याय यत्तु योऽर्थवानिति व्यपदेशिवत्परिभाषोपदर्शितकैयटं दूषय ।

१६-अर्थकृतबहिरङ्गतायाः सविस्तरखण्डनपुरस्सरं पूर्वं धातुरुपसर्गेणेति पक्षमुद्दूष्य 'अनुदात्तङित इति सूत्रे कैयटोक्तां लकारविशेषापेक्षित्वादिबहिरङ्गतां च दूषय ।

१७-येन नाप्राप्त इत्यनेन बाध्यताबीजमवधानदानेन लिख ।

१८-हल्स्वरेति क्वचित्स्वार्थिकेति च परिभाषाद्वयं लिख ।

१९-कार्यमनुभवन्निति परिभाषा द्विर्वचनेऽचीति भाष्ये कथं ध्वनिता किञ्चास्याः असाधारणफलम् ।

२०-ऊडिदम् इत्यत्र फलसत्त्वे ऊड्ग्रहणं कथमन्तरङ्गपरिभाषायां ज्ञापकम् कानि चास्याः फलानि, त्रिपादीस्थे आभीये चान्तरङ्गे एतदप्रवृत्तौ प्रमाणफलानि सम्यक् दर्शय ।

२१-गामादाग्रहणेष्वविशेषः इति परिभाषा सविशेषं व्याख्येया ।

२२-अर्द्धमात्रालाघवेनेति परिभाषा व्याख्यायताम् ।

२३-लक्ष्येलक्षणमित्यत्र किं मानम्, किञ्च तल्लक्ष्यत्वं येन षट्सन्त इत्यत्र ण्यन्ताण्णिच् इत्यत्र च न्यायो न प्रवर्त्तते, दीव्यति इत्यत्र प्रवृत्तिरिति सुस्पष्टमुच्यताम् ।

२४-यदागमपरिभाषायाः ग्रन्थकृदभिमतमनित्यत्वमुपपाद्याऽन्याभिमतमनित्यत्वञ्च निराकृत्य उभयोः कतरद् युक्तमिति साधु सिद्धान्तय ।

२५-एकदेशविकृतमनन्यवदित्यवतरणं प्राचीननव्योभयमतेनोपपाद्यैकदेशविकृतत्वात् अक्तपरिमाणत्वे पदकृत्यप्रदर्शनपुरस्सरं परिष्करणीये ।

२६-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इत्यत्र ज्ञापकं सम्प्रदर्श्याऽन्तरङ्गनिमित्तविनाशकलुकः प्राबल्यबोधकत्वे सप्रमाणफलं निरूप्यताम् ।

२७-अभ्यासविकारेषु बाध्यबाधकभावो नास्तीति परिभाषाया अर्थंप्रदर्श्य ज्ञापकञ्चोपपादयत ।

२८-अन्त्यविकारेऽन्त्यसदेशस्येत्यस्याः फलानि प्रदर्श्य तानि च निराकृत्याऽन्त्यसदेशत्वम्परिष्कुरु ।

२९-उपपदविभक्तेः कारकविभक्तिर्बलीयसी इत्यत्र का वाचोयुक्तिः इति निरूप्यताम् ।

३०-अनुबन्धानामेकान्तत्वानेकान्तत्वपक्षौ सम्यगुपपाद्य तयोः कतरद् युक्तमित्युपपाद्यताम् ।

३१-गौणमुख्यन्यायस्य पदकार्यविषयत्वे का युक्तिः किञ्च फलं, पद-
कार्यत्वस्य किं स्वरूपम् ।

३२-जातस्य बहिरङ्गस्यासिद्धत्वे प्रमाणं फलञ्चोपपाद्य फलांशेऽनन्य-
थासिद्धिः सम्भवति नवेति सोपपत्तिकमुच्यताम् ।

३३-अकृतव्यूहपरिभाषायाः प्रमाणम् फलञ्च किम् , तस्याः खण्डनप्रका-
रश्च नागेशेन कथम् प्रदर्शितः स च युक्तो न वेति विविच्योपपाद्य
तस्या अनन्यथासिद्धप्रयोजनमस्ति न वेति लिख ।

३४-श्रुतानुमितयोरिति परिभाषायाम् फलम् प्रमाणञ्चोच्यताम् ।

३५-यदागमपरिभाषाया अनित्यत्वे किम् प्रमाणम् , तेन तस्या वर्णग्र-
हणेऽप्रवृत्तिर्बोधयितुं शक्यते न वेति विविच्यताम् ।

३६-वर्णग्रहणे नास्ति प्रत्ययलक्षणमिति परिभाषायाः फलं प्रमाणञ्च लिख।

३७-सकृद्गति पुनः प्रसङ्गविज्ञानपक्षयोः बीजमुपन्यस्य कैयटोक्तिं दूषयत ।

३८-वार्णादाङ्गं बलीय इति परिभाषाया ज्ञापकं विषयञ्च सम्यग् वदत

३९-उपपदविभक्तेः कारकेति परिभाषा वाचनिकी न्यायसिद्धा वेति
सम्यगुपपाद्यताम् ।

४०-कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते इति परिभाषा भाष्ये
कथं ध्वनिता ।

४१-निर्दिश्यमानपरिभाषा भाष्ये किम् मूलिका, किञ्च तत्र निर्दिश्य-
मानत्वम् , कया रीत्या चेयङुवङोङित्वस्यान्त्यादेशार्थता, कथञ्च
रीङ्रिङोर्ङित्वस्य स्पष्टार्थता ।

४२-उत्तरपदाधिकारे प्रत्ययग्रहणे न तदन्तग्रहणम् इति परिभाषायाः
प्रमाणम् फलञ्च प्रपञ्चय ।

४३-अभ्यासविकारेषु बाध्यबाधकभावो नास्तीतिप रिभाषायाम् प्रमाणं
स्पष्टमुपपाद्य तदर्थविषये कैयटोक्तिन्दूषय ।

४४-सन्नियोगशिष्टानामन्यतरापाये उभयोरप्यपाय इत्यत्र ज्ञापकं किम् ,
तदर्थश्च कः, कथञ्चैनेय इत्यादिसिद्धिरित्येतत् सकलं स्पष्टम-
भिधीयताम् ।

४५-कार्यमनुभवन्हि कार्यी निमित्ततया नाश्रीयते इत्यस्य मूलोक्तफ-
लन्तिरस्कृत्य फलान्तरम् प्रदर्श्य 'द्विर्वचनेऽचि' इति भाष्यात् अस्या
ध्वननञ्च वक्तव्यम् ।

४६-वर्णाश्रये नास्ति प्रत्ययलक्षणमित्यस्य ज्ञापकफले प्रदर्श्य 'अतृणेट्'
'मित्रश्रीरि'त्यादौ प्रत्ययलक्षणप्रकारश्च वक्तव्यः ।

४७-पुनः प्रसङ्गविज्ञान, सकृद्गतावित्यनयोः कैयटोक्तज्ञापकमुपन्यस्य
तत् तिरस्कृत्य स्वमते दत्तं ज्ञापकमुपवर्णयत ।

४८-प्रत्ययग्रहणे चापञ्चम्या इत्यस्य कोऽर्थः, फलञ्च किम्, तत्फलं निर्दिश्यमानपरिभाषया वारयितुं शक्यते न वा, आद्ये फलान्तरं वाच्यम्, अन्त्ये युक्तिरपेक्षिता ।

४६-येन नाप्राप्तन्यायेन बाधस्थले कीदृशो बाधः क भवति, तदुक्तम् प्रमाणमस्य वक्तव्यम् ।

५०-अध्येता शयितेत्यनयोः फलत्ववारणायोपायम्प्रदर्श्याशक्यवारणफलं कार्यमनुभवन्निति परिभाषायाः प्रदर्शनीयम्, न्यायसिद्धत्वञ्चास्या उपपादनीयम् ।

५१-यदागमपरिभाषाया अस्वीकारे कस्य वैयर्थ्यम्, स्वीकारे च कस्य वैयर्थ्यम्, व्यर्थीभूताभ्यान्ताभ्यां यद् यद् ज्ञापितन्तत् प्रदर्श्य तदुद्धारोऽपि प्रदर्शनीयः ।

५२-एकदेशविकृतमनन्यवदित्यस्यार्थो ज्ञापकमनन्यथासिद्धम्फलञ्च प्रदर्शनीयम्, अक्तपरिमाणत्वञ्च किम् ? ।

५३-आद्यन्तयोरपूर्वत्वमनुत्तरत्वञ्च लक्षणमङ्गीकृत्य व्यपदेशिवदेकस्मिन् इति तिरस्कर्तुं शक्यते न वेति सयुक्तिकं कथयन्तु, एकपदार्थमुक्त्वा फलन्तस्य वक्तव्यम् ।

५४-कृद्ग्रहणे गतिकारकपूर्वस्यापि ग्रहणमित्यस्या ज्ञापकफले प्रदर्श्याऽपिग्रहणफलं दर्शयत ।

५५-नन्वेकान्तत्वपक्षेऽप्यनुबन्धविनिर्मुक्तस्यैवोपस्थित्या तस्यैव चादेशत्वेन कथमोशादेस्सर्वादेशत्वम्, सूत्रे शिद्ग्रहणमन्तरा सिद्धन्तयुक्तियुक्तमुच्यताम् ।

५६-स्नात्वाकालकाकृत्य व्याघ्रपात्पदः अनयोर्ल्यबादेशपदादेशयोरभावः सजूस्सजूर्भ्यामित्यत्रादौ रुत्वञ्च भवति येन स उपायो वाच्यः ।

५७-व्यपदेशिवद्भावोऽप्रातिपदिकेनेत्यस्यार्थो ज्ञापकमुदाहरणञ्च वाच्यम् ।

५८-प्रत्ययग्रहणेचापञ्चम्याः एतस्या ज्ञापकमुदाहरणञ्चोक्त्वा निर्दिश्यमानपरिभाषया फलसिद्धिः कुतो नेति वाच्यम् ।

५९-धातोः कार्यमुच्यमानं तत्प्रत्यये भवति इत्यस्य ज्ञापकफले वर्णयित्वा नग्भ्यामित्यादौ कुत्वाभावे कथन्न भवतीयमिति वर्णय ।

६०-अर्थवद्ग्रहणपरिभाषाया न्यायसिद्धत्वसूत्रसिद्धत्वयोरविकलं प्रकारम्प्रदर्श्य तयोर्युक्तायुक्तत्वे सोपपत्त्युपपादनीये ।

६१-भाष्यमानेन सवर्णग्रहणपरिभाषा प्राङ्नव्यमतविशेषोपपादनपूर्वकं सप्रमाणं विवेचनीया ।

६२-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति परिभाषा फलप्रमाणाभ्याम् प्रमापणीया, लुकपदापिपदाभ्यां विवक्षितार्थश्च बाधकपरिहारपूर्वकमुल्लेखनीयः ।

६३-उपपदविभक्तितः कारकविभक्तेर्बलीयस्त्वस्य बीजफले प्रदर्श्य कारकविभक्तेरनतिप्रसक्तस्वरूपं निरूपयत।

६४-लक्षणप्रतिपदोक्तन्यायः परिष्कृत्य लक्ष्येषु सङ्गमनीयः।

६५-यदागमपरिभाषा वर्णग्रहणे न प्रवर्त्तते इति मते प्रदर्शितान् दोषानुपपाद्य तेषामुद्धारोऽपि यथासामर्थ्यमुपपाद्यः।

६६-कार्यमनुभवन्हि कार्यीति परिभाषाया ज्ञापकफलध्वननानि वक्तव्यानि फलञ्चावतरणातिरिक्तं वाच्यम्।

६७-वर्णाश्रये नास्तीति परिभाषाया ज्ञापकमवतरणे नलुमताङ्गस्येत्यस्य प्रवृत्त्यभावो वर्णप्राधान्यं च वर्णनीयम्।

६८-एधते पचते इत्यत्रात्मनेपदनियमप्रवृत्तये कति के प्रकारा आश्रिताः।

६९-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधत इत्यस्य ज्ञापकमुपपाद्य लुङ्मात्रविषयत्वं न वेति युक्तिफलसहितं वदन्तु।

७०-गौणमुख्यन्यायस्य उपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्यविषयकत्वे प्रातिपदिकपद इव निपातपदेनाप्यप्रवृत्त्यापत्तौ गोऽभवदित्यादौ प्रगृह्यापत्तिः, तां व्युदस्य अग्नीषोमौ माणवकौ अग्नीसोमौ माणवकौ इति समानार्थप्रयोगे एकत्रैत्वषत्वे अन्यत्र नेति व्यवस्थापयत।

७१-स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषापेक्षितमुपसर्जनत्वं परिष्कृत्य नन्वेवं परमकारीषगन्धीपुत्र इत्यत्रैवातिकारीषगन्ध्यापुत्र इत्यत्रापि ष्यङ इति सम्प्रसारणं स्यादित्यवतारग्रन्थः साधु संयोजनीयः।

७२-द्वयोः कार्ययोर्यौगपद्येन सम्भव एव विप्रतिषेधशास्त्रोपयोगीति कैयटग्रन्थस्य "विधेये निमित्तानन्तर्यविशेषया परतया" नागेशव्याख्यानमायुष्मते रोचते न वा नो चेदुपपाद्य निरस्य स्वयं कैयटोक्तं विरोधं समालोचयत।

७३-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इति परिभाषाघटकस्याऽपिशब्दस्य स्वारस्यमुपपाद्य तत्फलं निभालयत।

७४-लक्षणप्रतिपदोक्तपरिभाषायाः फ[illegible] ज्ञापकञ्चोपन्यस्य परिभाषापेक्षितम् प्रतिपदोक्तत्वं समन्वयपुरस्सरं स्फुटं परिष्कुरुत।

७५-कार्यमनुभवन्निति परिभाषाया अवतरणाशयमसाधारणफलञ्च सम्यङ्निरूप्य भाष्यध्वनितत्वं निपुणं प्रतिपादयत।

७६-वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषाया अवतरणाशयं फलप्रमाणे चोपपाद्य, वर्णप्राधान्यं च परिष्कुरुत।

७७-बहिरङ्गपरिभाषायाः प्रवृत्तिलिङ्गप्रमाणं तत्रत्याङ्गपदार्थञ्च प्रदर्श्य जातासिद्धत्वस्यानन्यथासिद्धं फलं सम्यगुपपाद्यताम्।

७८-वार्णादाङ्गम्बलीय इति परिभाषाया ज्ञापकं फलञ्चोपदर्श्यास्याः प्रवृत्तिस्थलमनुगतरूपेण निरूप्यताम् ।

७९-उपसञ्जनिष्यमाणन्यायेनैव व्याघ्रात्यादीनां सिद्धौ गतिकारकोपपदानामिति परिभाषाया अवतरणं कथं सङ्गच्छते, किञ्चास्याम् मानम्, कारकतद्विशेषयोरुपादान एवैषा प्रवर्तत इति कथं शेखरकृता निराकृतम्, तदयुक्तं न वेति स्पष्टं लेख्यम् ।

८०-सन्नियोगशिष्टानामन्यतरापाय इति परिभाषायां ज्ञापकं फलञ्च सम्यगुपवर्ण्य कैयटमतं निरस्य ऐनेय इत्यादिलक्ष्याणामन्यथासिद्धिञ्च विधायास्या लुग्विषयकत्वं निराकरणीयम् ।

८१-संज्ञापरिभाषयोर्यथोद्देशविषये नव्यप्राचीनयोर्मते सम्यगुपपाद्य तस्य युक्तायुक्तत्वे विवेचनीये ।

८२-सूत्रभाष्यमते समनुसृत्य निर्दिश्यमानपरिभाषायां प्रमाणं प्रदर्श्य जरा जरसौ सजूः सजूर्भ्यामित्यनयोरविरोधेन निर्दिश्यमानत्वम् परिष्कृत्याऽस्या अनन्यथासिद्धं किमपि फलं सम्भवति न वेति विचार्यताम् ।

८३-व्यपदेशिवदेकस्मिन्निति परिभाषायामपेक्षिते आदित्वाऽन्तत्वे सूत्रवार्त्तिकभाष्यानुसारेण परिष्कृत्याऽस्याः प्रवृत्तिस्थलं च प्रदर्श्य "अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते" इति परिभाषायाः फलप्रमाणे निरूपणीये ।

८४-अपवादत्वम् परिष्कृत्य बाधबीजानि सोदाहरणानि प्रतिपाद्याऽत्रानुगतेन केन चिदेकेन बाधबीजेन निर्वाहः सम्भवति न वेति निरूप्यताम् ।

८५-अनन्त्यविकारेऽन्त्यसदेशस्येति परिभाषायाः फलप्रमाणे सम्यगुपपाद्याऽन्त्यसदेशत्वं निर्दोषम् परिष्क्रियताम् ।

८६-प्रणिदापयति प्रनिदारयतीत्यादौ णत्वतदभावौ, दिदीये इत्यादौ यणाद्यभावञ्च सोपपत्तिकमुपपाद्य यदागमपरिभाषायाः स्थानिवत्सूत्रेण गतार्थत्वमाशङ्क्य परिह्रियताम् ।

८७-स्त्रीप्रत्यये चानुपसर्जनेनेत्यस्या अर्थमवतरणाशयञ्च सम्यगुपवर्ण्यात्र शेखरकृदभिमतमुपसर्जनत्वं परिष्कृत्य तद्युक्ताऽयुक्तत्वे विवेचनीये ।

८८-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् इत्यत्र मतभेदप्रदर्शनपुरस्सरं ज्ञापकत्वमुपपाद्यताम् ।

८९-असिद्धवदत्राभादिति परिभाषाया ज्ञापकं फलञ्च सम्यगुपपाद्योभयशास्त्रप्रवृत्तिक्रमो निरूप्यताम् ।

९० उपपदविभक्तेः कारकविभक्तिर्बलीयसीत्यत्र बीजमुपवर्ण्याऽस्या न्यायसिद्धत्वं निराकृत्य कारकविभक्तित्वञ्च प्रदर्श्य निर्द्धारणीयम्।

९१-व्याख्यानत इति परिभाषाया अवतरणाशयं निर्दोषार्थं बीजञ्च प्रदर्श्याऽस्या असाधारणफलं डादिविषये इति पङ्क्तेरभिप्रायश्च स्पष्टं वर्णनीयौ।

९२-व्यपदेशिवदेकस्मिन् इत्यत्राऽपेक्षिते आदित्वान्तत्वे सूत्रकारादिमतानुरोधेन परिष्कृत्याऽशास्त्रीयधर्मातिदेशे युक्तिं प्रदर्श्य एकस्मिन्नित्यस्य नागेशाभिमतमर्थं परिष्कृत्य तद्युक्तायुक्तत्वं विवेचनीयम्।

९३-बहिरङ्गपरिभाषायां भाष्यादिविरोधपरिहारपूर्वकमङ्गपदार्थं सप्रमाणमुक्त्वाऽपरनिमित्तकत्वमन्तरङ्गत्वमित्यत्र गुणदोषौ विचार्य्य सामान्यापेक्षत्वमुपपाद्य निरसनीयम्।

९४-वार्णादाङ्गंबलीय इत्यत्र ज्ञापकमुपन्यस्याऽभ्यासकार्यं तदुत्तरखण्डादेशस्येत्यत्र बीजम् फलञ्च साधूपपाद्याऽस्याः प्रवृत्तिस्थलं सम्यक् प्रदर्शनीयम्।

९५-सन्निपातपरिभाषायां सन्निपातस्वरूपं तत्कृतसङ्कोचप्रकारञ्च प्रदर्श्य रामायेत्यादावनुपपत्तिः सम्यगापाद्य परिहरणीया।

९६-यदागमपरिभाषाया अवतरणाशयमुद्देश्यत्वरूपषष्ठ्यर्थफलं चोपपाद्य तदनित्यत्वे प्रमाणमुच्यताम्।

९७-अर्थवद्ग्रहणपरिभाषाया युक्तिसिद्धत्वसूत्ररूपत्वे उपपाद्याऽनयोः पक्षयोः कतरो ज्यायान् इति सप्रमाणमुपपादनीयम्।

९८-अन्तरङ्गानपि विधीन् बहिरङ्गो लुग् बाधते इत्यस्याम् परिभाषायां प्रमाणम् फलञ्च स्पष्टमुपपादनीयम्।

९९-उपसञ्जनिष्यमाणपरिभाषायां प्रमाणफले अर्थप्रदर्शनपूर्वकं निरूपणीये।

१००-अकृतव्यूहपरिभाषां ग्रन्थोक्तदिशा निराकृत्य तस्याः फलमस्ति न वेति स्फुटमुपपादनीयम्।

१०१-गतिकारकोपपदानामिति परिभाषा फलप्रदर्शनपूर्वकं व्याख्येया।

१०२-कार्यमनुभवन्निति परिभाषायाः फलप्रमाणे निरूपणीये।

१०३-कृद्ग्रहणे गतिकारकपूर्वस्यापीति परिभाषायाः फलप्रमाणे निरूप्याऽस्याः कृन्मात्रग्रहणे प्रवृत्तौ फलप्रमाणे निरूप्येताम्।

१०४-मतान्तरनिरासेन पुनःप्रसङ्गसकृद्गताविति न्यायौ युक्तिफलाभ्यां निरूप्यौ।

१०५-अर्थकृतबहिरङ्गत्वं भाष्यादिविरोधेन निराकृत्य विशेषापेक्षात् सामान्यापेक्षमन्तरङ्गमिति मतमुपपाद्य निरस्यताम्।

१०६–अनन्त्यविकारपरिभाषाया निष्कृष्टार्थं निरूप्य तत्फलानामन्यथा-सिद्धत्वं कर्तुं शक्यते न वेत्युच्यताम्।

१०७–श्तिपाशपानुबन्धेनेति परिभाषाया मुनित्रयानभिमतत्वं प्रति-पादनीयम्।

१०८–अनेकान्ता अनुबन्धा इत्यत्रत्ययोर्हेतुसाध्ययोः स्वरूपे परिष्करणो-ये सम्भावितदोषाणां निराकरणेन।

१०९–निर्दिश्यमानपरिभाषा तथा परिष्क्रियतां यथा स्नात्वाकालकी-कृत्य जरा जरसौ सजूः सजूर्भ्यामित्यत्र दोषलेशो नापतेत्।

११०–वार्णादाङ्गमिति परिभाषायाः प्राचीनोक्तं ज्ञापकमुपपाद्य नव्यमता-नुसारेणाऽपि ज्ञापकमुपदर्श्य आङ्गवार्णयोः समानकार्यित्वे सा परिभाषा प्रवर्त्तते इत्यत्र फलप्रमाणे निरूपणीये।

१११–येन नाप्राप्त इति परिभाषायां साक्षादुद्देश्यतावच्छेदकधर्मयोर्व्या-प्यव्यापकभावो बाधप्रयोजक उत साक्षात् परम्परासाधारणोद्दे-श्यतावच्छेदकधर्मयोरिति सप्रमाणं निरूप्य बाधबीजानि सोदा-हरणानि निरूप्यन्ताम्।

११२–अन्तरङ्गानपि विधीन् बहिरङ्गो लुगित्यस्य फलप्रमाणे सविस्तारं निरूपणीये।

११३–प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि इति परिभाषां परिष्कृत्य तत्र फलप्रमाणे प्रदर्श्यैतस्या अप्रवृत्तिस्थलानि सोदाहरणानि परिग-णनीयानि।

११४–यथोद्देशपरिभाषाविषये नव्यप्राचीनयोर्मते पृथगुपपाद्य तत्र युक्ता-युक्तत्वे विविच्य संज्ञाशास्त्रस्य कार्यकालपक्षे पदैकवाक्यता वाक्यैकवाक्यता वा युक्तेति निरूप्यताम्।

११५–कार्यमनुभवन्निति परिभाषायाः फलं निरूप्यैतस्या भाष्यध्वनितत्वं विचार्यताम्, फलस्यान्यथासिद्धिःसम्भवति न वेति विविच्यतां च।

११६–व्यपदेशिवदिति परिभाषाघटकैकपदार्थं परिष्कृत्यैतस्यां फलप्र-माणे निरूप्याऽन्तत्वादिकं साधु परिष्कृत्यैतयाऽतिदेष्टव्या धर्माः प्रदर्शनीयाः।

११७–अन्तरङ्गपरिभाषायां कीदृशमन्तरङ्गत्वं सिद्धान्ते ग्राह्यम् इति नि-रूप्य अधिकापेक्षस्य विशेषापेक्षस्य च बहिरङ्गत्वं प्राचीनसम्मतं भाष्याऽविरोधसम्पादनेन निरस्यताम्।

११८–येन नाप्राप्तन्यायविषये बाधबीजानि प्रदर्श्य तेषु कस्य चिदेकस्यै-वाङ्गीकारे सर्वकार्यनिर्वाहः सम्भवति न वेति निरूप्यताम्।

११९–सन्निपातपरिभाषायाम् फलप्रमाणे उपपाद्यतया क्रियमाणस्य सङ्कोचस्य प्रकारः प्रदर्शनीयोऽनित्यत्वे फलप्रमाणे च वर्णनीये।

१२०–यद्वागमपरिभाषा ज्ञापकसिद्धा न्यायसिद्धा वेति सम्यग् विविच्य तस्या अनन्यथासिद्धं फलमुच्यताम् ।

१२१–स्त्रीप्रत्यये चानुपसर्जने न इति परिभाषायाः फलं प्रमाणञ्चार्थोपन्यासमुखेनोच्यताम् ।

१२२–अकृतव्यूहपरिभाषायाः फलं प्रमाणञ्चोपन्यस्य प्राचीननवीनमतभेदोऽत्र सम्यग् वर्णनीयः ।

१२३–परनित्यान्तरङ्गापवादानां बलीयस्त्वमभ्यासविकारेषु वर्त्तते न वेत्युदाहरणप्रदर्शनेन वर्णनीयम् ।

१२४–सन्निपातलक्षणपरिभाषाया अर्थमुपवर्ण्याऽनित्यत्वे प्रमाणं फलं चोच्यताम् ।

१२५–उपपदविभक्त्यपेक्षया कारकविभक्तीनां बलवत्त्वे किं बीजं किञ्च फलमिति विशदमुच्यताम् ।

[ प्रायः एत एव प्रश्नाः परीक्षासु समायान्ति नेतरे ]

## अथ प्रश्नक्रमानुसारेण उत्तराणि–

१—आने मुगिति सूत्रे मुग्विधिसामर्थ्यात् परिभाषैषा वर्णग्रहणेऽनित्या । अन्यथा पचमानादिषु अमि अक्त्वातिदेशेन दीर्घापत्तौ तद्विधिर्व्यर्थं एव स्यात् । नच मुक्सूत्रीयभाष्यानुरोधेन पचमानादिषु तास्यनुदात्तेदिति स्वरसिद्धये "अदुपदेशभक्तस्तद्ग्रहणेन ग्राहयिष्यते" इति स्पष्टीकरणेन वर्णग्रहणेऽपि तत्प्रवृत्तिसिद्धौ किमिति वाच्यम् ? तादृशभाष्यस्य वर्णमात्रवृत्तिघटितधर्मातिदेशकत्ववर्णनेनाऽविरोधात् । अत एव दिदीये इत्यादौ यणादिकन्नेति प्राञ्चः । केचित्तु मुग्विधिसामर्थ्याद् वर्णग्रहणे नैषा प्रवर्त्तत इत्येव ज्ञापयन्ति तन्न विचारसहम् ? ङमो ह्रस्वादिति णत्वमाशङ्क्य आद्यस्य नस्य पदान्तस्येति निषेधात् कुर्वन्नास्ते इति, ऋकारस्य गुणवृद्धी अरारावेवेति रेफविशिष्टेऽपि परिभाषयाऽनया शक्तिबोधनीयेति बहुविधभाष्यविरोधेन वर्णग्रहणेऽप्रवृत्तिज्ञापनं सर्वथाऽनुचितमेवेति सङ्क्षेपः ॥ विशेषो बृहच्छास्त्रार्थकलायाम् ।

२—प्रियत्रयाणामित्यत्र त्रयादेशसिद्धये "एवं चाऽप्रसिद्धत्वं गौणलाक्षणिकत्वं चात्र गौणत्वम्" इत्यादिकमुक्तं शेखरकारेण । तत्र तत्फलस्याऽन्यथासिद्धये "नायं न्यायः प्रातिपदिककार्य्ये किन्तूपात्तं विशिष्यार्थोपस्थापकं विशिष्टरूपं यत्र तादृशपदकार्य्ये एवे"ति समुपन्यस्य "परिनिष्ठितस्य पदान्तरसम्बन्धे हि गौर्वाहिक इत्यादौ गौणत्वप्रतीतिर्नतु प्रातिपदिकसंस्कारवेलायामित्यन्तरङ्गत्वाज्जातसंस्कारबाधाऽयोगः प्रातिपदिककार्य्ये प्रवृत्त्यभावे बीजम्" इत्यभिहितम् । एवञ्च स्ववृत्त्यानुपूर्व्यवच्छिन्नविषयताप्रयोजकपदस्य यत्रोपादानं तत्रैवाऽयम्न्यायः प्रवर्त्तते इति सिद्धान्तः । अत एव श्वशुरसदृशस्याऽपत्यमित्यर्थके श्वाशुरिरित्यादौ "अत इञ्" सिध्यति ।

पदकार्य्यत्वञ्च यदि पदोद्देश्यकत्वन्तदा तद्धितविधावनुपस्थानापत्तिः, नापि वस्तुतः पदसम्बन्धित्वम् पदकार्यत्वम् "गोतोणित्" इति णित्वस्यापि तथात्वात्, त्वद्भूतादौ त्वाद्यादेशानापत्तेश्च । किन्तु–अङ्गसंज्ञाऽनिमित्तकत्वे सति वस्तुतः पदसम्बन्धिकार्यत्वम्

पदकार्य्यत्वम् । सुबनिमित्तकत्वे सति स्त्रीत्वानिमित्तकत्वं वा । अत एव बुभावेत्यत्र वुगागमाभावस्सिध्यतीति केचित् ।

अन्ये तु विभक्त्यनिमित्तकत्वे सति स्त्रीत्वाऽनिमित्तकत्वं तत् । बुभावेति च न भवतीति वदन्ति ॥ विशेषोबृहच्छास्त्रार्थकलातोऽवसेयः ।

३—वाह ऊठ् इति सूत्रीयोड्ग्रहणेन ज्ञापिताऽन्तरङ्गपरिभाषा तथाचासिद्धत्वन्द्वेधा जातबहिरङ्गासिद्धत्वं समकालप्राप्तबहिरङ्गासिद्धत्वञ्चेति । धर्मिग्राहकमानादेव जातबहिरङ्गासिद्धत्वस्य बोधितस्य फलविचारे पचावेदमित्यत्र नैत्त्वनिषेधः फलम् ! एत ऐ इत्यस्य स्थाने इत ऐरितिन्यासात् । नापि भवानीत्यत्र दोषः तक्रन्यायेन "नि" आदेशेन बाधात् स्वयम्भुवे इत्यत्र उवङोऽसिद्धत्वाच्छ्वोरित्यूडभावस्तु न फलं ? छकारसाहचर्य्येण विभक्त्यनिमित्तकवकारग्रहणात् । किन्तु नौशब्दस्य अशब्देन समासे नावशब्दादाचारक्विबन्ताण्णावल्लोपे नावयतात्यत्रोठ्निवारणम् फलम् । किञ्च कर्त्तृक्विबन्तप्रकृतिकाचारक्विबन्तभूशब्दात् "अचो यत्" इति यति भव्यमिति तत्रोठोऽभाव एव फलम् इत्यादि॥ विस्तरो बृहच्छास्त्रार्थकलायाम् ।

४—सुस्थितादिशब्देभ्यः कृतदीर्घेभ्यः प्रत्ययोत्पत्त्यर्थम् कृतं समर्थानाम् प्रथमाद्वा इति सूत्र समर्थानामिति ग्रहणमकृतव्यूहपरिभाषाज्ञापकम् । अन्यथाऽन्तरङ्गत्वाद् दीर्घे कृते एव प्रत्ययप्राप्त्या तद्वयर्थ्यस्य स्पष्टत्वात् ।

परन्तु विष्णुण इत्यादावकृतसन्धेरेव प्रत्ययदर्शनात् समर्थग्रहणन्तु सर्वत्र तथा भ्रमवारणाय न्यायसिद्धार्थानुवाद एवेति परिभाषायान्न किमपि मानम् । अत एव विप्रतिषेधसूत्रे भाष्येऽन्तरङ्गपरिभाषाया गौक्षमाणिरित्युदाहरणम्प्रददता भाष्यकृता ध्वनितमेतत् । किञ्च विभज्यान्वाख्यानपक्षे सु उत्थित अस् इ इति स्थिते वार्णादाङ्गं बलीय इति प्राप्तवृद्धिवारणार्थं समर्थग्रहणमिति तत्रैव कैयटे स्पष्टम् । अत एव "चौप्रत्यङ्गस्य प्रतिषेधः" इति वार्त्तिकं भाष्यकृता न प्रत्याख्यातम् । परिभाषायामस्यां सत्यान्तु तद्वैयर्थ्यं स्पष्टमेव । एवमेव च्छ्वोरिति सूत्रे "अवश्यमत्र तुगभावार्थो यत्नः कर्त्तव्योऽन्तरङ्गत्वाद्धि तुक्प्राप्नोती"ति भाष्य उक्तम् । परिभाषासत्त्वे तुकोऽप्राप्त्या यत्नावश्यताऽसङ्गैतव स्यात् । पदसंस्कारपक्षे हरिरित्यादौ विसर्गे कृते ततो गच्छतीत्यादिसम्बन्धे हरिः गच्छीत्याद्येव साधु इति नागेशसिद्धान्तः ।

वस्तुतस्तु अनेकत्रानेकत्रानेककल्पनापेक्षया परिभाषास्वीकारे लाघवम् । अत एव गौभाजित्रमिति सिद्ध्यति । अन्यथा अन्तरङ्गत्वात् णेर्गुणायादेशयोः कृतयोः "विभाजयितुरिड्लोपश्चाञ्च वक्तव्यः" इत्यनेन अन्त्यस्य यमात्रलोपापत्तेरिति केचित् । तन्न ? बहुविधभाष्यविरोधस्यासङ्गत्यादेश्च मूलकारेणैव दर्शितत्वेन नागेशीयमार्गस्यैव श्रेयस्करत्वात् ॥ विशेषोऽस्मत्कृतबृहच्छास्त्रार्थकलीयटिप्पण्याम् ।

६—अङ्गस्य नपुंसकत्वाभावेन प्रियसक्थना ब्राह्मणेनेत्यत्र "अस्थिदधि" इत्यनङ् न भविष्यतीतः श्रुतानुमितयोरिति परिभाषा स्वीक्रियते । श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां पारदौर्बल्यमर्थाविप्रकर्षात्" इति जैमिनीयन्यायसिद्धान्तसिद्धाऽपि "वा नपुंसकस्य" इति सूत्रे "वा शौ" इत्येव सिद्धे नपुंसकग्रहणेन ज्ञाप्यते । बहुददति कुलानि बहुददन्त इति फलभेदसिद्धिर्यथा स्यादिति स्पष्टं "स्वमोर्नपुंसकात्" सूत्रे भाष्ये ।

केचित्तु "ग्रामहृदोत्तरपदात्" इति सूत्रे ग्रामहृदादित्यत्र द्विर्वचनाकरणं ज्ञापकमिति व्याचक्षते, तन्न ? सर्वत्र शाकल्यस्येति निषेधात् "हलो यमां यमि" इति रेफलोपाच्च ॥ इतोऽधिकं बृहच्छास्त्रार्थकलायाम् ।

६—ननु अनुवध्नन्ते परत्र सम्बन्धमासादयन्तीति व्युत्पत्तिमालभन्तोऽनुबन्धाः किम् वृक्षकाकयोः सम्बन्धवद्बोधकाऽनवयवा उत वृक्षशाखयोस्सम्बन्धवद्बोधकाऽवयवा इति संशयेऽनुबन्धा बोधकानवयवा विधेये कदाप्यदर्शनादिति रीत्या अनेकान्ता अनुबन्धा इति परिभाषामूपठता शेखरकृताऽवोचि ।

तत्राऽनुमानप्रकारस्तु—अनुबन्धाः स्वघटितपदाघटितविभक्त्यघटितपदघटकयावद्वर्णघटितानुबन्धाघटितसमुदायपर्य्याप्तश्रावणप्रत्यक्षविषयतावच्छेदकधर्माश्रयनिष्ठविषयताप्रयोजकानवयवाः स्वघटितघटकबोध्यतावच्छेदकधर्मवत्त्वं स्वघटितघटकबोधकावयवत्वेन निश्चितोत्तरत्वविशिष्टं बोधकावयवत्वेनानिश्चितं यत्तदनुत्तरत्वमित्युभयसम्बन्धावच्छिन्नप्रतियोगिताकस्वाभावात् यन्नैवन्तन्नैवम् । यद्यप्यत्र पक्षे नानुबन्धकृतमित्यादिपरिभाषात्रयाकरणरूपं लाघवन्तथापि स्थाम्नोऽकारः शित्कित्प्रभृतिषु नानाकल्पनेन वुञ्छणादौ ज्ञापकानुशरणप्रभृतिक्लेशबाहुल्येन "तस्य लोप" इति सूत्रभाष्याद्यनुरोधेन नायम् पक्षो माननीयः किन्तु अनुबन्धा एकान्ता इत्येव । तत्रानुमानप्रणाली च अनुबन्धाः बोधकावयवाः तत्रोपलब्धिविषयत्वे सति तदितरत्रोपलब्धिविषयत्वाभावात् । तस्मात् पक्षो द्वितीय एव समादरणीयो भाष्यादिसमन्वयात् ॥
इतोऽधिकं मदीयटिप्पण्यां बृहच्छास्त्रार्थकलयाञ्च ।

७—ननु चेतेत्यादौ यथा स्थानादिकृतसादृश्येन एकारादिकमादिश्यते तथैव मात्राकालिकत्वादिरूपेण अकारादिकमपि प्रसज्ज्येत इत्यतः यत्रानेकविधमान्तर्यमिति परिभाषावतारः । षष्ठीस्थान इति सूत्रात् स्थानेग्रहणानुवृत्त्या सिद्धौ पुनः स्थानेऽन्तरतमसूत्रे स्थानेग्रहणमस्यां ज्ञापकम् । तद्धि तृतीयया विपरिणम्य वाक्यभेदेन स्थानिनः प्रसङ्गे जायमानः सति सम्भवे स्थानत एवान्तरतम इत्यर्थकत्वात् अर्थमेनमाविष्कुरुते । स्थानेऽन्तरतम इत्यस्य स्थले समानं स्थानं यस्येत्यर्थकसस्थाने इति कृत्वैव निर्वाहेऽन्तरग्रहणं व्यर्थीभूयान्तरतमार्थं कल्पयिष्यतीतिसर्वथा व्यर्थन्तमब्ग्रहणमनेकविधान्तर्य्यसत्तागमकम् भवति । अत एव मूले स्थानत आन्तर्य्यमिको यणचीत्यादाविति स्फोरणम् ।
८—पूर्वपरनित्यान्तरङ्गापवादानामिति परिभाषास्वीकारेण भिन्धि इत्यत्र तातङादेशेन परत्वाद् बाधितो धिर्नस्यादतः पुनः प्रसङ्गविज्ञानादिति परिभाषाऽवतरति । परत्वमूलकबाधस्थले स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने सङ्कोचः फलति ।

नन्वेवं तिसृणामित्यत्र परत्वात्तिस्रादेशे पुनस्त्र्यादेशोऽनेन न्यायेन स्यादित्यापत्तिपरिहारार्थं सकृद्गताविति न्यायावतारः । तत्र क्वचिच्चरितार्थयोः युगपदुभयोरेकत्र लक्ष्येऽसम्भवेन बाधकाभावात् पर्य्यायेण तृजादिवत् शास्त्रद्वयप्रसङ्गे विप्रतिषेधशास्त्रं नियामकमिति सकृद्गतिन्यायसिद्धिः ।

यथा तुल्यबलयोरेकः प्रेष्यो भवतीत्यादिना विप्रतिषेधसूत्रभाष्यतात्पर्य्यवर्णनेन शेखरे स्पष्टम् । कैयटादयस्तु प्रतिलक्ष्यं लक्षणोपप्लवादुभयोरपि शास्त्रयोस्तत्तल्लक्ष्यविषययोरचारितार्थ्येन पर्य्यायेण द्वयोरपि प्राप्तौ परमेवेति नियमार्थमिदमिति सकृद्गतिन्यायसिद्धिः । जातिपक्षेतूद्देश्यतावच्छेदकाक्रान्ते क्वचिल्लक्ष्ये चरितार्थयोर्द्वयोः शास्त्रयोः सत्प्रतिपक्षन्यायेन युगपदुभयासम्भवरूपविरोधस्थले उभयोरप्यप्राप्तौ परविध्यर्थमिदमिति पुनः प्रसङ्गसिद्धिरिति वदन्ति । तन्न ? व्यक्तिपक्षे सर्वं लक्ष्यं शास्त्रं व्याप्नोति न जाति-

पक्ष इत्यत्र विनिगमकाभावात्। भाष्ये जातिपक्षस्यैव विशेषत आश्रयणाच्च। अत एव सरूपसूत्रीयं भाष्यमपि सङ्गच्छते इति सङ्क्षेपः।

परिभाषातात्पर्य्यन्तु पूर्वशास्त्रीयोद्देश्यतावच्छेदकावच्छिन्ने स्वप्रवृत्तियोग्यलक्ष्यातिरिक्तत्वेन स्वविहितकार्य्याश्रयातिरिक्तत्वेन च सङ्कोच इति।

९—वाह ऊठ् सूत्रज्ञापिताऽन्तरङ्गपरिभाषा तत्र बहिरङ्गशास्त्रीयनिमित्तसमुदायमध्येऽन्तर्भूतान्यङ्गानि निमित्तानि यस्य तदन्तरङ्गम्। एवं तदीयनिमित्तसमुदायाद्बहिर्भूताङ्गकं बहिरङ्गमिति खरवसानयोरसिद्धवत्सूत्रयोर्भाष्ये स्पष्टम्। अत्रान्तरित्यव्ययम् मध्यार्थकम्, अङ्गशब्देन च शब्दरूपं निमित्तमेव गृह्यते शब्दशास्त्रे तस्यैव प्राधान्यात्। अतश्च अर्थनिमित्तकस्य बहिरङ्गता न स्वीक्रियते।

अन्यथा "न तिसृ चतसृ" इति निषेधस्य वैयर्थ्यमेव स्यात्, स्त्रीत्वरूपार्थनिमित्तकतिस्रपेक्षया त्रयादेशस्यान्तरङ्गत्वेन त्रयादेशे तद्वैयर्थ्यस्य स्फुटत्वात्। अत एव स्थानिवत्सूत्रे भाष्येऽपि त्रयादेशे स्नन्तस्य प्रतिषेध इति वार्त्तिकमपि सङ्गच्छते। न च "येन विधिः" इति सूत्रे भाष्ये "इको यणचि" इत्यादावपि तदन्तविधौ स्योन इत्यत्रान्तरङ्गत्वाद् यणो गुणबाधकत्वमिष्यते तत्कथं सङ्गच्छेतेति भाष्ययोजनाय गुणो हि अङ्गसम्बन्धिनीमित्यादि कैयटग्रन्थेन संज्ञारूपार्थनिमित्तकत्वेन बहिरङ्गत्वं स्पष्टमिति वाच्यम्? तदन्तविधावपि भाष्यासङ्गतेर्दुष्परिहरत्वात्। अत एव ऊनशब्दमाश्रित्य यण्, नशब्दमाश्रित्य च गुण इति स्यादन्तरङ्गत्वाद् गुण इति तत्रत्यम् भाष्यम्। एवञ्च शब्दनिमित्तकत्वेन बहिरङ्गतासिद्धौ अर्थनिमित्तकत्वेन तदनादरः स्पष्ट एव।

१०—इयायेत्यादौ द्वित्वे कृतेऽन्तरङ्गत्वात् सवर्णदीर्घत्वे तदसिद्धिरिति वार्णपरिभाषावतरति, तेनान्तरङ्गमपि सवर्णदीर्घं बाधित्वा वृद्धिसिद्धिरिति। अत्र ज्ञापकम् 'अभ्यासस्यासवर्णे" इति सूत्रीयासवर्णग्रहणम्। तद्धि ईषतुरित्यादौ इयङादिव्यावृत्त्यर्थम्। परिभाषाया अस्या अभावेऽन्तरङ्गेण सवर्णदीर्घेण बाधात्तद्व्यर्थं स्यादिति प्राञ्चः।

अन्ये तु परिभाषायामस्यां सम्पूर्णम् "अभ्यासस्य" इति सूत्रं ज्ञापकम्। न च इयायेत्यादौ चरितार्थम्? तयोरपि पूर्वप्रवृत्तगुणस्य पूर्वप्रवृत्तवृद्धेश्च द्विर्वचनेऽचीति रूपातिदेशेनापहारे द्वित्वे कृते पुनः प्राप्तौ गुणवृद्धी बाधित्वाऽन्तरङ्गत्वात् सवर्णदीर्घप्राप्तेः। नापीयर्त्तीत्यत्र चारितार्थ्यं तावन्मात्रप्रयोजनकत्वे उरित्येव न्यासेन सिद्धेः। एषा च परिभाषा धर्मिग्राहकमानादाङ्गवार्णयोः समानकार्य्यत्वे एव प्रवर्त्तते। आङ्गशास्त्र समानकार्यित्वञ्च-वार्णशास्त्रीयस्थानितासमानाधिकरणस्थानिताकत्वम्। यथा इयायेत्यादौ दीर्घशास्त्रीयस्थानिता परेकारनिष्ठा तत्समानाधिकरणस्थानिता वृद्धिनिरूपिता तन्निरूपकत्वं वृद्धिशास्त्रस्येति। केचित्तु समाननिमित्तकत्वरूपसमानाश्रयत्व एवैषेति व्याहरन्ति तन्नोचितम्? इयायेयेषेत्याद्यसिद्धेर्दुर्वारत्वात् सूत्रवैयर्थ्यस्य च तदवस्थत्वात्। समाननिमित्तकत्वञ्च वार्णशास्त्रघटकसप्तम्यन्तपञ्चम्यन्तान्यतरपदप्रयोज्यविषयतापर्य्याप्त्यनुयोगितावच्छेदकीभूतो यो धर्मस्तद्धर्मावच्छिन्नानुयोगिताकपर्य्याप्तिकाङ्गपदविशिष्टविशेष्यताकत्वं समाननिमित्तकत्वम्। वै० च-स्वप्रयोज्यत्व स्वप्रयोज्यविशेष्यतानिरूपितप्रकारत्वासामानाधिकरण्योभयसम्बन्धेनेत्यादिकं बहुशः कल्पयन्ति शाब्दिकाः, परन्तु भाष्यादिसिद्धान्तसमालोचनपुरस्सरं समानकार्य्यितापक्ष एव श्रेयस्करतामुपैतीति। विशेषश्शास्त्रार्थकलायाम्।

११—ननु "यूस्त्र्याख्यौ" इत्यत्र व्यक्तिपक्षे दीर्घनिर्देशादनण्त्वेन ग्राहकसूत्राप्रवृत्त्या उदात्ताद्यन्यतमत्वेन ग्रहणेऽन्यस्वरकस्य सञ्ज्ञा कथम्भवेदिति विपत्तिसन्देहे अभेदका गुणा इति

परिभाषावतारः। असति यत्ने स्वरूपेणोच्चारितो गुणो न भेदकतामीष्ट इति फलितार्थः। गुणराहित्येनोच्चारणायोगाद्धान्यपलालन्यायेन केनचिद्गुणेनोच्चारितायां वर्णव्यक्तौ उपलभ्यमानो गुणस्तद्वाच्यकोटौ न प्रविशतीति हृदयम्। स्वरूपेणोच्चारितत्वञ्च श्रावणज्ञानविषयवर्णवृत्तित्वम्। गुणत्वञ्च सजातीयवर्णनिष्ठभेदप्रतियोगितावच्छेदकत्वे सति विजातीयवर्णवृत्तित्वम्। साजात्यञ्च उच्चारणकालावच्छेदेन, वैजात्यन्तु स्थानेनेति। विभिन्नस्थानजन्येकारादिवृत्तिह्रस्वत्वादेर्गुणत्ववारणाय सत्यन्तम्। परस्परवृत्तिसमानकालवदकारादिभेदीयप्रतियोगितावच्छेदकीभूतानामत्वादीनां गुणत्ववारणाय विशेष्यदलम्। आनुनासिक्यन्नाम गुण इति "वृद्धिरादैच्" सूत्रभाष्ये स्पष्टम्। परिभाषायामस्यां ज्ञापकन्तु "अस्थिदधी"ति सूत्रेऽनङादीनामुदात्तानामेवोच्चारणेन सिद्धे उदात्तग्रहणम्।

न च अस्थ्यादीनां नब्विषयस्येत्याद्युदात्ततयाऽन्त्यादेशस्यानङः स्थान्यनुरूपेऽनुदात्त एवोच्चारणीये उदात्तोच्चारणं विवक्षार्थमेव न ज्ञापकमिति वाच्यम्? परमास्थिशब्दादावन्तोदात्त उदात्तगुणकस्यापि स्थानित्वेन विवक्षायां मानाभावात्। वधादेश आद्युदात्तनिपातनं करिष्यते इत्यादिभाष्यन्तु एकश्रुत्याऽष्टाध्यायीपाठे क्वचिदुदात्ताद्युच्चारणं विवक्षार्थमित्याशयेन योज्यम्। विधेयाण्विषये तु अप्रत्यय इति निषेधान्न गुणाभेदकत्वेन सवर्णग्रहणम्। अत एव घटवदित्यादौ मतोर्मस्य नानुनासिको वकारः तद्वानासामिति सौत्रनिर्देशश्च सङ्गच्छते। जातिपक्षे च नास्योपयोग इति सिद्धं गुणानामभेदकत्वमिति सङ्क्षेपतः।

१२—अजर्घा बेभिदीतीत्यादौ तत्तद्गुणप्रयुक्ता विकरणा यङ्लुकि स्युः तथा यङ्लुकि बेभिदितेत्यादावेकाच इतीण् निषेधः स्यादतः श्तिपाशपानुबन्धेनेति परिभाषावतरति। अत्र एकाजुपदेशसूत्रवृत्त्येकाज्ग्रहणं ज्ञापकमन्यथाऽनुदात्तत्वस्यैकाच्त्वाव्यभिचारेण तद्व्यर्थं स्यात्। अंशान्तरे ज्ञापकाभावेऽपि एकेनैकाज्ग्रहणेनैव सर्वमावश्यकं ज्ञाप्यमिति। हन्ति याति वाति, सनीवन्त सूत्रे भरेति, दीङो युडचि, अनुदात्तङितः, दिवादिभ्यः श्यन्, एकाच उपदेशाइति क्रमत उदाहरणानि। गुणो यङ्लुकोरित्यादिभिर्निषेधस्यास्यानत्यतापि। अत एव द्वित्वे धातुत्वमजर्घादौ भष्भावश्चेति प्राचां सिद्धान्तः।

नव्यास्तु नैषा परिभाषा मान्या? भाष्याऽनुक्तत्वात्। ज्ञापकमेकाज्ग्रहणञ्च न? वधेरिण्निषेधव्यावृत्त्यर्थन्तस्यावश्यकत्वेन वैयर्थ्याभावात्। जागरितवानित्यत्रेण् निषेधाभावायोत्तरार्थन्तस्यावश्यकत्वाच्च। यङ्लुकश्छान्दसत्वेनेष्टानुरोधव्याख्यया तत्रेष्टसिद्धेः। अत एव भाष्ये एकाज्ग्रहणस्य फलमुपन्यस्यता भाष्यकृता जागर्त्यर्थमुत्तरत्रेह वध्यर्थमिति स्पष्टमवोचि। तथा चायम् प्रवादः प्राचाममान्य एवेति सङ्क्षेपः।

१३—कार्य्यकालं संज्ञापरिभाषमित्यत्र कार्य्यकालमित्यस्य कार्य्येण काल्यते स्वसन्निधिम् प्राप्यते इत्यर्थः। कार्येण स्वसंस्काराय स्ववृत्तिलिङ्गचिन्हितपरिभाषाणामाक्षेपो भवतीत्यर्थः। अत एव "पूर्वत्रासिद्धमिति"सूत्रे भाष्यकृता त्रिपाद्या असिद्धत्वात्तत्र सपादसप्ताध्यायीस्थपरिभाषाणामप्रवृत्तिरित्याशङ्क्य "यद्यपीदं तत्रासिद्धं तत्त्विह सिद्धम्" इति प्रोच्य तावताप्यसिद्धिरिति तात्पर्य्यके "कथम्" इति प्रश्ने कार्यकालं संज्ञापरिभाषं यत्र कार्यन्तत्रोपस्थितन्द्रष्टव्यमिति दत्तमुत्तरम्।

न च पूर्वन्धातुरुपसर्गेण युज्यते ततस्साधनेनेति भाष्यात् पूर्वमुपसर्गयोगे णत्वसिद्धौ नावतरणं सङ्गच्छते प्रणिदापयतीति यदागमपरिभाषाया इति वाच्यम्? णेरध्ययने वृत्तम्, प्रत्यय इत्यादिसात्रनिर्देशानुसारेण पूर्वन्धातुःसाधनेन युज्यते इति पक्षस्यैव स-

म्मतत्वात्। यत्क्रियायुक्ताः प्रादयस्तम्प्रत्येव गत्युपसर्गसंज्ञेति नियमेन। यदर्थक्रियायोगस्तन्निरूपितोपसर्गत्वम् ॥ जन्यबोधविषयीभूतक्रियाविशेषविषयकतात्पर्यग्राहकत्वे सति प्राधान्यतमत्वमुपसर्गत्वम्। अत्र दाशब्दस्य पुक्समभिव्याहारेऽर्थबोधकत्वाभावेन घुजन्यबोधाभावेन घुनिरूपितोपसर्गत्वाभावेन तन्निरूपितोपसर्गत्वासम्भवात् ॥ अधिकं बृहच्छास्त्रार्थकलायाम्।

१४—उदस्थादित्यत्र "उदः स्थास्तम्भोः" इत्यनेन पूर्वसवर्णो भवतु यदागमपरिभाषासहायादित्यापत्तिपरिहाराय "निर्दिश्यमानस्यादेशा" इति परिभाषाऽवतारः।

ननु निर्दिश्यमानपरिभाषाया अकज्विषयेऽपि प्रवृत्तियोग्यतो, एवञ्च तन्मध्यपतितन्यायात् पूर्वमेव लेखोऽपि योग्य इति साकच्कस्य कार्य्यन्न स्यादतः "अकज्विषये नायन्न्यायः" इति मूले शेखरे स्पष्टीकृतं ग्रन्थकृता। अकज्विशिष्टस्य स्थानितानिषेधको नायन्न्यायः। एवञ्च निर्दिश्यमानत्वलक्षणे तन्मध्यपतितन्यायातिरिक्तत्वं निवेशनीयम् इति फलति। अनाप्यक इति सूत्रेऽकग्रहणमत्र ज्ञापकम्। अवयवषष्ठीविषयेऽपि निर्दिश्यमानपरिभाषाया वक्ष्यमाणत्वात्। अत एवाकच्सहितस्याप्ययमादेश इति 'किमः क" इति व्याख्यानं सुगतम्। किमः क इति सूत्रावृत्त्या विशिष्टादेश इति शेखरस्तु कैयटमतेन योजनीयः। न चैवम् भिन्धकीत्यत्राकचि निर्दिश्यमानत्वाभावाद्धित्वन्न स्यादित्याशङ्क्यान्तरङ्गत्वाद्धित्वेऽकजिति भाष्यविरोध इति वाच्यम्? धर्मिग्राहकमानात् साकच्कानपहारक आदेशे नायन्न्याय इति कल्पनया धित्वकादेशयोस्साकच्कापहारकत्वेन निर्दिश्यमानपरिभाषाप्रवृत्तौ ग्रन्थाविरोधात्। अत एव तच्छब्दादकचि निर्दिश्यमानपरिभाषाया अप्रवृत्त्यात्त्वसत्त्वयोस्सक इति सर्वकदेयि च सिद्ध्यति ॥ विशेषतःशास्त्रार्थकलायाम्।

१५—एधते इत्यादौ परत्वाद् विकरणे "अनुदात्तङित" इत्यादिनियमानुपपत्तिस्स्यात्तेन व्यवधानादतः विकरणेभ्यो नियमो बलीयानिति परिभाषावतारः। ज्ञापकञ्चात्र "वृद्भ्यः स्यसनोः" इति सूत्रेण स्ये विभाषा तङ्विधानम्, अन्यथा स्यव्यवधाने नियमाप्रवृत्तौ सामान्यशास्त्रेणोभयसिद्धौ विकल्पविधानं व्यर्थं स्यात्। ज्ञापिते तु स्य इत्यत्र विषयसप्तमी स्वीकार्येति भाष्यकैयटयोः स्पष्टीकृतम्। विकरणव्यवधानेऽपि नियमप्रवृत्तेरिदं ज्ञापकम् इति शदेःशित इत्यत्र भाष्ये ध्वनितम्। वस्तुतोऽस्माज्ज्ञापकात् अनुदात्तङित इत्यादिप्रकरणम् तिबादिविध्येकवाक्यतया विधायकम्। तत्र धातोरिति विहितपञ्चमी तत्समानाधिकरणमनुदात्तङित इत्यादिविहितविशेषणमेव। एवञ्च लावस्थायां स्येऽपि तद्व्यवधाने तङ्सिद्धिः शबादिभ्यस्तु पूर्वमेव नियमः। यद्वा लकारविशेषापेक्षत्वाद् बहिरङ्गतया स्यादीनां दिग्योगलक्षणपञ्चमीस्वीकारेऽपि कार्य्यसिद्धिः। भुक्तवन्तम्प्रति इति न्यायस्तु नियमादिशास्त्राणां वैयर्थ्यापत्तेर्नात्र शास्त्र आश्रीयते इति स्थानेऽन्तरतमसूत्रेभाष्ये शास्त्रानर्थक्यतिरस्कारश्च वृद्धिसंज्ञा सूत्रे भाष्य इति सङ्क्षेपः।

ननु अस्यापत्यमिरित्यादावदन्तप्रातिपदिकाभावादिञ् न स्यादित्याशङ्क्य व्यपदेशिवदेकस्मिन् इति परिभाषावतारः। निमित्तसद्भावाद् विशिष्टोऽपदेशो मुख्यो व्यवहारो यस्यास्ति स व्यपदेशी। यस्तु व्यपदेशहेत्वभावादविद्यमानव्यपदेशोऽसहायः स तेन तुल्यं वर्त्तते कार्य्यम्प्रति इति एकस्मिन्नसहायेऽपि तत् कार्य्यं कर्त्तव्यमित्यर्थस्तेनाकारस्याप्यदन्तत्वान्न क्षतिः। स्वविशिष्टत्वमादित्वम् वै० च स्वघटकत्व स्वघटकाव्यवहितोत्तरत्वाभाववत्त्वैतदुभयसम्बन्धेन। अन्तत्वञ्च स्वघटकत्वस्वघटकाव्यवहितपूर्वत्वा-

भाववत्त्वैतदुभयसम्बन्धेन स्वविशिष्टत्वम् । तथा च आद्यन्तवदेकस्मिन् इति सूत्रञ्चाद-र्त्तव्यमिवातिवार्त्तिककारीयमतव्यवस्थापने शास्त्रार्थकला । बोधकत्वसम्बन्धेन फलव्यापार-विशिष्टश्शब्दो धातुस्स एवान्यपदार्थः । एकाजिति बहुव्रीहौ एकोऽच् शब्दमात्रं यस्मिन् फलव्यापारविशिष्टशब्दरूपे धाताविती यायेत्यादिसाधने योऽर्थवांस्तत्रार्थस्य त्यागोपा-दानाभ्यामेकाज्व्यपदेश इति कैयटमतन्न युक्तम् ? तस्यौकपदा ऋगित्यत्र भाष्योक्तरीत्या मुख्यव्यवहारसत्त्वात् । एकपदा ऋगित्यत्र अर्थेन युक्तो व्यपदेश इति भाष्ये उक्तम् । ऋक्त्वादेरर्थशब्दोभयवृत्तित्वेन तस्याः शब्दमात्ररूपं पदमेकोऽवयव इत्यर्थं इति तदाश-यात् । एवञ्च यत्तु इत्यादिना कैयटमतं स्पष्टं खण्डितम्भवति ।

१६—अस्योत्तरं नवमप्रश्ने, १३ प्रश्ने च दत्तमनुसन्धेयम् ।

१७—अन्तरङ्गादप्यपवादो बलीयानिति परिभाषायां कोऽपवादपदार्थं इति जिज्ञासायां येन नाप्राप्ते इति परिभाषारभ्यते । विशेषशास्त्रोद्देश्यविशेषधर्मावच्छिन्नवृत्तिसामा-न्यधर्मावच्छिन्नोद्देश्यताकशास्त्रस्य विशेषशास्त्रेण बाधः । तदप्राप्तियोग्येऽचारितार्थ्यं ह्येतस्य बाधकत्वे बीजम् । अत एवायादयोऽनवकाशा इति तत्रोच्यते । विशेषशास्त्रोद्दे-श्यो यो विशेषधर्मावच्छिन्नस्तद्वृत्तिर्यस्सामान्यधर्मस्तदवच्छिन्नोद्देश्यताकं यच्छास्त्रं तस्य विशेषधर्मावच्छिन्नोद्देश्यताकशास्त्रेण बाध इति फलितार्थः । ङेरामित्यादौ गुण-बाधकत्वसिद्धये च व्याप्यत्वेन जिघृक्षितशास्त्रीयोद्देश्यदलीयविषयतानिष्ठव्याप्यता-निरूपितव्यापकतावच्छेदकधर्मविशिष्टभिन्नधर्मावच्छिन्नव्यापकतावद्विषयताप्रयोजकप-दघटितशास्त्रस्य बाधः । वै० च स्वव्यापकत्वस्वावच्छिन्नाभाववद्वृत्तित्वैतदुभयसम्बन्धे-न । तथा च आद्गुण इति शास्त्रघटकातपदप्रयोज्यविषयतावृत्तितद्व्यक्तित्वस्य ङिद्व-चनपदप्रयोज्यविषयतावृत्तितद्व्यक्तित्वावच्छिन्नविषयत्वाभाववदुपद्वन्द्ववृत्तिविषयतावृ-त्तित्वेपि स्वव्यापकत्वाभावेन स्वविशिष्टभिन्नमेव अत्पदप्रयोज्यविषयतावृत्ति तद्व्यक्ति-त्वम इति तदवच्छिन्नव्यापकतावद्विषयताप्रयोजकपदघटितमाद्गुण इति एतद्बाधक-त्वसौष्ठवात् । मद्रहदादौ माठरपरिवेषणन्यायेनादोषः । बाधपदार्थश्च व्यापकधर्मावच्छि-न्नविषयतायां स्वावच्छेदकव्याप्यधर्मावच्छिन्नातिरिक्तवृत्तित्वज्ञानमेवेति मूलाभिप्रायः । तदप्राप्तियोग्येऽचारितार्थ्यम्, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्यम्, तदप्राप्तियोग्येऽचारितार्थ्यविशिष्टं कृते चारितार्थ्याभावः, तदप्राप्तियोग्येऽचारितार्थ्यवि-शिष्टं कृते चारितार्थ्याभावविशिष्टोत्सर्गशास्त्रप्रवृत्तिसम्भावनाप्रयोज्यापवादशास्त्रवैय-र्थ्यम्, उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्यापवादशास्त्रप्रवृत्तिसम्भावना चेति पञ्च बाधबीजानीति सङ्क्षेपः ॥ विशेषश्शास्त्रार्थकलायाम् ।

१८—स्वरविधौ व्यञ्जनमविद्यमानवदिति परिभाषास्वीकारे स्वरोद्देश्यकविधौ व्य-ञ्जनस्याविद्यमानवत्त्वस्वीकारेऽपि राजदृषदित्यादौ षकारोत्तराकारस्य "समासस्य" इत्य-न्तोदात्तत्वन्न स्यादितीमं सन्देहमपाकर्त्तुं हल्स्वरप्राप्ताविति परिभाषादरः । अत्र च "यतोऽनाव" इति सूत्रेऽनौप्रतिषेधो ज्ञापकः अन्यथा नाव्यमित्यत्रादिर्नकारो न स्वर-योग्यो यश्चाकारस्तद्योग्यः स च नादिरिति स प्रतिषेधोऽनर्थकः स्यात् । स्वरविधायक-शास्त्रीयोद्देश्यतावच्छेदकाक्रान्तस्य हल्स्वरे विधातव्ये व्यञ्जनमविद्यमानवदिति तदर्थः ।

कुटीर इत्यादौ स्वार्थिकत्वात् स्वार्थिकानां प्रकृतितो लिङ्गवचनानुवृत्तेर्न्यायप्राप्त-त्वात् पुंस्त्वानुपपत्तिः अपकल्पमित्यत्र नपुंसकैकवचनयोरनुपपत्तिश्चेत्यतः क्वचित्स्वा-र्थिकाः प्रकृतितो लिङ्गवचनान्यतिवर्त्तन्ते इति । "णचः स्त्रियाम्" इति सूत्रे स्त्रियामि-

त्युक्तिरेतदर्थज्ञापिका अन्यथा णच्प्रत्ययस्य कर्मव्यतिहार इति सूत्रेण स्त्रियामेव नियमेन विधानात् तद्व्यर्थं स्यात्। विभाषा सुपो बहुच पुरस्तात्तु इति सूत्रभाष्ये स्पष्टेयमिति सङ्क्षेपः।

१९—ननु अध्येता शयितेत्यादौ धातोर्ङित्त्वात् "क्ङिती"ति सूत्रे सत्सप्तम्या आश्रयणात् तेन गुणनिषेधः स्यादिति विपत्तिपरीहाराय कार्य्यमनुभवन्निति परिभाषास्वीकारः। परिभाषायामस्यां "स्थण्डिलाच्छयितरि" इति सूत्रवृत्तिशयितरि इति निर्देश एव ज्ञापकः। अन्यथा गुणनिषेधे तदनुपपत्तिः स्पष्टैव स्यात्। ऊर्णुनविषतीत्यादिसिद्धये कार्य्यमनुभवन्निति। अत्र हि "द्विर्वचनेऽचि" इति सूत्रेण नुशब्दस्य द्वित्वम्। अन्यथा "सन्यङोः" इत्यस्य षष्ठ्यन्तत्वात् सन्नन्तस्य कार्यित्वेनोसो द्वित्वनिमित्तत्वाभावात् तत्प्रवृत्तिर्न स्यात्। द्विर्वचनसूत्रे भाष्ये अचि किं जेघ्रीयते इति प्रत्युदाहरणमाचरता भाष्यकृता ध्वनिता। तथा हि परिभाषाऽभावे सत्यच्यज्ग्रहणे द्वित्वनिमित्तोऽज् घ्राघटकाकारः तन्निमित्तकोऽजादेशः "ईघ्राध्मोः" इतीत्त्वादेशः तत्र कर्त्तव्ये द्विर्वचनेऽचीति निषेधे प्रत्युदाहरणासङ्गमनस्य स्पष्टत्वात्। अतः कार्यी निमित्ततया नाश्रीयत इत्यंशो ध्वन्यते। नचैवं कार्य्यिणो यकारस्य निमित्तत्वेनानाश्रयणे द्विर्वचनसूत्राप्राप्तौ प्रत्युदाहरणस्य सिद्धावज्ग्रहणं व्यर्थमेव स्यादिति कार्यमनुभवन्नित्यंशोऽपि तत्रैव ध्वन्यते इति परिभाषा पूर्णा ध्वनितेति।

वस्तुतस्तु निषेधकसूत्रे क्ङितः प्रत्ययस्यैव ग्रहणेन प्रत्ययग्रहणपरिभाषोपस्थित्या तन्निरूपिततदादिघटकस्यैवेको गुणनिषेधेन नावतरणानुपपत्तिरिति परिभाषायाः किञ्चिद् विशिष्टफलन्नास्तीति नैवाङ्गीकार्या ॥ विशेषो वृहच्छास्त्रार्थकलायाम्।

२०—असिद्धं बहिरङ्गमन्तरङ्गे इति परिभाषायां "वाह ऊठ्" सूत्रवृत्त्यूड्ग्रहणं ज्ञापकमन्यथा सम्प्रसारणमात्रविधानेन पुगन्तेति गुणे वृद्धिरेचीति वृद्धौ प्रष्ठौहादिसिद्धेस्तद्व्यर्थं स्यात्। नच "ऊडिदम्पदाद्यप्पुम्रैद्युभ्यः" इति स्वरार्थमूड्ग्रहणमावश्यकन्न ज्ञापकतामर्हतीति वाच्यम्! स्वरविधायके ह्रस्वविधानेनैव सिद्धौ दीर्घोच्चारणस्य तथापि ज्ञापकत्वात्, गुणवृद्ध्योस्सिद्धेस्सूपपादत्वात्। एत्येधत्यूठिति दीर्घस्तु "ज्वरत्वरे"त्यूठि जनौरिति सिद्ध्यर्थम्। नच जूरेत्यादौ स्वरार्थन्दीर्घग्रहणं कथं ज्ञापकमिति वाच्यम्? वार्त्तिके स्वरविधायके च ठित्करणेनादोषात् ॥ विस्तरःशास्त्रार्थकलायाम्।

अकाव्यफलानि तु—नौशब्दस्य अशब्देन समासे नावशब्दादाचारक्विबन्तात् णावल्लोपे नावयतीत्यत्रोठ्निवारणाय परिभाषा। कर्तृक्विबन्तप्रकृतिकाचारक्विबन्तभूशब्दात् यति भव्यमित्यत्रोठोऽभाव एव फलम् इत्येवमादीनि तृतीयप्रश्ने दर्शितान्यनुसन्धेयानि।

सपादसप्ताध्यायीस्थ "वाह ऊठ्" सूत्रज्ञापिता परिभाषैषा त्रिपाद्यान्न प्रवर्त्तते त्रिपाद्यास्तद्दृष्ट्याऽसिद्धत्वात। अन्यथा बहिरङ्गसम्प्रसारणस्यासिद्धत्वाल्लघूपधगुणो न स्यादिति भाष्यसिद्धान्तो व्याहतस्स्यादिति। तथा च कार्यकालपक्षेऽपि नैषा त्रिपाद्यामुपतिष्ठते। एवमेवाभीयकार्येऽपि नेयमुपतिष्ठते ऽसिद्धत्वादिति "असिद्धवत्" सूत्रे भाष्ये ध्वनितमिति सङ्क्षेपः।

२१—ननु लक्षणप्रतिपदोक्तपरिभाषासिद्धान्ते लाक्षणिकत्वात् देङो दाधातोश्च कृतात्वस्य घुत्वन्न स्यात्तथा च मेङ आत्वे प्रणिमातेत्यादौ "नेर्गद" इति णत्वन्न स्यादथ गैधातोरात्वे "घुमास्था" इत्यात्त्वन्न स्यादित्यनिष्टनिरासाय गामादाग्रहणेषु इति परिभाषास्वीकारः। अत्र ज्ञापकञ्च दैप्धातोः पित्त्वम्। तद्धि "दाधाघ्वदाप्" इत्यत्र दाप्पदेन दैप्

शोधने इत्यस्यापि ग्रहणाय प्रतिपदोक्तदाग्रहणे तन्निरर्थकता स्पष्टा स्यात् । तथाचैक-देशानुमत्या सम्पूर्णा परिभाषा ज्ञाप्यते । नचैवं ज्ञापनेऽपि धेट आत्त्वे कथं घुत्वमिति वाच्यम् ? गाश्च माश्च दाग्रहणञ्चेति बहुव्रीह्युत्तरपदकद्वन्द्वसमासाश्रयणेन गाशब्दे माशब्दे दाघटितसूत्रे चाविशेष इति तदर्थवर्णनेनादोषात् । "गातिस्था" इति सूत्रे तु इणादेश-गाधातोरेव ग्रहणमिष्यते । परिभाषा चैषा "दाधाघ्वदाप्" इति सूत्रे भाष्ये स्पष्टेति सङ्क्षेपः ।

२२—अर्द्धमात्रालाघवेनेति परिभाषा एओङ् ऐऔच् इति सूत्रयोर्भाष्ये ध्वनिता । अ-र्द्धमात्रालाघवेनेति तृतीया हेतौ, अर्द्धमात्रालाघवहेतुकं सुखं पुत्रोत्सवं तज्जन्यसुखसदृशं मन्यन्ते इत्यर्थः । तत्र हि अर्द्ध एकार ओकारो वा नास्ति यदि तौ स्यातान्तर्हि तावेवो-पदिशेदिति भाष्येण लाघवेनोपदेशः सुखजनको भवतीति स्पष्टमेव लभ्यते । तत्र अनेकप-दघटितसूत्रे प्रायः पदलाघवविचार एवेति अपृक्तसंज्ञासूत्रे भाष्ये । मात्रालाघवविचारोऽ-पि "अचिश्नु" इति सूत्रे स्पष्टमेवाभिहित इति संक्षेपः ।

२३—ननु उखधातोर्द्वित्वे उकारस्य स्वत एव ह्रस्वत्वात् अभ्यासह्रस्वाप्रवृत्तौ हलादिः शेषे सवर्णदीर्घे ह्रस्वविधायकप्रवृत्तिर्दुर्वारेत्यतः पर्जन्यवल्लक्षणप्रवृत्तिपरिभाषाऽवतारः । यथा पर्जन्यः जले स्थले च वर्षति तथा शास्त्रं कृतकारि अर्थात् सिद्धेऽपि ह्रस्वादिकारीति तात्पर्यम् "इको झल्" सूत्रे भाष्ये स्पष्टम् । तथा च स्वतो ह्रस्वे पूर्वमप्रवृत्तं शास्त्रं भू-यो न प्रवृत्तिमर्हतीति स्पष्टप्रतिपत्तये लक्ष्ये लक्षणं सकृदेव प्रवर्त्तते न्यायस्वरूपव्यवस्था । अत्र प्रमाणन्तु संस्कर्त्तेत्यत्र "समो वा लोपमेके" इति लोपेनैकसकारस्य द्वित्वे पुनर्द्वित्वे त्रिसकारकरूपसिद्धौ "समस्सुटि" सूत्रमेव । एकस्मिन् स्वीयलक्ष्ये स्वं सकृदेव प्रवर्त्तते इति तदर्थः । नन्वेवं राम इत्यत्र प्रवृत्तमर्थवत्सूत्रं रामावित्यत्र न प्रवर्त्तेतेति वच्यम् ? तल्लक्ष्ये तल्लक्षणं सकृदेवेत्यर्थात् । नचैवमपि तच्छब्दस्य बुद्धिविशेषविषयत्वोपलक्षित-वक्तृजिज्ञासितधर्मावच्छिन्ने शक्तेर्व्यक्तिभेदसत्त्वेनासिद्धिरेवेति वाच्यम् ? स्वविशिष्टं स्वतो भिन्नन्न भवति । वै० च स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वोभय-सम्बन्धेन । षट्सन्त इत्यादि वारणाय तल्लक्ष्यत्वन्तु स्वीयप्रथमप्रवृत्तावुद्देश्यत्वेना-श्रीयमाणसमुदायविशिष्टाघटितत्वस्वघटकोद्देश्यकप्राप्तिविशिष्टप्राप्तिविषयाघटितत्वमि-त्युभयसम्बन्धेन । प्रथम वै० च स्वाघटकत्वस्वघटकमात्रोद्देश्यकविकारातिरिक्तत्वो-भयसम्बन्धेन । द्वितीय वै० च स्वभिन्नत्व स्वानुत्तरकालिकत्वस्वनिरूपकशास्त्रनि-रूपितत्वसम्बन्धैः । दीव्यतीत्यत्र श्यन्धारातुनानवस्थाभयात् विकरणविशिष्टे कर्त्रर्थ-त्वाभावेन विकरणाप्राप्तेश्चेति दिक् ।

२४—इदञ्च प्रथमप्रश्ने १ विवेचितादनुसन्धेयम् ।

२५—ननु राम औ इति स्थिते वृद्धिरूपैकादेशेन सुपस्तदादेश्चापहतौ सुबन्ततदादित्वा-भावाद् यदा कार्यन्तदा संज्ञेत्यर्थककार्यकालपक्षे "सुप्तिङन्त" इति पदत्वासिद्धिः । नच वृद्धावपि "अन्तादिवच्च" इति पूर्वान्तवद्भावात्तदादित्वेन सुबन्ततदादित्वात् पदत्वं से-त्स्यतीति वाच्यम् ? उभयत आश्रयणे नान्तादिवदिति सिद्धान्तात् । अत एकदेशवि-कृतन्यायावतारः । नच कार्यकालपक्षे एवं सत्त्वेऽपि यथोद्देशपक्षे जातां संज्ञामादायैवे-ष्टसिद्धौ कथं ग्रन्थसङ्गतिरिति वाच्यम् ? प्राचीनमतेन तद्ग्रन्थस्य सत्त्वात् । नव्यमते तु उभयत आश्रयणेऽपि अन्तादिवच्चेति सूत्रप्रवृत्तिः । तथाच तन्मते रामाविति नाव-तरणं किन्तु वाप्यश्वः, मासपूर्व इत्यादि । आद्ये सुब्लुगुत्तरं विशिष्टसमासत्वसम्पत्ति-रेनया परिभाषयाऽजहत्स्वार्थायां वृत्तौ प्रत्येकमप्यर्थवत्त्वेनानुमानिकस्थानिवद्भावेन

समुदाये तदनिर्देशस्य दौर्लभ्यात् । एवञ्चानया समासत्वातिदेशेन "न समास" इति वार्तिकप्रवृत्त्या शाकलप्रतिषेधः । द्वितीये तु समुदाये मासपूर्व इति समासत्वातिदेशेन "तृतीया समास" इति सर्वनामसंज्ञाप्रतिषेधः ।

परिच्छिन्नपरिमाणग्रहणे च छिन्नपुच्छे श्वत्वव्यवहारवत् नायन्न्याय' इति "येन विधिः" इति सूत्रे भाष्ये स्पष्टम् । अक्तपरिमाणत्वञ्च संख्यात्वपरिमाणत्वव्याप्यधर्मावच्छिन्नप्रकारताकबुद्धिनिष्ठप्रतिबध्यतानिरूपितप्रतिबन्धकतावच्छेदकविषयताश्रयविशिष्टत्वम् । वै० च स्वघटितत्वस्वानियतत्वान्यतरसम्बन्धेन । द्व्यचकत्वस्यैकत्वप्रतिबन्धकीभूतद्वित्वघटितत्वात्त्रित्वप्रतिबन्धकीभूतचतुष्ट्वसमनियतत्वाज्जरात्वादेः परिच्छिन्नपरिमाणत्वेनादेशसिद्धिरिति संक्षेपः ।

२६—ननु गोमत्प्रिय इत्यादौ पदद्वयनिमित्तकसमासाश्रितत्वेन बहिरङ्गं लुकं बाधित्वाऽन्तरङ्गत्वात् हल्ङ्याद्लोपे नुमाद्यापत्तिरिति शङ्कायाम् अन्तरङ्गानपीति परिभाषावतरति । अत्र त्वत्कृतमित्यादौ लुगपेक्षयाऽन्तरङ्गत्वाद् विभक्तिनिमित्तकेन "त्वमावेकवचने" इत्यनेन सिद्धे "प्रत्ययोत्तरपदयोश्च" इति सूत्रं व्यर्थं सज्ज्ञापकम् । नच तवपुत्रस्त्वत्पुत्र इत्यादौ तवादिबाधनार्थन्तदावश्यकञ्च ज्ञापकमिति वाच्यम् ? उत्सर्गसमानदेशा इति न्यायेन मपर्य्यन्तस्य सिद्धे पुनरत्र सूत्रं मपर्य्यन्तस्यानुवृत्तिरेव तदर्थंज्ञापिकेति भाष्यकृतः । नचास्त्वननुवृत्तिस्तथेति ? ज्ञापकपरभाष्यविरोधात् ।

एतेन न्यायेन अन्तरङ्गनिमित्तविनाशकलुकः प्राबल्यम् बोध्यते तत्प्रयोजकसमासादीनाञ्च । अत एव अर्णुद्धि राजपुत्रीति सिद्धिः । आद्ये "उतश्च प्रत्ययात्" इति सूत्रविहितलुकः गुणनिमित्तविनाशकत्वाभावेनान्तरङ्गपरिभाषया गुणे संयोगपूर्वकत्वेन लुङ् न भवति । अन्त्ये "ञ्नित्यादिर्नित्यम्" इति विहिताद्युदात्तस्य ङीनो निमित्तविनाशकत्वस्य लुक्यभावेनान्तरङ्गपरिभाषया ङीनि आद्युदात्तयोः पश्चात् समासस्वरेणान्तोदात्तत्वविधानमिति सङ्क्षेपात् ।

२७—ननु अजीगणदित्यत्र गणरूपाभ्यासस्येत्त्वमित्यर्थक 'ई च गण" इत्यस्य हलादिश्शेषेण णकारलोपे निरवकाशत्वेन बाधे णकारस्येत्वे ह्रस्वे च जातेऽग्लोपित्वाभावाद्दीर्घाभावेऽजिगणदिति रूपमनिष्टमापद्यत इत्यतः परिभाषेयमवतरति । अस्याञ्च "दीर्घोऽकित" इति सूत्रीयमकिद्ग्रहणं ज्ञापकम्, अन्यथा यंयम्यते इत्यत्र लुकि अनजन्तत्वाद् दीर्घाप्रवृत्तौ तद् व्यर्थं स्यादिति ।

परिभाषार्थस्तु अभ्यासविकारेषु बाध्यबाधकभावो नास्ति, अभ्यासविकाराधिकरणकबाध्यबाधकभावकर्त्तृकसत्ताप्रतियोगिकोऽभावः । परिष्कृतोऽर्थो बृहच्छास्त्रार्थकलायाम्।। कैयटादिमतं परिभाषाविषये खण्डनीयमेव "गुणो यङ्लुकोः" इति भाष्यासङ्गतेरिति सङ्क्षेपात् ।

२८—ननु अदमुयङित्यादौ "अदसोऽसेः" इत्यनेन पूर्वदकारस्यापि मुत्वापत्तिरिति शङ्कायां अनन्त्यविकार इति परिभाषारम्भः । न अन्त्यस्य विकारो येनासावनन्त्यविकारस्तत्र शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिरिति परिभाषार्थः । अत्र मत्वविधायकं उत्वविधायकञ्च पृथगेव वाक्यम् । तेनोत्वस्यान्त्यवृत्तिविकारत्वेऽपि मत्वस्य तथात्वाभावेन परिभाषाप्रवृत्त्या पूर्वस्य मत्वाभावे सन्नियोगशिष्टन्यायेनोत्वाभावोऽपि बोध्य इत्यवतरणार्थः । फलम् विद्वः मिमार्जिषतीत्यादि । यत्किञ्चित्प्रयोगविशिष्टे शास्त्रेऽन्त्यसदेशस्येत्यस्योपस्थितिः । वै० च स्वपर्याप्तोद्देश्यताकत्वस्वान्त्योद्देश्यकविकाराप्रयो·

जकत्वस्वनिरूपितावयवत्वविशिष्टान्त्यसदेशोभयवृत्तिवर्णत्वव्याप्यधर्मावच्छिन्नविषयता-प्रयोजकत्वैतत्त्रितयसम्बन्धेन । अन्त्यसदेशत्वञ्च अन्त्याल्विशिष्टत्वम् वै० च स्वपूर्वत्व-स्वपूर्वव्यञ्जनेतरपूर्वत्वाभाववत्त्वोभयसम्बन्धेन । प्रत्याख्यातैषा भाष्य इति प्राचीनानां भ्रममात्रम् ? व्यङस्सम्प्रसारणमिति सूत्रे स्पष्टन्तत्पाठात् । अनेकक्लिष्टकल्पनाभिः फला-नामन्यथासिद्धिम् प्रदर्श्यापि प्रयोजनान्वेषणं कार्यमित्येव आमकभाष्याशयादिति दिक् ।

२९—ननु नमस्करोति देवानित्यादौ "नमः स्वस्ति" इति चतुर्थी, ग्रामं गच्छतीत्यादौ सावकाशां द्वितीयां वाधित्वा स्यादित्याशङ्क्य "उपपदविभक्तेः" इति परिभाषावतारः । नच नमः पदार्थान्वयविवक्षायां चतुर्थीप्राप्तिः कृधात्वर्थान्वयविवक्षायां द्वितीयाप्राप्ति-रिति विषयभेदात् कथन्तांदति वाच्यम् ? नमस्यति देवानित्यस्यैव तत्त्वात् । परिभा-षेयं "सहयुक्तेऽप्रधाने" इति सूत्रे वचनरूपेण पठिता । अत एव सप्तम्यपेक्षयाऽधिकरणस-प्तम्या बलवत्त्वमनेन न्यायेनेति "यस्य च भावेन" इति सूत्रे भाष्ये कैयटे च । क्रियानिष्ठ-विशेष्यतानिरूपितक्रियाकारकभावसम्बन्धावच्छिन्नप्रकारताप्रयोजकत्वं कारकविभक्ति त्वम् । कारकत्वव्याप्यकर्मत्वादिबोधकविभक्तित्वम् वा । क्रियान्वयिनि जायमानविभ-क्तित्वं कारकविभक्तित्वमिति लक्षणेन प्रथमाया अपि कारकविभक्तित्वम् । नमो वरिव इति सूत्रे नमस्यति देवानित्यादौ चतुर्थीवारणाय चैषा भाष्य उपन्यस्तेति दिक् ।

३०—इदञ्च ६ षष्ठप्रश्नोत्तरवदनुसन्धेयम् ।

३१—एतच्च २ द्वितीयप्रश्नोत्तरेण कृतेन समाधेयम् ।

३२—इदञ्च ३ तृतीयप्रश्ने सम्यगुत्तरितम् ।

३३—इदञ्च ४ चतुर्थप्रश्ने समाहितं द्रष्टव्यम् ।

३४—एष प्रश्नः कृतोत्तरेण ५ पञ्चमप्रश्नेन समानः ।

३५—एतच्च १ प्रथमप्रश्ने साधुव्याख्यातमालोचनीयम् ।

३६—ननु गवे हितं गोहितमित्यत्र समासे विभक्तिलुकि प्रत्ययलक्षणाश्रयणेन वान्ता-देशापत्तिरित्याशङ्कापनुत्तये वर्णाश्रये नास्ति प्रत्ययलक्षणमिति परिभाषावतारः । तत्र प्रत्यय इति महासंज्ञाकरणेन बोधके प्रत्ययत्वसम्पादनार्थं लोके बोधकता ङकाररहित एकार एवेति तस्यैव प्रत्ययसंज्ञा नतु ङकारविशिष्टस्येति । तथा च प्रत्ययादर्शनंलुक्प-दार्थः प्रत्ययलक्षणेनाच्त्वादवादेशो दुर्वार इति नावतरणे कापि शङ्कावशिष्यते । वर्णनि-मित्तके विधौ कर्तव्ये प्रत्ययलक्षणन्नेति फलितार्थः । लुप्तप्रत्ययवृत्तिर्या वर्णत्वव्याप्य-धर्मावच्छिन्नविषयता तन्निरूपके कार्ये कर्त्तव्ये प्रत्ययलक्षणन्न भवतीति फलितार्थः । तथा च न कुत्रापि दोषलेशः । प्रत्ययलोपसूत्रे स्थानिवदित्यनुवृत्त्यैव सिद्धे प्रत्ययलक्ष-णग्रहणकरणेन प्रत्ययलोपसूत्रं वर्णाश्रये विधौ न प्रवर्त्तत इत्यर्थो निस्सरति । तथा च प्रत्ययमात्रवृत्तिर्या स्वावयवनिष्ठविशेष्यतानिरूपितप्रकारत्वासमानाधिकरणा निमित्तता तादृशनिमित्तताके कार्ये कर्त्तव्ये प्रत्ययलक्षणमिति निष्कर्षो जायते । इयमल्विधौ स्थानिवत्त्वाप्राप्तावपि प्राप्तप्रत्ययलक्षणविधेर्निषेधिकेति स्पष्टं भाष्य इति संक्षेपः ।

३७—प्रश्नोऽयं कृतोत्तराष्टमप्रश्नादभिन्नो बोध्यः ।

३८—एष दत्तोत्तरस्य दशमप्रश्नस्यांशभूतस्तत उपादेयः ।

३९—अस्योत्तरं २९ एकोनत्रिंशप्रश्ने दत्तप्रायम् ।

४०—प्रश्न एषः १९ एकोनविंशप्रश्ने दत्तोत्तरो ज्ञेयः ।

४१—उदस्थादित्यत्र "उदः स्थास्तम्भोः" इति पूर्वसवर्णापत्तिपरीहाराय निर्दिश्यमा-

नस्येति परिभाषा स्वीक्रियते । तत्र "षष्ठी स्थाने योगा" इति सूत्रमावर्त्तते प्रथमस्य प्रथमोऽर्थः। द्वितीयस्य षष्ठ्यन्तन्निर्दिश्यमानमुच्चार्यमाणमुच्चार्यमाणसजातीयमेव निर्दिश्यमानावयवरूपमेव वा स्थानेन स्थानिनिरूपितसम्बन्धेन युज्येत ननु प्रतीयमानमिति, तेनेदं सिद्धम् । षष्ठीप्रकृतिजन्यप्राथमिकोपस्थितिविषयस्यादेशा भवन्तीति परिभाषातत्त्वम् । प्राथमिकोपस्थितित्वञ्चान्यसहायशून्यत्वमत एवापिबत् इत्यत्र नाड्विशिष्टस्य पिबादेशः किन्तु केवलस्यैवेति । नभूसुधियोः इति निषेधज्ञापनेन ग्रहणकशास्त्रगृहीतानां निर्दिश्यमानकार्य्यबोधनात् न "अस्य च्वौ" इत्यादौ दीर्घादेशानापत्तिः। इवर्णोवर्णान्तश्नुधातुभ्रुवामित्यर्थेन धात्वादीनामपि निर्दिष्टत्वादन्त्यादेशत्वाय इयङुवङोङित्त्वं सार्थकतामेति। रीङ्ङोस्तु ङित्त्वं स्पष्टार्थमेव । एवञ्च धातोरपि निर्दिश्यमानत्वेन इदं ङित्त्वं वर्णग्रहणे निर्दिश्यमानपरिभाषाया अप्रवृत्तिज्ञापकमिति मतमपास्तम् । हयवरट्सूत्रीयभाष्यविरोधात् । पादः पत् षष्ठी स्थाने इति सूत्रयोर्भाष्य एवैषा पठिता । निर्दिश्यमानत्वञ्च निर्दुष्टम् षष्ठीप्रकृतिविशिष्टत्वम् । वै० च स्वजन्योपस्थितीयविषयताश्रयत्वस्वविशिष्टवर्णाघटितत्वसम्बन्धेन। अत्र वै० च स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वस्वजन्यशाब्दबोधीयविषयताश्रयाधिकरणान्तोत्तरत्वोभयसम्बन्धेन। परिषिञ्चतीत्यत्र षत्वानापत्तौ स्वविशिष्टागमाघटितत्वरूपतृतीयसम्बन्धो निवेश्यः। वै० च स्वजन्योपस्थितीयविषयताश्रयपर्य्याप्तोद्देश्यतानिरूपितविधेयताश्रयत्वस्वविशिष्टभिन्नत्वोभयसम्बन्धेन। वै० च स्वजन्योपस्थितीयविषयताश्रयघटकावधिकपूर्वत्वस्वजन्योपस्थितीयविषयताश्रयवधिकोत्तरत्वसम्बन्धेनेति न त्रितामित्यादौ दोष इति सङ्क्षेपः ।

४२—ननु प्रत्ययग्रहणे चापञ्चम्या इति परिभाषया तदादिविशेष्यकतदन्तविधिनिषेधे कृतेऽप्युत्तरपदविशेष्यकतदन्तविधौ तु न काचिद् बाधा, तथा च "घरूप" इति सूत्रस्य घाद्यन्त उत्तरपदे परे ह्रस्व इत्यर्थे कुमारी ब्राह्मणिरूपेत्यत्र ह्रस्वापत्तिरिति सङ्कटे उत्तरपदाधिकार इति परिभाषावतारः । ज्ञापकञ्चास्यां "हृदयस्य हृल्लेख" इति सूत्रे लेखग्रहणमेव । नच तदन्तविधौ लेखान्ते उत्तरपदे परे हृत्परमलेखार्थन्तदावश्यकन्न ज्ञापकं भवितुमर्हतीति वाच्यम्? ज्ञापकपरभाष्यप्रामाण्येन तादृशोऽनभिधानकल्पनाद् । इयञ्च परिभाषा हृदयस्येति सूत्रे भाष्य एव स्पष्टा । केचित्तु लेखग्रहणसामर्थ्यादविशेष्यकस्तदन्तविधिर्नेत्येव ज्ञाप्यांशम् । परंतु लेखग्रहणेन सप्तम्यन्ततया प्रत्ययग्रहणेन तदन्तग्रहणमित्येव ज्ञाप्यम् उत्तरपदाधिकार इति विशेषणञ्च नोपादेयमिति । तेन "सुपि च" इत्यादौ न दोषः। वस्तुतस्तु साक्षादानुपूर्व्यवच्छिन्नविषयताप्रयोजकम्पदं सप्तम्यन्तं विशेष्यमदाय तदन्तग्राहकन्न भवतीतिमात्रं कल्प्यते । सिद्धान्तिनस्तु लाघवाच्छ्रावणप्रत्यक्षविषयतावच्छेदकधर्मावच्छिन्नविषयताप्रयोजकम्पदमुत्तरपदं विशेष्यीकृत्य तदन्तग्राहकन्न भवतीति परिभाषाद्वयस्थाने पठनीयमित्यदोष इति प्रवदन्तीति सङ्क्षेपतः ।

४३—प्रश्नस्यास्योत्तरं सप्तविंशतितमे २७ प्रश्ने दत्तमनुसन्धेयम् ।

४४—ननु पञ्चेन्द्राण्यो देवता अस्य पञ्चेन्द्र इत्यादौ द्विगोर्लुक् इत्यणो लुकि लुक्तद्धित इति स्त्रीप्रत्ययलुकयानुकः श्रवणापत्तिरित्याशङ्कायां सन्नियोगशिष्टानामिति परिभाषावतारः । अत्र ज्ञापकञ्च "बिल्वकादिभ्यश्छस्य लुक्" इति सूत्रीयछग्रहणम् । तद्धि छमात्रस्य लुग्बोधनद्वारा कुको निवृत्तिर्माभूदित्येतदर्थम् बिल्वकादिगणे कृतकुगागमानामेव निर्देशात । सन्नियोगशिष्टानाम् ताहित्यावच्छिन्नविधेयताश्रयाणां मध्ये अन्यतरस्य एकस्य अपाये सम्भाविते उभयोः स्थानिनिवृत्त्यादेशस्थितयोरपायः । प्रधानस्य

विधेयस्यापाये तत्सन्नियोगशिष्टप्रधानस्यापाय इत्येव परिभाषार्थः। केषाञ्चिन्न्यायसिद्धापीयमिति मतम्। केचित्तु णाविष्ठवदित्यनेन पुंवत्त्वविधानमेतत्परिभाषाया अनित्यत्वज्ञापनार्थम्। अन्यथा टिलोपेनैव एतयतीत्यादौ ङीपि निवृत्ते परिभाषयानया नस्यापि निवृत्तौ सिद्धौ पुंवत्त्वविधानवैयर्थ्यादिति कैयटादयः प्राहुष्टेरिति सूत्रे। तन्न? इडविडमाचष्टे ऐडविडीयतीत्यादौ पुंवत्त्वस्यावश्यकत्वात्। इडविडोऽपत्यमित्यर्थे जनपदेत्यञि स्त्रियामतश्चेति लुकि ततो णिचि पुंवद्भावे इडविडेति रूपेऽकारलोपे प्रत्ययलक्षणन्यायेन वृद्धिः फलम्। एवं दारदयतीत्यपि फलम्। ऐनेयः श्यैनेय इत्यादौ तु अचः परस्मिन् इति स्थानिवद्भावेन पूर्वविधिशब्दे तन्त्राश्रयणेन सिद्धेरिति संक्षेपः।

४५—एष प्रश्नः ४० चत्वारिंशत्तमे प्रश्ने समाहितः।

४६—सर्वमिदं ३६ षट्त्रिंशत्तमे समाहितम्। अतृणेट् मित्रशीरित्यत्र "तृणह इम्, शास इदङ्हलोः" इतं मादेशेदादेशयोः वर्णत्वव्याप्यहल्त्वघटितहलादित्वावच्छिन्ननिमित्तताकत्वाद् यद्यपि प्रत्ययलक्षणाभावश्शङ्क्यस्तथापि वर्णत्वव्याप्यधर्मघटितधर्मावच्छिन्ना या प्रकारत्वासमानाधिकरणा निमित्तता तादृशनिमित्तताके विधौ कर्त्तव्ये प्रत्ययलक्षणन्नेति तदर्थात्। तथा च निषेधाप्रवृत्त्या प्रत्ययलक्षणेनाभीष्टसिद्धेरिति संयोज्य कार्य्यमुत्तरमिति दिक्।

४७—एतस्योत्तरं सप्तत्रिंशत्तमे ३७ प्रश्ने दत्तन्तत एवानुसन्धेयम्।

४८—येन विधिस्तदन्तस्येति सूत्रे भाष्ये तदन्तांशापवादः प्रत्ययग्रहणे चेति परिभाषात्मकः पठितः। पञ्चम्यन्तार्थावधिकपरत्वविशिष्टप्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकं पदन्तदन्तबोधकन्न भवतीति सामान्यपरिभाषार्थः। यथा रदाभ्यां निष्ठातो न इत्यत्र। तेन हषत्तीर्णं इत्यादौ धातुतकारस्य न नत्वम्। न च प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकन्न तपदमपितु निष्ठापदमिति कथन्निर्वाह इति वाच्यम्? प्रत्ययत्वव्याप्यधर्मावच्छिन्नविषयताप्रयोजकपदघटकमिति परिभाषार्थेनाक्षतेः। तदन्तेत्यंशानुपस्थितौ रेफान्तात्परस्य निष्ठातस्येत्यर्थ इति न दोषस्तदंशानुपस्थितौ मानाभावात्। तदन्तांशोपस्थितौ तूभयोरेकविषयत्वमेव स्यादिति हषत्तीर्णं इत्यादौ दोषः स्यादेव। नच निर्दिश्यमानपरिभाषया निष्ठातस्यैव नत्वे परिभाषैषा निष्फलेति वाच्यम्? चरितमुदितमित्यत्र नत्वाशङ्कने रदाभ्यामित्यस्य तकारविशेषणत्वेन वारणपरभाष्येणात्र तत्परिभाषाया अप्रवृत्तेः। नच यदागमपरिभाषया इड्विशिष्टस्य पुनर्निष्ठासंज्ञायां प्राप्तनत्वनिवारणाय भाष्यकृद्व्याख्यानस्यानुकूलत्वेन निर्दिश्यमानपरिभाषाऽप्रवृत्तिबोधकता न सङ्गच्छत इति वाच्यम्? अअनुशब्दयोर्बहुव्रीहिसमासे दीर्घे डापि टिलोपे निष्पन्नादाशब्दादाचारक्विबन्तात् क्लीबे कर्त्तरि विचि पुनस्तत आचारक्विबन्तात् क्तेऽनुदात्तत्वेनेडभावेऽकारलोपे तशब्दात् क्यजन्तात् क्विपि निष्पन्नतीशब्दस्य निष्ठान्तेर्णाशब्देन समासे हषत्तीर्णा अत्र दोषापत्तेरिति संक्षेपः।

४९—अयम्प्रश्नः सप्तदशे १७ प्रश्ने प्रायस्समाहितोऽनुसन्धेयः।

५०—एतस्योत्तरम् ४० चत्वारिंशत्तमे प्रश्ने साधुक्तमालोचनीयम्।

५१—यदागमपरिभाषाया अस्वीकारे "नेटि, णेरनिटि" इत्यनयोर्वैयर्थ्यम्। स्वीकारे च "आने मुक्" इति सूत्रीयमुग्ग्रहणवैयर्थ्यम्। तत्र नेटि णेरनिटि इति व्यर्थं 'गुणो भवति वृद्धिर्भवति रेफशिरा गुणवृद्धिसंज्ञकोऽभिनिर्वर्त्तते' इति भाष्यानुकूलं रदाभ्यां सूत्रप्रतिपादितं ज्ञापयतः। द्वितीये मुग्ग्रहणं व्यर्थीभूय परिभाषेयमनित्येति ज्ञापयति। अन्यथा पचमान इत्यादावकारस्य मुकि परिभाषयानया विशिष्टस्य सवर्णदीर्घ तद्वैय-

र्थापत्तेः । न च आतो ङित इति इयादेशबाधनार्थम्मुग्ग्रहणन्न ज्ञापकतामर्हतीति वाच्यम् ? आतो ङित इत्यस्यानन्तरम् नात इति अनात इति वा न्यस्य तद्बाधे सिद्धे मुग्विधानस्य ज्ञापकत्वेऽक्षतेः । वस्तुतस्तु पदमात्रिके मुकि विधातव्येऽर्द्धमात्रिकमुग्विधानेन नित्यत्वं ज्ञाप्यते । पदमात्रिकवर्णस्वीकारे च जिह्वामूलीयोपध्मानीयादीनां स्वीकार एव प्रमाणम् । विशेषः ३९ पञ्चत्रिंशत्तमे व्याख्यातो ऽनुसन्धेयः ॥ अधिकं शास्त्रार्थकलायाम् ।

६२—प्रश्नोऽयम् २९ प्रश्नविंशतितमे दत्तोत्तरोऽवलोक्यः ।

६३—व्यपदेशिवत्परिभाषाकाले "अपूर्वानुत्तरलक्षणत्वादाद्यन्तयोरसिद्धम्" इति वार्त्तिककृद् ब्रूते । तन्मते स्वविशिष्टत्वमन्तत्वम् वै० च स्वघटकत्वस्वघटकाव्यवहितपूर्वत्वाभाववत्त्वैतदुभयसम्बन्धेन । एवमादित्वं स्वघटकत्वस्वघटकाव्यवहितोत्तरत्वाभाववत्त्वोभयसम्बन्धेन । तथा च आभ्याम् इत्यादिसिद्धौ स्वस्मिन्नपि आद्यन्तत्वयोः स्वघटितत्वस्वघटकत्वयोरसत्त्वात् आद्यन्तवत्सूत्रन्न विधेयमिति संक्षेपः । भाष्यादिमतं लेखोपयोगि १९ पञ्चदशे प्रश्ने लिखितं ज्ञेयम् । एकत्वञ्चासहायत्वम् तच्च मुख्यधर्मवदघटकत्वे सति मुख्यधर्मवदघटितत्वे सति मुख्यधर्मवदसमभिव्याहृतत्वम् । मुख्यधर्मश्चातिदिदिक्षितरूप इति परीक्षाक्रमे समन्वयः ।

६४—ननु "क्षेपे" इति सूत्रे प्रत्ययग्रहणपरिभाषया क्तान्ततदादिप्रकृतिकसुबन्तेन सह समस्यन्तं समस्यत इति फलितार्थं स्थितशब्दस्यैव क्तान्ततदादिप्रकृतित्वेन नकुलस्थितशब्दस्य क्तान्ततदादित्वाभावात् समासो न स्यादित्याशङ्क्य कृद्ग्रहणपरिभाषावतारः । कर्मणि क्तान्त उत्तरपदेऽनन्तरो गतिः प्रकृतिस्वर इत्यर्थके "गतिरनन्तर" इति सूत्रेऽनन्तरग्रहणेन चैषा ज्ञाप्यते । तद्धि अभ्युद्धृतमित्यादावनिव्याप्तिवारणार्थम् । प्रत्ययग्रहणपरिभाषयोद्धृतस्य क्तान्तत्वाभावादेवाप्राप्तौ तद्व्यर्थं स्यादिति । नच तत्र गतिर्गतावित्येव सिद्धिरिति वाच्यम् ? पादादिस्थत्वेन पदात्परत्वाभावेन च तदप्राप्तेः । कृते अनन्तरग्रहणे तु सामर्थ्याद् गत्याक्षिप्तधातुनिरूपितमेवान्तर्यं गृह्यते इति दोषाभावात् ।

परिभाषार्थश्च कृन्मात्रनिष्ठविषयताप्रयोजकं पदं कृद्विशिष्टे लाक्षणिकम् । वै० च स्वनिष्ठचरमावयवतानिरूपकत्वस्वविशिष्टाघटितत्वोभयसम्बन्धेन । सम्बन्धघटकवै० च स्वेतरत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयेतरत्वस्वनिष्ठविधेयतानिरूपितोद्देश्यताश्रयाव्यवहितपूर्वत्वविशिष्टगतिकारकान्यतरेतरत्वैतत्त्रितयसम्बन्धेन । स्वं कृत् । शास्त्रार्थकलायान्तु सर्वथा खण्डनेऽपूर्वा शैलीति सङ्क्षेपः । अपिग्रहणेन च केवलस्यापि ग्रहणम् । अन्यथाऽनया कृद्ग्रहणविषये परत्वात् प्रत्ययग्रहणपरिभाषाया बाध एव स्यादित्यपिग्रहणम् । अत एव साङ्कौटिनमिति सिद्ध्यति न तु सङ्कौटिनमिति पुंयोगसूत्रे भाष्ये । एषा च कृद्विशेषग्रहणे कृत्सामान्यग्रहणे चेति अनुपसर्जनात् सूत्रे भाष्ये स्पष्टमिति दिक् ।

६५ ननु अनुबन्धा एकान्ता इति सिद्धान्तपक्षे अनेकान्तत्वादेव औशादीनां सर्वादेशत्वसिद्धौ "अनेकाल्शित्सर्वस्य" इति सूत्रे शिद्ग्रहणं व्यर्थमित्याशङ्क्य नानुबन्धकृतमनेकाल्त्वमिति परिभाषावतारः । शिद्ग्रहणं व्यर्थीभूयेमां ज्ञापयतीति भावः । तथा च "अर्वणस्त्रसावनञः" इत्यादेर्न सर्वादेशत्वमिति । डादिविषये तु सर्वादेशत्वं विनानुबन्धत्वस्यैवाभावेनानुपूर्व्यात् सिद्धम् । औशादौ शकारोच्चारणसामर्थ्याद् भूतपूर्वानेकाल्त्वमादाय तु न सर्वादेशत्वसिद्धिः ? शिसर्वनामस्थानम्, जसशसी इत्यादौ विशेषणार्थत्वेन तच्चारितार्थ्यात् । तथा च स्वरूपबोधकस्थले एवायमिति तत्त्वप्रत्यभिज्ञया बोध्यबोधकयोरभेदस्य एवायमौकाराद्यादेशो यो बोधके औशित्याकारक आसीत् इत्यनेका-

ल्त्वमप्यस्यैव धर्म इति सर्वादेशत्वसिद्ध्या व्यर्थं सत्परिभाषां ज्ञापयतीति मूलाशयात्। वस्तुतस्तु प्राचीनमतानुसारेणैवास्य ग्रन्थस्य योजना । विशेषप्रकारस्तु शास्त्रार्थकलायाम्। परिभाषास्वीकारपक्षेऽनेकाल्घटकाल्पदेनानुबन्धस्य ग्रहणञ्च भवतीति फलति। तथा च बोधकावस्थायामपि औशादेशस्थलेऽनेकाल्त्वाभावेन शिद्ग्रहणञ्चरितार्थम्। अल्विशिष्टत्वमनेकाल्त्वम् वै० च स्वघटितत्वस्वेतरो योऽनुबन्धभिन्नोऽल् तद्घटितत्वमित्युभयसम्बन्धेनेति सङ्क्षेपः।

६६—लाघवानुरोधिनो वैयाकरणाः यत्पदघटितशास्त्रासहकारित्वे सति षष्ठीप्रकृतिजन्योपस्थितिविषयत्वन्निर्दिश्यमानत्वम्। परन्तु तदागमास्तद्ग्रहणेनेति भाष्यानुरोधात् षष्ठीप्रकृतिशक्यत्वन्निर्दिश्यमानत्वम्। स्नात्वाकालकीकृत्येति तु प्रयोग एव न भवति, मयूरव्यंसकादेस्समासान्तरेऽप्रवेशसिद्धान्तात्। अतः परमो मयूरव्यंसक इत्येवं विधा एव भवन्तीति वदन्ति, तन्न? प्रत्ययमात्रग्रहण इत्यादेरनुपपत्त्यापत्तेः। स्नात्वाकालकादीनाम् प्रतिषेध इति वार्त्तिकेन निषेधात् निपातनाल्ल्यबभाव इति केचित्। व्याघ्रपात्पद इत्यत्र पूर्वपाच्छब्दस्यापि पदादेशापत्तिर्निर्दिश्यमानत्वादिति चेन्न? षष्ठीप्रकृतिविशिष्टत्वम् निर्दिश्यमानत्वम्। वै० च स्वजन्योपस्थितीयविषयताश्रयत्वस्वजन्योपस्थितीयविषयताश्रयावधिकपूर्ववर्णघटितत्वोभयसम्बन्धेन। एवञ्च व्याघ्रपात्पद इत्यत्र स्वजन्योपस्थितीयविषयताश्रयोऽग्रिमपाच्छब्दः तदवधिकपूर्ववर्णो दकारादिः तद्घटितत्वमेव पूर्वपाच्छब्दे इति नातिव्याप्तिः। वस्तुतस्तु षष्ठीप्रकृतिविशिष्टत्वन्तत्त्वम्। वै० च स्वजन्योपस्थितीयविषयताश्रयत्वस्वविशिष्टवर्णाघटितत्वसम्बन्धेन। अत्र वै० च स्वजन्योपस्थितीयविषयताश्रयाव्यवहितपूर्वत्वस्वजन्यशाब्दबोधीयविषयताश्रयाधिकरणान्तोत्तरत्वैतदुभयसम्बन्धेन। एवञ्च सजूस्सजूर्भ्यामित्यादौ न दोषः। सिद्धान्तपरिष्कारस्तु ४१ एकचत्वारिंशत्तमे दर्शितोऽनुगतव्य इति दिक्।

६७—ननु व्यपदेशिवद्भावमहिम्ना "सूत्रान्ताट्ठक्, दशान्ताड्डः" इत्यादिप्रत्ययाः केवलसूत्रादिशब्देभ्योऽपि स्युरित्याशङ्क्य व्यपदेशिवद्भावोऽप्रातिपदिकेनेति परिभाषारम्भः। "पूर्वादिनिः, सपूर्वाच्च" इत्यनयोः स्थाने पूर्वात्सपूर्वादिनिः इत्येकयोग एव विधातव्ये पृथग्योगकरणमेतत् परिभाषायां ज्ञापकम्। न च "इष्टादिभ्यः" इत्युत्तरार्थं पृथग्योग इति, अत एवानिष्टी इत्यादिसिद्ध्यतीति वाच्यम्? ज्ञापकपरभाष्यप्रामाण्येन तादृशामनभिधानकल्पनात्। एकयोगेऽपि तावत उत्तरत्रानुवृत्तेरिष्टतया सिद्धौ बाधकाभावाच्च। परिभाषास्वीकारादेव "नान्तादसङ्ख्यादेर्मट्" इति चरितार्थम्, अन्यथा पञ्चम इत्यादावपि सङ्ख्यादित्वे तद्वैयर्थ्यं स्फुटं स्यात्। एषा च परिभाषा प्रातिपदिकग्रहण एव प्रवर्तत इति न "उगितश्च" इत्यादौ प्रवृत्तिः। प्रत्ययविधिविषयत्वञ्चास्या इति "असमासे निष्कादिभ्यः" इति सूत्रे भाष्ये सिद्धान्तितमिति दिक्।

६८—एतस्योत्तरम् ४८ अष्टाचत्वारिंशत्तमे प्रश्ने समीरितमनुसन्धेयम्।

६९—ननु कंसपरिमृड्भ्यामित्यादौ "मृजेर्वृद्धिः" केन निवार्येत्याशङ्कायामाह धातोः कार्य्यमिति। परिभाषायामस्यां "दाण्डिनायन" सूत्रीयभ्रौणहत्ये तत्त्वनिपातनं ज्ञापकम्। हनस्त इत्यनेनैव तत्सिद्धौ तत्त्वनिपातनवैयर्थ्यात्। न च होहन्तेरिति कृत्वाभाव एव तत्र निपात्यते इति न तत्त्वनिपातनव्यर्थता ज्ञापकतामेतीति वाच्यम्? भाष्ये तथैवोक्तत्वेन तत्रैव पाणिनेस्तात्पर्य्यकल्पनेऽविरोधात्। धातोस्स्वरूप इति पाठस्तु प्रसङ्गमिरित्यत्र "अनुदात्तस्य" इत्यमापादनेन भाष्ये दूषितः। धातुत्वव्याप्यधर्माव-

च्छिन्नोद्देश्यताककार्य्यं निमित्तत्वेनाश्रीयमाणः प्रत्ययः धातुत्वावच्छिन्नोद्देश्यतानिरूपितविधेयताश्रय एव गृह्यते इति तदर्थात्। "नशेर्वा" इति कुत्वे निमित्तत्वेन प्रत्ययस्याश्रयणाभावात् प्रणङ्भ्यामित्यादौ तत्प्रवर्त्तत एव। "अचि श्नुधातु" इत्यादौ तु न प्रवर्त्तते "न भूसुधियोः" इति निषेधविधायकेन तदनित्यत्वकल्पनादिति सङ्क्षेपः।

६०—ननु प्रोढवानित्यत्र ऊढवद्वटकोढशब्दमादाय "प्रादूहोढ" इति वृद्धिस्स्यादित्याशंक्य "अर्थवद्ग्रहण" इति परिभाषावतारः। परिभाषायामस्यां ज्ञापकञ्च भ्रस्रादिसूत्रे राजेः पृथग्भ्राजिग्रहणमेव। न च षत्वविधौ राजिसाहचर्य्यात् फणादेरेव ग्रहणन्न तु भ्राजित्यस्येत्येतदर्थं भ्राज्ग्रहणमावश्यकन्न ज्ञापकतामेतीति वाच्यम्? भ्राजादिपाठेनापि तत्सिद्धेः। न्यायसिद्धापीयम्। तथा हि शब्दानामर्थे शक्तिः शब्दे लक्षणा, शब्दे शक्तिरर्थे लक्षणेति च केचिदाहुः परन्तूभयमते लक्षणाश्रयणे गौरवात् शब्दिकैर्लक्षणाया अस्वीकाराच्च शब्दानां शब्दार्थयोः पृथक्शक्तिः उत्सर्गतश्चार्थो विशेष्यः क्वचित्तद्बाधे विशेषणतेति स्वीकार्यम्। विशेषणान्तरान्वयापत्तिस्तु मुख्यत्वादिनिवेशेन वार्या। अत्रार्थः कल्पितान्वयव्यतिरेककल्पितो लौकिकः शास्त्रीयोऽपि ग्राह्यः। लस्येति सूत्रभाष्यानुसारेण नैषा वर्णग्रहणे प्रवर्त्तते किन्तु विशिष्टरूपोपादाने अर्थात् आनुपूर्व्यवच्छिन्नविषयताप्रयोजकपदोपादान इति स्फुटं भाष्ये। सूत्रमते तु—"स्वं रूपम्" इत्यत्र स्वशब्देन आत्मीयवाचिनाऽर्थो गृह्यते, रूपशब्देन च स्वरूपम् उभयञ्च शब्दस्य संज्ञीति। एवञ्च तत्पदं यदर्थतात्पर्य्येणोच्चार्य्यते तस्य पदस्य तस्यैवार्थस्यात्मीयत्वेन स्वविषयकबोधजनकत्वप्रकारकतात्पर्यविशेष्यतापर्याप्त्यधिकरणत्वादिनिरुक्तसम्बन्धेन शब्दम्प्रत्यर्थो विशेषणमिति शब्दस्य विशेष्यता। एवञ्च शब्दस्यात्मीयवाच्यर्थविशिष्टे कार्यमिति परिभाषा सिद्ध्यतीति भाष्यादिकमनुकूल्यते॥ विशेषो बृहच्छास्त्रार्थकलायाम् मदीयतट्टिप्पण्याञ्चेति जिज्ञासुभिस्ततोऽनुसन्धेयम्।

६१—ननु इमम् इत्यादौ "त्यदादीनाम" इति कृतमत्त्वमनुनासिकं स्यादित्याशंक्य भाव्यमानेन सवर्णानां ग्रहन्नेति परिभाषावतारः। भाव्यमानेनेति तृतीया कर्त्तरि, ग्रहणमित्यत्र च भावे ल्युट्। तथा च भाव्यमानेन विधेयताप्रयोजकेन पदेन सवर्णानां कोऽर्थस्स्वावृत्तिर्यस्स्वरत्वव्याप्यधर्मेतरःपाणिनिसङ्केतविषयतावच्छेदकधर्मः तद्वतां ग्रहणन्नेति परिभाषार्थः। प्रत्ययांशे अनभिधानात् आगमांशे "वृतो वा" इति दीर्घविधानसामर्थ्यादादेशांशे "ई हल्यघोः" इतिदीर्घविधानात् सवर्णग्रहणाभावे सिद्धे अणुदित्सूत्रेऽप्रत्ययग्रहणसामर्थ्यात् एकदेशानुमत्या स्थालीपुलाकन्यायेन परिभाषेयं ज्ञाप्यते। सर्वप्रकारेण च प्राप्तसवर्णबोधकतां बाधत इति सामान्यपक्षाश्रयणात्। भाष्ये तु ज्ञापकरूपेण "ज्यादादीयसः" इति सूत्रे किमर्थं ज्यादादित्युच्यते इत्यारभ्य भवत्येषा परिभाषा भाव्यमानेनेति साधु व्यवास्थापि।

नव्यास्तु "चोः कुः" इत्यादौ भाव्यमानेनापि सवर्णग्रहणम् उदिदुच्चारणसामर्थ्यादिति भाव्यमानोऽण् सवर्णान्न गृह्णातीत्येव पठन्ति। परन्तु "पथिमथ्यृ" इति विहिताकारस्यानण्त्वेन अनुनासिकाप्राप्तौ तद्व्यावृत्तये कृतमाकारप्रश्लेषादिकं व्यर्थमेव स्यादिति विवेचना॥ विशेषश्शास्त्रार्थकलायाम्।

६२—एतस्योत्तरं २६ षड्विंशतितमे प्रवर्णितं विज्ञेयम्।

६३—एतस्योत्तरम् २९ एकोनत्रिंशत्तमे कृतमनुष्ठेयम्।

६४—ननु "तत्पुरुषे तुल्यार्थतृतीयासप्तमी"ति स्वरः परमेण कारकेण परमकारके-

णेत्यादौ कथन्न, एवम् शोषणार्थकणैधातोः कृतात्वात् परस्य सिचो लुक् "गातिस्था" इति सूत्रेण कुतो नेत्याशंक्य "लक्षणप्रतिपदोक्तयोः" इति परिभाषावतारः । एवञ्च तत्तद्विभक्तिविशेषाद्यनुवादेन विहितो हि समासादिः प्रतिपदोक्तस्तस्यैव शीघ्रोपस्थितिकत्वात् । द्वितीयस्य विलम्बोपस्थितिकत्वात्तद्ग्रहणात् । कृतात्वणैधातोः पा इत्यस्य लाक्षणिकत्वेनाग्रहणात् पिबतेस्तु शीघ्रोपस्थितिकत्वेन ग्रहणादिति तात्पर्य्यम् । अदोऽभवदित्यत्र "ओत्" इति प्रगृह्यत्ववारणाय भाष्येऽस्याः सञ्चारितत्वेन वर्णग्रहणेऽप्येषा प्रवर्त्तत इति । न च "आदेच उपदेशे" इति सूत्रे उपदेशग्रहणात् वर्णग्रहणे नास्याः प्रवृत्तिरिति चेता, स्तोतेत्यादौ लाक्षणिकत्वादेवात्वाप्रवृत्त्या तद्वारणाय क्रियमाणस्योपदेशग्रहणस्य लक्षणप्रतिपदोक्तपरिभाषायां वर्णग्रहणेऽप्रवृत्तिज्ञापकत्वमिति वाच्यम् ? गोभ्यामित्यत्रात्वाभावायोपदेशग्रहणस्यावश्यकत्वात् ज्ञापनासामर्थ्यात्, ओत्सूत्रीयभाष्यविरोधाच्चेति । नच धाजो धापयतीत्यत्र चरितार्थः "अर्त्तिह्री" इति पुक् लाक्षणिके धौट् निष्पन्ने न स्यादिति महापत्तिरिति वाच्यम् ? 'भुवश्च'इत्येव करणे परिभाषयानया सिद्धौ महाव्याहृतिग्रहणस्य "भुवश्च महाव्याहृतेः" इत्यत्र वैयर्थ्यादस्याः परिभाषाया अनित्यत्वज्ञापनात् ।

यत्किञ्चिच्छास्त्रविशिष्टत्वम् प्रतिपदोक्तत्वम् । वै० च स्वीयोद्देश्यतावच्छेदकरूपावच्छिन्नविधेयताकत्वस्वीयोद्देश्यतावच्छेदकसमर्पकज्ञानविषयीभूतानुपूर्वीविशिष्टविधेयताकत्वोभयसम्बन्धेन । अत्र वै० च स्वावच्छिन्नत्वस्वावच्छिन्नप्रयोज्योद्देश्यतानिरूपतत्वैतदन्यतरसम्बन्धेन । प्रथमसम्बन्धफलं गतिकारक इति । द्वितीयफलं विशेषणंविशेष्येति सङ्क्षेपः ।

६५—एतस्योत्तरं प्रथमप्रश्ने एव दत्तमनुसन्धेयम् ।

६६—एषप्रश्नः ४५ पञ्चचत्वारिंशत्तमे प्रश्ने समाहितो ध्येयः ।

६७—एतस्योत्तरं प्रायः ४६ षट्चत्वारिंशत्तमे दत्तम् । लुप्तप्रत्ययाव्यवहितपूर्वत्वेन साक्षादवच्छिन्ना याऽङ्गवृत्तिषष्ठ्यन्तपदप्रयोज्या विषयता तन्निरूपकं कार्यन्नेत्यर्थेन न लुमतेत्यस्योचितस्थलेष्वेव प्रवृत्तिरिति सङ्क्षेपः । विशेषविचारो बृहच्छास्त्रार्थकलायाम् ।

६८—अयम्प्रश्नः १६ षोडशप्रश्नांशेन व्याख्यातव्यः ।

६९—एतस्योत्तरं २६ षड्विंशतितमे प्रश्ने सुदत्तमुपादेयम् ।

७०—एष प्रश्नः ३१ एकत्रिंशत्तमे प्रश्ने समाहितः । ननु ओत्सूत्रे ओदन्तत्वावच्छिन्नविषयताप्रयोजकस्य ओत्पदस्य निपातपदस्य वा सत्त्वेन विशिष्टरूपोपादानाभावात् गोऽभवदिति लक्ष्ये प्रगृह्यसंज्ञावारणपरभाष्यविरोध इति चेन्न ? निपातपदस्य चादित्वेनोपस्थापकत्वात् स्वाश्रयनिरूपितसङ्केतवत्त्वसम्बन्धेन निपातत्वरूपानुपूर्वीविशिष्टे शक्तेः अग्नीषोमौ माणवकावित्यत्र प्रसिद्धदेवताद्वन्द्ववाच्यग्नीषोमपदस्य तत्सदृशपरत्वेनान्तरङ्गत्वादीत्वषत्वे । सदृशलाक्षणिकाग्निसोमयोर्द्वन्द्वे तु न ? गौणलाक्षणिकत्वादप्रसिद्धत्वाच्चेति 'अग्नेः स्तुतस्तोम" सूत्रभाष्ये सुस्पष्टं योज्यम् ।

७१—प्रत्ययप्रसङ्गादपवादसङ्गत्या स्त्रीप्रत्यये चानुपसर्जनेनेति परिभाषावतारः । तत्रावतरणे इवशब्दो भिन्नक्रमः, एवं कोऽर्थः प्रत्ययग्रहणपरिभाषास्वीकारे । स्वाभाववत्त्वसम्बन्धेन मूर्खपुत्रे मूर्खं पितृवदयम् पण्डितः मरुवदुशीनरे जलमिति कथने यथा तत्र न, तथात्रापि नेति यावत् । यथा अतिकारीषगन्ध्यापुत्र इत्यत्र न भवति तथा परमकारीषगन्धीपुत्र इत्यत्रापि कथन्न तदभाव इत्यवतरणाशयः । केचित्तु ष्यङ इत्यस्य प्रत्यय-

त्वेन शब्दस्वरूपं विशेष्यमादाय तदन्तविधौ उत्तरपदाक्षिप्तस्य पूर्वपदस्यापि विशेष्यत्वेन ष्यङन्तान्त इत्यर्थस्य परमकारीषगन्धीपुत्र इत्याद्यर्थमावश्यकत्वेन तद्वदतिकारीषगन्ध्यापुत्र इत्यत्रापि सम्प्रसारणं स्यादित्याशयमाचक्षते । यद्वा स्त्रियं प्राधान्येनाह तत्रैव तदादिनियमो नान्यत्र तु भवत्येव । प्रत्यासत्तिन्यायेन यस्य समुदायस्य स्त्रीप्रत्ययान्तत्वमानेयं तदर्थम्प्रति अनुपसर्जनत्वमेवैतत्परिभाषाप्रवृत्तौ निमित्तम् । तेन अतिराजकुमारिरित्यादौ राजकुमारीशब्दार्थस्यातिशब्दार्थम्प्रत्युपसर्जनत्वेऽपि तदर्थम्प्रत्यनुपसर्जनत्वात्तदादिनियमाभावेन ह्रस्वसिद्धिः । अत्र परिभाषायां शास्त्रीयमुपसर्जनत्वञ्च, प्रत्ययमात्रे तस्यासम्भवात् । ष्यङ इति सूत्रे भाष्ये पठिता । अङ्गसंज्ञासूत्रेण ज्ञापनीया चेति सङ्क्षेपः ।

७२—एष प्रश्नस्सकृद्गतिन्यायविषयकः । तत्र द्वयोः कार्ययोर्यौगपद्येनासम्भव एव विप्रतिषेधशास्त्रोपयोगी इति "इको गुण" सूत्रे कैयटे स्पष्टम् । तत्र यौगपद्येनासम्भव एवेति न तु एकस्य कार्यद्वयासम्भव एवेत्यर्थः । उदाहरणं शिष्टात् इति । तातङ्शादेशयोरेकस्थानिकत्वाभावेऽपि यौगपद्यासम्भवाद् विप्रतिषेधशास्त्रप्रवृत्तिः । निमित्तवाचकपदानामावृत्त्या विधेयेऽपि विशेषणत्वेन तत्र निमित्तानन्तर्य्यबाधे विरोधः । राद्धान्तस्तु निमित्तानन्तर्य्यस्य विशेषणदानेऽपि सुधी उपास्य इत्यादीनां सुद्ध्युपेत्याद्यादेशापत्तेः 'स्थानेऽन्तरतम' इत्यनेनैव वारणस्वीकारे निमित्तानन्तर्यन्न तत्र विशेषणम् । विरोधस्तु एकेन यस्य साधुत्वं बोधितमपरेण तस्यासाधुत्वमित्येवं रीत्योपपादनीयः ॥ शेषः ८ अष्टमप्रश्नोत्तरांशेन संयोज्य समाधेयः ।

७३—एतस्योत्तरं २६ षड्विंशतितमे प्रश्ने दत्तन्ततोऽनुसन्धेयम् ।

७४—एषप्रश्नः ६४ चतुष्षष्ठितमे प्रश्ने समाहितः ।

७५—एतस्य व्याख्यानं सर्वं ४० चत्वारिंशत्तमे प्रश्ने कृतम् ।

७६—एतस्योत्तरं ४६ षट्चत्वारिंशत्तमे प्रश्नेऽभिहितम् ।

७७—अयन्तु ३तृतीयप्रश्ने समाहितो द्रष्टव्यः ।

७८—एषः ३८ अष्टात्रिंशत्तमे व्याख्यातः ।

७९—ननु व्याघ्री, कच्छपी इत्यादौ सुबन्तेन समासात्ततोऽप्यन्तरङ्गत्वाट्टापि अदन्तत्वाभावाज्जातिलक्षणो ङीष् न स्यादिति समाशङ्क्य गतिकारकोपपदानामिति परिभाषावतारः । ननु उपसञ्जनिष्यमाणन्यायेन टापोऽप्राप्तौ सुपि समासे जातिलक्षणङीषैव भाव्यम् । यदि टाप् न स्यात्तर्हि समासे सुपो लुकि ङाष्स्यादिति सम्भावनायास्सत्त्वादिति प्रश्नः । नच तन्न्यायेन अजाद्यत इति प्रातिपदिकपदार्थे जातिवाचकातिरिक्तत्वेन सङ्कोचाद् घ्र इत्यस्य तत्त्वाभावात् कथन्न टाबिति वाच्यम् ? स्वाङ्गाच्चेति शास्त्रभाष्यप्रामाण्येनापवादविषयघटकातिरिक्तत्वेन सङ्कोचे घ्र इत्यस्य तथात्वात् । तत्र स्वाङ्गात् किम् अशिखेति भाष्यम् विशिष्टस्यापवादविषयत्वेऽपि शिखेत्यस्य तत्त्वाभावात् टाप्यदन्तत्वाभावान्ङीषोऽप्राप्तौ भाष्यमसङ्गतं स्यात् । अजा क्रीतेत्यादौ तु भविष्यदपवादविषयान्तातिरिक्तत्वेन सङ्कोचेऽक्षतेः । उपपदमतिङ् इति सूत्रेऽतिङ्ग्रहणेन कुगतीत्यत्र तदुपकर्षणेनातिङन्तश्च समास इत्यर्थात्तयोः सूत्रयोः सुप्सुपेत्यस्य निवृत्त्यैकदेशानुमत्या कारकांशे च स्थालीपुलाकन्यायेनेयं सिद्धा । तेन अश्वक्रीती सिद्धा । अन्यथा पूर्वं टाप्यदन्तत्वाभावात् क्रीतात्करणेति ङीष् न स्यात् । कुम्भकारादौ षष्ठीसमासाभावादुपपदसमासो विप्रतिषेधेनेति वार्तिकावसरे अथवा विभाषाषष्ठीसमास इत्यादिना भा-

ध्ये तत्प्रत्याख्यानमनित्यत्वञ्चास्याः स्पष्टत एवोररीकृतम् । यद्यप्युपपदसमासस्यान्तरङ्गत्वाभिप्रायकं तद्वार्त्तिकमतं तथापि सर्वप्रत्याख्यानाय भाष्यम् । परिभाषायां सामान्यतः कारकोपादानेन कारकविभक्त्यन्तेन कृद्भिःसमासमात्रस्य सुबुत्पत्तेः पूर्वमेव लाभात् । तथा च कारकेतरविशेषयोरुपादान एवैषेति खण्डितम् । अस्या विध्येकवाक्यत्वाभावेन विप्रतिषेधादिशास्त्रवत् कार्यव्यवस्थापकत्वेनोपादान एवेत्यर्थाल्लाभाच्चेति सङ्क्षेपः ।

८०—एतस्योत्तरं ४४ चतुश्चत्वारिंशत्तमे प्रश्ने प्रत्तम् ।

८१—प्राचीनसिद्धान्तिनः संज्ञाविधिशास्त्राणां परिभाषाविधिशास्त्राणाञ्च परस्परम् पदैकवाक्यत्वमनुकूलयन्ति तत्त्वं च स्वघटकपदप्रयोज्यविषयतानिरूपितविषयताप्रयोजकपदघटितत्वम् । एतेषाम्मते यथोद्देशपक्षे च संज्ञापरिभाषाभ्यः पार्थक्येन विधिशास्त्राणि बोधयन्ति नैकवाक्यतयेति वदन्ति ।

परिभाषादेशे नव्यास्तु यथोद्देशे तत्संस्कार्य्यसकलविध्युपस्थितौ परिभाषाविधेयभेदकल्पनेन पदैकवाक्यतया संज्ञाविधिशास्त्रयोरन्वयः । कार्यकाले त्रैपादिकविधिशास्त्रेण पदैकवक्यतेति न कार्यकालपक्षाद्भेदः । अत एव भाष्ये 'कश्चिदेकदेशस्थः सर्वं शास्त्रमभिज्वलयति यथा प्रदीपः सुप्रज्वलितः सर्वं वेश्माभिज्वलयति' इति । प्रधानान्यात्मसंस्काराय सन्निधीयमानानि गुणभेदं प्रयुञ्जते इति कैयटे चोक्तं सङ्गच्छते ।

कार्यकालपक्षे संज्ञाशास्त्रस्यापि विधिशास्त्रेण सहैव वाक्यार्थबोधः । अत एव अयादिभ्यः परा प्रगृह्यसंज्ञा इत्यदसोमात् सूत्रभाष्यं सङ्गच्छते । राज्ञ इत्यादिसिद्धये 'अपादानमुत्तराणि कारकाणि बाधन्ते' इति भाष्यप्रामाण्येन आकडारीयसंज्ञाविषये योद्देशपक्षस्यैव स्वीकारात् । न च यथोद्देश पक्षस्वीकारे तस्मिन् इत्यादि शास्त्राणां त्रिपाद्यामप्रवृत्त्यापत्तिः ? शास्त्रोद्देश्यकपरिभाषाणां तत्राप्रवृत्तिकल्पनेऽपि तत्सम्पादकपरिभाषाणां तत्रापि प्रवृत्तिकल्पनात् ।

वस्तुतस्तु संज्ञापरिभाषाविषये पक्षद्वयस्वीकारे विधिशास्त्रादावपि तत्त्वापत्तिः । अत एव वाक्यसंस्कारपक्षादीनां न तत्त्वस्वीकारः । भाष्ये तत्र तत्र तत्कथनन्तु वस्तुस्वरूपसंकीर्तनमात्रपरमिति सङ्क्षेपः ।

८२—प्रश्नस्यास्योत्तरं ४१ एकचत्वारिंशत्तमे दत्तम् ।

८३—एषः ५३ त्र्यधिकपञ्चाशत्तमे प्रश्ने २६ षड्विंशतितमे प्रश्ने च दत्तोत्तरः ।

८४—अयन्तु प्रश्नः ४९ एकोनपञ्चाशत्तमे साधु समाहितोऽवध्येयः ।

८५—एषः २८ अष्टाविंशतितमे प्रश्ने समाहितः ।

८६—प्रथमप्रश्नवत् ६५ पञ्चषष्ठितमप्रश्नवदुत्तरणीयम् ।

८७—एतस्योत्तरं ७१ एकसप्ततितमे प्रश्ने दत्तम् ।

८८—एतस्योत्तरं २६ षड्विंशतितमे प्रश्ने कृतमालोच्यम् ।

८९—एषः ४३ त्रयश्चत्वारिंशत्तमे समीक्षित उत्तरेण ।

९०—अयम् प्रश्नः ६३ त्रिषष्ठितमे प्रश्ने कृतोत्तरः ।

९१—ननु 'अइउण्' सूत्रे 'लण्'सूत्रे च एकस्यैव णकारस्यानुबन्धत्वेन अणादिपदघटितशास्त्राणां तयोस्तात्पर्य्यानिर्णयात् शाब्दबोधानापत्तिरित्यतः 'व्याख्यानत' इति परिभाषावतारः । कोटिद्वयसंशयेऽन्यतरस्य बहुकोटिकसंशयेऽन्यतमस्य अर्थस्य निर्णयः निश्चयः व्याख्यानात् शिष्टकृताद् भवति । यतो हि लक्षणं शास्त्रम् अलक्षणम् अनिष्टार्थजनकम् न भवति अतः । अत एव "हृदयस्य हृल्लेख' इत्यत्र अणन्तत्वेनैव निर्वाहे वन-

न्तमपि प्राप्नोति तथापि लेखग्रहणादुत्तरपदाधिकारे प्रत्ययग्रहणे तदन्तग्रहणन्नास्ति इति परिभाषा भाष्यकारेण ज्ञाप्यते इति व्याख्यानतो लेखेत्यणन्तमेव गृह्यते इति। न च परमहल्लेखाद्यर्थन्तदिति वाच्यम्? ज्ञापनपरभाष्यप्रामाण्येन तादृशामनभिधानात्। न च प्रकृते कपिञ्जलाधिकरणन्यायेन पूर्वणकारस्य पुरस्स्फूर्त्तिकतया पूर्वणकारेणैवाण्ग्रहणे कथं सन्देह इति वाच्यम्? "निजान्त्रयाणाम्" इति सूत्रे त्रयाणामित्युपादानेन शब्दशास्त्रे तादृशन्यायस्यास्वीकारात्। तेन "अणुदित्, इत्येतत्परिहाय पूर्वेणाण्ग्रहणम् परेणेण्ग्रहणमिति "लण्" सूत्रे भाष्ये स्पष्टमिति सङ्क्षेपः।

ननु औशादीनामनेकाल्त्वादेव सर्वादेशत्वसिद्धौ "अनेकाल् शित्" सूत्रे शिद्ग्रहणं व्यर्थमेवेति चेन्न? तद्वैयर्थ्येन नानुबन्धकृतमनेकाल्त्वमिति परिभाषाया ज्ञापनात्। डाद्यादेशविषये तु सर्वादेशत्वमन्तरेण अनुबन्धत्वमेव न भवतीति आनुपूर्व्याश्रयेण तत्त्वसिद्धिः अत एव डा आ इति प्रश्लेषेण सर्वादेशत्वमुच्यते इति पङ्क्तेरर्थः सङ्क्षेपतः।

९२—एतत्प्रश्नोत्तरं ८३ त्र्यधिकाशीतितमे साधु कृतं द्रष्टव्यम्।

९३—तृतीय ३ प्रश्ने प्रायो दत्तोत्तरन्तदिव वाच्यम्।

९४—अस्योत्तरं ७८ अष्टासप्ततितमे प्रश्ने दत्तमालोच्यम्।

९५—ननु शतानीत्यादौ नुमि षट्संज्ञापत्तिः, एवमुपादास्तेत्यत्रात्त्वे कृते "स्थाघ्वोरिच्च" इतीत्त्वापत्तिरिति शङ्कायां 'सन्निपात' परिभाषावतारः। सन्निपातो द्वयोस्सम्बन्धस्तन्निमित्तो विधिस्तं सन्निपातं यो विहन्ति तस्यानिमित्तम्। उपजीव्यविरोधो न युक्त इति न्यायमूलैषा। अत एवात्र सन्निपातशब्देन न पूर्वपरयोस्सम्बन्ध एव किन्तु विशेष्यविशेषणसन्निपातोऽपि गृह्यते। एवञ्च ग्रामणिकुलमित्यादौ नपुंसकह्रस्वत्वेऽपि "ह्रस्वस्य पिति" इति तुग्न भवति। "ङिति ह्रस्वश्च" इत्यस्य स्थाने "वाचि ह्रस्वश्च" इति विन्यस्य "वामि" इति सूत्र व्यर्थं सदत्र ज्ञापकम्। ज्ञापिते तु अजादित्वोपजीव्यन्नदीत्वन्नुड्द्वाराऽजादित्वविघातकमिति नुटोऽप्राप्त्या "नामि" इति चरितार्थम्।

वस्तुतस्तु तिसृनामिति स्थिते तिसृपाठस्य स्वस्रादिगणेऽनार्षत्वात् "न षट्" इत्यप्राप्त्याऽन्तरङ्गत्वान्ङीपि दीर्घाप्राप्त्या "न तिसृचतसृ" इति सूत्रम्परिभाषाज्ञापकम्। ज्ञापितायान्तु त्रिशब्दविभक्त्यानन्तर्यनिमित्तस्तिस्रादेशः, ऋदन्तत्वसम्पादनद्वारा नानया ङीप्निमित्तमिति।

सन्निपातलक्षणविधित्वमस्यालिङ्गम्। स्वप्रवृत्तेः प्राक् स्वनिमित्तभूतो यस्सन्निपातस्तद्विघातकस्य स्वातिरिक्तशास्त्रस्य स्वयमनिमित्तमिति फलति। ननु रामायेत्यादौ "सुपि च" इति दीर्घानापत्तिः अदन्ताङ्गङेसन्निपातेन जातस्य यादेशस्य तदविघातकत्वात्। न च यञादित्वसापेक्षदीर्घस्य बहिरङ्गतयाऽसिद्धत्वान्नात्र सन्निपातविघात इति वाच्यम्? आरोपितासिद्धत्वेऽपि वस्तुतस्तद्विघातस्य जायमानत्वेनैतत्प्रवृत्तेरिति चेन्न? "कष्टाय क्रमणे" इत्यादिनिर्देशेन एतस्या अनित्यत्वस्वीकारात्। न यासयोरिति निर्देशाच्चैषाऽनित्या, स्पष्टं चेदं "कृन्मेजन्तः" सूत्रे भाष्ये। एतदनित्यत्वे फलानि 'वर्णाश्रयः प्रत्ययो वर्णविचालस्यानिमित्तम्, दाक्षिः, आत्वं पुग्विधेः क्षापयति, पुग्ह्रस्वस्य, अदीदपत्, त्यदाद्यकारष्टाब्विधेः या सेति, इड्विधिराकारलोपस्य पपिवान् इत्यादयो मूले साकल्येन परिगणिता दोषा इति संक्षेपः॥ विस्तरश्शास्त्रार्थकलायाम्।

९६—इदन्तु १ प्रथमप्रश्ने समुत्तरितम्।

९७—एषः ६० षष्ठितमे प्रश्ने समाहितः।

९८—अयन्तु २६ षड्विंशतितमे समाहितः।

९९—उत्सर्गशास्त्रप्रवृत्त्यभावसम्भावनाप्रयोज्या यत्रापवादप्रवृत्तिसम्भावना तत्रोत्सर्गशास्त्रम् पूर्वन्न प्रवर्त्तते इति उपसञ्जनिष्यमाणपरिभाषार्थः। अनेन च भविष्यदपवादविषयातिरिक्तत्वेन सङ्कोचः। अत एव दधतीत्यस्य सिद्धिः। अत्रापवादपदेन निषेधपर्य्युदासापवादास्समे गृह्यन्ते। तेन ररन्धतुरित्यादौ यदि कित्त्वन्न स्यात्तदा नुमि संयोगात्परत्वेनासंयोगादिति सम्भावना। तथा च नुमः पूर्वन्न कित्त्वम्। अत एव नलोपाभावोऽपि। प्रफुल्ल इत्यादौ उपसर्गयोगात् पूर्वं लत्वन्नेत्यादिफलानि। एवंविधफलसम्पादकप्रकाराः "तौ सत्, शेषाद्विभाषा, एङ्ह्रस्वात्" इति सूत्रभाष्येषु स्पष्टमुपवर्णिता इति संक्षेपः।

१००—अयं हि ३३ त्रयस्त्रिंशत्तमे प्रश्ने समाहितः।

१०१—एतस्योत्तरं ७९ एकोनाशीतितमे प्रश्ने दत्तमवेक्ष्यताम्।

१०२—एतस्योत्तरं ४० चत्वारिंशत्तमे प्रश्ने दत्तम्।

१०३—एतस्योत्तरं ५४ चतुष्पञ्चाशत्तमे प्रश्ने कृतम्।

१०४—अष्टम ८ प्रश्ने सर्वन्निरूपितम्।

१०५—अस्योत्तरं ९ नवमे प्रश्ने दत्तम्।

१०६—अस्योत्तरम् २८ अष्टाविंशतितमे प्रश्ने कृतम्।

१०७—एषः १२ द्वादशे प्रश्ने निरूपितः।

१०८—षष्ठ ६प्रश्नांशेनैष समाधेयः।

१०९—एषः ५६षट्पञ्चाशत्तमे सुव्याख्यातः।

११०—अयञ्च १०दशमे प्रश्ने ३८ अष्टात्रिंशत्तमे च व्याख्यातः।

१११—एषः १७सप्तदशे प्रश्ने व्याख्यातः।

११२—एतस्योत्तरं २६ षड्विंशतितमे प्रश्ने कृतम्।

११३—ननु अयस्कुम्भीत्यत्र "अतः कृ" इति सत्वन्न स्यात्तत्र शुद्धस्य कुम्भशब्दस्यैवोपादानादित्याशङ्क्य प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापि ग्रहणमिति परिभाषावतारः। सामान्यरूपेण विशेषरूपेण वा प्रातिपदिकबोधकशब्दग्रहणे सति लिङ्गबोधकप्रत्ययविशिष्टस्य, केवलस्य च ग्रहणमिति तदर्थः। अत्र ज्ञापकञ्च "कुमारश्रमणादिभिः" इति सूत्रे स्त्रीलिङ्गश्रमणादिशब्दपाठः। स्त्रीप्रत्ययविशिष्टश्रमणादिभिश्च कुमारीशब्दस्यैव सामानाधिकरण्यं न तु कुमारशब्दस्येति तज् ज्ञापकम्। स्वविशिष्टे स्ववृत्तीनां वर्णत्वव्याप्यधर्माघटितधर्माणामारोपोऽनयेति। वै० च स्वनिष्ठावयवतानिरूपकत्वस्वविशिष्टोद्देश्यतानिरूपितविधेयताश्रयीभूतलिङ्गबोधकप्रत्ययनिष्ठचरमावयवतानिरूपकत्वोभयसम्बन्धेन। सम्बन्धघटकवै० च स्वपर्याप्तत्वस्वघटितपर्याप्तत्वान्यतरसम्बन्धेन। कुमारशब्दविशिष्टः कुमारीशब्दः, स्वपदेन कुमारशब्दस्य ग्रहणम्। परिभाषापरिष्कारोऽस्मत्तातचरणरचितबृहच्छास्त्रार्थकलायाम्।

द्विषत्परयोरित्याद्युपपदविधौ समासान्तविधौ महदात्वे ञ्नित्स्वरे राजस्वरे समास-संघातग्रहणेषु न प्रवर्तेत इत्येवमादयो दोषाः परिगणिता मूल एवेति संक्षेपः ।

११४—अयन्तु ८१ एकाशीतितमे प्रश्ने सुसमाहितः ।

११५—एषः १९ एकोनविंशतितमे प्रश्ने समाहितः ।

११६—एषः ५३ त्र्यधिकपञ्चाशत्तमे समुत्तरितः ।

११७—त्र्यधिकनवति ९३ तमप्रश्नवत्समाधेयः ।

११८—अयमेकोनपञ्चाशत्तमे ४९ प्रश्ने समाहितः ।

११९—पञ्चाधिकनवतितमे ९५ प्रश्ने समाहितः ।

१२०—प्रथमप्रश्ने १ समाहितः ।

१२१—एकसप्ततितमे ७१ प्रश्ने समाहितः ।

१२२—त्रयस्त्रिंशत्तमे ३३ प्रश्ने समाहितः ।

१२३—सप्तविंशतितमे २७ प्रश्ने समाधेयः ।

१२४—पञ्चाधिकनवतितमे ९५ प्रश्ने समाहितः ।

१२५—एकोनत्रिंशत्तमे २९ प्रश्ने समाहितः ।

निवेदनम्—प्रश्नानां समेषां यथामति यथासङ्क्षेपमुत्तरकरणे प्रयतमानस्यापि मे सन्तोषकारित्वं कर्गजपत्राणान्दौर्लभ्यात्समथाभावात् परीक्षाकालप्रकाशनादित्वराव-शाच्च न वृत्तमिति श्रीमद्भिः क्षन्तव्यम् ।

इति आचार्यश्रीराजनारायणशास्त्रिशुक्लसङ्कलित-
परिभाषेन्दु-प्रश्न-पञ्जिका समाप्ता ।

---

मुद्रकः—विद्याविलास प्रेस, बनारस सिटी ।